Library Rare Texts Publication Series No. 4

# NYĀYARATNAMĀLĀ

OF

## PĀRTHASĀRATHI MIŚRA

*With the Commentary*

## NĀYAKARATNAM

*by*

ŚRĪ RĀMĀNUJĀCĀRYA

Foreword by

DR GAURINATH SASTRI

Vice-Chancellor




Edited by

**A. SUBRAHMANYA SHASTRI**

Ex. Head of the Department of

Dharmaśāstra and Mīmāṁsā Philosophy

Faculty of Oriental Learning & Theology

Banaras Hindu University

VARANASI

1982

[ Published under the Rare Texts Publication Scheme of Sarasvati Bhavana Library with financial assistance provided by University Grants Commission ]

Published by :
**Lakshmi Narayan Tiwari**
Librarian,
Sarasvati Bhavana Library
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.

Available at—
**Sales Department,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002 ( India ).

First Edition—500 Copies.
Price : Rs. 76·00

Printed by :
Acharya Mudranalaya,
Macchodari, Varanasi.

पुस्तकालय-दुर्लभग्रन्थ-प्रकाशन-योजना : चतुर्थं पुष्पम्

श्रीपार्थसारथिमिश्रविरचिता

# न्यायरत्नमाला

## श्रीरामानुजाचार्यकृत-
## नायकरत्नसंवलिता

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयकुलपति-
श्रीगौरीनाथशास्त्रिविरचित-
प्रस्तावनया समलङ्कृता




सम्पादकः
अ० सुब्रह्मण्यशास्त्री
धर्मशास्त्र-मीमांसादर्शनविभागाध्यक्षचरः
प्राच्य-धर्मविज्ञानसंकाये
काशी-हिन्दू-विश्वविद्यालयस्य

वाराणस्याम्

२०३९ वैक्रमाब्दे १९०४ शकाब्दे १९८२ खैस्ताब्दे

प्रकाशकः—
लक्ष्मीनारायण तिवारी
सरस्वतीभवनपुस्तकालयाध्यक्षः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

[ सरस्वतीभवनपुस्तकालयस्य दुर्लभग्रन्थप्रकाशनसम्बन्धिविशेषयोजनान्तर्गतं विश्वविद्यालयानुदानायोगतः प्राप्तेन वित्तीयसाहाय्येन प्रकाशिता ]

प्राप्तिस्थानम्—
विक्रयविभागः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी—२२१००२

प्रथमं संस्करणम् : ५०० प्रतिरूपाणि
मूल्यम् : ७६-०० रूप्यकाणि

मुद्रकः—
आचार्य मुद्रणालय,
मच्छोदरी, वाराणसी।

## FOREWORD

I am glad to write an introductory note to this monumental work, Nyāyaratnamālā of Pārthasārathi Miśra, with the commentary, Nāyakaratna, of Śrī Rāmānujācārya, edited by late Professor A. Subrahmanya Shastri with a long introduction and notes. Professor Shastri was recognised as an authority on both the Bhāṭṭa and Prābhākara systems of Mīmāṁsā. From my personal acquaintance with him for all these years, I could discover and appreciate the depth of his erudition. It is a matter of regret that he collapsed suddenly on May 27, 82—not alive even to see the completion of the printing of this work which he had started sometime back. His esteemed friend Professor S. Subrahmanya Shastri helped us in bringing out the work by looking into the proofs of the unfinished portions of the work.

Prabhākara, the founder of the Prābhākara School of Mīmāṁsā, wrote two commentaries on Śabarasvāmin's Bhāṣya on the Mīmāṁsā Sūtras of Jaimini. These two works criticised the views of Kumārila Bhaṭṭa and showed a new way of interpretation. The style is terse and it is not often easy to draw out the intention of the author. It was Śālikanātha who commented upon both the two commentaries, and wrote an original work called Prakaraṇa-pañcikā explaining the *prakriyās* employed

by Prabhākara. Pārthasārathi Miśra who came later, wrote Nyāya-ratnamālā to explain the *prakriyās* of Bhaṭṭa on the lines of Prakaraṇa-pañcikā and condemned the views of Prabhākara as explained in Prakaraṇa-pañcikā. Naya-viveka is another work of the Prābhākara School which was written after the Ṛjumālā of Śālikanātha.

It is in this book that we find a statement which indicates that the Mīmāṁsakas believe in the existence of God. All that they urge is that one cannot prove the existence of God through inference. The text runs as follows : "तदेवमीश्वरेऽनुमानं निरस्तं नेश्वरो निरस्तः". It is interesting to note that long before the publication of this work Dr Pashupatinath Shastri in his work, 'An Introduction to Pūrva Mīmāṁsā', described Mīmāṁsā-darśana as Seśvara-Mīmāṁsā as against the views of Vedānta-deśika and others.

Naya-viveka mentions the views of Śrīkara, Dhīra, Mahodadhi, Mahāvrata and others, all commentators of Prabhākara, but their works seem to have been lost to posterity. A verse found in Prabodha-candrodaya mentions Mahodadhi and Mahāvrata :

"नैवाश्रावि गुरोर्मतं न विदितं कौमारिलं दर्शनं
तत्त्वज्ञानमहो न शालिकगिरां वाचस्पतेः का कथा ।
सूक्तं नापि महोदधेरधिगतं माहाव्रती नेक्षिता
सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते" ॥

Gaṅgeśopādhyāya, the founder of Navya-nyāya School, says in the second introductory verse to his magnum opus Tattvacintāmaṇi that he begins the work after learning the views of the *Gurus* ( Prābhākaras ) :

"अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम्" ।

Gaṅgeśa presents the *akhyātivāda* of Prabhākara and the text runs into more than one hundred pages. It seems that it was not easy for him to reject *akhyāti* and establish *anyathākhyāti*.

I hope, the critical publication of this important work will receive recognition from scholars all over the academic world.

We express our deep gratitude to the University Grants Commission that has not only extended financial aid but has also encouraged us in various ways for such important and useful publications of this University.

17th October, 1982 Gaurinath Sastri

Gāṅgeśopādhyāya, the founder of Navya-nyāya School, says in the second introductory verse of his magnum opus Tattvacintāmaṇi that he begins the work after learning the views of the Gurus ( Prabhākaras ) :

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।

Gaṅgeśa presents the *Akhyātivāda* of Prabhākara and the text runs into more than one hundred pages. It seems that it was not easy for him to reject *Akhyāti* and establish *anyathākhyāti*.

I hope that the publication of this important work will receive recognition from scholars all over the academic world.

We express our deep gratitude to the University Grants Commission that has not only extended financial aid but has also encouraged us in various ways for such important and useful publications of this University.

17th October, 1982 Gaurinath Sastri

# भूमिका

विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥

पूर्वमीमांसाशास्त्रं नाम वेदगतकर्मकाण्डस्य ज्ञानकाण्डात्पूर्वभाविनः तात्पर्यनिर्णयाय श्रीजैमिनिमहर्षिग्रथितन्यायसहस्रात्मकं शास्त्रम्। इदं च शास्त्रं स्वाध्यायोऽध्येतव्यः (तै. आ. २.) इति वेदवाक्यगताध्ययनविधिमूलकं अतः वेदतुल्यम्। श्रीमान् महर्षिजैमिनिः अनादिसिद्धान् लोकप्रसिद्धान् न्यायानवलम्ब्य श्रौतस्मार्तकर्मप्रयोगाणां स्वरूपं इदमित्थमिति व्यवस्थापयितुं यत्र यत्र कर्मकाण्डेषु विविधशाखागतेषु प्रयोगसंशयः तत्र तत्र पूर्वपक्षमुद्भाव्य सिद्धान्तान् प्राणैषीत् पूर्वपक्षमुक्त्वा सिद्धान्तरचने सिद्धान्तार्थस्य दार्ढ्योपपत्तेः। आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ इति मनुना प्रोक्तत्वात्।

धर्मे प्रमीयमाणे हि वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

इति वार्तिककारैश्च तस्यैव समर्थनात्। न चेदं प्रथमतया जैमिनिः इदं शास्त्रं प्रणिनायेति शङ्कनीयम्। ततः पूर्वमपि लोके प्रसिद्धानां मीमांसाशास्त्रप्रणेतॄणां बादरि-आलेखन-काशकृत्स्नादीनां जैमिनिसूत्रेषूदाहरणात्।

अध्ययनविधिमूलकमिदं शास्त्रमिति भट्टमतम् अध्यापनविधिप्रयुक्तमध्ययनं तस्य सार्थक्याय मीमांसाशास्त्रमध्येतव्यमिति प्रभाकरः। स्पष्टमिदमत्रैव प्रयुक्तितिलके।

प्रभाकरः गुरुः इति च शास्त्रेषु सर्वेषु प्रसिद्धः वार्तिककारश्रीकुमारिलस्य शिष्य इति च विदितः शबरस्वामिभाष्योपरि टीकाद्वयं रचयांबभूव। तयोः बृहतीलघ्वीसंज्ञयोः उपरि ऋजुविमला दीपशिखाख्ये द्वे टीके यथाक्रमं लिलिखे तत्रभवान् शालिकनाथः। अपरं च स्वयमेव टीकाद्वयार्थसंग्रहात्मकं प्रकरणपञ्जिकाह्वयं प्रकरणमुपनिबबन्ध, यदधीनं पण्डितानामद्यतनानां प्राभाकरमतपरिज्ञानं, बृहत्या षष्ठाध्यायोपरितनभागस्य, लघ्व्याः सर्वस्या अपि नष्टत्वात्।

भट्टमते तु भाष्यं तदुपरि श्लोकवार्तिक-तन्त्रवार्तिकटुप्टीकाह्वयभागत्रयसमन्वितं वार्तिकं च रचयांबभूव तत्रभवान् कुमारिलभट्टः। तद्रचितं बृहट्टीकाख्यं टीकान्तरं तु नष्टमेव। परन्तु तन्मतसङ्ग्रहरूपः न्यायरत्नमालाख्यः प्रकरणग्रन्थः चिरेण रचितः प्रकरणपञ्चिकादृष्टान्तेन श्रीमता पार्थसारथिमिश्रेण, यत्र च प्रभाकरमतं निखिलेन भाष्यादिग्रन्थानाधारीकृत्य समखण्डि। तदधीनः अद्यत्वे अस्माकं प्रभाकरमूलग्रन्थविधुराणां प्राभाकरमतपरिज्ञानम्।

## मीमांसाशास्त्रस्य प्रतिपाद्यम्

सन्दिग्धानां वेदवाक्यानां तात्पर्यपरिशोधनाय मीमांसासंज्ञकस्तर्कोऽवश्यं समाश्रयणीयः। पद-वाक्य-प्रमाणपारावारपारीण इत्यभियुक्ता[१] व्याहरन्ति। तत्र वचने न्यायव्याकरणयोर्मध्ये मध्यममणिन्यायेन संग्रथितं वाक्यशास्त्रमेव मीमांसाशास्त्रमिति भाष्यते। सागरसंकाशेऽस्मिन्नेव शास्त्रे वाक्यार्थनिर्णयानुकूलाः न्यायविशेषास्तरङ्गभेदाः इव भासन्ते। इदं पूर्वतन्त्राख्यं महर्षिणा जैमिनिना प्रणीतं कर्मकाण्डगतविचारप्राधान्येन प्रवृत्तमपि, तत्त्वदर्शनम्, दार्शनिकसम्मतं प्रमाणप्रमेयत्रिवेचनम्, क्रतुप्रयोगनिर्धारणम्, शाब्दबोधोपयोगिशाब्दन्यायविवेचनञ्चेति शरीरचतुष्टयं बिभ्राणं दरीदृश्यते।

शंकरभगवत्पादादिभि'श्शास्त्रतात्पर्यविद आहुः', 'यदपि शास्त्रतात्पर्यविदामनुक्रमणमित्या'दि प्रयुञ्जानैः शबरस्वामिनां मीमांसाभाष्यकाराणां भूरिप्रशंसा कृता दृश्यते। तैः स्वोपज्ञे भाष्ये तत्र तत्रेमानि चत्वारि स्वरूपाणि विशिष्य तर्कपादे बहुधा वितन्यन्ते स्म।

### भाष्यस्योपरि वार्तिकम्।

तदेव भाष्यं प्रसन्नपदगम्भीरं समेषां जिज्ञासूनां सुलभावगाहं भवत्विति समीक्षमाणः तत्र भवान् कुमारिलभट्टः उक्तानुक्तदुरुक्तचिन्ताकरणलक्षणं वार्तिकाख्यं श्लोकवार्तिक-तन्त्रवार्तिक-टुपटीकादिभेदभिन्नं व्याख्यानं व्यरीरचत्, तत्र सर्वेऽपि विषयाः भाष्यनिगूढार्थाः मीमांसाया दर्शनपदोपलम्भकाः, अन्ये विषयाश्च निरूपिताः, किं बहुना वार्तिकमिदम् भाष्यमप्यतिशयानमिवाध्वरमीमांसादर्शनमूलस्तम्भायमानं राराजते इति नेयमतिशयोक्तिः।

### तत्र पार्थसारथेर्वैशिष्ट्यम्।

तदवलम्ब्यैव तन्मतपरिपोषणाय सर्वतन्त्रापरतन्त्रः श्रीमान् पार्थसारथिमिश्रः न्यायरत्नमाला-तन्त्ररत्न-शास्त्रदीपिका-न्यायरत्नाकरनामानि चत्वारि ग्रन्थरत्नानि प्रणीय, कौमारिलं प्रस्थानं सर्वोपादेयमचीकरदिति सर्वसम्प्रतिपन्नोऽयं विषयः।

### केषाञ्चिन्मतस्योपन्यासः।

एतेन ब्रह्मसिद्धान्तकृता, तद्व्याख्यात्रा च षड्दर्शनसमालोचनाशीर्षकेऽवतारे षड्दर्शनानि प्रसिद्धानि, तत्क्रमञ्च न्यक्कृत्य, स्वमनीषया कश्चन क्रम उपन्यस्तः। तस्मिन् प्रसंगे पूर्वोत्तरमीमांसे अपि न दर्शनश्रेण्यां परिगणनमर्हतः, तयोर्वाक्यार्थविचारात्मकत्वादित्युक्तम्।

---

१—'विधिर्विधेयस्तर्कश्च वेदः' इति पा गृ. सू. विधिः—ब्राह्मणम्, विधेयः-मन्त्रः, तर्कः-मीमांसा इति तदर्थ.।

२—मीमांसकसंज्ञकस्तर्कस्सर्ववेदसमुद्भवः
सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवदित्याह. वा. ता. पृ. ६१। इति।

यथा—

'कर्मब्रह्मविभागात् ब्राह्मणवेदे द्विधास्ति काण्डं यत्।
तद् वाक्यार्थविचारन्यायो मीमांसनं नाम ॥

श्लो· सं. ११। इति।

तद्व्याख्यात्रा च 'पूर्वमीमांसायांन्तु केवलवेदवाक्यार्थविचार एव, नतु जगन्मूलचिन्तनमिति, सा न दर्शनान्तर्गता, यतो हि प्राच्यां मीमांसायां यत्र क्वचित् पदार्थेषु विप्रतिपत्तिः प्रदर्श्यते। सा न सूत्रमूला, परन्तु भाष्यकृता, वार्तिककृता च केचन विचाराः प्रदर्शिताः। व्याख्यातृभिश्च विवृता इति भगवतः सूत्रकारस्य जगन्मूलप्रदर्शने प्रवृत्त्यभावात् न सा प्रदर्शनीयेत्यन्तेन।

### तन्मतसमीक्षा।

अत्र वयं ब्रूमः—सर्वाणि दर्शनानि सूत्ररूपेण प्रवर्तन्ते, नतु तस्य मूलान्तरं समस्ति, यथा गौतमादिसूत्राणि। परन्तु नेयं रीतिर्मीमांसादर्शनस्य। इदञ्च दर्शनं सर्वज्ञकल्पो भगवानाम्नायो मूलम्, जगत् सत्यमिति च स्वीकृत्य प्रवर्तते। जगत् सत्यम्, तस्य मूलं धर्मः। स च जीवाश्रितः जीवसमवेत इति। न हि सूत्रोपात्त एवार्थः स्वीकर्तव्यः, न तु भाष्यादिषूक्तोऽर्थ इति राजाज्ञा विद्यते, न वा वेदानुशासनम्। अपि तु सूत्रे, भाष्ये, वार्तिके च ये पदार्थाः शब्दत उपात्ताः, अर्थतश्च सूचिताः, ते सर्वे सौत्रा एवेति सर्वसम्प्रतिपन्नोऽर्थः। यथोक्तं वार्तिके—

'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम्॥

तं· वा· पृ· सं. ६२३ इति।

अतः सूत्र-भाष्य-वार्तिकादिषूक्ताः सूचिताश्च सर्वे विचाराः सूत्रसम्बद्धा एव, शाब्दिकाश्च यथोत्तरं मुनीनां प्रामाण्यमित्युद्घुष्यन्तः भाष्यं सूत्रादपि विशिष्यत इति सोरस्ताडं प्रतिपादयन्ति। अपि च मीमांसादर्शनस्य चत्वारि शरीराणि-तत्त्वदर्शनम्, क्रत्वनुष्ठाननिर्धारणम्, दार्शनिकसम्मतप्रमाण-प्रमेयप्रतिपादनम्, वाक्यार्थनिर्णयोपयोगिन्यायसंकलनञ्चेति प्रागवोचाम, तन्न प्रस्मर्तव्यम्। प्रायेण कर्मकाण्डवाक्यानां विचारकरणात्तेषामयं भ्रमः। सूक्ष्ममिदञ्च गुरुसम्प्रदायात् भाष्य-वार्तिकाभ्यासोपचितचेतोलोचनसंस्कारैर्विवेक्तुं शक्यते, नतु स्थूलदृष्टिभिः। यथोक्तं केनचित् कविना—

'मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम्।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम्'॥ इति

### मीमांसादर्शनस्येतरदर्शनेभ्योऽन्यद् वैशिष्ट्यम्।

भारतीयेषु सर्वेष्वपि दर्शनेषु धर्मः, तत्त्वदर्शनञ्चेति अंशद्वयं विद्यते, तत्र सर्वैर्दार्शनिकैश्चित्तशुद्धये ईश्वरार्पणबुद्ध्या वा वर्णाश्रमनिबन्धनस्य श्रौतस्य स्मार्तस्य वा कर्मजातस्यानुष्ठानमङ्गीक्रियत एव। अर्थात् पूर्वमीमांसाशास्त्रविवेचितं धर्मानुष्ठानं सर्वेषां दर्शनानां प्रथमसोपानमित्यत्र नास्ति संशीतिलेशोऽपि । तत्र वस्तुतत्त्वविचारणायां समेषां तैर्थिकानां वैमत्येऽपि अन्तःकरणशुद्धिहेतोः धर्मानुष्ठानस्य वैमत्यं न कस्यापीति

निश्प्रचमिदम्। यथाऽऽहुरभियुक्ताः "भारतीयानामृषिवंशप्रसूतानामस्माकमाचारे पारतन्त्र्यम्, विचारे स्वातन्त्र्यमि"ति। तत्र धर्मस्वरूपं धर्मज्ञानसापेक्षम्, तच्च ज्ञानम् वेदाध्ययन-तदर्थविचारसाध्यम्। अत एवोक्तं वेदभाष्यकृता 'वेदाध्ययनमनुशास्ति ग्रन्थग्रहणादूर्ध्वम् अनुष्ठेयमर्थं ग्राहयति, अनेनैतदवगम्यतेअधीतवेदेन धर्मजिज्ञासामकृत्वा न गुरुकुलान्निवर्तितव्यमि'ति। धर्मस्वरूपञ्च सूत्रकृता विवेचितं "चोदनालक्षणोऽर्थो धर्मः" इति। धर्मानुष्ठानञ्च धर्मज्ञानसाध्यम्, धर्मज्ञानञ्च धर्ममीमांसापरिशीलनं विना न सेद्धुमर्हति। यथोक्तं मिश्रैः—न चेतानि दृष्टादृष्टसामवायिकाराद्युपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्परविभिन्नकर्मस्वरूप - तदधिकारिभेदपरिज्ञानं विना शक्यान्यनुष्ठातुमि ( भामती पृ. सं. ५३-५४ ) ति

यच्च वैशेषिकतन्त्रादौ-अथातो धर्मं व्याख्यास्यामः, यतोऽभ्युदय-निश्रेयससिद्धिः, स धर्मः, ( वै. द. १-२२ ) इत्याद्युपक्रमणं शास्त्रमुखे, तदपि तदीयैरेव निराकारि।

यथा—

'धर्मं व्याख्यातुकामस्य षट्पदार्थविवेचनम्।
समुद्रं गन्तुकामस्य हिमवद्गमनं यथे'॥ त्यादि वदद्भिः।

समेषां तैर्थिकानामास्तिकानां पूर्वमीमांसादर्शननिर्णीतमेव धर्माधर्मस्वरूपमुपजीव्यम्, मीमांसादर्शने इदमपि वर्तते विपुलं, वस्तुतत्त्वविचारणमपि। तेनान्यानि दर्शनानि विषयेऽस्मिन्नपरिपूर्णानि वस्तुतत्त्वविचारणमात्रविश्रान्तानि, मीमांसदर्शनन्तु द्वाभ्यामंशाभ्यांधर्मानुष्ठान–वस्तुतत्त्वविचारणाभ्यां परिपूर्णमिति दर्शनान्तरेभ्यः मीमांसादर्शनमनितरसाधारणम् वैशिष्ट्यं बिभर्त्ति।

तत्रोपष्टम्भकोपन्यासः।

पवमानेष्टिवाक्यजातेनायमंश उपस्थाप्यते। तथाहि—आधानपवमानाभ्यामग्निसिद्धिरिति याज्ञिकमीमांसकानां मर्यादा। 'तत्राग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये'इत्यादिना विहितानि पवमानहवींषि त्रीणि, आग्नेयं हविः तेभ्योऽतिरिक्तम्। तत्र सर्वज्ञकल्पः वेदपुरुषः ब्रवीति–यः कश्चिद् यजमान आत्मभूतमाग्नेयं हविरनिरुप्य, त्रीणि हवींषि निर्वपति, तदपि न युक्तम्। एवं त्रीणि हवींष्यनिरूप्याग्नेयं हविः केवलं निर्वपति, तदपि न युक्तम्। अपि तु एतानि हवींषि सह निरूप्याणीति। यथा—ब्रह्मवादिनो वदन्ति—'तनुवो वाचैता अग्न्याधेयस्य, आग्नेयो वा अष्टाकपालोऽग्न्याधेय इति। यत्तं निर्वपेत्, नैतानि, यथाऽऽत्मा स्यात्, नाङ्गानि, तादृगेव तत्, यदेतानि निर्वपेत्, न तम्, यथाङ्गानि स्युः, नात्मा, तादृगेव तत्। उभयानि सहनिरूप्याणि, यज्ञस्य सात्मत्वाय। ( त ब्रा १ प्रपा ६ )।

एवञ्चोभाभ्यामेव धर्मानुष्ठान–वस्तुतत्त्वविचारणाभ्यां दर्शनस्य स्वरूपं परिपूर्णं भवति। ईदृशं तत्त्वं सम्प्रदायतोऽवगन्तव्यं विज्ञैरिति।

एतेन महामहोपाध्यायञ्चोपाख्यश्रीगङ्गानाथशर्मणा पूर्वमीमांसासोर्सनामके आङ्गलभाषानिबन्धे कैश्चन हेत्वाभासैर्निरूपितोऽप्यर्थो निराकृतः इति ध्येयम्। तस्य विस्तरः प्र पं० भूमिकातोऽवगन्तव्यः।

**न्यायरत्नमालाया नामनिर्देशः प्रतिपाद्यविषयनिर्देशश्च ।**

तत्र पार्थसारथिमिश्रेण चत्वारो ग्रन्था निरमायिषत इति पूर्वमवादिषम् । तेषु भाट्टमतानुसारि मीमांसाप्रकरणं न्यायरत्नमाला नाम । न्यायाःअधिकरणानि, तद्घटकाः सिद्धान्ताश्च त एव रत्नानि तैर्निर्मितेयं मालेत्यन्वर्थनामकमिकं प्रकरणम् ।

इदं च न्यायरत्नमालायाः प्रस्तुतायाः उपक्रमोपसंहारगतैः पद्यैरवगम्यते ।

यथा—

'मीमांसार्णवसम्भूतैः कुमारस्वामिनाऽऽहृतैः ।
न्यायरत्नैरहं मालां संग्रन्थामि मनोरमाम् ॥
तस्माद्वार्तिककारोक्ता गम्भीरा भाष्यसम्मता ।
स्वाध्यायविधिवाक्यार्थगोचरा नीतिरुच्यते ॥
आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना ।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः ॥
विधितत्त्वे विमन्यन्ते बहुधा वादिनो यतः ।
अतो वार्तिककारीयैः क्रियते तत्त्वनिर्णयः ॥
वाक्यार्थसंविदो मूलं बहुधा वादिनो विदुः ।
तत्र वार्तिककारीयैर्न्यायमार्गः प्रदर्श्यते ॥
पार्थसारथिमिश्रेण निर्णयोऽभिहितान्वये ।
यथागमं यथाप्रज्ञं वार्तिकोक्तः प्रदर्शितः ॥
दृष्ट्या वार्तिककारस्य विशेषः काम्य-नित्ययोः ।
अङ्गसाकल्य-वैकल्यलक्षणः प्रतिपाद्यते ॥
पार्थसारथिना सम्यग्विशेषः काम्यनित्ययोः ।
आचार्यमतमाश्रित्य न्यायलेशात् प्रदर्शितः ॥
अङ्गस्वरूपसम्बन्धप्रमाणं सप्रकारकम् ।
यदुक्तं वार्तिके सम्यक् तत्संक्षेपेण कथ्यते ॥
पार्थसारथिमिश्रेण वार्तिकोक्त्यनुसारतः ।
यथाप्रतीति निर्णीतो नियमः सप्रमाणकः ॥
मीमांसाब्धिं व्याकुलं चोद्यनक्रैः मन्दप्रज्ञैर्दुर्विगाह्यं विगाह्य ।
मत्याचार्यैराहृतैर्न्यायरत्नैः मालामेनां कल्पयामास धीरः' ॥ इति ।

एतेषां वचनानां पर्यालोचनेनेदमवगम्यते—यदयं ग्रन्थकारो भट्टमते गरीयसि निरूढाभियोगस्तदीयसिद्धान्तं समर्थयितुं सर्वथा बद्धपरिकरः आसीदिति । अत एवोक्तं धर्मपुर्यभिजनरामानुजाचार्येण टीकाकृता ।

यथा—

'अस्पष्टभावमपरीक्षकदुष्प्रवेशम्
आचार्यतन्त्रमधिकृत्य दृढप्रकाशाम् ।
न्यक्कृत्य पार्थरथसारथिरन्यतन्त्रम्
सत्प्रीतये ग्रथितवान् नयरत्नमालामि'ति ॥

तृतीयादि-द्वादशाध्यायान्तप्रतिपाद्यप्रमेयाणां विप्रतिपन्नप्राभाकरमतनिरासपूर्वकं सुखावगतयेऽत्यन्तमुपयुज्यते प्रकरणमिदम्। तत्र सन्ति इमानि प्रकरणानि, १. प्रयुक्तितिलकः, २. स्वतःप्रामाण्यनिर्णयः ३. विधिनिर्णयः ४. व्याप्तिवादः ५. वाक्यार्थनिर्णयः ६. नित्यकाम्यविवेकः, ७ अङ्गनिर्णयः। परिच्छेदे च प्रथमः, द्वितीयः, तृतीयः, चतुर्थः, पञ्चमश्चेति। प्राधान्येन तर्कपादीयः अध्ययनविधिविचारः, चोदनासूत्रस्य स्वतः प्रामाण्यविचारः विधिनिरूपणम्, व्याप्तिवादः, अभिहितान्वयनिर्णयः षाष्ठिकः सर्वशक्त्यधिकरणसिद्धान्तश्च विवेचिताः प्राभाकरपक्षविधूननेन।

## प्रयुक्तितिलकस्य प्रतिपाद्यविषयसंक्षेपः।

तत्र प्रयुक्तितिलके शालिनाथेनोक्तमध्यापनविधिप्रयुक्तमध्ययनम्, तत्प्रयुक्तो विचारशास्त्रस्यारम्भ इति प्राभाकरमतेन पूर्वोत्तरपक्षाभ्यां मीमांसाशास्त्रारम्भमुपन्यस्य निरस्यति स्म। ततो वार्तिककाररीत्याऽध्ययनविधिप्रयुक्तमध्ययनम्, नाध्यापनविधिप्रयुक्तम्, तत्प्रयुक्त्या विचारशास्त्रमारम्भणीयमिति प्रतिपादयामास।

तत्र भाट्टमतेन द्वादशस्वध्यायेषु नियतक्रमेषु प्रथमाध्यायप्रतिपाद्या प्रमाणचिन्ता बहिरङ्गयुक्तिमूलकतया न व्यचीचरत्। द्वितीयाध्यायगोचरा कर्मभेदचिन्ताऽप्यतिविप्रतिपत्त्यभावात्समुपेक्ष्यावशिष्टाध्यायदशकप्रतिपाद्यं प्रमेयतत्त्वं प्रत्यपीपदत्। तत्र जल्पन्यायेन प्राभाकरसम्मतमर्थं निरस्य, भाट्टसम्मतशास्त्रार्थप्रमेयतत्त्वं सञ्जग्राह।

'न्यायरत्नैरहंमालां संग्रथनामि मनोरमाम्'।
'न्यायरत्नैर्मालामेनां कल्पयामास धीर' इति सुव्याहृतं ग्रन्थकृता।

## अध्यापनविधिविषये प्रकारद्वयम्।

तदेवाधस्तात् संक्षेपेण प्रदर्श्यते। तथाहि—अध्यापनविधिविषये प्राभाकरप्रस्थाने प्रकारद्वयमस्तीति, पञ्चिकायां शलिकनाथमिश्रेण उपन्यस्तम्। तत्राद्यः प्रकारस्त्वयम्—

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते'॥

इति स्मृत्याऽनुमितः माणवकमुपनीयाध्यापनेन आचार्यकं भावयेदित्येवंरूप आचार्यकरणविधिरिति। अयमेव प्रकारः प्राधान्येन सर्वेषु प्रामाणिकेषु ग्रन्थेषु अध्यापनविधिविचारप्रस्तावे उपन्यस्तो दृश्यते। अत एव "एवं तावदध्यापनविधिं स्मृत्यनुमितमाश्रित्य राद्धान्तवर्णना कृता" (प्र. पं पृ. सं. २५) इति। अनन्तरं 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत, प्रत्यक्षोध्यापनविधिः कस्याञ्चिदपि शाखायामाम्नायते, तदनुसारेणाध्यापनविधिः प्रत्यक्ष इत्यङ्गीकृत्य विवरणटीकायां विचारः प्रवर्तितः। अत एव नारायणः पञ्चिकाव्याख्यायां न्यायसिद्धौ एवं स्वसिद्धान्तमुपन्यस्य इदानीं विवरणसिद्धान्तमुपन्यस्यति अन्येत्विति ब्रूते। इममेवार्थं मनसि निधाय भवनाथमिश्रेणोक्तं नयविवेके श्रौतो वा आचार्यकरणविधिरिति ग्रन्थमिमं व्याख्यातुं प्रवृत्तः रविदेवः नयविवेकतत्त्वे इत्थमवतारयति 'एवं प्रकरणमतमुपपाद्य, विवरणमतानुसारेणापि आचार्यकविधिसमर्थनार्थमाह श्रौतावेत्यादिना" इति। एवञ्चाध्यापनविधिविषये उपर्युक्तं प्रकारद्वयं प्रसिद्धं वरीवर्तीति ज्ञेयं विज्ञैः।

तत्राद्यः प्रकारश्चेत्थं माणवकमुपनीयाध्यापनेनाचार्यं भावयेदित्येवंरूपः 'उपनीय तु यः शिष्यमि'त्यादिस्मृत्यनुमितोऽध्यापनविधिः। आचार्यकरणविधिमधिकृत्य जिज्ञासाधिकरणस्य प्रवृत्तिः प्राभाकरमते। स्मृत्यनुमितेन विधिना अत्राध्यापनं विधीयते, तस्य चोद्देश्यमाचार्यकम्, अध्यापनञ्चाचार्यकर्तृकं माणवककर्तृकमध्ययनमन्तरा न सम्भवति, अतो येन विना यन्न सम्भवति, तत्तेनाक्षिप्यते। यद्वा यत्तु स्वसिद्ध्यर्थमुपादीयते तदपि विधेयमिति तन्त्रे व्यवहार इति। उपादीयत इत्यस्य आक्षिप्यत इति प्रतिपदव्याख्यानम्। टीकावचनानुसारेण अध्यापनेनाध्ययनमाक्षिप्यते, तच्चाध्ययनमुपनयनसंस्कारमन्तरा न सम्भवति। अतस्तदध्यापनमुपनयनं प्रयुंक्ते, तत्रोपनीतोपि नाकिञ्चित्करोऽङ्गमिति, अध्ययनं तद्व्यापारत्वेनाध्यवसीयते। एवञ्च स्वाङ्गभूतमुपनयनं प्रयुञ्जानोऽध्यापनविधिरध्ययनं प्रयुङ्क्त इति। उपनयनविषये मतद्वयमस्ति। तद्द्विरूपमंगम्, प्रधानञ्चेति। तत्राद्यं मीमांसकानाम्, ब्राह्मणमुपनयीतेति द्वितीयाश्रवणात्। स्मृतिकारास्तु प्रधानं संस्कारमध्ये परिगणनादिति, मित्रमिश्रो वदति (सं प्र. पृ. ३३६)। अध्यापनविधिसिद्धत्वादध्ययनस्य, अध्ययने विधिर्नास्तीत्यर्थः। अतएवाह-नित्यानुवाद इति न्यायमालाविस्तरे माधवाचार्यः। तस्य चाध्यापनविधेः प्रयोजनाकाङ्क्षायामाचार्यत्वमेव साध्यत्वेन सम्बध्यते। आचार्यत्वस्य यूपाहवनीयादिवदलौकिकत्वेन साधनसापेक्षत्वात्, न तु विप्रकृष्टकालीनमर्थज्ञानम्। अतः पाठमात्रेणाध्यापनसिद्धेः, अध्ययनस्याध्यापनार्थत्वेन स्वाध्यायस्याध्ययनार्थत्वेनान्यार्थत्वात् स्वाध्यायस्याविवक्षितार्थत्वात् अध्यापनस्य पाठमात्रेण निष्पत्तेः सन्देहाभावेन विचारशास्त्रं नारम्भणीयमिति प्राभाकरमतेन 'पूर्वपक्षसंक्षेपः।

## प्राभाकरमतेन सिद्धान्तः

सिद्धान्तस्तु–अध्यापनविधेरर्थज्ञानमेव प्रयोजनं माणवकगामित्वेनान्तरङ्गत्वात्, नाचार्यत्वसिद्धिः, तस्यान्यगामित्वेन बहिरङ्गत्वात्। अन्तरङ्गबहिरङ्गयोर्मध्ये अन्तरङ्गं बलीय इति पाञ्चमिकन्यायात्।

किञ्च यद्यपि प्रयोजकविध्यधिकारः पूर्वंभावी, तथापि न तत्सिद्धिरेवास्य प्रयोजनम्, यत्कर्तृकं हि यत्कर्म, तस्यैव तत्प्रयोजकम्, अतोऽध्यापनविधिरन्तरङ्गत्वादर्थज्ञानमेव प्रयोजनतया स्वीकरोति, नाचार्यकम्। तच्चार्थज्ञानमध्यापनमात्रेण न सिद्ध्यत्यतः तदुपायभूतं विचारशास्त्रमपि प्रयुङ्क्ते इति। एवञ्चाध्यापनविधिप्रयुक्त्या विचारशास्त्रमारम्भणीयमिति सिद्धान्तः, इममेव सिद्धान्तं भगवान् सूत्रकारोऽपि मीमांसाश्रवणस्य गुर्वायत्तत्वात् गुरुकुलान्निवृत्तिमात्रं निवारयन् भिक्षाचरणादिसकलब्रह्मचारिधर्मान् अनुमन्यमान आह 'अथातो धर्मजिज्ञासा' इति। अयमेव प्रकारः प्रत्यक्षविधौ बोध्यः।

---

अत्रायं विशेषो बोध्यः–अध्ययनमध्यापनांगमितिप्रकारो निरूपितः, अपरश्चायमध्ययनमध्यापनागं न भवति, श्रुत्यादीनामन्यतमस्याभावात्। तस्मादनंगतयैव पूर्वपक्षोवर्णनीयः। अयञ्चार्थः 'प्रयोज्यत्वादनंगत्वाच्च संशय' इति टीकायां व्यक्तः, प्रकरणशालिकायामपि। इति।

### उक्तमतस्य निरासः

इदमनुपपन्नमिति पार्थसारथिमिश्रो मेने। तस्यायमाशयः। तथाहि—अध्यापनविधिमङ्गीकुर्वता अध्ययने विधिर्नास्तीति वक्तव्यम्। तत्र अध्ययने नियोज्यस्याश्रवणमेव हेतुः, एवञ्चाध्ययनविधौ नियोज्यस्य अश्रवणात् स विधिरध्ययनं प्रयोक्तुं नेष्टे। अतोऽध्यापनविधिरङ्गीकर्तव्य इति। येन हेतुनाऽध्ययने विधिर्निराकृतः, स हेतुरध्यापनेऽपि समानः। यथा "स्वाध्यायोऽध्येतव्यः" इत्यत्र नियोज्यो न श्रूयते। तथा 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यत्र न कश्चिन्नियोज्यः श्रूयते। तेनाध्यापनप्रयोजकत्वमपि नैव घटते। अध्ययनप्रयुक्तिस्तु दूरोत्सारिता। अर्थात् नैव भवितुमर्हति।

यद्यध्यापनविधौ आचार्यत्वकामो नियोज्यः परिकल्प्यत इत्यभिधीयेत, तर्ह्यध्ययनविधावप्यर्थज्ञानकामो नियोज्य इति कल्पयितुं शक्यत इति समानयोगक्षेममेव। यथोक्तम्—

'यस्तूभयोस्समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोक्तव्यः तादृगर्थविचारणे'॥ इति।

ननु सर्वत्रैवं दृश्यते-ज्ञाते वस्तुनि कामना जायते, न त्वज्ञाते। यतो हि ज्ञातत्वादेव ज्ञाते कामना नोपपद्यते, तथा सर्वथा बुद्ध्यनारूढेऽप्यर्थे कामना नोपपद्यते, तस्मात् नार्थज्ञानकामो नियोज्योऽध्ययनविधौ परिकल्प्यत इति वक्तुं न शक्यते-इति।

तत्रेदं समाधानम्-केनचिद्रूपेण ज्ञातस्य केनचिद्रूपेणाज्ञातस्य जिज्ञासा दृश्यत एव। यथोक्तं भाष्यकृता धर्मजिज्ञासामाक्षिपता 'स च धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा, स चेत्प्रसिद्धो न जिज्ञासितव्यः, अथाप्रसिद्धः, नतराम्' ( शा. भा. पृ. १० ) इति। प्रकृते धर्माधर्मयोरिष्टसाधनत्वानिष्टसाधनत्वमात्रेण ज्ञातयोर्विशेषरूपेणाज्ञातयोर्हानोपादानासम्भवेन तत्परिज्ञानेच्छा संघटत इति, धर्माधर्मार्थज्ञानकामः स्वाध्यायमधीयीत इति नियोज्यः लब्धुं शक्यः। वेदाध्ययनात् प्रागपि धर्मजिज्ञासासम्भवेन तदानन्तर्यं नोपपद्यत इति।

अत्रेदं बोध्यम्-प्रथमं माणवकः वृद्धेभ्यः धर्माधर्मौ ज्ञातव्याविति शृणोति, ततस्तज्जिज्ञासते, जिज्ञासमानश्च तादर्थ्येन विहितमध्ययनं तेभ्यः एव श्रुत्वाऽधीते। अव्युत्पन्नस्य वेदैर्ज्ञानानुत्पत्तेः, किमनेनोच्यत इति पुनरन्यादृशी जिज्ञासा जायते। ततो निगम-निरुक्त-व्याकरणाद्यध्ययने प्रवर्तते। तत आपाततोऽर्थप्रतीतौ समुत्पन्नायामपि शाब्दन्यायानवधारणात् संशयानो भवति, ततो वाक्यार्थविशेषं जिज्ञासमानस्तदुपायम् अन्विष्यति। तदिदं जिज्ञासाद्वयमभिप्रेत्य "अथातो धर्मजिज्ञासा" इत्युक्तम्। यथोक्तं मिश्रेण—

'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः।
ज्ञातविद्यान्तरस्यान्या या मीमांसापुरःसरा'॥ ( न्या. र. मा. पृ. ७ ) इति।

अतोऽन्तिमाया जिज्ञासायाः वेदाध्ययनानन्तर्यं सङ्गच्छत इति। यथोक्तं भाष्यकृता-'उच्यते तादृशीं धर्मजिज्ञासामधिकृत्य अथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न सम्भवतीति-( शा. भा. पृ. सं. ४ )।

विषयभूताध्ययनफलं ज्ञानम्, न तु नियोगजन्यमतोऽर्थज्ञानकामस्य न नियोज्यत्वं सम्भवति, नियोगफलस्यैव नियोज्यविशेषणत्वात्। इदन्तु आचार्यत्वेऽपि समानम्। यतो हि आचार्यकमपि विषयभूतस्याध्यापनस्य फलम्। न तु नियोगफलम्, अतस्तस्य नियोज्यविशेषणत्वं कथं घटतामिति।

अपि च एष प्रभाकरसिद्धान्तः—अन्यतोऽप्रवृत्तः खलु पुरुषः शास्त्रेण प्रवर्तनीयः। तथा च काम्यनियोगेषु फलवदेव यागादिकरणांशेऽपि रागत एव प्रवृत्तः। इतिकर्तव्यतासु शास्त्रेण प्रवर्तत इति। अध्यापनस्य काम्यत्वात्, तद्विषयरागेणैव तन्निष्पादकेऽध्ययनेऽनुष्ठानलाभात्। आचार्यकरणविधेस्तत्प्रयोजकत्वं नोपपद्यते।

किञ्चाध्ययनस्याध्यापनाङ्गत्वात् विधितः प्रवृत्तिरिति न वक्तुं शक्यते, अङ्गताबोधकप्रमाणानां श्रुत्यादीनामन्यतमस्याभावेनाध्ययनस्याध्यापनाङ्गत्वं न युज्यते। न चाध्यापनविधिप्रयुक्तत्वेनाऽध्ययनस्य अध्यापनाङ्गत्वमिति शङ्कनीयम्, अतत्प्रयुक्ते व्यभिचारात्। तथा हि नहि 'भिन्ने जुहोती'[1] त्यादौ भेदनादीनां तत्प्रयुक्तिवदध्ययनस्याप्यसिद्धेः, तस्यैव विचार्यमाणत्वात्। किञ्चाङ्गत्वेन तत्प्रयुक्तिः, प्रयुक्त्या च तदङ्गत्वमिति दुरुद्धरमन्योन्याश्रयत्वं प्रसज्येत, भेदनस्य निमित्तत्वेन नैमित्तिकहोमं प्रति प्रयोजकत्वमस्ति, अङ्गित्वं परं नास्ति। भेदनादीनां निमित्तत्वेनाननुष्ठेयतयाङ्गित्वानुपपत्तेः। अतः प्रयुक्तिर्व्यभिचारिणी।

### प्रभाकरमतेन शङ्का

किञ्च तार्तीयप्रमाणाभावेऽपि चातुर्थिकमुपादानात्मकं प्रमाणमध्ययनस्याध्यापनाङ्गत्वे—इति। तथाहि—उपादाननामकं प्रमाणान्तरमभ्युपगच्छतः तस्यानितरसाधारणं प्रमेयं वक्तव्यम्। तच्चेत्थम्—सन्निपत्योपकारकाणामङ्गानाम पूर्वशेषत्वं ग्राहकग्रहणेन भवति। व्रीह्यादिद्वारशेषत्वं श्रुत्यादिभिः प्रमाणैः, करणशेषत्वं नान्यतस्सिद्धमिति, उपादानमेव सन्निपातिनां करणशेषतया विनियोजकमाश्रयणीयम्। एवञ्च श्रुत्यादीनामभावेऽपि चातुर्थिकस्योपादानप्रमाणस्य सत्त्वात्, तेनाध्यापनाङ्गमध्ययनमिति।

तदिदन्तावदविमृश्यमानसुन्दरमिति मीमांसकवरिष्ठा मन्यन्ते। अयमस्याशयः यथा-निर्वापप्रोक्षणावघातादीनां सन्निपत्योपकारकाणामङ्गानां श्रुत्यादिभिर्व्रीह्यादिद्वारशेषत्वं सिद्ध्यति, तथा करणशेषत्वमपि श्रुत्यादिभिरेव सिद्ध्यतीति, नोपादानप्रमाणं स्वीकर्तुमुचितम्। अपि चारादुपकारकाणां ग्राहकेदमर्थ्यनिर्वाहाय करणोपकाररूपद्वारपरिकल्पकं प्रकरणमिति प्राभाकरमीमांसकानां मर्यादा। एतदेव सन्निपातिष्वपि ग्राहकेदमर्थ्यनिर्वाहाय द्वारं कल्पयेदिति, तेषु न द्वारपरिकल्पनाय प्रमाणान्तरमास्थातव्यमिति। 'विनियोजकमेतावदि'त्यादिकारिकायाष्टिप्पण्यामस्य ( न्या० र० मा० ९८० विस्तरो द्रष्टव्यः।

किञ्चेदं विचारणीयम्—कश्चासावध्यापनविधिः, यत्प्रयुक्तमध्ययनं भवेत्। यद्युच्येत—'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः' इति स्मृत्या माणवकमुपनीयाध्यापयेदाचार्यकं भावयेदिति वाक्यमिति वक्तुं न शक्यते, यतो हीदं वाक्यं यत्तच्छब्दघटितमेकं वाक्यमिति प्रतीयते, अत आचार्यस्वरूपनिरूपणपरम्, नाध्यापनविधिपरम्।

[1]—'भिन्ने जुहोति' कपालभेदने निमित्ते नैमित्तिको होमः कर्तव्य इति तदर्थः बोध्यः।

किञ्च तच्छब्दोपबन्धात् विधिशक्तिरुपहन्यते । यथोक्तम्—

'सिद्धत्वद्योतनाद्वक्त्राभिमुख्यासम्भवाद्विधौ ।
आत्मनि प्रेरणाभावात् निमित्ताद्यभिधानतः ॥
विधिशक्तिविहन्तृ स्यात् यच्छब्दादिचतुष्टयम् ।
प्राप्त्ययोगे तु तद्बाधात् क्वचित् स्यादविहन्तृता' ॥

( न्या. सु. पृ. ९०५ ) इति ।

किञ्चेयं स्मृतिर्यद्यध्यापनविधिपरा स्यात्, तर्हि-यो द्विजः, तमाचार्यं प्रचक्षते इत्यनेनैकवाक्यता न स्यादिति तर्केणाचार्यलक्षणपरता निश्चीयते-अस्याः स्मृतेः । तथा च मानवं वचनम्—

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः' ॥ इति ।
'एवं सर्वत्र तर्कौघैरर्थाभासनिरासतः ।
वाक्यार्थस्थापनी सर्वा मीमांसा तर्करूपिणी' ॥ इति च ।

अपि चेदं वाक्यमध्ययनविधिपरमेव । यथा—'एतयाऽन्नाद्यकामं याजयेदि'-त्यादौ याजयतेरुपरि श्रूयमाणोऽपि विधिर्यागपर एव । अर्जनादिना ब्राह्मणः द्रव्यम् अर्जयेत् इत्यादिनाऽध्यापनस्य प्राप्तत्वादनुवादः ।

अतः 'षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविके'त्यादिना प्राप्तत्वादध्यापनं काम्यम्, वृत्तिमध्ये परिगणनात् । अध्ययनं नित्यम्, अकरणे प्रत्यवायश्रवणात्, 'अनधीयाना व्रात्या भवन्तो'ति वाक्यात् । अतः नेदं वाक्यमध्यापनं विधातुं शक्नोति । यथोक्तं मिश्रैः—

नाध्यापनमिदं वाक्यं विधातुं क्षमते यतः ।
द्रव्यार्जनार्थप्राप्तत्वात् यच्छब्देन च संगतेः ॥

( न्या. र. मा. पृ. १४ ) ॥ इति ॥

अतो मानवं वचनमध्यापनविधेरनुमापकमिति आशामोदकायते ।

द्वितीयप्रकारस्यान्यथा व्याख्यानम् ।

यदुक्तम्-'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'ति । तस्यायमर्थः अष्टवर्षो ब्राह्मणो गुरुसमीपं गच्छेत् । तमध्यापयीत-सोऽधीयीत इत्यर्थः अत इदं वचनमध्ययन-विधायकमेव, नाध्यापनविधायकम् । इदं व्याख्यानं विवरणादावनुसृतमिति बोध्यम् । आचार्योऽपि लोकप्रसिद्ध एव । अतः 'उपनीय ददद्वेदं आचार्यस्स उदाहृतः' इति याज्ञवल्कीयं वचनमनुवाद एव । यद्यपि—'विद्यादानेन सुमतिर्ब्रह्मलोके महीयते' इत्यादिवचनैर्विद्यादानात्मकमध्यापनं फलान्तरशेषतया विहितमिति स्यान्मनीषा । तथापि नाध्ययनस्य तत्प्रयुक्तिः, सर्वत्र नियोज्याश्रवणस्य समानत्वात् ।

यद्युच्येत-अर्थज्ञानं स्वयमपुरुषार्थत्वात् नाध्ययनस्य प्रयोजकं भवितुमर्हति, तथापि ज्ञानसाध्यानि अग्निहोत्रादिकर्माणि अध्ययनस्य प्रयोजकानि भवितुमर्हन्ति, तेषां ज्ञानमङ्गमिति वक्तुं न शक्यते, अङ्गताबोधकप्रमाणाभावात् । उपकारकमात्रन्तु

भवति आचार्यकस्य। आचार्यकस्य अध्यापनमङ्गमेवातस्तद् द्वारेण प्रयोजकम्। एवञ्चाध्यापनविधिप्रयुक्तमध्ययनमिति न शङ्कनीयम्।

इदन्तु आपातरमणीयम्, यद्यपि ज्ञानं कर्माङ्गम्, अध्ययनन्तु ज्ञानाङ्गमेव तेन प्रयुज्यमानमध्ययनं शेषिप्रयुक्तमेव भवति, अध्यापनप्रयुक्तन्तु न शेषिप्रयुक्तं भवति, अध्ययनस्य तदनङ्गत्वात्। यद्यपि ज्ञानं स्वरूपेण अपुरुषार्थम्, तथापि कर्मानुष्ठानौपयिकतया पुरुषैरभिलष्यमाणत्वात् पुरुषार्थं भवति, आचार्यकमपि न स्वरूपेणाभिलषितम्, दक्षिणालाभाद्यर्थमेव पुरुषेण प्रार्थ्यते, तस्मात् तस्य न प्रयोजकत्वम्।

अपि चोत्तरविधिप्रयुक्तत्वे फलार्थितैव प्रवर्तिका। ततश्शूद्रादेरपि अधिकारः प्रसज्येत, फलार्थिताया अविशेषात्। यदुक्तं 'विद्यादानेन सुमतिरि'त्यादि, तदपि पुरुषार्थप्रापकविद्यादानाभिप्रायम्। तस्मादध्यापनविधिर्न सम्भवति। ग्रन्थकृता शास्त्रदीपिकायां जिज्ञासाधिकरणे उक्तम्—'प्रायेणायं पक्षो न्यायरत्नमालायां निरस्त इत्युपरम्यते' इति।

(१) 'मुख्यशब्दाभिसंस्तवाच्चे'ति गुणसूत्रे मुख्यशब्दस्य शेषित्वेन पयः प्रतिपादयतश्चाभिसंस्तवप्रयोजकत्वं न्याय्यम्। तदनेनाध्ययनस्यान्तरंगभूतश्शेषिभूतश्च स्वाधिकार एव प्रयोजकः। न तु बहिरंगोऽतच्छेषिभूतश्चाचार्यकरणविधिरिति दर्शितम्। तं० र. पृ. ८२।

(२) स्वच्छन्दचारिणामेव त्वेकदेशिनामुत्सूत्रमुद्भाष्यञ्च प्रवर्तमानानामिदमुचितं वक्तुम् आचार्यकाङ्गमुपनयनम्, नाध्ययनाङ्गमिति।

ननु तादर्थ्येन विधीयमानस्योपनयनस्य तन्निष्पादकता कथमवगम्यते ? न ह्यदृष्टार्थता विधिमन्तरेण सिद्ध्यति, सत्यम्। न त्वाचार्यकं नामादृष्टमस्ति, यद् वैधं साधनमाकाङ्क्षेत। क्रियानिमित्तो ह्ययं शब्दः पाचकादिवदुपनीय वेदं ददतो वाचकः। अत एव तमध्यापयेदित्यपि नाध्यापनविधिरयम्, दृष्टार्थत्वादध्यापनस्य विध्यपेक्षाभावात्। किन्त्वविवक्षितप्रयोजकव्यापारं विवक्षितप्रयोज्यव्यापारं याजयेदित्यादिवद्विधत्त इति न्यायरत्नमालायामेव निर्णीतमित्यलमनेन, तं. र. पृ. ४३४।

(३) पुरुषस्याध्ययनं श्रूयते, न क्रतोः, श्रुत्याद्यभावात् न्यायरत्नमालायां वर्णितम् तं० र० ५०७, विशेषस्तु ग्रन्थशरीर एव द्रष्टव्यः। तस्मान्नाध्यापनविधिरस्ति, तमुपजीव्य पूर्वोत्तरपक्षौ न वर्णनीयौ।

तस्मिंश्च विद्याकर्मान्तमविप्रतिपन्ने धर्मेभ्यः आप. ध. सू. १-१-१३ इति सूत्रं व्याचक्षाणो हरदत्ताचार्यो ब्रवीति-यद्यासावाचार्यो धर्मेभ्यो न प्रच्युतो भवति, प्रच्युते च तस्मिन् असंपर्कार्हेऽन्यतोऽपि विद्याकर्म भवत्येवेति वदन् आचार्यकरणविधिपक्षेऽनुपपन्नं स्यादिति अनुपपत्त्या निरस्यति स्म। यथा-येषामाचार्यकरणविधिप्रयुक्तमध्ययनम्, तेषामेतन्नोपपद्यते, कथम् ? उपनीयाध्यापनेनाचार्यकं भावयेदिति, सकृदुपनीतस्य माणवकस्य न पुनरुपनयनसंस्कारस्संभवति, तं कथमन्योऽध्यापयेत् ?

एतेन मध्ये आचार्यमरणे माणवकस्य तदध्ययनं नाचार्यान्तरात्संभवतीति द्रष्टव्यमिति भाषमाणो हरदत्ताचार्यो वृत्तिकारः प्राभाकरमीमांसकमतखण्डनेऽभिनिविष्ट

इव संलक्ष्यते । यतोहि गुरुमतानुसारिणः अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत इति कस्याञ्चिच्छाखायां प्रत्यक्षश्रुतेनाध्यापनविधिनाऽऽचार्यत्वसिद्ध्यर्थमध्यापनं विदधता अध्ययनं प्रयुज्यते चातुर्थिकेनोपादानाख्यप्रमाणेनेति ते ब्रुवते, अतोऽध्यापनान्यथानुपपत्त्याऽऽक्षिप्यमाणमध्ययनम् 'स्वाध्यायोऽध्येतव्यः' इति न स्वधिना विधीयते, किन्त्वनुवाद इति । एवं सन्ति बहूनि स्थलानि, गौरवभिया नोदाहृतानि, स्थालीपुलाकन्यायेन हरदत्ताचार्यीयमेकमुदधारि ।

यत्तु—अष्टवर्षं ब्राह्मणमुपनयेत्' इत्याश्वलायनसूत्रभाष्ये परस्मैपदपाठोऽयमध्येतॄणां प्रमादजः आचार्यकरणे यस्मात्प्राप्नोत्येवात्मनेपदमिति हरदत्तव्याख्यानम् ।

तदपि पार्थसारथ्यादयो नानुमन्यन्ते । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यनेनैव ङितो, नित्यं आत्मनेपदसिद्धौ पुनः संमाननसूत्रादकर्त्रभिप्राये क्रियाफले आत्मनेपदं भवतीति ज्ञापयति । ततश्चाचार्यकरणेऽप्यात्मगामिक्रियाफलाभावादात्मनेपदमपि परस्मैपदतुल्यमेव । तदुक्तम् वैयाकरणैः—'अकत्रभिप्रायार्थः पुनरारम्भः' इति । तस्मान्नायं प्रमादपाठः । सं प्र. पृ. ३३९ इति बोध्यम् । अवसरान्तरेऽन्यानि प्रदर्शयिष्यन्ते-इति ।

### प्रस्थानद्वयस्यापि निबन्धग्रन्थेष्वादर इति कथनम् ।

तत्रेदमवधेयम्-प्रथमोपाकरणांगत्वेन वृद्धि ( नान्दीश्राद्धं ) करणीयमिति धर्मशास्त्रकाराणां व्यवस्था दृश्यते । तत्र चेदं प्रमाणम्—

'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किञ्चित्समारभेदि' । ति

तच्च यद्यध्ययनमध्यापनविधिप्रयुक्तं प्राभाकरमीमांसकरीत्या, तदा संस्कारस्याचार्यनिष्ठत्वात्, आचार्यः स्वपित्रादिभ्यो वृद्धिश्राद्धं कुर्यात् । यद्यध्ययनविधिप्रयुक्तमध्ययनं भाट्टमीमांसकपद्धत्या, तर्हि तन्माणवकार्थमुपाकरणम्, तर्हि माणवकस्य संस्कारार्थं जीवन् पिता स्वपित्रादिभ्यः दद्यात् । न जीवति चेत् पिता, तदा वटुरेव पित्रादिभ्यो दद्यात् ।

यथा—

'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमादिति' ॥

अयमर्थः-तस्य-पितुरभावे तत्क्रमात् पितृक्रमादित्यर्थः । तस्य पितुरभावे तत्क्रमात्-संस्कार्यपितृक्रमादित्यर्थकरणे तु आचार्य एव तत्पित्रादिभ्यः दद्यादिति । एवञ्च मतद्वयानुसारेणापि शास्त्रकारैर्व्यवस्था क्रियमाणोपलभ्यते । दिङ्मात्रमुदाहृतमिति ध्येयम् ।

### आचार्यमतेनाध्ययनविधिविचारः

तत्र वार्तिककारमतम्—'स्वाध्यायोऽध्येतव्यः ( ते. आ. २. प्र. ) इति अध्ययनविधिः श्रूयते । तत्राऽधिपूर्वकादिङध्ययने इत्यस्माद्धातोः कर्मणि तव्यप्रत्यये कृते अध्येतव्य इति रूपं निष्पद्यते, तत्र प्रकृत्यर्थोऽध्ययनम् । तच्च गुरुमुखोच्चारणानूच्चारणरूपम् ।

तव्यप्रत्ययार्थः प्रवर्तना। सा च प्रवृत्त्यनुकूलव्यापारः, प्रवृत्तिश्चार्थीभावनारूपा। सा च किं केन कथमित्यंशत्रयमपेक्षते, तत्र प्रयोजनापेक्षायामध्ययनं स्वपदोपात्तमपि न साध्यत्वेन सम्बद्धुमर्हति, कष्टं कर्मेति न्यायात्। अत्र स्वाध्यायपदवाच्यः पित्रादि-परम्परया प्राप्तोऽध्ययनविषयोऽनुष्ठानविषयश्च मन्त्र-ब्राह्मणात्मकशब्दराशिर्वेदः साध्यत्वेन सम्बद्ध्यते। अत्रायं सन्देहः—आर्थीभावनायाः तव्यप्रत्ययाभिहितायाः साध्याकाङ्क्षायां किं विश्वजिन्यायेन स्वर्गः कल्पनीयः, अथवा अक्षरसंस्कारादिपरंपरया जायमानं वाक्यार्थज्ञानमेव साध्यमङ्गीकर्तव्यमिति।

अत्रेदं बोध्यम्—इदं विचारशास्त्रापरपर्यायं मीमांसाशास्त्रमध्ययनविधिप्रयुक्त्याऽनारम्भणीयम्, अथवाऽऽरम्भणीयमिति मुख्यो विचारः, तत्सिद्ध्यर्थमध्ययन-विधेरदृष्टार्थत्वम्, अथवा दृष्टार्थत्वमिति विचारः। अत एव भाष्यकारो जिज्ञासाधि-करणे 'अथातो धर्मजिज्ञासे'ति सूत्रमध्ययनविधेरदृष्टार्थत्वमाशंक्य दृष्टार्थत्वप्रतिपादन-परमिति प्रत्यपीपदत्। तथा च भाष्यम्-'दृष्टो हि तस्यार्थः कर्मावबोधनं नामे'त्यादि, तस्य प्रसंजकोऽयमेव विधिरित्यादौ तस्य विचार उपपद्यते।

### अदृष्टार्थत्वकोटेः कथमुन्मेष इति शंका।

अत्रादृष्टार्थत्वकोटेः कथं समुन्मेष इति शंका जायते, यतोऽध्ययनकरणिकायां भावनायां नियोगः प्रतीयमानो नियोज्यविशेषमन्तरा न पर्यवस्यति, अतोऽत्र स्वर्गादि-परित्यागेन रात्रिसत्रन्यायेन घृतकुल्यादिकमवलम्बते, न चार्थवादत्वं शक्यशंकम्, पारार्थ्यानवगमात्। न च कर्मावबोधार्थत्वेन पारार्थ्यम्, अध्ययनस्य तादर्थ्याना-श्रवणात्। अतः अदृष्टार्थत्वकोटेः कथं समुन्मेषः—इति।

### तन्निरासः

अभिधीयते—अध्ययनकरणिकायां भावनायां निर्वर्त्यमानायां तावदर्थावबोधो जायते, सचाहवनीयादिवदुपकारकत्वेन कर्मार्थो भवति। अतोऽध्ययनमपि तद्द्वारा कर्मार्थ-माधानवत्, तथा चाध्ययनस्य पारार्थ्येऽवगते, घृतकुल्यादेस्तदर्थवादत्वोपपत्तौ फलसमर्प-कत्वानुपपत्तेः। नन्वेवम् दृष्टार्थावबोधार्थत्वेनादृष्टार्थत्वानुपपत्तिः। न। तादर्थ्ये विध्या-नर्थक्यापत्तेः। विधिं विनापि तल्लाभात्। अतो विध्यर्थवत्त्वायादृष्टार्थकोटेरुन्मेषोंऽगी-कर्तव्यः। अतश्शास्त्रारम्भसिद्ध्यर्थत्वेनाध्ययनविधेरदृष्टार्थत्वम्, दृष्टार्थत्वं वेति इति संशय उपपद्यते। एतेनाध्ययनानन्तरं धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यम्, उत गुरुगृहात् समावर्तितव्यमिति शास्त्रदीपिकासन्दर्भो व्याख्यातः।

तत्रायं पूर्वपक्षः—अदृष्टार्थमध्ययनं विधीयते—इति। तत्रार्थज्ञानार्थमध्ययन-विधिरिति वादिनाऽपूर्वविधिरिति वक्तुं न शक्यते, अध्ययनसत्त्वेऽर्थज्ञानसत्त्वम्, अध्ययनाभावे अर्थज्ञानाभाव इत्यन्वय-व्यतिरेकरूपयदागमन्यायेन, विमतं वेदाध्यय-नमर्थज्ञानहेतुः, अध्ययनत्वात् काव्याध्ययनवदित्यनुमानेन चाध्ययनस्य अर्थज्ञाना-र्थत्वावगमात्, अतो नायमपूर्वविधिः, नापि नियमविधिरिति वक्तुं शक्यते। क्रतुस्वरूपे, ज्ञानस्वरूपे वा नियमः कर्तुं न शक्यते, अनारभ्याधीतत्वेन अक्रत्वर्थत्वात्। अङ्गताबोधकप्रमाणाभावेन च नावघातवन्नियन्तुं शक्यते। अतोऽदृष्टार्थत्वं वक्तव्यम्।

तत्र फलाकाङ्क्षायामार्थवादिकफलकल्पनम् रात्रिसत्रन्यायेन, लाघवात्। तदसम्भवे विश्वजिन्न्यायेन स्वर्गकल्पनम्। यथोक्तम्—शास्त्रदीपिकायाम्—

'विनाऽपि विधिना ज्ञानलाभान्न हि तदर्थता।
कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत्'॥ इति॥

अत्र पद्ये कल्प्यस्त्वित्यत्र तुशब्दः सिद्धान्तापेक्षया पूर्वपक्षेऽतिशयमवद्योतयति—सिद्धान्तेऽपुरुषार्थरूपस्यार्थज्ञानस्य साध्यत्वम्। पूर्वपक्षे तु सर्वाभिलषितस्य पुरुषार्थस्य स्वर्गस्य साध्यत्वमिति। एवञ्च प्रवर्तनात्मकस्य चेतनप्रवर्तनैकरसस्य विधेरुपपत्तिरिति। तस्माददृष्टार्थमध्ययनम्।

## आर्थवादिकफलकल्पनेऽनुपपत्तिशंका-निरासौ।

यदि शङ्क्यते—अध्ययनं त्रिविधम्—ग्रहणाध्ययनम्, धारणाध्ययनम्, जपाध्ययनमिति। तत्र आयुरादिफलप्राप्तिर्जपाध्ययनविषया, तपःफलप्राप्तिः धारणाध्ययनगोचरा। आद्ये ग्रहणाध्ययने तु न किञ्चित् फलं श्रूयते। अर्थवादप्रतिपाद्यप्राशस्त्यमात्रस्य शब्दभावनेतिकर्तव्यताभूतस्यातिदेशेन प्राप्तिस्सम्भाव्यते, न त्वायुरादिफलस्वरूपम्। एवञ्च 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वादि'ति न्यायेनाध्ययनस्य स्वर्गार्थत्वम्। तत्राऽक्षरग्रहणमात्रेण शास्त्रार्थसमाप्तेः 'अधीत्य स्नाया'दिति स्मृत्यनुसारेण समावर्तनं (स्नानं) कर्तव्यम्। तदनन्तरं प्रयोजनवशेन वेदवाक्यानि विचारयतु, मा वा। तस्मादध्ययनानन्तरं धर्मविचारात्मकं मीमांसाशास्त्रं नारम्भणीयमिति पूर्वपक्षः।

## आचार्यमतेन सिद्धान्तप्रतिपादनम्।

सिद्धान्तस्तु-अध्ययनविधेरर्थज्ञानरूपं दृष्टमेव प्रयोजनम्, तच्च साङ्गवेदाध्यायिनो निगम-निरुक्त-व्याकरणादिवशेनापाततोऽर्थप्रतीतिसम्भवेऽपि निर्विचिकित्सं ज्ञानं विचारमन्तरा न सम्भवति। ज्ञाने निर्विचिकित्सत्वञ्च संशय-विपर्ययशून्यत्वे सति संशयविपर्ययविरोधित्वम्। उपेक्षायामतिप्रसंगवारणाय सत्यन्तं विशेषणम्। संशय-विपर्ययविरोधिसंशयविपर्ययान्तरेऽतिव्याप्तिवारणाय विशेष्यम्। इदमेव निर्विचिकित्सज्ञानं फलवदर्थज्ञानम्, प्रयोजनवदर्थज्ञानमिति च व्यपदिश्यते। अस्यैव स्वविषयधर्मानुष्ठानद्वारा स्वर्गादिफलसाधनत्वात्। अतो येन विना यन्न सम्भवति तत्तेनाक्षिप्यत इति न्यायेनाऽध्ययनविधिना विचारशास्त्रमाक्षिप्यते।

अत्रेदमवधेयम्—यद्यपि अर्थज्ञानमुद्दिश्याध्ययनं विधीयते इति शास्त्रे अभियुक्तानां व्यवहारो दृश्यते। परमिदं विचारणीमध्ययनस्य गुरुमुखोच्चारणानूच्चरणरूपस्य कथं वाक्यार्थसाधनत्वमिति।

अतः 'स्वाध्यायोऽध्येतव्यः' इति वाक्यस्य द्वेधा वचनव्यक्तिः सम्भाव्यते। तत्राद्या अध्ययनेन स्वाध्यायं भावयेत्, अधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति। 'अध्वर्युं वृणीते' इतिवत्। अध्वर्युं वृणीते इत्यस्य वरणेनाध्वर्युं संस्कुर्यात्, स च विध्यन्तरपर्यवसायी-वृतेनाऽध्वर्युणा कर्म कुर्यादिति। एवं प्रकृतेऽपि। द्वितीयात्वर्थज्ञानसाधनीभूतं स्वाध्यायमध्ययनेन भावयेदिति। एवञ्चाध्ययनविधेरर्थज्ञानरूपं दृष्टमेव प्रयोजनम्।

### न्यायस्वरूपविवेचनम्, तस्य स्थलनिर्देशश्च ।

सम्भवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वादिति न्यायः । तस्य न्यायस्य मूलं लाघवाख्यस्तर्कः । अस्यायमाशयः । तथाहि—अध्ययनविधेः पूर्वपक्षे—अदृष्टार्थत्वपक्षे अदृष्टं प्रयोजनमिति वक्तव्यम्, अन्यथा विधेरानर्थक्यात् । तत्रादृष्टस्यालौकिकत्वादेव तत्स्वरूपं कल्पनीयम् । तस्य अध्ययनजन्यत्वम्, तस्यैव प्रयोजनत्वमिति बहु कल्पनीयम् । अर्थज्ञानस्वरूपम्, तस्याध्ययनजन्यत्वञ्च सिद्धमेव । परन्तु तस्यैव प्रयोजनत्वं कल्पनीयमिति लाघवम् । अतः सम्भवति लाघवाख्यः तर्कोऽस्य मूलमिति । यद्यध्ययनविधिस्स्वर्गफलकस्स्यात्, तर्हि दृष्टार्थत्वे सम्भवत्यदृष्टग्रहणात् गौरवं स्यादिति तर्कानुग्रहेणार्थज्ञानफलबोधको भवतीत्यनुसंधातव्यं विज्ञैरिति । अयं न्यायो जिज्ञासाधिकरणे न साध्यते, अपि तु नावमिकेऽधिकरणे इति पार्थसारथिमिश्रः । सोमनाथस्तु मन्त्राधिकरणे व्युत्पाद्यते ( पृ. १८ ) इति । तत्रैव विशेषो द्रष्टव्यः ।

### अध्ययनविधेर्नियमपरत्वे मतद्वयम् ।

तत्र शास्त्रदीपिकायामध्ययनविधेरधिकारिनियमः प्रयोजनमिति जिज्ञासाधिकरणे, षष्ठे अपशूद्राधिकरणे च विशदोऽयं विषयः ।

यथोक्तं शास्त्रदीपिकायाम् ।

'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।
विधेस्तु नियमार्थत्वात् नानर्थक्यं भविष्यति' शा० दी० पृ० ६ इति ।

अधिकरणमालायान्तु माधवाचार्येण क्रत्वपूर्वे नियमः प्रतिपादितः ।

यथा—

'दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकमि'ति ।

विवरणप्रमेयसंग्रहेऽपि विस्तरेणायमर्थः प्रतिपादितः ।

### न्यायरत्नमालानुसारेण स्वपक्षस्योपस्थापनम् ।

परन्तु न्यायरत्नमालायां अप्राप्तविधिरेवायं इत्यादिना ग्रन्थेन फलतः नियमभाषा । 'यथा इमामगृम्णन् रशनामृतस्ये'त्यत्र फलतः परिसंख्या वाचोयुक्तिः । एवमध्ययनविधावपि नियमवाचोयुक्तिः द्रष्टव्या इति । अत एव न्यायरत्नमाला—शास्त्रदीपिकयाविरोधपरिहाराय युक्तिस्नेहप्रपूरण्यामुक्तम् 'एतच्च सम्भतादुक्तम्, वस्तुतस्त्वपूर्वविधिस्वीकारेण पूर्वपक्षोक्तदोषपरिहारात् नियमार्थत्वं सम्भवति अधिकारनियमस्तु प्रकारान्तरेणोपपद्यते । अतः अपूर्वविधिरेवायमतोऽत्रापि नियमो न वाक्यार्थः, किन्त्वपूर्वविधेः फलमि' पृ. ६–७ । ति ।

### अध्ययनविधेरनेकफलत्वे शंका–परिहारौ ।

अपि चानेकेषां प्रयोजनानां कल्पने गौरवमपि नाशङ्कनीयम् ? यदेव विध्यन्तरोषयोगि अपेक्षितञ्चाध्ययनेन साध्यमानं दृश्यते, तत्सर्वमस्य प्रयोजनमित्यङ्गीक्रियते । यथोक्तं ग्रन्थकृता—

'न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम्।
अपेक्षितं दृश्यते यत् तत् सर्वं फलमिष्यते'॥
न्या. र. मा. पृ. २२ इति।

एवञ्चाध्ययनस्यार्थज्ञानार्थत्वात्, अर्थज्ञानं विचारमन्तरा न सम्भवति। अतो धर्मजिज्ञासा कर्तव्या इति प्रयुक्तितिलके विस्तरेणोपपादितस्य संक्षेपोऽयमिति।

द्वितीयप्रकरणस्य प्रतिपाद्योऽयं विषयः।

स्वतः प्रामाण्यनिर्णयाख्ये द्वितीये प्रकरणे श्रीमानयं ग्रन्थकारः चोदनासूत्रे विधिप्रामाण्यार्थमनागतावेक्षणन्यायेन वार्तिककृतोपन्यस्तं वेदानां स्वतः प्रामाण्यं मतान्तरनिराकरणपूर्वकं संक्षेपेण प्रतिपादयामास। तत्र प्राधान्येन स्वशब्दः-आत्मवचनः, आत्मीयवचनो वा इत्येकः विषयः। तथा प्रामाण्यं किं स्वतो भवति, किम्वा भवति, द्वितीयो विषयः, तथा प्रामाण्यं नाम किमर्थतथात्वम्, किम्वा तथाभूतार्थनिश्चायकत्वमिति तृतीयो विषयः।

तत्रादौ (१) श्लोकवार्तिकव्याख्यातुः उम्वेकभट्टस्य मतेनऽर्थाव्यभिचारित्वं प्रामाण्यम्, स्वशब्दः आत्मीयवाचीत्यादिकमुपक्षिप्य, वार्तिकवचनानां पूर्वापरविरोधेन तदीयं व्याख्यानं निरस्यति स्म मिश्रः।

अनन्तरं सुचरितमिश्रस्य मतमुपन्यस्य, तदपि पूर्वापरवार्तिकविरोधेन निराचकार। अयञ्च विषयः ग्रन्थशरीर एव ग्रन्थकृता विवेचित इति। तत्र पूर्वपक्षे सांख्यमतेन, तार्किकमतेन, सौगतमतेन वा अप्रामाण्यमेवोपस्थाप्यते। अयञ्च विषयः षट्त्रिंशत्पृष्ठेऽधस्ताट्टिप्पण्यामस्माभिरुपपादितः। यथा-स्वतो द्वयमित्यत्रापि सांकर्यादेव प्रामाण्यानिर्णयात् फलतः अप्रामाण्यमेव साख्यमतेन, तार्किकमतेऽपि परतो द्वयमित्यत्रापि गुणाभावादेवाप्रामाण्यमिति पूर्वपक्षस्याशयः।

यथोक्तम्—उभयं परत इति पक्षे पुरुषगुणानामभावादप्रामाण्यञ्चोदाननाम्। तथा द्वयं स्वत इत्यत्रापि पक्षे चोदनानामप्रामाण्यम्। नहि द्वयोः स्वाभाविकत्वे, चोदनायाः प्रामाण्यं स्वाभाविकमित्यत्र निश्चयोऽस्तीति ( ता० टी० पृ० ४८ ) सौगतमते तु अप्रामाण्यं स्वत इति। अत्रार्थे वार्तिकमिदमनुसन्धेयम्—

'एवं स्थिते तु वेदस्य सति वाऽसति वा नरे।
प्रामाण्यं दुर्लभं मत्वा नन्वित्येतदचूचुदत्॥ इति॥

सिद्धान्ते ज्ञानं स्वतः प्रमाणम्, अर्थात् ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं सत् प्रमाणान्तरमपेक्षते, तदपि प्रमाणान्तरमित्यनवस्था स्यात्। तथा च जन्मसहस्रेणापि न कश्चिदर्थनिश्चयः स्यादिति, अशेषस्य जगत आन्ध्यं प्रसज्येत-इति, अतो ज्ञानानां स्वतः प्रामाण्यमङ्गीकर्तव्यम्। यथोक्तम्—

'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते'॥ इति।
'परापेक्षं प्रमाणत्वं नात्मानं लभते क्वचित्।
मूलोच्छेदकरं पक्षं को हि नामाऽध्यवस्यति'॥ इति च।

परतः प्रामाण्ये यस्य कस्यचिद् वा ज्ञानस्य स्वतः प्रामाण्यानभ्युपगमे अनवस्था स्यात्, न किञ्चिद् विनिगमकमस्ति। यदि संवादिज्ञानम्, गुणज्ञानम्, अर्थक्रियाज्ञानञ्च स्वतः प्रमाणमित्यभिधीयते, तदा तयोः कः विशेषः, यदेकं स्वतः प्रमाणम्। अन्यच्च परतः प्रमाणमिति।

तात्पर्याचार्यैरपि टीकायां प्रामाण्यस्यानुमानगम्यत्वप्रतिपादनावसरे अनवस्थापरिहाराय परतःप्रामाण्यवादिभिस्तार्किकैरिदं जलमिति ज्ञानं प्रमाणम् सफलप्रवृत्तिजनकत्वादित्यनुमाने हेतुज्ञानस्य स्वतःप्रामाण्यं प्रतिपादितम्, तज्जिज्ञासूनां सुखावगतये टीकासंदर्भोऽधस्तादुल्लिख्यते। तथाहि–अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनोऽन्यस्य वा निरस्तसमस्तव्यभिचारशंकस्य स्वतः एव प्रामाण्यम्, अव्यभिचारिलिङ्गसमुत्थत्वात्। नहि लिङ्गाकारं ज्ञानं लिङ्गं विना न च लिङ्गं लिङ्गिनं विनेति, अत एवागृहीताव्यभिचारलिङ्गसमुत्थं निष्कम्पमुत्पद्यते ज्ञानम्। प्रत्यक्षज्ञानमर्थादुत्पद्यमानमपि न गृहीताव्यभिचारात्, अपि तु सत्तामात्रेणावस्थितात्, न च कारणान्तराण्यपीन्द्रियाण्यतीन्द्रियास्यार्थेन गृहीताव्यभिचाराणि नवाऽर्थेनाव्यभिचाराणि। शाब्दं ज्ञानं तु नार्थादुत्पद्यते तदभावे, सति शब्दे भावात्। नापि लिङ्गस्येव शब्दस्यार्थाव्यभिचारः, किन्तु संकेतग्रहणमात्रात् पदार्थप्रत्यायनेन वाक्यार्थमवगमयति शब्दः। तस्मात् प्रत्यक्षशब्दविज्ञानयोः न स्वतो व्यभिचारग्रह इति, प्रवृत्तिसामर्थ्यम्, तज्जातीयत्वं वा लिङ्गमर्थाव्यभिचारायानुसरणीयम्। ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य मानसप्रत्यक्षस्य तादृशस्यादृष्टव्यभिचारतया परितः निरस्तसमस्तविभ्रमाशंकस्य स्वतः प्रामाण्यमिति नानवस्थे न्या० वा० ता० टी० पृ० १३ ति।

## प्रकरणार्थस्य निगमनम्।

एतेनोद्धरणेनेदमवगम्यते–यद्वाचस्पतिमिश्रस्यानुमानज्ञानस्य स्वतः प्रामाण्यम्, प्रत्यक्ष–शब्दादिज्ञानस्य न स्वतः प्रामाण्यम्, तत्र परतः प्रामाण्येऽपि नानवस्था, तत्प्रामाण्यग्राहकस्यानुमानस्य स्वतः प्रमाणत्वेन प्रमाणान्तरानपेक्षणादिति संप्रधार्यते, अत्र मीमांसकमतेनाभिप्रायेणोक्तं स्वत इतीति टिप्पणम्, परमताभिप्रायेणोक्तं स्वत इति वर्धमानोपाध्यायवचनञ्च चिन्त्यम्। अत्र न्यायरत्नमालाकारो ब्रवीति। संवादो नाम तद्विषयं ज्ञानान्तरम्। तस्य पूर्वज्ञानात् को विशेषः, येन पूर्वज्ञानेनानिश्चितमतेन निश्चीयते इति। एवञ्च विशेषाभावेनान्ततोगत्वा यत्र कुत्रापि स्वतः प्रामाण्याभ्युपगमे आवश्यके सति, प्रथमज्ञानस्य स्वतः प्रामाण्यं स्वीकर्तव्यमिति। तथा च वार्तिकम्—

'कस्यचित्तु यदीष्येत स्वत एव प्रमाणता।
प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धनः' ॥ इति।

एवञ्च व्याख्यामोहविवादशमनमुखेन वार्तिकानुसारेण संक्षेपेण ज्ञानानां स्वतः प्रामाण्यम्, कारणदोषबाधकप्रत्ययाभ्यां परतोऽप्रामाण्यञ्च वर्णयामास इति। वेदे अपौरुषेये पुरुषदोषाणामसम्भवेनाऽनपोदितं प्रामाण्यं सम्भवतीति।

## अत्रेयं समीक्षा

अत्रेदं बोध्यम्–श्रीमानयं ग्रन्थकार आचार्यमताभिनिवेशी प्राभाकरमतखण्डने व्यग्रः कथं प्राभाकरमतनिरासमुपेक्ष्य, आचार्यशिष्याणाम् व्याख्याविषयिणीं विप्रतिपत्तिं निरसितुमिदं प्रकरणं निर्ममे। यथोक्तम् प्रकरणावसाने—

'व्याख्याविवादसंजातमोहव्यावृत्तये कृतेः' ॥ इति ॥

प्राभाकरमतेन चोदनालक्षणः—कार्यरूपः, धर्मः—वेदार्थ इति सूत्रम् व्याचक्षाणेन टीकाकारेण शब्दानामर्थासंस्पर्शिताशंका निरस्ता। तामुपेक्ष्याचार्यशिष्याणां व्याख्याविवादशमनाय प्रकरणमिदमुपन्यस्तं ग्रन्थकृतेति अवगन्तव्यं विज्ञैः।

### विधिनिर्णयस्य प्रतिपाद्यो विषयः

विधिनिर्णयनामके तृतीये प्रकरणे ग्रन्थकारो विध्यर्थविषये चतुरः पक्षानुपचिक्षेप। तथाहि १ नियोगो विध्यर्थः प्राभाकरीयः, २ इष्टसाधनत्वम् तत्त्वेन रूपेण विध्यर्थः। ३ तत्तद्धात्वर्थरूपं क्रियागतं कार्यत्वम्। ४ अभिधाख्यः शब्दव्यापार इति पक्षचतुष्टयं निरदिक्षत्। तत्राद्यपक्षं महताऽभिनिवेशेन खण्डयांबभूव। तथाहि चेतनप्रवृत्तिं प्रतीष्टसाधनताज्ञानं कारणं सर्वसम्मतम्, न कार्यताज्ञानम्। किञ्च कृतिसाध्यत्वं कार्यत्वम्, अथवा कृत्युद्देश्यत्वम् वेति द्वेधा विकल्पः। तत्र नाद्यः पक्षः संजाघटीति, आनुषंगिकसाध्यानामपि कार्यत्वं स्यात्। यदेव किञ्चिद्रागद्वेषलोभादिनाऽनर्थरूपमर्थतयोद्दिश्य पुरुषः प्रवर्तते, तत्सर्वं कार्यं स्यात्। एवञ्च सर्पाग्यङ्गुलिदानादावनिष्टसाधनेऽतिव्याप्तिः प्रसज्येत। न द्वितीयः, तस्य निर्वक्तुमशक्यत्वात्। कृत्युद्देश्ययोगित्वमित्यपि न साधु। सुख-दुखरोगपरिहारोपायत्वमपि नोपपद्यते, अननुगमात्। अपि च प्रवृत्तेः पूर्वकालवर्त्येव कार्यताज्ञानं प्रवृत्तिप्रयोजकम् भवितुमर्हति, न समकालम्, न चोत्तरकालमित्यतोऽपि हेतोः कार्यताज्ञानस्य न प्रवृत्तिकारणत्वमुपपद्यते इति प्रभाकरमीमांसकसम्मतनियोगविध्यर्थवादं निरास्थत्। द्वितीय–तृतीयमतयोर्वार्तिकाननुगुणतां पूर्वमतादविशेष इत्यादिना, निरस्यति स्म।

### पार्थसारथिमतवर्णनम्

'न्यायविदान्त्विष्टसाधनत्वमेवाभिमतमित्यादिना स्वाभिमतं विध्यर्थम्[2] उपापीपदत्। तथाहि–विध्यर्थः प्रवर्तना, सा च प्रवृत्त्यनुकूलव्यापारः इष्टसाधनत्वेन प्रवर्तना विध्यर्थः, न तु प्रवर्तनात्वेन। प्रवर्तनासामान्यञ्च विशेषमन्तरा न संभवति, 'निर्विशेषं न सामान्यमि'ति न्यायात्। प्रवृत्तिसामान्यं प्रतीष्टसाधनताज्ञानस्य कारणत्वमन्वयव्यतिरेकसिद्धम्। अतः इष्टसाधनत्वेन प्रवर्तना विध्यर्थ इति। भगवतो मण्डनाचार्यस्येदृशमेव विधिविवेकादवगम्यते। तथा च तत्रत्यो ग्रन्थः।

'पुंसो नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनामि' ॥ वि० वि० ( पृ० २४३ ) ति

---

१—न्यायविदान्त्विष्टसाधनत्वमेवाऽभिमतम्। इदमेव भगवतो मण्डनमिश्रस्यापि—

पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनामिति ॥

एवं चकारश्च प्रवर्तनाप्रत्ययः ३७६ प्रवर्तनावचनः कर्तव्यतावचनः इति च वदतोऽभिमतमिति।

२—तत्र स्वाभिमतं पक्षमाह–न्यायविदान्त्विति न्या० र० पृ० ८४।

अस्यार्थः—इष्टाभ्युपायत्वादिति ल्यब्लोपे पंचमी, इष्टसाधनत्वम् विहायेत्यर्थः, अन्यः कृतिसाध्यत्वादिः क्रियासु यागादिरूपादिषु न प्रवर्तकः ज्ञाननिष्ठप्रवृत्तिजनकतायां विषयतया नाऽवच्छेदकः। यजेतेत्यादिवाक्यान्तर्गतलिङादिशक्यो नेत्यर्थः। चो हेतौ, यतः प्रवृत्तिहेतुम्, प्रवृत्तिहेतुतावच्छेदकमेव प्रवर्तनापदेन व्यपदशन्ति। तथा च प्रवर्तनात्वेनेष्टसाधनतैव लिङादिवाच्य इति। अयमर्थो मूल एव न्यायरत्नमालायाम् व्यक्त इति।

### उक्तार्थे साक्षितया सोमनाथमिश्रस्योपन्यासः

शास्त्रदीपिकाव्याख्याता सर्वतोमुखसोमयाजी 'सोमनाथदीक्षितोऽपि ग्रन्थकारमते ( पार्थसारथिमते ) इष्टसाधनत्वमेव प्रवर्तनेति सुस्पष्टमेव कीर्तयति।

### खण्डदेवाचार्योद्धृतपार्थसारथिमतेनाभिधापक्षस्योपन्यासः।

मीमांसकाग्रणीराचार्यखण्डदेवः—'कः पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः। तस्य सन्निहितत्वादन्यस्य चाप्रतीतेः' इति स्वर्गकामाधिकरणशास्त्रदीपिकामवलम्ब्य शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य प्रवर्तनारूपत्वमित्यभिधाभावनापक्षमेवार्थवादाधिकरणकौस्तुभे पृ० २१, भाट्टतन्त्ररहस्ये पृ० १६ विध्यर्थनिरूपणावसरे चोपन्यस्यति। सोऽपि पक्षो ग्रन्थकृता स्वाभिमतेऽर्थे' 'अभिधाभावनामाहुरन्यामेव लिङादयः' इति वार्तिकव्याख्याव्याजेन प्रकरणान्ते समर्थित एव।

### तत्समर्थनम्।

अंशत्रयविशिष्टभावनाप्रतिपादनञ्चास्य व्यापारः, अस्य प्रवर्तकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वमिति पक्षः पष्ठाद्ये उपर्युल्लिखितवार्तिकसंवादक एव। अयमपि पक्षो पूर्वोक्तान्नातिरिच्यते।

### अभिधाभावनापक्षे न्यायसुधाकारोक्तदूषणम्।

वार्तिकव्याख्याता सोमेश्वरभट्टोऽभिधाभावनापक्षमभिधाव्यापारस्य लिङादिना बोधनात् प्राक् प्रवर्तकत्वशक्तिरस्ति न वेति द्वेधा विकल्प्य दूषयामास। तत्राद्यपक्षे व्यर्थमेव तस्य लिङाद्यभिधेयताकल्पनम्। न द्वितीयः-तदनन्तरमपि केनाऽसावुत्पाद्यताम्, तां प्रति हेतुत्वासंभवात्। एवञ्च प्रवर्तकतैव मिथ्या स्यादिति महदनिष्टमापद्यत इति दूषणद्वयं वर्णयामास।

तथा च तदीयौ श्लोकौ—

'अथ प्रवर्तनात्वेन कार्यादनवबोधतः।<br>
तद्रूपेणाभिधेयत्वं तच्चान्यासु न विद्यते' ॥ इति।

---

१—'ननु सिद्धान्ते भावनैव लिङादिवाच्या, न समीहितसाधनम्। ततश्च कथमयं ग्रन्थसन्दर्भ इति चेत्। सत्यम्। प्रवर्तना लिङादिभिरभिधीयते। प्रवृत्तिहेतुधर्मः प्रवर्तना। न च प्रेक्षापूर्वकारी समीहितसाधनादन्यत्र प्रवर्तयितुं शक्य इति, अर्थात् समीहितसाधनत्वमपि लिङादिभिरभिधीयते इत्याशयात्। यद्वा, ग्रन्थकारमते इष्टसाधनत्वमेव प्रवर्तनेति, न काप्यनुपपत्तिरिति 'भ भा' पृ. ७।

प्रथममाभिधापक्षमनूद्य,

'तन्नास्य ह्यभिधानात् प्राक् चेत् प्रवर्तकरूपता।
स्याद् व्यर्थमभिधेयत्वं नास्ति चेत् स्यादसत्यता' ॥ न्या. सु. इति।

### न्यायसुधाकृदुक्तदूषणोद्धारः, तन्मते दूषणापादनञ्च।

तदिदमविमृश्यमानसुन्दरमिति विचारचातुरीधुरीणा मन्वते। तथाहि—अभिधापक्षे लिङादेः प्रवर्तकत्वं परित्यज्य, तदभिधायाः प्रवर्तकत्वमुररीक्रियेत। तदात्व एवोक्तदूषणमवकाशमासादयेत्। लोके प्रवर्तकस्वभावस्याचार्यादेरिव वेदस्थलिङादेरपि विनैवाभिधानं प्रवर्तकत्वसम्भवेन अभिधाया लिङाद्यभिधेयत्वमनर्थकमापद्येत, न तु तथाऽभिधीयते, किन्तु लिङादीनामेव प्रवर्तकत्वम्। अभिधायास्तु प्रवतनात्वमिति ह्युच्यते। तथा च नोक्तदूषणावकाशः, प्रत्युत विलक्षणस्यालौकिकस्य व्यापारस्यैव कल्पनागौरवं दूषणं तन्मत एव वज्रलेपायते। अतस्तन्मतमेव नोपपत्तिमत्।

### तन्मते गौरवापत्तिः।

न्यायसुधाकृन्मते शब्दे एको व्यापारस्स्पन्दाद्यतिरिक्तः कल्पनीयः, भाट्टमीमांसकैश्शब्दस्य विभुत्वाभ्युपगमेन स्पन्दादेरसंभवादित्येकं गौरवम्, शब्दनिष्ठत्वेन कल्पितस्य व्यापारस्य स्वतन्त्रप्रवृत्तौ, पराधीनप्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य प्रवर्तनात्वेन प्रवृत्त्यनुकूलत्वकल्पनमिति द्वितीयम् गौरवम्, अन्यनिष्ठव्यापारबोधकत्वेन क्लृप्तस्य शब्दस्य स्वनिष्ठव्यापारबोधकत्वमिति तृतीयं गौरवम्। विधेश्च प्रवर्तकत्वनिर्वाहाय धात्वर्थस्येष्टसाधनत्वानुमानम्। अनुमानञ्च याग इष्टसाधनम्, अयमत्र प्रवर्तितामित्याकारकाप्तेच्छाविषयीभूतप्रवृत्तिविषयत्वादिति इति चतुर्थम्। अतोऽप्रसिद्धव्यापारकल्पनातोवरं क्लृप्तस्यैवाभिधाख्यस्य व्यापारस्य विध्यर्थत्वं परमेकं कल्पनीयमिति लाघवम्। पार्थसारथिमतेऽन्योपि विशेषः लोकक्लृप्त एव विध्यर्थः। लोकसिद्धमेव परीक्षकैरनुसरणीयम्।

### अभिधापक्षे विनिगमनाविरहशंका।

आचार्यखण्डदेवो विध्यर्थविचारप्रसङ्गे न्यायरत्नमालादावुपपादितम् पक्षमुपक्षिप्य विनिगमनाविरहदूषणमुपन्यस्तवान्। तथाहि—यदि अभिधायाः क्लृप्तत्वेन लिङादिवाच्यत्वमभ्युपगम्यते तर्हि संख्याद्यभिधानमपि क्लृप्तमिति तेन विनिगमनाविरहः—भा. तं. र. पृ. १६ इत्युक्तम्।

### तस्य परिहारः।

अत्रेदं बोध्यम्—विध्यर्थः प्रवर्तनात्मको व्यापारो लिङादिशब्देषु किंस्वरूप इति जिज्ञासायामर्थभावनाभिधानात्मक एव। तत्र पदश्रुत्या यागस्य साध्यत्वावगमेऽपि पदश्रुत्यपेक्षया विधिश्रुतेर्बलीयस्त्वात् एकप्रत्ययगम्यत्वेनार्थभावना-शाब्दभावनयोः प्रथमं सम्बन्धोऽवगम्यते, स च सम्बन्धः प्रत्यर्थञ्चाभिसंयोगात् भाव्यभावकत्वरूपो वाच्यः। पुरुषार्थभाव्यकत्वमन्तरेण प्रवृत्तेः प्रवर्तनासाध्यत्वं न संघटते। अतो विध्यन्वयबलादेव सामान्यरूपेण पुरुषार्थः कोऽपि भाव्य इति निश्चीयते। एवञ्च पुरुषार्थभाव्यकप्रवृत्तिरूपभावनाभिधानात्मक एव सः, क्लृप्तत्वात्। तस्यैव प्रवतनात्वेन

रूपेण लिङ्गादिवाचकत्वं कल्प्यत इति ग्रन्थकृत आशयः। एवं सति अयमर्थः पर्यवस्यति-यत्पुरुषार्थभाव्यकभावनाभिधानमेव प्रवृत्तिप्रयोजकम्, न तु संख्याभिधानमित्यन्यतर-पक्षपातिन्या युक्तेर्विनिगमनायाः सत्त्वात् विनिगमनाविरहदूषणं परिहृतमिति विज्ञेयं विबुधैरिति। एवम् पराभिमतविध्यर्थप्रकाराणां निरसनमुखेन स्वाभिमतविध्यर्थस्य निरूपणेन प्रकरणमिदमुपसमाहारि। विस्तरस्तु भाट्टतन्त्ररहस्यभूमिकायां द्रष्टव्यः।

**शाब्दीभावनाया अंशत्रये साधनेतिकर्तव्यतयोः कथं भानमिति शंका।**

अत्रेदं बोध्यम्—यथाऽऽर्थभावनाया अंशत्रयम्-साध्यम्, साधनम्, इति-कर्तव्यता चेति, तथैव शाब्दभावनाया अप्यंशत्रयं भवत्येव, नात्र काचित् विप्रतिपत्तिः। परन्त्वंशद्वयस्य साधनांशस्य इतिकर्तव्यतांशस्य च शब्दादनुपस्थितत्वेन शाब्दबोधे भानं न भवति, केवलो व्यवहार एव। अत एव खण्डदेवाचार्यो भाट्टतन्त्ररहस्ये आह 'अस्य च करणत्वेन व्यवहारमात्रम्, न तु तस्य शब्दबोधे करणत्वेनान्वयः, अशाब्द-त्वात्। एवं प्राशस्त्याप्राशस्त्यज्ञानं यथाक्रमं विधिनिषेधयोरितिकर्तव्यता, तदपि वस्तुत एव, न तु शाब्दबोधेऽन्वयः, अशाब्दत्वादेवमि'ति भा० तं० र० पृ० २७।

**तस्य समाधानम् ( लिङ्गादिज्ञानस्य शाब्दत्वकथनम् )।**

अत्राद्वैतसिद्धिकारा मधुसूदनसरस्वतयः आचक्षते—तथाहि भट्टवार्तिके उद्भि-दधिकरणे उपपादितरीत्या लिङ्गादिज्ञान-प्राशस्त्यज्ञानयोरप्युपस्थितिसंभवात् प्रशस्त-त्वेतिकर्तव्यतांशस्यापि शब्दबोधे भानम् संभवतीति। तथा च वार्तिकग्रन्थः—'सर्वत्रा-नुपस्थितविशेषणाविशिष्टे बुद्धिर्न भवति, न त्वनभिहितविशेषणा तं. वा. पृ. ३२६ इति।

अस्यायमर्थः—प्रायेण सर्वत्र शाब्दबोधे भासमानानां पदार्थानामुपस्थितिरे-वाऽपेक्ष्यते, न त्वभिधानमिति। यथा 'ज्योतिष्टोमेन स्वर्गकामः यजेते'त्यादौ ज्योतिष्टो-मादिनामधेयम्। यथा वा लिंगादिविनियोज्यः 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रः। तथा प्रकृतेऽपि विधिर्लिङ्गादिशब्दस्तावच्छ्रवणेनोपस्थापितः तस्य पुरुषप्रवृत्तिवाचक-शक्तिरपि स्मरणेनोपस्थापिता। तदुभयनिष्ठज्ञातता तन्निष्ठवाचकशक्तिमत्तया ज्ञातो लिङ्गादिविधिशब्दनोपस्थापितैव। अनेन यच्छक्नुयात्, तत् भावयेदिति स्वाध्याय-विधितात्पर्यात् शब्दातिरिक्तेनोपस्थापितमपि शब्दबोधे भासत एव।

**प्राशस्त्यज्ञानस्यापि शाब्दत्वोपपादनम्।**

एवमर्थवादानामुपस्थितिः श्रोत्रेण भवति, प्राशस्त्यस्य तु तैरेव लक्षणयोप-स्थितिर्भवति, तदुभयनिष्ठज्ञाततायास्तु मनसा भवति, एवमर्थवादैः प्रशस्तत्वेन ज्ञात्वे-तीतिकर्तव्यतयाऽन्वयोऽप्युपस्थित एव। तथा च यथाऽर्थभावनायामंशत्रयस्य शाब्दबोधे भानम्, तथालिङ्गादिज्ञान-प्राशस्त्यज्ञानयोरप्युपस्थितत्वाच्छाब्दबोधे भानं संभव-त्येवेति मन्तव्यम्। अयञ्चार्थो गीतागूढार्थदीपिकायां मधुसूदनस्वामिचरणैस्त्रिविधा कर्मचोदना गी० अ० १८ श्लो० १८ इति श्लोकव्याख्यायां पृ० ३५०-३५२ मुपपादितः। अयमेवार्थो ब्रह्मानन्दसरस्वतीभिर्न्यायरत्नावल्यां परिष्कृतः।

स एवार्थः कविमण्डनशंभुभट्टेनार्थवादाधिकरणप्रभावल्या ( प्र० पृ० २२ ) मुपपादित इति बोध्यम्। अत्र च करणेतिकर्तव्यतयोर्विधि-निषेधज्ञान-प्राशस्त्याप्राश-स्त्यज्ञानयोरपि शाब्दबोधेऽन्वय इत्येवं केचिद्वर्णयन्ति इत्यादिग्रन्थेन।

स्व ( विधि ) ज्ञानम्, शक्तिज्ञानम्, शक्तिविशिष्टस्वज्ञानञ्च । अत्रेदमाकूतम् । लोके मत्प्रवृत्त्यनुकूलवानयमाचार्य इति व्यवहारवत् अपौरुषेये वेदेऽपि मत्प्रवृत्त्यनुकूलव्यापारवानयं विधिरिति व्यवहारात् प्रवर्तना—प्रवृत्ति हेतुव्यापारः विधिशब्दस्य, तस्यैव दशलकारसाधारणेनाख्यातत्वेनोपाधिना पुरुषप्रवृत्तिरूपार्थभावनां प्रति वाचकत्वम्—तज्ज्ञानहेतुत्वमित्यर्थो बोध्यः । सा च ज्ञातैवाऽनुष्ठातुं शक्यत इति तद्धीहेतोरपि शब्दस्य तद्धेतुत्वं परम्परया भवत्येव । तत्र च विधिशब्दस्य पुरुषप्रवृत्तिरूपार्थभावनाज्ञानहेतुव्यापारः तद्वाचकशक्तिमत्तया विधिशब्दज्ञानम्, स एव तस्य प्रवृत्तिहेतुव्यापार इति प्रवर्तनाभिधानीयकं भजते । वृत्तिज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात् शब्दस्य ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने प्रमाणाभावात् । यथोक्तं मिश्रन्यायकणिकायां 'प्रमाणं शब्दः प्रतिज्ञायते, चोदना लक्षणोऽर्थो धर्मः इति । बोधकञ्च प्रमाणम्—अबाधितानधिगतासन्दिग्धार्थप्रमाजनकम्' न्या. क पृ. ५ इति । ज्ञानजनकश्च व्यापारस्तस्य स्वज्ञानम्, शक्तिज्ञानम्, शक्तिविशिष्टस्वज्ञानञ्च । तत्राद्ययोरन्यतरस्य शाब्दभावनात्वम्, तृतीयस्य तु तत्र करणत्वमिति वैलक्षण्यं बोध्यम् ।

### वाक्यार्थनिर्णयस्य प्रतिपाद्यो विषयः—

अस्मिन्प्रकरणे ग्रन्थकृता शाब्दिक-बौद्ध नैयायिक-प्राभाकरमतानि प्रदर्श्य, तन्निराकरणपूर्वकम्, विशिष्यान्विताभिधाननिरासमुखेन सोपपत्तिकं गौरवप्रदर्शनपूर्वकमभिहितान्वयवादस्समर्थितः । तदेवाऽधस्तात्संक्षेपेण प्रदर्श्यते । तथाहि—सर्वोऽपि जनोऽनधिगतमर्थं जिज्ञासते लौकिकः परीक्षकश्च । वक्तारश्च जिज्ञासितमर्थं श्रोतृपुरुषानवगतमर्थम् बुबोधयिषवो वाक्यं प्रयुञ्जते । प्रतिपित्सितमर्थं जिज्ञासवः पृच्छन्ति । स्वकीयाभिप्रायाभिव्यञ्जनेन, विवक्षितार्थाभिधानेन च शाब्दं, प्रमाणम् सर्वाणि प्रमाणान्यतिशेते । अतः शब्दप्रमाणस्य वैशिष्ट्यं सर्वेषां दार्शनिकानां सम्प्रतिपन्नम् । तत्राऽऽनुपूर्वीविशिष्टा वर्णाः पदम्, आनुपूर्वीशिष्टपदानि वाक्यम् । तत्र प्रकारत्रयम्—सुबन्तचयः, तिङन्तचयः, सुप्तिङन्तचयश्चे'ति । आद्यस्योदाहरणम्—'रामेण बाणेन हतो वाली' । द्वितीयस्योदाहरणम्—'पचति भवति' । तृतीयस्योदाहरणम्—'देवदत्तः पचती'ति । परं कारकान्विता क्रिया यदि प्रतीयेन । तथा च कोशः—सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता' इति । वाशब्दश्चे'दित्यर्थे, तथा चायमर्थः फलति कारकान्विता क्रिया चेत्, तत् वाक्यमिति ।

### शाब्दबोधस्य विवरणम्

पदानि पदार्थान् बोधयन्ति, पदार्थानां संसर्गो वाक्यार्थ इत्युच्यते । अनेकगुणभूतपदार्थविशिष्टः एकः प्रधानपदार्थो वा, पदार्थानामन्वितावस्था वा वाक्यार्थ इत्युच्यते, तद्बोधः—वाक्यार्थबोधः, शाब्दबोधः, संसर्गबोध इत्यादिभिश्शब्दैरभिलप्यते ।

स च शाब्दबोधः केन कारणेन, कैस्सहकारिभिः, किमात्मको जायत इति संक्षेपेण विविच्यते । तत्र निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य बोधकमिति शाब्दिकानां मतम् । विज्ञानमेव वाच्यवाचकभावेन वर्तमानम् वाक्यात्मकं ज्ञानं वाक्यार्थात्मकं ज्ञानं वाक्यार्थ इति पक्षद्वयं ग्रन्थकृता वार्तिककारोक्तयुक्तिभिर्निरस्त इति टिप्पण्यां सूचित इति, नात्र लेखनी व्यापार्यते ।

### तार्किकमते स्थालीपुलाकन्यायेन दोषवर्णनम्।

'नैयायिकमतमाकांक्षामर्यादया संसर्गो भासत इति न साधु। वृत्त्यविषयतया पदार्थस्य शाब्दबोधे भानं नोपपत्तिमत्। अर्थात् शक्त्या, लक्षणया वा पदादुपस्थित एव पदार्थो वाक्यार्थे भासते, अशक्यस्य अलक्ष्यस्य च तस्य संसर्गमर्यादया ( आकांक्षामर्यादया ) न शाब्दत्वं युज्यत इति।

### आचार्यमतस्योपन्यासः।

अवशिष्यते प्राभाकराणामन्विताभिधानवादः, यः प्राधान्येन निरसनीयो ग्रन्थकारस्य। तत्रादावाचार्यमतमेवोपक्षिप्यते—पदानि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि भवन्ति, अथेदानीं पदार्था अवगतास्सन्त इत्यादि वदन् भगवान् भाष्यकारः वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य हेतुत्वम् मन्यते। वार्तिककारोऽपि 'अर्थस्य तन्निमित्तत्वादिति सूत्रम्, उपर्युद्धृतभाष्यञ्च प्रणयन् वाक्यार्थो लाक्षणिक इति प्रतिपादयति। अर्थात् पदसमुदायात्मकवाक्यघटकपदाभिहितैः, लक्षितैर्वा पदार्थैः आकांक्षायोग्यता-आसत्तिसहकृतैर्वाक्यार्थबोधः समुत्पद्यते इति। अतः शाब्दबोधे पदार्था एव कारणम्, पदोपस्थापितपदार्था वा, न पदमिति वदन् पदाभिहितेन पदार्थेन करणेन अन्वयः संसर्गबोध इत्यभिहितान्वयवादमभ्युपगच्छति। तस्यायं भावः—पदश्रवणेऽपि पदार्थज्ञानाभावे वाक्यार्थज्ञानं नोत्पद्यते, पदाश्रवणे पदार्थज्ञानसत्त्वे वाक्यार्थज्ञानमुत्पद्यते इत्यन्वय-व्यतिरेकाभ्याम् वाक्यार्थज्ञानोत्पत्तौ पदार्थज्ञानस्य, ज्ञायमानपदार्थस्यैव वा कारणत्वमङ्गीकर्तव्यमिति।

### अन्विताभिधानवादसमीक्षा।

प्राभाकरमीमांसकाः पुनः—पदान्येव वाक्यम्, पदार्था एव वाक्यार्थ इति मन्वानाः पदानामेव वाक्यार्थज्ञानकारणता युक्ताऽभ्युपगन्तुमिति मन्यन्ते।

यथोक्तम्—

'पदान्याकांक्षितासन्नयोग्यार्थान्तरसंगतान्।
स्वार्थानभिदधन्तीह वाक्यं वाक्यार्थगोचरम्'॥ इति।

### प्राभाकरमते शंका, तन्निरासः।

इदमनुपपन्नम्—वाक्यघटकानां सर्वेषां पदानामन्वितार्थाभिधाने शक्तौ स्वीक्रियमाणायाम्, अस्य पदस्य जातिरर्थः, अस्य द्रव्यम्, अस्य पदस्य गुण इति पदार्थविभाग एव दुरधिगमस्स्यात्।

अपि चान्विते पदानां शक्तिवादिनां पदशक्तेरन्वयमात्रविषयत्वे तत्त्वाविशेषात् सर्वशब्दानां पर्यायतापत्तिः। अतोऽन्विताभिधानवादशक्तिकल्पनागौरवात् दृष्ट-

१—'पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।
'शाब्दबोधः फलं तत्र शक्तिधीस्सहकारिणी' इति,
'शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गस्संसर्गमर्यादया भासते' व्यु० वा इति चानुसन्धेयम्।

प्राधान्न युक्तः । व्यक्तिदृष्टान्तो य उपन्यस्तः शालिकाचार्येण । तत्र दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यप्रतिपादने बह्व्यो युक्तयः उपन्यस्ता ग्रन्थकृता ।

'रूपिशून्या च बुद्धिरस्त्येव तद्यथे'ति, ताः सर्वा युक्तयोऽस्माभिष्टिप्पण्यां सङ्गृहीताः । तस्मात्पदानां स्वार्थमात्रे शक्तिकल्पनोऽचिता ।

## उभयमतेन नियतान्वयप्रतिपादनम् ।

किञ्च नियतान्वयप्रतीत्युपपत्तिः कथं भवतीति विचारणायाम्, उभाभ्यामेकवाक्यताबलेन भवतीत्यवश्यं कल्पनीयम् । तत्राभिहितान्वयवादे पदार्थानामेव परस्परान्वयार्हत्वात् तेषु परस्परान्वयस्य वाक्यार्थबोधनसामर्थ्यं क्लृप्तमेव, किन्तु नियममात्रं कल्पनीयम् । अन्विताभिधानवादे तु पदानामन्वितार्थप्रतिपादनशक्तिरत्यन्ताक्लृप्ता कल्पनीया । तत्र धर्मधर्मिणोरुभयोः कल्पनापेक्षया धर्मकल्पनाया लघीयस्त्वात् पदार्थानामेव वाक्यार्थबोधहेतुत्वं युक्तम् । शक्तिविचारप्रसङ्गे ग्रन्थकृतैव गौरव–लाघवे प्रदर्शिते इति, तत् ग्रन्थशरीर एव द्रष्टव्यम् ।

अपि च विनापि पदं पदार्थज्ञानाद्वाक्यार्थबोधो जायते । कवयः स्वयमुत्प्रेक्षितमर्थं वर्णयन्तीति प्रसिद्धं लोके, वाक्यरचनायां वाक्यार्थज्ञानम् हेतुरिति सर्वसम्प्रतिपन्नम्, 'अर्थं बुध्वा वाक्यरचना' इति न्यायात् । तत्र कवीनां चिन्ताविषयेणोपस्थिताः पदार्थाः परस्परमन्वयरूपं वाक्यार्थम् बोधयन्तीति प्रथितमेव ।

येन पुंसा ज्ञातश्वैत्येन विज्ञातह्रेषाशब्देनाज्ञातरूपोऽश्वोऽनुमितः, खुरनिक्षेपशब्देनाज्ञातकर्तृकधावनं चानुमितम्, तस्य पुरुषस्य श्वेतोऽश्वः धावतीति वाक्यार्थज्ञानं जायते, न च तत्र पदं श्रूयते, अतोऽत्रोपस्थितपदार्था एव वाक्यार्थं बोधयन्तीत्यवश्यमभ्युपगमनीयम् ।

यथोक्तं वार्तिककृता—

'पश्यतः श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरनिक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीः ॥
दृष्टा वाक्यविनिर्मुक्ता न पदार्थैर्विना क्वचित् ॥ इति ।

तस्माद्वाक्यार्थबोधे पदार्था एव करणमित्येषितव्यम्, न पदानि । किञ्चान्विताभिधानवादे पदैः पदार्थस्मरणानन्तरमेव वाक्यार्थज्ञानं जायते इत्यङ्गीकर्तव्यम् । एवञ्च वाक्यार्थावगमपूर्ववर्ति पदार्थज्ञानमेव कारणम्, न पदं कारणं स्यात्, शाब्दबोधात्पूर्वक्षणे पुनः पदस्मरणकल्पनायां न किञ्चित्प्रमाणं प्रक्रमते ।

किञ्च दीर्घतमेषु वाक्येषु पुनः पदानुसन्धानं दुष्करमेव । असत्यपि तस्मिन् पदार्थोपस्थितिमात्रेण शाब्दबोधो जायत इति युक्तम् । एवञ्च दृष्टानुगुण्यात्पदार्थनिमित्तक एव शाब्दबोधः, न पदनिमित्तकः । यथोक्तम् वार्तिककृता—

पदार्थानां च सामर्थ्यं गम्यमानमपह्नुतम् ।
आनन्तर्याद्धि वाक्यार्थः तद्धेतुत्वं न मुञ्चति' ॥

श्लो. वा. ७–११३½ ११४½ इति ।

अत्र पद्ये वाक्यार्थपदं शाब्दबोधपरम्। तद्धेतुत्वपदं च पदार्थहेतुकत्वपरमिति ज्ञेयम्।

### तन्मतदूषणम्

अपि चान्विताभिधानवादिना वाक्यार्थज्ञानं प्रति पदार्थज्ञानस्य कारणत्वमनिच्छताऽप्युपगमनीयम्। तेषामियं मर्यादा। ते हि कार्यान्विते पदानां शक्तिमूरीकुर्वन्ति। लिङादिघटितवाक्यादेव कार्यान्वितविषयकः वाक्यार्थ उत्पद्यते। यत्र प्रश्नोत्तररूपाणि वाक्यानि प्रयुज्यमानानि दृश्यन्ते–कोऽयम्? राजपुरुष इति, कीदृशास्तरवः, फलिनः इति च। अत्र कार्यबोधकपदाभावेऽपि सिद्धार्थबोधदर्शनात् ।तथा–कोऽयं गच्छतीति प्रश्ने, राजासौ गच्छतीत्युत्तरम्। नात्र कार्यवाचकं पदमस्ति।

अस्यायमाशयः—

नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः।
रामाः कौशेयसंवीताः कदम्बा इव शोभनाः॥
( न्याय० र० मा० पृ० ९६ प्रतिमा ना श्लो० २ ) इति।

अत्रार्थविशेषवर्णनमेव दृश्यते। एवं च कवीनामर्थविशेषवर्णनरूपे वाक्यसन्दर्भे कार्यबोधकलिङादिपदाभावादत्कार्यपरत्वं वक्तुं न शक्यते। इदन्तु चर्चितपूर्वम्। अतस्तं पश्येत्यध्याहारेणेदं लाक्षणिकमिति तेषां समयः। तस्मादत्रापि पदार्थानामन्योन्यसंसर्गबोधो जायत एव कार्यवाचकपदाभावेऽपि। एवं राजपदस्मारितराजपदार्थे गमनपदाभावेऽपि राजपदस्मारितराजपदार्थाचाकांक्षादिसहकृताद्राजगमनयोःसंसर्गावगाहिबुद्धिरुत्पद्यत इत्यनिच्छताप्यभ्युपगमनीयम्। अतोऽत्र पदार्थस्य शाब्दबोधनिमित्तत्वे सिद्धे, सर्वत्रापि तस्यैव निमित्तत्वकल्पनमुचितम्, न तु पदानाम्।

### सिद्धार्थस्य विशिष्टबोधस्यानुमानमिति शंका।

यदि–सिद्धार्थबोधकवाक्येष्वन्वयावगतिर्न पदेन भवति, न वा पदार्थेन, अपि त्वनुमानेन, तथाहि-आप्तवाक्यस्य रचना विशिष्टार्थविवक्षापूर्विका विवक्षामनुमापयति, विवक्षा च स्वकारणं विशिष्टं ज्ञानम्। तेन च विषयीभूतार्थानुमानसिद्धिरित्युच्यते। ( अनुमानन्तु ९६ पृ० टिप्पण्याम् द्रष्टव्यम् )। तदा पूर्वोक्तानुमानपरम्परया विशिष्टावगतिसिद्धेः पदानामन्विताभिधायित्वान्न कल्पनीयमित्यन्विताभिधानं न सिद्ध्येत्, 'वृद्धिमिच्छतो मूलमपि विनष्टमि'ति हा कष्टतरमिति न्यायात्।

### असंसर्गाग्रहस्वीकारेण संसर्गानभ्युपगमेऽनुभवापलापः।

अपि चात्र संसर्गबोध एव न जायते, परन्त्वसंसर्गाग्रह इत्युच्यते। असंसर्गाग्रहस्वीकारेण संसर्गानभ्युपगमेऽनुभवापलापस्स्यात् गामानयेत्यत्रापि संसर्गग्रहस्वीकारो व्यर्थस्स्यात्, असंसर्गाग्रहसम्भवात्। किञ्च पदानामन्विताभिधायित्वं व्यवहाराद्व्यवस्थापनीयम्, तन्न युज्यते। गामानयेति प्रयोजकवृद्धस्य वाक्यश्रवणसमनन्तरमन्वितार्थज्ञानं जातमित्यत्र न किमपि प्रमाणम्। येन शब्दस्यान्वितार्थाभिधायकता स्यात्। न चानुमानेन प्रयोज्यवृद्धस्यान्वितप्रीतिर्जायत इति वाच्यम्। तन्न सम्भवति। यतः

घ

प्रवृत्त्या लिङ्गेनान्वितज्ञानमनुमेयम्। न चैतदुपपद्यतेऽन्विताभिधानवादिनामख्याति-मङ्गीकुर्वताम्।

तथाहि–शुक्ताविदं रजतमिति ज्ञानं विशिष्टमेकं न भवति। अपि त्विदमित्यनुभवात्मकम्, रजतमिति स्मरणात्मकम्, दोषवशाद् इदमि इदम्पदार्थे रजतभेदो विद्यमानोऽपि न गृह्यते, अतो रजतार्थी पुरुषः पुरोवर्तिनि पदार्थेऽपि इष्टरजताभेद-ज्ञानाभावेऽपि, इष्टरजतभेदग्रहाभावात् पुरोवर्तिनि प्रवर्तते इति तेषामभ्युपगमः। एवञ्च 'गामानये'त्यत्र गोपदेन द्वितीयविभक्त्या, धातुना, विधिप्रत्ययेन च तत्तदर्थेष्वभि-हितेषु सत्सु तेषामन्वये गृहीतेऽपि तदनन्वयाग्रहादपि प्रवृत्तिस्सम्भवति। तस्मान्मध्यम-वृद्धः विशिष्टार्थज्ञानवान् प्रवृत्तिमत्वाद् इत्यनुमानं न सम्भवति, विनापि विशिष्टज्ञानं प्रवृत्तेस्सम्भवेन व्यभिचारात्।

### प्रवृत्तिद्वैविध्याभ्युपगमेन तन्मतेन–शंका।

यद्युच्येत प्रवृत्तिर्द्विधा—संवादिनी विसंवादिनी चेति। 'इदं रजतमि'त्यत्र शुक्तिरजतादिस्थले भेदाग्रहनिबन्धना प्रवृत्तिर्विसंवादिनी। गामानयेत्यादिवाक्यप्रयोग-स्थले मध्यमवृद्धस्य प्रवृत्तिस्संवादिनी दृश्यते। इत्थञ्च विसंवादिन्याः प्रवृत्तेर्विशिष्ट-ज्ञानव्यभिचारेऽपि संवादिन्याः प्रवृत्तेः विशिष्टज्ञानाव्यभिचारात्। तथा च विशिष्टज्ञानानुमानं घटत इति।

एवं वक्तुं न शक्यम्। यतो हि विशिष्टग्रहणनिबन्धनोऽपि व्यवहारः अविसंवादी दृश्यते। यथा—उष्णं जलमिति व्यवहारः। जले उष्णभेदाग्रह एव, नत्वभेदाग्रहः। अन्यथा भ्रमस्वीकारापत्तेः, तत्प्रयुक्तश्च व्यवहारोऽविसंवाद्येवानुभूयते।

### अविसंवादिव्यवहारे उदाहरणान्तरम्।

अपि च यस्मिन्देशे विनापि धूममग्निरस्ति, तदुपरिदेशे वाष्पोद्गमः भवति। तच्च वाष्पं धूमं मत्वा तेन तत्र देशे वह्निमनुमाय वह्न्यर्थी प्रवर्तते। प्रवर्तमानश्च लभते वह्निम्। वाष्पधूमज्ञानं तत्र देशे न धूमसंसर्गमवगाहते, अपि तु धूमासंसर्गाग्रहण मेव तत्प्रयुक्ता च प्रवृत्तिः सफला दृश्यते, वस्तुतः तत्राग्नेस्सत्त्वात्। तथा च चाग्रहण-निबन्धनाया अपि सफलप्रवृत्तेर्दर्शनादसंवादित्वविशेषणनिवेशेन न व्यभिचारवारणम्। तस्मादन्विताभिधानमेव तन्मते न सम्भवति।

### अन्विताभिधानेऽनुपपत्त्यन्तरवर्णनम्।

किञ्च 'गङ्गायां घोषः' इत्यादौ गङ्गापदस्य तीरवाचित्वं स्यात् यदि गङ्गापदेनो-पस्थितः प्रवाहः स्वसम्बन्धितीरं लक्षयतीति पदार्थसंसर्गेणापि तीरप्रतीतेरुपपत्तेः। तीरपदस्येव गङ्गापदस्य तीराभिधायित्वम्, तदा शक्यस्यापि स्वबोधितपदार्थसंसर्गेण वाक्यार्थपरत्वसम्भवादन्विताभिधानं न सिध्यति।

### अभिहितान्वयवादस्य निगमनम्।

अतः पदार्थानामेव वाक्यार्थबोधकत्वम्। 'यथा काष्ठैः पचति' इत्यादौ पाक-पराण्यपि काष्ठानि न साक्षात्पाकसमर्थानि, तद्द्वारा तु काष्ठानि पाके उपयुज्यन्ते,

तद्वदेव पदानि स्वार्थमभिदधति, ते त्वर्था वाक्यार्थं बोधयन्ति। पदार्थप्रतिपादनञ्च काष्ठानां ज्वालास्थानीयम्। यथोक्तं वार्तिककृता—

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्।
वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले॥

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनमि' ॥ ति

## तत्र सूत्रकारसम्मतिप्रदर्शनम्।

भगवान्सूत्रकारोऽपि तद्भूताधिकरणे 'ऽर्थस्य तन्निमित्तत्वादि' ति वदन् स्पष्टमेव पदार्थस्य वाक्यार्थावगमहेतुत्वमभिधत्ते। यत्तु पदार्थाः—अन्विताः, वाक्यार्थम्—अन्वयं बोधयन्तीति व्याख्यानेनान्वितप्रतिपादकानां पदानामन्वयप्रतिपादकत्वमिति, टीका तद्विवरणञ्च पौर्वापर्यालोचनेनाऽऽमूलविशीर्णम्। टिप्पण्यामस्माभिर्विवेचितम्।

## प्रातिपदिकादित्यादिभाष्यस्य प्राभाकरीये व्याख्यानेऽनाञ्जस्यम्, स्वमते तस्यानुकूल्यमिति च वर्णनम्।

किञ्च—'अपि च प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थः विशेषक इत्याहे'ति भाष्यमन्विताभिधानपरतया योजितम्। तदप्याशामोदकायते। यतो हि भाष्यमिदं प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वे, न त्वन्विताभिधानवादे स्वरसमित्यप्यस्माभिरुक्तमेव तत्र चाधस्ताट्टिप्पण्याम्।

## भाष्यस्याशयान्तरवर्णनम्।

अथवा 'सोऽयं देवदत्तः' इत्यत्र प्रत्यभिज्ञाने यथा धर्म्यंशः समभिव्याहारादेव भाति, अर्थात् 'अयं देवदत्तः' इति ग्रहणांश इन्द्रियसन्निकर्षजन्यः, स इति स्मरणांशस्संस्कारनिमित्तक इति विविच्यते। यथा वा 'घटाभाववद्भूतलम्' इति ज्ञानेन घटाभावविशिष्टभूतले गृह्यमाणे सति विशेष्यस्य भावांशस्य भूतलस्य प्रत्यक्षविषयता विशेषणस्याभावस्यानुपलब्धिप्रमाणविषयता चेति प्रतिपाद्यते। तथा प्रत्ययेन स्वार्थोऽभिधीययानः प्रथमावगतः प्रकृत्यर्थसम्बद्ध एव प्रतीयते। तत्रान्वयव्यतिरेकाभ्याम्, प्रकृतेः प्रत्ययस्य च स्वस्वार्थांशे निमित्तत्वम्। पदान्तरसमभिव्याहारस्य संसर्गांशे निमित्तत्वम्। एवञ्च प्रकृतिप्रत्ययसमभिव्याहारादेव सम्बन्धांशेप्रतीतिसिद्धे प्रत्ययस्य नाभिधायकत्वम्। अत एवोक्तं वार्तिककृता—

'पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित्॥

अतोऽस्मन्मते प्रत्ययस्य नाऽन्विताभिधायित्वमिति। तस्मात्पदाभिहिताः पदार्था एव वाक्यार्थमवगमयन्ति। तत्रैते हेतवः—सामर्थ्यस्य क्लृप्तत्वाच्छक्तिकल्पनालाघवाच्च। पदं च शुद्धं पदार्थस्वरूपमभिधत्ते, तावता पदम् चरितार्थं भवति। तत्र सूत्रभाष्ययोस्स्वारस्यमित्यादयः।

### पदार्थाभिधाने प्रकारद्वयस्योपन्यासः ।

इदञ्चाभिधानं किमात्मकमिति विचारे, तत्र मतद्वयमस्ति । तत्राद्यम् । मतम्-पदजन्यपदार्थज्ञानं शाब्दबोधं प्रति करणं स्मृतिपदेन व्यपदिश्यत इति । तेषामयमाशयः—पदाज्जायमाना पदार्थप्रतीतिः प्रमाण-संशय-विपर्यय-स्मृतिषु कुत्रान्तर्भवतीति । तत्र न तावत्प्रमाणज्ञानम्, अधिगतत्वात् । संशय-विपर्ययहेतुत्वं शब्दस्य दूरनिरस्तम् । पञ्चमः ज्ञानप्रकारस्तु पदार्थज्ञानम् स्मृतिरेवेति ।

अपरे तु शब्दश्रवणानन्तरमर्थप्रतीतेर्दर्शनात्—पदमभिधायकमेव, न तु स्मारकम्, प्रणाल्यां प्रमाणाभावात् । यद्यपि अर्थस्वरूपे वाच्ये पदस्याभिधायकत्वमुपपद्यते, एवञ्च पदात् पदार्थस्वरूपे अभिहिते आकांक्षा-योग्यता-आसत्तिवशाद्वाक्यतात्पर्यानुपपत्त्या लक्षणया वाक्यार्थबोधो जायते, अत एव वाक्यार्थो लाक्षणिक इति भाट्टमीमांसकानाम् घण्टाघोषः ।

### अभिहितान्वयवादे वाक्यार्थवर्णने प्रकारद्वयम् ।

पूर्वोक्तयुक्त्याऽन्विताभिधानवादासम्भवेनाभिहितान्वयवादः स्वीकर्तव्यः इत्युक्तम् । तत्र प्रकारद्वयम्—पदोपस्थापितानां पदार्थानां विशिष्टार्थप्रत्यायनेच्छयोच्चरितानां तदनुपपत्त्या पदार्थमात्रबोधेन वाक्यार्थे लक्षणेति केचन मन्वते । एवञ्च पदानां स्वार्थमात्रमभिदधतामेकप्रयोजनवत्पदार्थपरतयैवैकवाक्यत्वं सिद्ध्यति । एकप्रयोजनसिद्ध्युपयोगिता च पदार्थानाम् पदात्पृथुगुपस्थितानां वैशिष्ट्यमन्तरेण न सङ्घटीति । अतः प्रयोजनवत्वाय, एकवाक्यतासिद्ध्यर्थं च लक्षणया पदानां विशिष्टार्थप्रत्यायनपरत्वमास्थातव्यम् । तथा चैकवाक्यान्तर्गतानां समेषां पदानामितरपदार्थान्वितस्वार्थलक्षणायां वाक्यार्थभेदेन प्रसक्तो वाक्यभेदः समभिव्याहृतगुणभूतनानापदार्थान्वितप्रधानपदार्थस्यैकस्यैवाभ्युपगमे निराकर्तुं शक्यते । इत्थञ्च वाक्यतात्पर्यानुपपत्त्या कल्प्यमाना लक्षणा समभिव्याहारगम्या । यथोक्तं ग्रन्थकृता—

'अविनाभावनिमित्ता लक्षणा' इति । क्वचिदेकवाक्यतापि तत्र निमित्तम् । एकवाक्यता च क्वचित्प्रत्यक्षा । यथा—'सोमेन यजेत' इति । क्वचित्प्रकरणाद्यनुमेया । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, समिधो यजति' इत्यनयोः । अत एव वाक्यार्थो लाक्षणिक इति मीमांसका इत्यभियुक्तानां व्यवहारः । यथोक्तं कुमारिलभट्टेन—

'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति नः स्थितिः' इति । इत्थञ्च वाक्यार्थे लक्षणाऽनुभवसिद्धा समभिव्याहृतसकलपदार्थवृत्तिः, प्रधानपदमात्रवृत्तिर्वेति ।

### द्वितीयस्य प्रकारस्योपपादनम् ।

अपरे तु प्रकारान्तरमुन्नयन्ति । तेषान्त्वयमाशयः—पदैरनन्वितावस्थाः पदार्था एवाऽभिधीयन्ते । अनन्वितावस्थो हि अभिहितः पदार्थोऽन्वितावस्थां लक्षयति । अन्यथा पदार्थस्वरूपातिरेकीष्टार्थाभिधाने गौरवं प्रसज्येत । अवस्था-अवस्थावतोस्तावत्सम्बन्धोऽस्ति । एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायात् । एवञ्च पदाभिहिताः पदार्थाः अनन्वितावस्थाः आकाङ्क्षायोग्यतासत्तिमन्तो वाक्यतात्पर्यानुपपत्त्या स्वान्वयमनुभावयन्ति वाक्यार्थं लक्षणयेत्यत्रकल्पते । पदेन यद्बोध्यते, तच्छक्यम् ।

पदार्थेन यद्बोध्यते, तल्लक्ष्यमिति नियमः स्वीक्रियते। एतत्सर्वम् मनसि निधायैव ग्रन्थकारः प्रकरणमिदं निगमयति स्म।

'पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यतेऽसाविति सिद्धमेतत्'। इति

नित्य-काम्यविवेकाख्यस्य प्रकरणस्य प्रतिपाद्यो विषयः।

प्रकरणेऽस्मिन्प्राभाकरमतेन नित्यकाम्ययोर्विवेकमुपन्यस्य निरस्यति स्म।

षष्ठाध्यायतृतीयपादस्याद्याधिकरणम्।

तथाहि—अस्मिन्नधिकरणे गम्भीरस्य न्यायमहाह्रदस्योपरि बहवो लघुधियः प्लवन्ते, न्यायविचारमेव तावदादितोऽनुक्रमामहे।

तत्र केचिन्मन्यन्ते यथा जीवनादिकम् अधिकारिविशेषणम्, तथा सकलसाङ्ग-प्रधानकर्मणोऽनुष्ठानसामर्थ्यमपि। तत्रैतावानेव विचारः—किमङ्गलोपेनाऽप्यनुष्ठानं कर्तव्यम्—उत नेति। तत्रान्य एवं समादधिरे न प्रवृत्ताविवेदं यथा शक्त्यनुष्ठानमभि-धीयते, अपि तु प्रवृत्तस्य। तेन सर्वाङ्गोपसंहारसामर्थ्येनादावधिकृत्य यद्यन्तरा शक्ति-र्व्यापद्यते, प्राक्तनाधिकारदार्ढ्येनानुष्ठानं समाप्यत एव अत एव नित्येष्वग्निहोत्रादिषु शूद्रादीनामनधिकार इति स्वगोष्ठ्यां कलहः—इति।

आचार्यमतस्य निर्देशः, तथा गुरुमतस्यापि

काम्येऽङ्गसाकल्यम्, नित्येऽङ्गवैकल्यमिति काम्य-नित्ययोरङ्गसाकल्यवैकल्या-भ्यामिति ग्रन्थकारस्य मतं वक्ष्यते। प्राभाकरमते तु कार्यं प्रधानवाक्यार्थः, तच्च कृत्यधीनात्मलाभम्, कृतिश्च पुरुषप्रयत्न एव गीयते। स च चेतनं कर्तारमपेक्षते, कर्ता चाधिकारम्, अधिकारश्च नियोज्यमपेक्षत इति।

तन्मतस्थितिः।

वनसिंहन्यायेन नियोज्यापेक्षं कार्यम्, कार्यापेक्षो नियोज्य इति। नियोज्य-श्चानुपादेयगुणविशिष्टः। स च द्विविधः फल—निमित्तभेदेन। अतो विषय-नियोज्याभ्यां विषयत्त्ववाधेन विषयिणः कार्यस्य प्रतीतेः। तद्बलेन हीनाङ्गकर्मानुष्ठानं भवेत्। नित्ये तु नायं प्रकारः सम्भवति। तत्र नियोज्यः फलकामो न भवति। येनायं कार्यं कार्यतया न बुद्ध्येत।

सिद्धविशेषणविशिष्टस्तु नियोगो भावार्थमात्रावच्छिन्नमेव कार्यं प्रथममनु-गच्छति। कार्यप्रतीतेः कृतिं विनाऽसम्भवात्। कृतेश्च अकरणिकाया असम्भवात्करणमपे-क्षमाणा सन्निहितस्य भावार्थस्य करणत्वं कल्पयति। एवञ्च नित्ये विषयीभूतस्य भावार्थस्य पश्चात्करणत्वेनेतिकर्तव्यतासाहित्यं च भवतीति, नाङ्गलोपेऽपि विषयाभावः। एवञ्च विषयाविलये कार्यस्याविलयादशक्याङ्गविधुरमेव कर्मानुष्ठापयति नित्यः नियोग इति नित्य-काम्यविवेकसिद्धिरिति।

यथोक्तम्—

'केचित्तु विषयीभावः करणीभावपूर्वकः।
काम्ये तेनाङ्गसाकल्यमाहुर्नित्ये विपर्ययम्'

न्या. र. मा. पृ. सं. ११९॥ इति।

### प्राभाकरमतस्य निरासः ।

तन्निराकरणप्रकारश्चेत्थम् । तथाहि—गुरुमतसिद्धान्तोऽविमृश्यमानसुन्दरः सूक्ष्मन्यायदृष्ट्या विचार्यमाण आरकूटायते । आरकूटं नाम सुवर्णसदृशो लोहविशेषः, सूक्ष्मेक्षिकया विचार्यमाणो न सुवर्णमित्यर्थः ।

### प्रथमं दूषणम् ।

तन्मतनिराकरणाय ग्रन्थकृताऽष्टौ दोषाः प्राधान्येनोपन्यस्ताः । सन्निकृष्टं स्वपदोपात्तमपूर्वं परित्यज्य विप्रकृष्टं पदान्तरोपात्तं फलं धात्वर्थस्येति श्रुतिवाक्यबलाबलज्ञः कथं ब्रूयात् । अत इदमनुपपन्नम् ।

### द्वितीयञ्च दूषणम् ।

अपूर्वस्य वाच्यत्वं न सम्भवति । अयं विषयो ग्रन्थशरीरेऽस्मिन्प्रकरणे, एकादशाध्यायप्रतिपाद्यविषयनिरूपणावसरे च पृष्ठाकोटेन ग्रन्थकृता निरूपित इति ।

### अपूर्वस्य प्राधान्यं हीयत इति तृतीयं दूषणम् ।

फलकामिनियोज्यसम्बन्धाधीनं फलसाधनं नियोगस्यैव, न तु यागस्य । यागस्तु केवलं तद्विषयः । एवञ्च तद्विषयत्वं तस्य स्वरूपेणैव घटत इति फलकरणत्वे तत्प्रवेशकथनं गौरवपराहतमिति मन्तव्यम् । 'समप्रधानभावेन स्वरूपस्यानपायतः, इति दूषणद्वयं विकल्पद्वयदूषणपरतया ग्रन्थशरीर एव योजितमिति तत्रैवायं विषयो पृ. १२८ द्रष्टव्यः ।

'अप्रयोजकभावेनेति' इत्युक्तम् । इत्थं ज्ञेयम्—यत् करणीभूतस्य यागस्याङ्गसम्बन्धोत्तरकालमपूर्वविषयत्वेऽपूर्वस्याङ्गप्रयोजकत्वं न भवेत्, ग्राहकग्रहणस्य ग्राहकीयद्वारविनियोगस्य चासिद्धिः । तत्पूर्वकत्वात् प्रयोजकत्वस्य । अत्रत्यो विषयः पारिभाषिकशब्दविवरणञ्च टिप्पण्यामस्माभिस्सुष्ठु विवेचित इति नेह प्रतन्यते ।

### प्रकारान्तरेण व्याख्यानम् ।

नियोगस्याप्रयोजकत्वं प्रकारान्तरेणोपपादितम् । यथा 'पुरोडाशकपालेन तुषानुपवपति' ( आप. श्रौ. सू. ) इत्यत्र कपालस्य पुरोडाशशेषत्वेनैव तुषोपवापे विनियोगात् तुषोपवापः कपालस्य प्रयोजको न भवति । किन्तु पुरोडाशश्रपणमेव इति, तथैव प्राच्योदीच्याङ्गसहितस्य यागस्य फलमेव प्रयोजकं स्यात् न नियोगः । अत एव 'न हिंस्यात्सर्वा भूतानि' इत्यनारभ्याधीतवाक्येन सामान्येन हिंसामात्रं निषिध्यते । श्येनयागोऽपि हिंसारूपः, मारणरूपत्वात् । अतः श्येनस्य विधेयत्वाभावेन निषेधगोचरत्वाच्छ्येनस्यानर्थत्वमिति प्राभाकरसिद्धान्त उपपद्यत इति न शङ्कनीयम् ।

### तन्निरासः ।

यतो भवन्मते करणस्यैवाङ्गांशेऽपि विधेयत्वासिद्धेः । श्येनयागवदग्नीषोमीयस्याप्यनर्थत्वं भवेत् । यतो हि द्वैविध्यमेव निषेधस्य–किञ्चित्फलोद्देश्येनानुष्ठीयमानं कर्म फलपर्यन्तं निषिध्यते, साधनत्वमात्रपर्यवसानं वेति । आद्यस्योदाहरणम्—सुखार्थं मदिरास्वादः प्रसक्त एव निषिध्यते । नानेन सुखमवाप्तव्यम् अकार्यमेतत्साध्यं सुखमिति । द्वितीयस्योदाहरणम् । यथा—रोगार्तस्तदुपशमार्थी भेषजबुद्ध्या प्रवर्तमानः निषिध्यते–

मैवं कार्षीः, नेदमस्योपशमसाधनमिति। एवञ्च यदि विधेयत्वं श्येनस्य, निषेधगोचरत्वादनर्थत्वमिति, श्येनस्यानर्थत्वमङ्गीकुर्वतामस्माकमविधेयत्वमिष्टमेवेतीष्टापत्तिरिति प्राभाकरवचनमनुपपन्नमेव।

अष्टमं दूषणञ्च जातेष्टौ च प्रसङ्गतः।

जातेष्टौ करणीभूतस्य विषयत्वेऽङ्गोपसंहारापेक्षासम्भवात् तत्सिद्ध्यर्थं निमित्तानन्तर्यबाधप्रतिपादकमत्रत्यमाद्यमधिकरणं व्यर्थं स्यात्। तदुत्तरप्रवृत्तानाञ्चाधिकरणानां विषयाभावेनानर्थक्यञ्च। अतोऽयं प्राभाकरसिद्धान्तरूपकोशस्य वर्धकं शंखनिधिं स्वयमेवोन्मूलयन्नर्थात्करणीभूतस्य विषयत्वोक्त्या सकलसिद्धान्तव्यवहारोपयुक्तमपूर्वप्राधान्यादिकं कर्तयन् कथं स एव भवता पुनरङ्गीकर्तुं शक्यः। अतो गुरुमतमयुक्तमिति।

इति पूर्वपक्षः।

सिद्धान्तवर्णनम्।

'यावज्जीवमग्निहोत्रं जुहोति' इत्यत्र यावच्छब्दाज्जीवनं होमनिमित्तत्वेनावगम्यते। निमित्तस्यैतद्रूपमिदं यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यमिति।

किमिदमवश्यं कार्यमिति, अवश्यमेव कर्तव्यम्—अभिप्रेतेन फलेन योजयतीत्यर्थः। अयमेवार्थो मण्डनमिश्रमतमवलम्ब्य मूलेनोपपादितः, अस्माभिश्च स्फुटमुपपादितः। एवञ्च निमित्तश्रवणात्फलसाधनत्वावश्यंभावोऽङ्गसङ्कोचनिमित्तमिति, न यथाशक्तिप्रयोगप्रसङ्ग इति, गभीरोऽयं न्यायमहाह्रद इति।

अत्रायं विशेषः–यद्यपि निमित्तवद् यथाशक्तिमात्रमधिकारविशेषणं भवत्येव। तथापि न सर्वत्रानियमेन तदधिकारविशेषणत्वमुपपद्यते। कल्पनीयाऽपि शक्तिः सर्वाङ्गविषया अधिकारिविशेषणतया न कल्प्यते। किन्तु प्रयोगविध्यनुष्ठाप्याङ्गविषयतयैव-साङ्गं प्रधानमनुतिष्ठेत्। एवंरूपो हि प्रयोगविधिः, तत्र निमित्ताविरोधे सर्वाङ्गसमेतमनुष्ठानं विधेयम्, तद्विरोधे तु कतिपयाङ्गहीनमपि। तथा च यथा काम्येषु फलकामी सर्वाङ्गसमेतं प्रधानमनुतिष्ठेदित्युच्यते, तथा निमित्तवान्यथाशक्त्यनुतिष्ठेदिति, स्वीकारे न किञ्चिद्धीयते। एवञ्च प्रयोगविध्यनुष्ठाप्याङ्गविषयाया एव शक्तेरधिकारिविशेषणत्वोपपादनात्तुरीयवर्णस्यानधिकारः, कालोपसंहारश्च सिध्यति। एवञ्च विध्यन्तरसिद्धां विद्यां विध्यन्तरसिद्धानग्नीन्प्रयोगविधिरुपजीवति, न त्वनुष्ठापयतीति। तथा चानुपादेयभूतनिमित्तवदेतान्यधिकारिविशेषणानि भवन्तीत्यधिकारिकाण्यनुप्रविष्टानीति, नित्यानाम्, काम्यानाञ्च कर्मणां विवेकः सिद्ध्यतीति।

तथाभूतोपदेशादिति सूत्रखण्डस्य तन्त्ररत्नगतानां व्याख्यानानां संग्रहः।

सर्वशक्त्यधिकरणे तथाभूतोपदेशात्' इति सूत्रांशोऽनेकधा व्याख्यातस्तन्त्ररत्ने, तत्रत्यं व्याख्यानं जिज्ञासूनां सुखावगतयेऽधस्तात्सङ्गृह्य प्रदर्श्यते।

तथाहि–'तथाभूतोपदेशात्' (तन्त्ररत्ने ६. ३. १–२ पृ. ४९४ पृ.) एवमधिकरणानां विषयविभागः कथितः। इदानीं प्रकृतमधिकरणपूर्वपक्षमधिकृत्य अभिधीयते। सर्वैरङ्गैः क्रतुः 'अग्निहोत्रं जुहोति इत्येवमुत्पन्नो निराकांक्षीक्रियते तादृश एव सर्वाङ्गोपेत एव क्रतुः कर्तुर्धर्मत्वेन यावज्जीववाक्येन चोद्यते। तदिदमुक्तं 'तथाभूतोपदेशादिति'।

योजनान्तरमाह—अथवा यथा काम्ये धातोर्धात्वर्थस्य पूर्वापरभूतभावनाकरणता सर्वैरङ्गैर्निराकांक्षीक्रियते, न तु कतिपयैरेव तथा नित्येऽपि 'विधेस्त्वेकश्रुतित्वात्' इत्यस्य न्यायस्य काम्ये नित्ये चाविशेषादित्यतः 'तथाभूतोपदेशादित्युक्तम्। यथाभूतं काम्यम्, तथाभूतमेव नित्यमिति।

व्याख्यानान्तरमाह—अथवा नामविशिष्टं दर्शपूर्णमासाख्यं कर्म सर्वैरङ्गैर्निराकांक्षीक्रियते। यथा काम्ये, तथा नित्येऽपि। कुतः ? तन्नाम्नः तुल्यत्वात्। यदि हि नामान्तरं श्रूयते तेन काम्यान्नित्यं कर्मान्तरं स्यात्। ततश्च क्रत्वन्तरधर्मा इव क्रत्वन्तरेषु काम्यस्य धर्मा नित्ये न प्रवर्तेरन्। तन्नामकमेव तु निमित्तं प्रत्युपदिश्यत इत्यतः 'तथाभूतोपदेशात्' इत्युक्तम्।

व्याख्यानान्तरमाह–अथवा यथा काम्यस्य सन्निधावितिकर्तव्यताऽऽम्नाता, तथा नित्यस्यापि। द्वयोरपि सन्निधानाविशेषवादित्यतः तथाभूतोपदेशादित्युक्त इति कर्तव्यतासन्निधिर्द्वयोरपि तुल्य इत्यर्थः।

व्याख्यानान्तरमाह–अथवा भावना-आत्मनेपद-इतरेतरयोग-करणानां तुल्यत्वात् 'तथाभूतोपदेशात्' इत्युक्तम्। इदानीं तु नामधेयमते इरेतरयोगकरणविभक्त्योराख्यातपदस्य च काम्यवाक्यसमानरूपत्वात् स्पष्टमेव कर्मैकत्वमित्युच्यते। कर्मैक्ये च सति धर्माणामप्येकरूपत्वमेव युक्तम्, न तु क्वचित् साकल्यम्, इतरत्र वैकल्यमिति वक्तुं युक्तमिति।

व्याख्यानान्तरमाह–अथवा पुरुषार्थस्य भाव्यस्योभयत्र काम्ये, नित्ये च विद्यमानत्वात् 'तथा भूतोपदेशात्' इत्युक्तम्। यदि हि निमित्ते निष्फलम् कर्ममात्रमेव कर्तव्यं स्यात्। उभयत्रापि तु फलसम्भवात्तस्य च यथाश्रुतसामग्र्यधीनसिद्धित्वात् समस्तेतिकर्तव्योपनतस्य करणस्य फलसाधनत्वेन श्रवणात् काम्यवन्नित्येऽपि सर्वाङ्गोपसंहार इति। यथा काम्यं फलायोपदिष्टम्, तथाभूतमेव नित्यमपीति सूत्रार्थः।

### प्रभाकरमते यथाशक्ति प्रयोगस्यानुपपत्तिवर्णनम्।

किञ्च कार्यवाक्यार्थवादे कार्यमेवेप्सिततममिति, न तस्य फलापेक्षा युज्यते, विश्वजिदादावपि फलाकाङ्क्षया स्वर्गो न कल्प्यते, अपि तु कार्यस्य कृत्यधीनत्वात्, कृतेश्च कर्तृत्वाधिकारत्वात्परम्परया नियोज्यापेक्षणात्, अविशिष्टस्य नियोज्यत्वानुपपत्तेः तद्विशेषणाकाङ्क्षायां स्वर्गः कल्प्यत इति तन्मतस्थितिः। अतो नैमित्तिकेषु निमित्तस्य नियोज्यविशेषणस्योपलम्भान्न तद्विशेषणतया फलसिद्धिः, अनाकाङ्क्षितत्वात्। भावनावाक्यार्थपक्षे तु भावना प्रथमतः फलमेवाकाङ्क्षतीत्युपपद्यते। प्राभाकरमते तु नैमित्तिकम् कर्म विफलमिति तस्मादनुष्ठानं कथं घटेत। यथाशक्ति प्रयोगस्तु कुतस्तरामिति।

### उद्देश्यद्वयसम्बन्धे वाक्यभेद इति शंका–निरासौ।

यदि निमित्तसम्बन्धः, फलसम्बन्धश्चेत्युभयमङ्गीक्रियते, तद्यु भयोः सम्बन्धः कथं घटताम् ? उद्देश्यद्वयसम्बन्धे वाक्यभेदप्रसङ्गात्। एवञ्च 'प्रत्युद्देश्यं वाक्यसमाप्तिः' इति न्यायेन निमित्तवाक्ये फलं न स्वीकारमर्हतीति। शङ्का त्वित्थं समाधेया—विधेयस्य

यत्र द्वाभ्यामुद्देश्याभ्यां सम्बन्धः, तत्रैव वाक्यभेदो दुष्परिहरः। न चेह तथा विधेयस्य कर्मणः फलेन सम्बन्धः, तत्कर्तव्यतायाश्च निमित्तेनेति न कश्चिद्विरोधः। अर्थात्सजातीयोद्देश्यद्वयसम्बन्धे वाक्यभेदः, न तु विजातीयोद्देश्यद्वयसम्बन्धे। फलस्येप्सितत्वाख्यमुद्देश्यत्वम्। निमित्तस्य त्वनुष्ठापकत्वरूपम्। अतः काम्येषु कर्मसु समग्राङ्गोपसंहारसमर्थस्यैवाधिकारः। नित्ये त्वङ्गेषु तु यथाशक्तिन्यायः।

तत्रायं विशेषः—अङ्गानां विधिना विहितत्वाद्ग्रहणम्, निमित्तानुरोधाद्वा त्यागः। उभयानुग्रहार्थं शक्तं प्रत्युपादानम्। अशक्तं प्रति परित्याग इति त्रेधा गतिर्भवितुमर्हति। तत्र यद्युभयानुग्रहो भवितुमर्हति, स एव न्याय्यः। तत्रापि न सर्वेषामङ्गानां यथाशक्ति न्यायविषयत्वं युज्यते। अपि च यानि शक्तौ सत्यां प्रयोगविधिरनुष्ठापयति, तेषामेव, न त्वग्निविद्याशक्तीनाम्, न तु कालादीनाम्, तेषामनुपादेयत्वात्।

**वैरूप्यशङ्का–समाधाने**

नन्वेवं सत्येकस्यैव विधेः शक्तं प्रत्यनुष्ठापकत्वम्, अशक्तं प्रत्यननुष्ठापकत्वमिति वैरूप्यं नाशङ्कनीयम्। 'यथाशक्ति कुर्यात्' इत्येकेनैव वचनेनोभयसङ्ग्रहात्। एवञ्च सर्वाङ्गानुष्ठानं मुख्यम्। असम्भवेऽङ्गेषु यथाशक्तिन्यायः, तस्याप्यसम्भवे प्रधानमात्रानुष्ठानेन। प्रधानमात्रानुष्ठानमिति मूल एव ग्रन्थकृता निपुणतरमुपपादितत्वादिति प्रकरणार्थसङ्क्षेपः।

**वक्ष्यमाणेऽर्थे श्रोतृबुद्धिसमवधानायोक्तार्थस्य सिंहावलोकनन्यायेन अनुसन्धानम्।**

एवमध्ययनविधिवाक्ये प्रभाकरमतं निरस्य, आचार्यमतस्थापनाय प्रयुक्तितिलकन्नामकमाद्यं प्रकरणं प्रावर्तिष्ट। ततः 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रोक्तस्य विधिप्रामाण्यस्योपपादकत्वेन ज्ञानानां स्वतः प्रामाण्ये नान्तरीयकतया साधनीये, तत्र वार्तिकव्याख्यातॄणां स्वयूथ्यानाम्–उम्वेदकभट्ट–सुचरितमिश्रादीनां व्याख्यां पूर्वापरवार्तिकविरोधोपन्यासेन निरस्याऽऽचार्याभिमतस्स्वतः प्रामाण्यनिर्णयः द्वितीये प्रकरणे व्यधायि ( निरधारि )। तृतीये प्रकरणे विधिनिर्णयः गुरुमतसर्वस्वभूतकार्यविध्यर्थविधूननेनाकारि। तदनन्तरं प्रत्यक्षसूत्रशेषतया व्याख्यातृभिर्निरूपितस्याऽनुमानस्य हेतुभूतां व्याप्तिं व्यवस्थापयितुं व्याप्तिनिर्णयो नाम प्रकरणं प्रववृते। ततः वाक्याधिकरणेऽन्विताभिधानवादनिरासमुखेनाऽभिहितान्वयवादसमर्थनेन लाघवसूत्रभाष्यानुकूल्यप्रतिपादनेन वाक्यार्थप्रकारो भावनामुख्यविशेष्यकः विमृश्यते स्म। ततः सर्वशक्त्यधिकरण एकदेशिभिः, प्राभाकरमीमांसकैश्च प्रतिपादितं नित्य-काम्यविवेकप्रकारं बाधकैर्हेतुभिर्विधूय, आचार्यसम्मतः नित्य-काम्यविवेको निरधारि।

एवं पूर्वोक्तविचारे सम्पन्ने तृतीयप्रभृतिद्वादशपर्यन्तं विचारितम् शेषत्वादिकं तत्तत्प्रमाणैस्सह क्वचित्स्थूलरूपेण, क्वचिद्विशिष्य, आचार्यसम्मतोऽर्थो विशिष्टः सङ्गृहीतः।

**अङ्गनिर्णयस्य प्रतिपाद्यो विषयः।**

जैमिन्युपज्ञे मीमांसादर्शने नियतक्रमे बहिरङ्गमूलकतया मीमांसककुलेश्वरः पार्थसारथिमिश्रः प्रथमाध्यायप्रतिपाद्यं प्रमाणविचारमुपेक्ष्य, प्रस्थानद्वये द्वितीयाध्याय-

प्रतिपाद्ये कर्मभेदविचारेऽतिविप्रतिपत्त्यभावादनादृत्य, अवशिष्टाध्यायदशकप्रतिपाद्य-प्रमेयतत्त्वसंग्राहकमंगनिर्णयाख्यम् सप्तमप्रकरणमरीरचत्। तत्र सन्ति पञ्च परिच्छेदाः।

### प्रथमपरिच्छेदे सन्निपत्योपकारककर्मनिरूपणम्।

तत्र प्रथमपरिच्छेदे श्रुतिविनियोगो न्यरूपि। तथाहि—दृष्टादृष्टोभयार्थभेदेनांगं त्रिविधम्। दृष्टार्थं चतुर्विधं जात्यादि। अदृष्टार्थं द्विविधम्। इदमेव सिद्धसाध्यभेदेन द्विविधमिति न्यायप्रकाशार्थसंग्रहादौ प्रत्यपादि। उभयार्थमेवाश्रयिकर्मेत्युच्यते। दृष्टार्था क्रिया सन्निपत्योपकारकमित्यभिधीयते, अवघातादि। अदृष्टार्थो द्विविधा सन्निपत्योपकारकं प्रोक्षणादि, आरादुपकारकं प्रयाजादि च। उभयार्थन्तु पशुयागाङ्ग-भूतपुरोडाशयागस्विष्टकृदादि। सन्निपत्योपकारकमिति यौगिकं कर्मनामधेयम्। सन्नि-पत्यद्रव्यादिषु सम्बध्य, यानि प्रधानस्योपकुर्वन्ति, तानि सन्निपत्योपकारकाणीति। परि-भाषायान्तु गुणकर्मार्थकर्मभेदेन द्वैविध्यमुक्तम्। तत्र कर्माङ्गद्रव्याद्युद्दिश्य विधीयमानं कर्म सन्निपत्योपकारकमिति तल्लक्षणम्।

### तद्घटकदलानां प्रयोजननिर्देशः।

अत्र सन्निपत्योपकारकमिति लक्ष्यनिर्देशः। अवशिष्टं लक्षणमिति विवेकः। व्रीह्यादिद्रव्यम्—यागादिकर्माङ्गम्, तदेवोद्देश्यम्, तदुद्दिश्य प्रोक्षणं विधीयते। उद्देश्यता कर्माङ्गव्रीहिनिष्ठा, प्रोक्षणं विधेयम्, विधेयता प्रोक्षणनिष्ठा, तयोर्निरूप्यनिरूपक-भावस्सम्बन्धः। कर्माङ्गभूतव्रीहिनिष्ठोद्देश्यतानिरूपिता या प्रोक्षणनिष्ठा विधेयता तच्छालित्वम्, कर्मत्वञ्च प्रोक्षणेऽस्तीति लक्षणसमन्वयः।

अत्र कर्मत्वं सन्निपत्योपकारकस्य लक्षणमित्युक्तौ, आरादुपकारकेऽतिव्याप्तिः स्यात्। तद्वारणाय कर्माङ्गेत्यादिविशेषणं देयम्। तेन तद्वारणम्। कर्माङ्गभूतद्रव्यादि-निष्ठोद्देश्यतानिरूपितविधेयताशालित्वमात्रोक्तौ जुहूमुद्दिश्य विजीयमानायां पर्णताया-मतिव्याप्तिः स्यात्, तत्रापि लक्षणस्य सत्त्वात्। अतस्तद्वारणाय कर्मत्वमिति विशेष्यदलं देयम्। पर्णतायां कर्मत्वाभावान्न दोषः। तथा च कर्माङ्गभूतद्रव्यादिनिष्ठोद्देश्यतानिरूपित-विधेयताशालित्वे सति कर्मत्वं सन्निपत्योपकारकस्य लक्षणम्।

### आराहुपकारकलक्षणम्।

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्माऽऽराहुपकारकमिति, स्वजन्यात्मसम-वेतादृष्टद्वारोत्पत्त्यपूर्वेण प्रधानापूर्वापरपर्यायेण परमापूर्वे जननीये उपकारकमारो-द्बुपकारकमिति।

### परिभाषोक्तो विशेषश्च।

संस्कारजनकं गुणकर्म। तत्रात्मगतापूर्वजनकं कर्माऽर्थकर्म। तच्च अङ्गप्रधान-रूपम्। अग्निहोत्र, दर्शपूर्णमास, प्रयाजादि। परन्तु कृष्णयज्वाऽङ्गद्वैविध्यनिरूपणावसरे आत्मसमवेतापूर्वजनकान्याराहुपकारकाणीति लक्षयाम्बभूव।

दृष्टादृष्टार्थं कर्म आश्रयिकर्मेत्युच्यते। यथा पशुयागाङ्गभूतं पुरोडाशयागादि। इदञ्चोद्देशांशेन देवतास्मरणरूपं दृष्टम्, त्यागांशेनादृष्टं करोतीत्युभयार्थमिति भण्यते। एवं स्विष्टकृत्–पिष्टलेप–फलीकरणहोमादि।

### अत्र विषये प्राभाकरमतम् ।

प्राभाकरमीमांसका उभयार्थकर्मणि आश्रयिकर्मनामकेऽदृष्टकल्पनापूर्वकं दृष्टप्रयोजनसमाश्रयणमित्यातिष्ठन्ते । तेषामयमाशयः । तथाहि—प्रधानयागादौ विनियुक्तमेव पुरोडाशादिद्रव्यं स्विष्टकृद्यागेऽपि द्रव्यम् भवति, परप्रयुक्तद्रव्योपजीवित्वात्तस्य । प्रधानयागदेवतैव स्विष्टकृद्यागे देवता, मानसत्यागरूपस्य दर्शादियागं प्रति दृष्टोपकारः कोऽपि न दरीदृश्यते, तदङ्गभूतस्य द्रव्यप्रक्षेपादेर्दर्शपूर्णमासद्रव्याश्रयत्वात् । अतस्स्विष्टकृद्यागस्य प्रधानशेषत्वाभावात्, तद्द्रव्यसंस्कारत्वं न युज्यते । एवञ्चादृष्टकल्पनामन्तरा न निर्वहतीत्यादावदृष्टं प्रयोजनं परिकल्पनीयम् । तत उद्देशांशस्य स्मरणरूपदृष्टप्रयोजनपरिकल्पनम् । एवञ्चादृष्टप्रयोजनकल्पनपूर्वकम् दृष्टप्रयोजनमिति तेषामाशयः । यथोक्तं बृहत्यां गुरुणा । यथा—तदर्थमुत्पत्तिनियोगो विवक्ष्यते, सिद्धमपूर्वार्थत्वम् पश्चादधिकारनियोगार्थत्वे यागस्य निरूढेऽङ्गसम्बन्धे सति तद्द्वारेण द्रव्यदेवतागतदृष्टसंस्कारसिद्ध्यर्थमित्यनुमन्यत एव । बृ. पृ.–९७६ ।

### आश्रयिकर्मविषये भाट्टमतम् ।

तेषामिदमाकूतम् । तथाहि—कर्मणस्त्रैविध्यम्, चातुर्विध्यञ्चेति प्रागवोचाम । अत्रेदं बोध्यम्, कर्म त्रिविधम्—दृष्टार्थम्, अदृष्टार्थम्, दृष्टादृष्टार्थञ्चेति । तत्र सन्निपत्योपकारकाणामुत्पत्ति–प्राप्ति–विकृतिनिमित्तानां केवलदृष्टार्थत्वम् । संस्कारहेतूनामदृष्टार्थत्वम्, आरादुपकारकाणां केवलादृष्टार्थत्वम् उभयार्थं कर्म पशुपुरोडाश–स्विष्टकृदादि अग्नीषोमीयपशुयागस्य साक्षादुपकर्तुमीष्टे । न द्रव्यान्तरमपेक्षते । अतस्स्वांशभूतेनोद्देशेन देवतास्मरणस्य कर्तुं समर्थत्वात् । तथा च देवतामुद्दिश्य द्रव्यत्यागो याग इति कीर्त्यते । तत्र त्यागांशेनादृष्टोत्पत्तेरदृष्टार्थत्वम् । उद्देशांशेन देवतास्मरणरूपदृष्टार्थत्वम् । अतः पशुपुरोडाश उभयार्थः भवति । तत्रायं विशेषः । यद्यपि प्रवर्तनैकरसो विधिरेकेनैव प्रयोजनेन शान्ताकाङ्क्षो नान्यत्प्रयोजनमपेक्षते, तथापि अंशभेदेनापेक्षावशात् प्रयोजनद्वयकल्पनं न गौरवावहम् । अत्र दृष्टत्वात् प्रथमदेवतास्मरणं प्रयोजनमाश्रित्य, तदनन्तरमदृष्टं कल्पनीयम् । दृष्टप्रयोजनस्य मानान्तरसिद्धत्वेनाकल्पनीयतया तस्य प्रयोजनत्वम् नान्तरीयकमिति, तदपि प्रयोजनमुररीक्रियते । अतो नायं नियमः—अदृष्टकल्पनापूर्वकं दृष्टमाश्रयणीयमिति । अयमर्थो मूलेनैव निगदव्याख्यातः ।

### चातुर्विध्यवादिनो मतम्, नायकरत्नकृतो मतञ्च ।

केचित् कर्मणां चतुर्धा विभागमाचक्षते, आरादुपकारकम्, सन्निपत्योपकारकम्, उभयात्मकम्, अनुभयात्मकञ्चेति । तत्रोभयात्मकमाश्रयिकर्म, अनुभयात्मकास्तु जातिद्रव्यगुणाः । ते हि न कारकेऽतिशयमादधते, नापि फलापूर्वे, अपि तु क्रियामात्रनिर्वर्तका इति प्रकारान्तरमिति नायकरत्ने श्रीरामानुजाचार्योऽब्रवीत् । इति ।

### दृष्टार्थेष्वपि नियमादृष्टस्योपपादनम् ।

'व्रीहीनवहन्ती'त्यादावुपायान्तरनिवृत्तिरेव नियमस्य फलम् । नियमांशस्य दृष्टप्रयोजनं न लभ्यते । दर्शपूर्णमासयागस्य पुरोडाशसाध्यत्वात्, व्रीहीणां पुरोडाशावरुद्धे निवेशासम्भवेन पुरोडाशप्रकृतितया व्रीहीणामन्वयो वाच्यः । 'व्रीहिभिर्यजेते'ति

तृतीययावगतं करणत्वं परम्परया निर्वोढव्यम्। अतण्डुलीभूतानां व्रीहीणां पुरोडाशप्रकृतिकत्वासम्भवात् तण्डुलीभाव आक्षेपात्प्राप्नोति, नानोपायाश्चाक्षेपादेव प्राप्ताः। ततश्चावघातस्य वैतुष्यमात्रप्रयोजनत्वे, तदुपायनियमानभ्युपगमे अवघातविधिरनर्थक एव सम्पद्येत। एवञ्च विधिपरिगृहीतं तेनावघातेन निष्पन्नानां तण्डुलानामुपायान्तरं निवर्त्य तण्डुलेभ्योऽदृष्टमस्तीति कल्पनीयम्। न चावघातक्रियानिष्पाद्यतयाऽवघातक्रियाया एव प्रयोजनं स्यात्। न तु नियमस्येत्याशंकनीयम्। न च नियमस्याक्रियारूपतया साक्षाददृष्टनिर्वर्तकत्वं सम्भवति, तथापि तदकल्पने नियमस्यानर्थक्यापत्तेरदृष्टं तत्प्रयोजनं कल्प्यते, नियमजन्यत्वान्नियमादृष्टमित्यभिधीयते।

सर्वेष्वङ्गेषु प्रकरणस्यैव विनियोजकत्वम्।

अत्रेदं बोध्यम्—आरादुपकारकेषु साध्यस्यानिर्देशेन भाव्यसमर्पकतया प्रकरणविनियोगो युज्यते। सन्निपातिषु श्रुत्यादिभिरेव भाव्यस्य समर्पितत्वात् प्रकरणस्य विनियोजकत्वं कथमिति जिज्ञासायाम्, उच्यते—सन्निपातिषु श्रुत्याद्युन्नीतभाव्यत्वानां व्रीहीणामाकाङ्क्षायां तदुपशमस्य प्रकरणाधीनत्वादुभयेषामपि प्रकरणं विनियोजकमेवेति सिद्धान्तसरणिः।

तत्राप्ययमपरो विशेषः। यत्प्रकरणं नाम न साक्षादपूर्वसाधनत्वलक्षणं भवति। अपि तु प्रकरणेन प्रथमं प्रधानैकवाक्यता, तदनन्तरं विनियोगादिपरामर्शः। तदनन्तरमपूर्वोपस्थितिः, ततस्तत्साधनत्वलक्षणा, तदनु विनियोगः—इति। अयं प्रकारः सर्वत्र द्रष्टव्यः।

प्रकृतमनुसरामः स्विष्टकृद्यागे त्यागांशस्य प्रयोजनापेक्षास्तीति। तस्यादृष्टमेव प्रयोजनमवश्यं कल्पनीयम्। यतः पूर्वपक्षे तस्य प्रतिपत्तित्वमेव स्विष्टकृदर्थवत्तस्य नाशे यथा लोपः तथासिद्धान्तेऽपि एकदेशद्रव्यत्वेन द्रव्याप्रयोजकत्वाल्लोपाविशेषादिति चेत्। सत्यम्। उत्तरार्द्धादिद्रव्यप्रयोजकत्वाभावेऽप्यादृष्टार्थत्वे सति, अदृष्टसम्पादनाय 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरयुर्वा आज्येन ताः देवताः परिसंख्याय यजेत' इति वचनेन हविर्नाशे निमित्ते विहितेनाज्येन स्विष्टकृत् कर्तव्य इत्यस्ति प्रयोजनम्। एवं पिष्टलेप-फलीकरणयोरपि द्रष्टव्यम्। अत एवोक्तं शास्त्रदीपिकायाम्—

देवतास्मरणे मन्त्रात् प्रक्षेपाद्द्रव्यसंस्कृतिः।

त्यागांशस्य तु नादृष्टादृते किञ्चित्प्रयोजनमिति (शा. पृ. ३५५) तन्त्ररत्नेऽप्यधिकारलक्षणे पार्थसारथिमिश्रेणावोचि अपूर्वसिद्ध्यर्थमपेक्षत एव। एतदपि स्विष्टकृतः प्रयोजनमेव। यद्यपि चैकदेशत्वादसौ न स्वयं द्रव्यं पुरोडाशम्, उत्तरार्द्धं वा प्रयोक्तुं क्षमः। तथापि तावदपेक्षत एव। तावता च साधारणविहितं नैमित्तिकमाज्यं किमिति न गृह्णाति। तस्मात्तस्याज्येन समापनम्। इदमेव चाश्रयिष्वपूर्वप्रतिपादनस्य प्रयोजनमित्युक्तम् तं. र. पृ. ५४३–५४४ इति।

श्लोकवार्तिकव्याख्याने परिसंख्यापक्षे फलप्रदर्शनावसरेऽभिहितम्। यथा—हविश्शब्दाभिधेयनाशदोषनिमित्तचोदिताज्यसाधनीयस्विष्टकृद्व्यतिरिक्तानामिडा–प्राशित्र–चतुर्धाकरण–शंयुवाककालभक्षणरूपशेषकार्याणामप्रयोजकत्वात्, प्रतिपत्तित्वाच्च तद्द्रव्यनाशे, दोषे च लोप एव युक्तः इत्याध्याहृत्य व्याख्यास्यते—इति।

### विनियोगपदार्थः, अङ्गस्वरूपनिरूपणञ्च ।

विनियोगो नाम सम्बन्धः, स च सम्बन्धिद्वयाधीनः सम्बन्धिद्वयप्रतिपत्तिपूर्वकः । सा च समभिव्याहाररूपाद् वाक्यादेव भवति । यथा द्वितीया साध्यत्वं ब्रूते, तस्य साधनतानिरूपितत्वात् यत्किञ्चित्साधनाक्षेपेण सम्बन्धेऽपि प्रमाणं भवति । अत एव यस्य शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते, सा विनियोक्त्री श्रुतिरित्याचक्षते मीमांसाविचक्षणाः । एतादृशस्थले श्रौतो विनियोग इति च । वाक्यन्तु तदाक्षिप्तसाधनविशेषाक्षेपकतया सहायमात्रम् । व्रीहीन् प्रोक्षति, अवहन्ती'त्यादौ वाक्यस्य सत्त्वेऽपि प्राधान्येन व्यपदेशा भवन्ति इति न्यायात् श्रुत्या विनियोगः, द्वितीयादीनामभावेऽपि यत्राऽङ्गाङ्गिबोधकपदसमभिव्याहारमात्रेण विनियोगः । 'यथा- यस्य पर्णमयी जुहूर्भवती'त्यादौ पर्णताया जुह्वङ्गत्वमिति मीमांसकानां मर्यादा । एवं तृतीयास्थलेऽपि । अयमर्थो मूल एवाक्षेपसमाधानाभ्यां विविच्य दर्शितः ।

### अत्र खण्डदेवाचार्यमतम् ।

नव्यमीमांसकः खण्डदेवाचार्यः, तदन्तेवासी कविमण्डनशम्भुभट्टश्च भङ्गयन्तरेणेममर्थमुपापादयताम् । तथाहि—'व्रीहिभिर्यजेते'त्यत्र तृतीयाविभक्तिरूपा श्रुतिः तत्परासती स्वप्रकृत्यर्थस्य करणत्वरूपकारकत्वप्रतिपादनेनान्याङ्गत्वं बोधयति । अतः तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वमिति । द्वितीयायास्त्वयं विशेषः—यत् द्वितीयाविभक्तिस्स्वप्रकृत्यर्थस्योद्देश्यताबोधनद्वाराऽन्यार्थस्य विधेयतापादनेन करणतातात्पर्येणान्यार्थस्य स्वप्रकृत्यर्थाङ्गत्वं बोधयति, न तु स्वप्रकृत्यर्थस्याङ्गत्वं बोधयतीति । अयमर्थशशेपलक्षणे तेषामर्थाधिकरणे भाट्टदीपिकायां 'तत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः ( भा. दी. पृ. २२५ )

तृतीयादिविभक्तिः·········वैषम्येण तस्याः प्रमाणत्वमुपपादयतीत्यत्र विशदः ।

एतेन-द्वितीयाश्रुत्याऽवघातस्य व्रीह्यङ्गत्वम् , तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वमिति न्यायप्रकाशार्थसंग्रहगतं वाक्यजातं निगदव्याख्यातम् ।

### अङ्गत्वलक्षणनिरूपणम् ।

अङ्गसामान्यलक्षणन्तु—परोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वम् । कृतिव्याप्यत्वञ्च पुरुषकृतौ कारकत्वेन विहितत्वम् । तेनाङ्गत्वाच्च प्रयोज्यत्वस्य भेदः । अस्यायमाशयः । तथाहि—परप्रेरणात्मको विधिः भावनां विषयीकरोति । अफले चेतनस्य प्रवृत्तिर्न सम्भवति । अतस्समीहितसाधनत्वमात्रेण चेतनप्रवृत्तेरसम्भवेन समीहितोद्देशेन पुरुषेण व्यापारितव्यमिति । एवञ्च विधिरेव परोद्देशप्रवृत्तकृतिव्याप्यत्वमाक्षेपात् गमयति । प्रवर्तनात्मकशाब्दभावना विधिः । प्रवृत्तिहेतुभूतो व्यापारः प्रवर्तना, समीहितसाधनादन्यत्र चेतनः प्रवर्तयितुं न शक्यत इति, विधिस्स्वस्य प्रवर्तकत्वसिद्ध्यर्थं स्वभाव्याया भावनायास्समीहितभाव्यत्वं गमयति, अर्थात् भावनाकरणस्य यागादेस्समीहितोद्देशप्रवृत्तव्यापारगोचरत्वं गमयतीत्यर्थः ।

यः पुरुषः पुरुषार्थत्वेन, तत्साधनत्वेन वा यद् वस्तु जानाति, तस्य तद्विषयिणीच्छा जायते । तदनन्तरं तद्विषयकः प्रयत्नः । स च साक्षात्तत् साधयितुमनीशानस्तत्साधनेऽ-

वतरति। तेन साधनेन च तत्साध्यत इति, अर्थात्-यद्धि येन रूपेण पुरुषस्य समीहितं साधयति, तेन रूपेण तद्वस्तु, तत् समीहानिमित्तपुरुषव्यापारगोचरीभूतेन येन वस्तुना साध्यते, तत् तस्याङ्गमित्यभिधीयते, इदमेव परोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वमित्युच्यते। एवञ्च यदुद्देशप्रवृत्तपुरुषकृतौ यत् कारकत्वेन विहितम्, तत्तदङ्गमित्युच्यते, प्रोक्षणादौ समन्वयप्रकारश्चेत्थम्। तथाहि-अत्र परशब्देन प्रधानमभिप्रेतम्। परोद्देशेन व्रीहिसंस्कारोद्देशेन प्रवृत्तः पुरुषः तत्समवेता कृतिः, व्रीहिसंस्कारकर्मिका कृतिः। तत्र करणकारकत्वेन प्रोक्षणादीनां विधानात् लक्षणसमन्वयः। एवं सर्वेष्वङ्गेषु समन्वयो बोध्यः।

## अंगत्वे प्रमाणनिरूपणम्।

एतादृशमङ्गत्वं केन बोध्यत इति जिज्ञासायां न केवलेन श्रुत्यादिना, साध्यत्वसाधनत्वादिमात्रबोधनात्। नापि विधिना, अभिधानेन तस्य चेतनप्रवर्तनैकरसत्वात्। अतः कथमेतादृशस्याङ्गत्वस्य बोध इति चेत्? अभिधीयते-विधिसहितः श्रुत्यादयोऽङ्गत्वमवगमयन्तीति। तत्राप्यर्थापत्त्या। अयं भावः-विधिस्साक्षाद्भावनामेव विषयीकरोति। तथापि भावनाविशेषणतया सोमादींश्च विषयीकरोत्येव। एवञ्च धात्वर्थादीनां भावनाविशेषणत्वं विधिसंस्पर्शमन्तरा न सम्भवतीति, विधिस्स्वविषयत्वसिद्ध्यर्थम् धात्वर्थादीनां भावनाविशेषणत्वं साक्षात्परम्परया वाऽपेक्षते। विध्यपेक्षितम् विशेषणत्वं श्रुत्यादयस्समर्पयन्ति।

तत्रैतावान् विशेषः—धात्वर्थस्यैकपदश्रुत्या भावनाविशेषणत्वं गम्यते। द्रव्यजाति-गुणानां तृतीयादिविभक्तिश्रुत्या धात्वर्थविशेषणत्वं प्रतीयते-इति। एवं श्रुत्यादिना विशेषणत्वे सति विधिर्विशिष्टविषयो भवति। विशिष्टविधिना तत्तद्विशेषणानामपि स्वस्वविशेष्योद्देशप्रवृत्तपुरुषकृतौ कारकत्वेन विहितत्वस्य बोधनात्, सोमादीनां विधितः पाराध्यं सिद्ध्यति। तथा च श्रुत्यादीनां तत्तत्पदार्थविशेषणत्वमुखेनाङ्गत्वबोधकविधौ साहाय्यकरणाच्छ्रुत्यादिगम्यत्वञ्चोपपद्यत इति। अयमर्थ आक्षेपसमाधानाभ्यां ग्रन्थकृता समुपपादि। यथा—'कथं तर्हि श्रुत्यादीनि विनियोगकारणानि? तादर्थ्यमेव विनियोगः। तच्चेत् विधितः। न श्रुत्यादीनां तत्कारणत्वमुपपद्यत इति। तदेवं शेषि विशेषप्रतिपादनेन चाङ्गत्वं बोधयतो विधेस्सहायकम् कुर्वन्ति श्रुत्यादीनि विनियोगे कारणान्यभिधीयन्ते, इति।

## अत्र विषये खण्डदेवाचार्योक्तं समाधानम्।

भाट्टदीपिकाकारस्तु प्रकारान्तरेणेममर्थमुपन्यस्यति स्म। यथा—यद्यपि नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकम्, कारकत्वमात्राभिधायित्वात्, तृतीयादेः। तथापि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिः आख्यातात्। कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात्। विधिर्हि विशिष्टभावनां विदधत्, अर्थात् विशेषणान्यपि विधत्त इति। सर्वेषामुद्देश्यत्वेन, विधेयत्वेन वा भावनायामन्वयः, तस्या विध्यन्वयः। अत एवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वेन तेषामङ्गत्वप्रामाण्यव्यवहारः (भा. दी. पृ. २२४) इति।

## शास्त्रदीपिकोक्तलक्षणस्य न्यायरत्नमालायामुक्तलक्षणे पर्यवसानमिति कथनम् ।

उपरि निरुक्तलक्षणस्य समीहितसाधनत्वमङ्गत्वमित्यस्य च विरोधः नाशङ्कनीयः । पूर्वोक्तस्य लक्षणस्यात्रैव पर्यवसानमिति नास्ति विरोधः । अयमर्थो मूल एव व्यक्तः । अयम्भावः । तथाहि—लिङादिशब्दानाम् प्रवर्तनालक्षणो व्यापारः, विधिश्चार्थ इति केचित् मन्यन्ते । भावनातद्गतभिष्टसाधनत्वञ्चेत्युभयमर्थः इत्यपरे मन्यन्ते । तत्र प्रथममते–प्रवर्तनात्माविधिरिष्टसाधनत्वातिरेक्ते चेतनं प्रवर्तयितुं नेष्टे, प्रवृत्तिविषयस्य समीहितसाधनत्वमाक्षिपतस्तस्य समीहितं प्रत्यङ्गत्वात्तत्र प्रमाणं भवति ।

द्वितीयपक्षे तु समीहितसाधनत्वस्यैव विधित्वात्तस्य श्रुतिप्रमाणत्वमस्मिन्पक्षे । प्रथमपक्षे त्वर्थात् विधेः प्रमाणत्वमिति विवेकः । अत एव शास्त्रदीपिकायां 'स्रुगादीनां शेषित्वं कथमवगम्यते, नहि शेषत्ववाचिनीत्याक्षिप्य समाहितम् । समीहितत्वं, साध्यत्वञ्चेति शेषित्वबोधे द्वयमपेक्षितम् । तत्र द्वितीयया साध्यत्वमवगम्यते । विधिबलाच्च समीहितत्वं ज्ञायते, अतः द्वितीयासहकृतविधितश्शेषित्वबोधस्सम्भवति ।

एवञ्चैतत् सर्वं मनसि निधायैवाभ्यधायि—

'कर्तुस्समीहितं येन सिद्ध्यत्यङ्गं तदुच्यते' इति ।

परोद्देशप्रवृत्तपुरुषकृतौ कारकत्वेन विहितत्वमिति लक्षणं लौकिकवैदिकसाधारणम् । वैदिकन्तु वेदावगतसमीहितसाधनत्वमिति । शेषत्वगुणत्व–परार्थत्वाङ्गत्वानां वैलक्षण्यनिरासाय मूले समीहितसाधनमङ्गशब्देन शेषगुणादिपर्यायेणाभिधीयत इत्युक्तमिति बोध्यम् ।

## श्रुतिलक्षणम्, तद्विभागश्च ।

स्वार्थप्रतिपादने (प्रमाणा) पदान्तरमनपेक्षमाणश्शब्दः इति श्रुतिर्लक्षणम् । अर्थात् लिङ्गादिवत् विमर्शनिरपेक्षं यच्छब्दज्ञानमन्यव्यवधानमनपेक्ष्य यदर्थज्ञानं जनयति, स तस्मिन्नर्थे श्रुतिः । सा त्रिविधा, विधात्र्यादिभेदेन, तव विधात्री कर्तव्यत्वबोधिका । एतेन न्यायप्रकाशार्थसंग्रहस्थो वाक्यसन्दर्भो व्याख्यातः ।

एवञ्च शेषिशेषत्वाभिमतयोस्तत्तद्रूपेणोपस्थितयोस्सम्बन्धबोधो व्यवधानमनपेक्ष्य यच्छब्दज्ञानेन जन्यते, सा विनियोक्त्रीति निष्कर्षः । अस्य समन्वयप्रकारः पूर्वं प्रादर्शि । अत्रेदमवधेयम् । यद्यपि विनियोजकमात्रप्रस्तावे विनियोगश्रुतिरेव निरूपणीया, तथापि, श्रुतित्वसामान्यात् इतरत् श्रुतिद्वयं प्रसङ्गादुक्तमिति मन्तव्यम्, विधि-तद्विनियोज्यत्वोपस्थापनेन विधिसहकारित्वस्योभयत्रापि तुल्यत्वात् ।

## प्राभाकरमतेन पशुना यजेतेत्यत्र लिङ्गसंख्यान्वयप्रकारः ।

प्राभाकरमीमांसकाः 'पशुना यजेते'त्यत्र लिङ्गादीनां परस्परमनन्वितानामेव प्रथमं ग्राहकग्रहणे सति, तदनन्तरं पशुनेति तृतीयश्रुत्या पशोर्यागशेषतया ग्राहकैदमर्थ्यस्य निर्वाहो भवति । लिङ्ग-संख्ययोश्च करणत्वेनानभिधानात् यागान्वयासम्भवेन पश्चात् पशुद्वारा ग्राहकैदमर्थ्यनिर्वाहः वाच्यः । तत्र लिङ्गसंख्ययोः पशुमात्रान्वयेऽपि ग्राहकैदमर्थ्यस्याऽनिर्वाहात् उपादानाख्य आक्षेपापरपर्यायो विधिव्यापारस्वी-

कर्तव्यश्चातुर्थिकः। तेन विधिव्यापारेण लिङ्गसंख्ययोर्ग्राहकीयपशुशेषत्वसिद्धेस्तन्निर्वाह इति, प्रतिपादयन्ति।

**तस्य निरासः।**

इदमापातरमणीयमिति भाट्टमीमांसका मन्यन्ते। तेषामयमाशयः तथाहि—यत्रानेकार्थाभिधानमेकेन शब्देन युगपत् क्रियते। तत्र तेषामन्वितानामेवाभिधानमिति। यथा 'पशुना यजेते' त्यत्र तृतीयाविभक्त्या लिङ्ग-संख्या-कारकाण्यभिधीयन्ते, तत्रापि 'यदा कर्मादयः विभक्त्यर्थाः, तदैकत्वादयो विशेषणत्वेने'ति कर्त्रधिकरणाभाष्यानुसारेण प्रतीतिबलेन कारकं प्रधानतः, लिङ्गासंख्ये, गुणत इति लिङ्ग-संख्याविशेषितकरत्वं तृतीयया श्रुत्याभिधीयते। तेषां यागभावनाशेषत्वमित्यर्थः। पशुलिङ्ग-संख्यानान्तु अरुणैकहायनीन्यायेन पार्ष्ठिकः परस्परान्वयः। एवञ्च अन्वितानामेव तेषामभिधाने परस्परसम्बन्धोऽप्यवगम्यते। अतस्तत्रैकाभिधानमेव विनियोजकम्। अनया रीत्या लिङ्गादीनां साक्षादेकभिधानश्रुत्या भावनाङ्गत्वम्। एकपदश्रुत्या योगाङ्गत्वम्। एवमेकेन लिङ्प्रत्ययेन विधिभावना-कर्तृ-संख्यानामभिधानात् एकस्यैव शब्दस्य सम्बन्धबोधकत्वमिति। तथा च लिङ्गादीनां सन्निहितपरित्यागेन व्यवहितेन ग्राहकेण अन्वयो न घटते। उपादानन्तु विचार्यमाणं सिकताकूपवत् स्वयम् विदीर्यते। अर्थात् 'अरुणया-पिङ्गाक्ष्या एकहायन्यासोमं क्रीणती'त्यत्र प्रथममारुण्यादीनां क्रयान्वये सति, या अरुणा सा गौरैव, या गौः, साऽरुणा इति द्रव्यगुणयोः परस्परमवच्छेद्यावच्छेदकभावरूपो नियमो भवति। तथैव प्रकृतेऽपि एकेन पुंसा पशुना यजेतेति सर्वेषां यागान्वये सति, स पशुरेकः पुमानिति पार्ष्ठिको बोधो जायते।

**पश्वेकत्वस्य ग्राहकग्रहणपक्षेऽनिष्टापादनम्।**

प्राभाकरमीमांसकानां पश्वेकत्वस्य ग्राहकग्रहणेनापूर्वार्थत्व ( आत्मार्थत्व ) निर्वाहाय करणीभूतपशुसम्बन्धित्वाकाङ्क्षया नाविवक्षितत्वमिति कथनमविचारितरमणीयं प्रतिभाति। एवं विवक्ष्यमाणेऽनिष्टमापद्यते, 'पशुनायजेते'त्यत्र तृतीयाविभक्तिः प्रातिपदिकार्थगतमेवैकत्वमभिधत्ते क्रियाकारकतया, तथापि नाविवक्षितम्। अस्यापि ग्राहकग्रहणेनापूर्वेदमर्थ्यं तावदापादितम्। तच्चास्य केन द्वारेण निर्वहत्विति द्वारापेक्षायाम्, संख्येयावच्छेद एव सामर्थ्यात् द्वारमिति प्रतीयते। पशुरपि यागांगत्वेन विहितः परिच्छेदकमपेक्षते, अपरिच्छिन्नस्य यागसाधनत्वासम्भवात्। तत्स्थतया चैकत्वं प्रतीयते। तथा चैकत्वस्य ग्राहकेदमर्थ्यनिर्वाहाय अपूर्वमेव विनियोगापर्यायमेकत्वस्य करणीभूतपशुसम्बन्धित्वमाकांक्षतीति विवक्षितमेकत्वमिति।

अत्र वयं ब्रूमः—एकत्वस्य ग्राहकग्रहणं नोपपत्तिमत्। परविशेषणत्वादन्विताभिधानं हि ग्राहकग्रहणमित्यभिधीयते प्राभाकरमीमांसकैः। तच्च योग्यतायामायतते, न च पशुविशेषणमन्येनान्वेतुं योग्यम्।

**एतेन स्थलान्तस्य निरास इति कथनम्।**

अनेनैव न्यायेन 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहैकत्वमपि विवक्षितं स्यात्। तस्यापि ग्राहकग्रहणेन विध्यैदमर्थ्यमवगतमेव। तस्यापि द्वारापेक्षायाम् ग्रहस्थत्वेनावगतस्य

सामर्थ्यावगतसंख्येयपरिच्छेदद्वारस्य स्वात्मार्थत्वं कर्तुं सम्मार्गकर्मीभूतग्रहसम्बन्धं नियोग एवाक्षिपतीति वक्तुं शक्यत इति। एवञ्चाक्षेपलभ्यं न वाक्यं भिनत्तीति ग्रहैकत्वविवक्षा दुर्वारा स्यात्। अतस्तदीयप्रक्रियया पशुग्रहैकत्वस्य विवक्षाऽविवक्षे न भवितुमर्हत इति, अस्मदुक्तप्रकार एव साधीयानिति ध्येयम्। एतत्सर्वं पार्थसारथि-ग्रन्थेषु कृतपरिश्रमाणां पुरस्तात् नावशिष्यते वक्तव्यम्।

### श्रुतिनिरूपणस्योपसंहारः।

एवञ्च श्रुतिस्त्रिविधा विधात्र्यादिभेदेन। विनियोक्त्र्यपि त्रिधा-एकाभिधानरूपा, विभक्तिरूपा, एकपदरूपा चेति। यत्र शेषिणि साध्यत्ववाचिनि द्वितीया, व्रीहीनिति यत्र शेषसाधनत्ववाचिनी दध्नेति तत्र श्रुतिविनियोगः। एवञ्चतुर्थी-पञ्चमी-षष्ठी-सप्तमी-विभक्तिषु श्रौत एव विनियोगः। यत्र श्रुतिविपर्ययः, तत्र लक्षणया साध्यत्वम्, साधनत्वं प्रतिपाद्यते, तत् तत्प्रतिपादनञ्च पदान्तरान्वयपरामर्शफलमिति, तस्य वाक्यनिमित्तत्वमिति संक्षेपः।

### लिङ्गनिरूपणम्।

लिङ्गं नाम सामर्थ्यं रूढिरिति पर्यायः, तेन यौगिकशब्दात् समाख्यातस्स्फुट-स्तस्य भेदः। तच्च दृष्टार्थेष्वेव विनियोजकम्।

तच्च द्विविधं सामान्यसम्बन्धबोधकप्रमाणान्तरसापेक्षम्, तदनपेक्षमिति। अयमर्थो 'लिङ्गक्रमसमाख्यानादि (मी. द. ३-२-२०) त्यधिकरणे व्यचारि। अदृष्टसाध्ये विषये वस्तुसामर्थ्यस्यागमैकसमधिगम्यतया तत्र श्रुत्यादिभिरेव विनियोगो भवति।

अत्रेदमवगन्तव्यम्-आकांक्षाया अभावे योग्यतारूपस्य लिंगस्य विनियोजकत्वं न भवति। मन्त्रगतप्रयोजनाकांक्षायाः शान्तये सर्वेषां मन्त्राणां नोपपद्यते। अत एवं वक्तव्यम्-यत्र स्वारसिकाकांक्षानिवृत्तेराकांक्षोत्थापकसामान्यसंबन्धबोधकप्रमाणापेक्षा भवत्येव। तच्च प्रमाणान्तरं क्वचिद्वाक्यम्, क्वचित् स्थानम्, क्वचित्समाख्या वेत्यत्रा-नादरः। तत्राद्यं यथा-येयजामहादिमन्त्राणां 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः (तै. सं. १-६-१-११) इति। बर्हिर्देवसदनं दामीत्यादीनां प्रकरणम्। पूषानुमन्त्रणमन्त्रादौ समाख्येति विवेक्तव्यम्।

यत्र तु स्वारसिकी आकांक्षा न निवर्तते, यथाऽर्थज्ञाने, उपनिषज्जन्यात्मज्ञाने वा तत्राकांक्षोत्थापनप्रयोजनाभावात् सामान्यसंबन्धबोधकप्रमाणमन्तरेणाऽपि तन्निरपक्षात् सामर्थ्यादेव विनियोग उपपद्यत एव। एतत्सर्वं मनसि कृत्वैव शास्त्र-दीपिकायाम्, तदनुसारिणि न्यायप्रकाशादौ सामर्थ्यं द्विविधमिति। तदेवोपपाद्यते। तथाहि—सिद्धसामर्थ्यस्य दृष्टसाध्यमात्रविषयत्वात्, दृष्टार्थानामेवाङ्गानां विनियोजकं लिङ्गम्। सन्निपातिष्वपि नादृष्टार्थेषु, एवमारादुपकारकेषु क्वापि न लिंगम् विनियो-जकमिति निष्कर्षः।

आद्यस्य बर्हिर्लवनमन्त्र उदाहरणम्। द्वितीयन्तु अर्थज्ञानस्य कर्मानुष्ठा-नाङ्गत्वमिति। अत एव मित्रमिश्रेणोक्तं लिङ्गादेवाङ्गत्वं ज्ञानस्येति। मन्त्राधिकरणन्तु दृष्टार्थमन्त्रानधिकृत्यैव प्रावर्तिष्ट। वेदभाष्यकृता शङ्कासमाधानाभ्यामयमर्थः प्रत्यपादि।

च

ननु मन्त्रस्यानुष्ठेयार्थस्मारकत्वम् क्वचिदनुपपन्नम् अदृष्टार्थेषु नायं दोषः। मन्त्राधिकरणस्य लिङ्गविनियोगविषयत्वात्, नादृष्टार्थेषु। 'दिवो वा विष्णावि'त्यादिस्तु मन्त्रः श्रुत्या विनियुज्यत इति लिङ्गविनियोगाविषयत्वात्–(तै. सं. भा. भू. इति। पृ. २१) इति मन्त्राणां मुख्य एवार्थे विनियोगः, न गौणे इत्ययमर्थः लिङ्गाधिकरणे मी. द. ३–२–१ व्यवस्थापितः।

## वाक्यनिरूपणम्।

समभिव्याहारो वाक्यम्। अत्र वाक्यमिति लक्ष्यनिर्देशः, समभिव्याहार इति लक्षणम्। समभिव्याहारो नाम सहोच्चारणम्। कयोरित्याकाङ्क्षायामङ्गाङ्गिवाचकपदयोरव्यवधानेनोच्चारणं वाक्यमिति फलति। उदाहरणम्—'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति'। तै. सं. ३–५–७–२ इति। अस्यायमर्थः—यस्य यजमानस्य जुहूः—होमसाधनीभूतः पात्रविशेषः पलाशवृक्षनिर्मितो भवति, स यजमानः पापम् श्लोकम्—अपकीर्तिं न शृणोतीति। अत्राङ्गिवाचकं जुहूपदम्। अङ्गवाचकं पर्णतापदम्। अत्र साध्यत्वसाधनत्वादिवाचकद्वितीयादेरभावेऽपि, अङ्गाङ्गिवाचकपदयोस्समभिव्याहारमात्रादेव पर्णताया जुह्वङ्गत्वमिति।

अत्र समभिव्याहारो वाक्यमित्येतावन्मात्रोक्तौ 'व्रीहीन् प्रोक्षती'ति श्रुतिस्थलेऽपि वाक्यलक्षणस्य सत्त्वात् तत्रातिव्याप्तिस्स्यात्, अतस्तद्वारणाय साध्यत्वादिवाचकद्वितीयादिविभक्तिशून्यत्वे सत्यङ्गाङ्गिवाचकपदयोस्सहोच्चारणं वाक्यमिति बोध्यम्।

## उदाहरणान्तरप्रदर्शनम्।

तस्योदाहरणान्तरम्, यथा—'देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्याम्' पूष्णो हस्ताभ्याम्, अग्नये त्वा जुष्टं निर्वपामी'ति। अत्र अग्नि-जुष्ट-निर्वापादिपदार्थानां दर्शपूर्णमासयागे सम्भवात् पदत्रयमेव समवेतार्थाभिधायि, तावन्मात्रस्याग्न्यादिविशिष्टे निर्वापे लिङ्गाद्विनियोगः, देवसवित्रादिपदार्थानामेतत्पदैकवाक्यतया निर्वापे विनियोग इति बोध्यम्। अत एवोक्तम् ग्रन्थकृता मन्त्रेष्वपि यानि समवेतार्थाभिधायिव्यतिरिक्तानि सवित्रादिपदानि, तेषां वाक्येनैव निर्वापादिषु विनियोगः,' (न्या. र. मा. पृ. १५४) इति।

## प्रकरणनिरूपणम्।

उभयाकांक्षा प्रकरणमिति लक्षणवाक्यम्। अत्र प्रकरणमिति लक्ष्यनिर्देशः, उभयाकांक्षेति लक्षणमिति विवेकः। लक्षणवाक्यस्यायमर्थः–अंगानाम्, प्रधानस्य, प्रधानानां वाऽऽकांक्षा। अर्थात् 'दर्शपूर्णमासाभ्यां स्वर्गकामः यजेते'ति यागस्य साधनत्वेन फले विधानम्। यागेन फलं कथं कर्तव्यमिति साधनस्येतिकर्तव्यताकांक्षाऽस्ति। इतिकर्तव्यता च साध्यसव्यपेक्षा। तथा चांऽगानि भाव्यापरपर्यायं प्रधानोपकारमपेक्षन्ते, अंगवाक्ये फलस्य अनिर्देशात्। प्रधानञ्चोपकारकमपेक्षते। एवञ्चांगप्रधानगतपरस्पराकांक्षा फलाकांक्षाविशिष्टकथंभावाकांक्षेत्यर्थः। वैशिष्ट्यञ्च स्वाश्रयभावनासन्निहितभावनाश्रितत्वसंबन्धेनेति ज्ञेयम्। प्रयाजादिदर्शपूर्णमासयोराकांक्षावतोः संबन्धः प्रकरणम्। उभयोराकांक्षावत्त्वे सति तत्संबन्धप्रतिपादकमेकम् वाक्यम्–प्रयाजादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्याकारकं परिकल्प्यते। यथोक्तमक्ताधिकरणवार्तिके—

'स्वार्थबोधे समाप्तानामंगांगित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते' ॥ ( तं. वा. पृ. ३६६ ) इति।

वाक्यादभिधानसामर्थ्यं कल्प्यते, अभिधानसामर्थ्यात् विनियोक्त्री श्रुतिः। तया विनियोगः। एवमेव सर्वत्रोत्तरोत्तरप्रमाणैः पूर्वपूर्वप्रमाणकल्पनाद्वारेणैव विनियोगः, बलाबलाधिकरणसिद्धान्तात्।

### अस्य वार्तिकस्य शंकरभट्टीयं व्याख्यानम्।

मीमांसाबालप्रकाशे त्वक्ताधिकरणवार्तिकं प्रयोगविधिनिरूपणपरतया व्याख्यातम्। अस्यायमभिप्रायः। तथाहि—प्रवर्तनैकरसोविधिरुत्पत्यादिभेदेन चतुर्विध इति १९३–१९४ पृष्ठयोर्विवरिष्यते, तत्रोत्पत्ति-विनियोगाधिकारविधीनां प्रत्यक्षेणोपलम्भात् ते क्लृप्ताः। प्रयोगविधिस्तु कल्प्य एव, न तु क्लृप्तः। अत एव श्रीकृष्णयज्वाऽभिदधे-प्रयोगविधिरश्रौत इति। एवञ्च प्रयोगविधिरूपं महावाक्यं नित्यानुमेयमेवेति। तथा च बालप्रकाशसन्दर्भः—'कल्पितांगवाक्यैकवाक्यताको हि प्रधानविधिरेव प्रयोगविधिरि'ति ( मी. बा. प्र. पृ. ९ )।

### तस्य द्वेधा विभागः।

तच्च द्विविधम्—महाप्रकरणावान्तरप्रकरणभेदेन। तयोर्विषयविवेचनम्—अवान्तरप्रकरणमंगीकर्तव्यं, न वा तदभ्युपगमानभ्युपगमयोर्दूषण—भूषण व्यवस्था, तदनंगीकर्तृप्राभाकरमते निवीताधिकरणादीनामनुपपत्तिश्चेत्यादिकं मूले, टिप्पण्याञ्च ( न्या. र. मा. पृ. १५८ तः १७२ ) पर्यन्ते च विवेचितमिति नेह प्रतन्यते।

### स्थाननिरूपणम्।

अत्रेदमवधेयम्—स्थानं नाम विनियोगे पञ्चमं प्रमाणम् स्थानम् क्रमश्चेत्यनर्थान्तरम्। देशसामान्यं स्थानमिति लक्षणवाक्यम्। अत्र स्थानमिति लक्ष्यनिर्देशः, देशसामान्यं लक्षणम्। देशसामान्यम्—समानदेशत्वम्। समानदेशपठितत्वमित्यर्थः। अत्र 'सूत्रे क्रमश्च देशसामान्यादि'ति क्रम-देशसामान्ययोर्भिन्नविभक्तिनिर्देशात् भिन्नार्थत्वमिति भ्रान्तिर्भवतीत्यभिप्रेत्य शास्त्रदीपिकाकृताऽभिहितम्—यत् 'क्रम इति च देशसामान्यमुच्यते' इति।

तस्यायमाशयः—क्रमश्च विनियोगे प्रमाणम्, देशसामान्यरूपत्वात्। तस्मादाकांक्षादिक्रमेण विनियोगसंभवादिति सूत्रार्थः। अतो भिन्नविभक्तिनिर्देशेऽपि नार्थभेद इति बोध्यम्।

### स्थानस्य द्वैविध्यम्।

तत् द्विविधम्—पाठसादेश्यम्, अनुष्ठानसादेश्यञ्चेति। तत्राप्याद्यम् द्विविधम्—यथासंख्यपाठः, सन्निधिपाठश्चेति। तत्राद्यस्योदाहरणम्—काम्येष्टिकाण्डे प्रथममिन्द्राग्निदेवत्यं काम्येष्टिद्वयमाम्नाय, ततो वैश्वानरदेवत्यं काम्येष्टिद्वयमित्येवं प्रकारेण काम्येष्टयः पठिताः। काम्ययाज्यानुवाक्याकाण्डे प्रथममिन्द्राग्निदेवत्यं याज्यानुवाक्यायुगलं पठित्वा, ततो वैश्वानरदेवत्यमित्येवं क्रमेण याज्यानुवाक्यामन्त्रास्समाम्नातास्सन्ति, काम्या याज्या इति याज्ञिकमीमांसकानां समाख्याबलादिष्टिकाण्डस्य, याज्यानु-

वाक्यमन्त्रकाण्डस्य च समाख्यया सामान्यसंबन्धेऽवगते, यथासंख्यपाठात् प्रथमाया इष्टेः प्रथमं याज्यानुवाक्यायुगलमंगं भवति, द्वितीयाया इष्टे द्वितीयं याज्यानुवाक्यायुगलमंगमित्येवंरूपो विशेषसंबन्धोऽवगम्यते। तत्र लिंग-क्रमाभ्यां निर्णयः- इति, भाष्यवार्तिकशास्त्रदीपिकादिष्वक्षुण्णोऽयं पन्थाः।

इदञ्च मैत्रायणीयसंहितानुसारेण। तथाहि—मैत्रायणीयसंहितायाम् द्वितीयकाण्डे प्रथमप्रपाठके प्रथमेऽनुवाके ऐन्द्राग्नमेकादशकपालं निर्वपेत्, यस्य सजाता वीयुः मै. सं. २–१–११ इत्यैन्द्राग्नेष्टिं विधाय, तत्रैव द्वितीयेऽनुवाके वैश्वानरं द्वादशकपालं निर्वपेत्, कामाय ( मै. सं. २–१–२ ) इति वैश्वानरेष्टिर्विधीयते, एवं चतुर्थकाण्डे एकादशप्रपाठके इन्द्राग्नी रोचना दिवः (४–११–१) मन्त्रानाम्नाय, वैश्वानरो न ऊत्या ४-११-१५ इत्यादिवैश्वानरादिमन्त्राणां पाठात्।

## तैत्तिरीयसंहितायां विशेषः।

तैत्तिरीयशाखानुसारेणायम्—ऐन्द्राग्नेष्टयस्तु फलभेदेन ऐन्द्राग्नमेकादशकपालं निर्वपेदि. ( तै. सं. का. प्र. २. अनु १ ) त्यादिना षडाम्नाताः। मन्त्रकाण्डे 'उभा वामिन्द्राग्नी. ( तै. सं. १–१–१४ ) ति इन्द्राग्निलिंगकाश्चत्वारो मन्त्रास्समाम्नाताः। एवं वैश्वानरदैवत्यं काम्येष्टिद्वयम्, वैश्वानरदेवत्यं याज्यानुवाक्यायुगलमित्येवं क्रमेण याज्यानुवाक्यामन्त्रास्समाम्नाताः। काम्येष्टिकाण्डम्, काम्येष्टियाज्यानुवाक्याकाण्डमिति याज्ञिकानाम् समाख्यया इष्टिकाण्डस्य याज्यानुवाक्यामन्त्रकाण्डस्य च परस्परं सामान्यसंबन्धेऽवगते, प्रथमाया इष्टेः प्रथमं याज्यानुवाक्यायुगलमंगम्, द्वितीयाया द्वितीयमित्येवंरूपो विशेषसंबन्धो यथासंख्यपाठरूपात् स्थानादवगम्यते, तत्र नियामकं—लिंगादीति 'लिंग क्रम समाख्यानात् काम्ययुक्तम् समाम्नानमि' ( मी. द. ३–३–७ ) त्यत्र स्थितम्।

## क्रमसमाख्ययोरादरः।

अत्रेदमवधेयम् —अत्र क्रमसमाख्ययोरादरोऽवश्यं कर्तव्यः, अन्यथाऽतिप्रसंगस्स्यात्। तथाहि—अत्र क्रममात्रविवक्षणे आग्नेयेष्टिक्रमे समाम्नातानां मन्त्राणां तदिष्टान्वयमात्रेण क्रम उपपद्यते, तदिष्टौ सामिधेनीष्वेवान्वयस्स्यात्, प्रथमातिक्रमणे कारणाभावात्। यदि समाख्यामात्रं गृह्यते, तर्हि यत्रैकदेवताका नाना इष्टयः, मन्त्राश्च नाना सन्ति तत्र व्युत्क्रमेणाप्यन्वयस्स्यात्, अतस्तद्वारणायोभयसमादर इति बोध्यम्। एतत्संभवन्मन्त्रविषयम्। असंभवतान्तु मन्त्राणां तास्वेव सामिधेन्यादौ क्रमसहितेन लिंगेन विनियोग इति।

यथा—सौमारौद्रेष्टिक्रमे आम्नातानां मानवीनामृचाम्। प्रधानदेवताप्रकाशकत्वाभावात्। क्वचित् प्रधानदेवताप्रकाशनसामर्थ्येपि बहुत्वादसंभवः।

यथा—'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेदि'त्येतदिष्टिक्रमे समाम्नातानां 'कृणुष्व पाज' इत्यादीनामिति अलमनल्पाक्षरक्षरणेन।

अत्र ग्रन्थकृता क्रमलक्षणमभिधाय, तस्य पाठानुष्ठानसादेश्यभेदेन द्वैविध्यं प्रादर्शि, पाठसादेश्यं सन्निधेरुपलक्षणमिति न दोषः। न्यायरत्नमालाकारोऽयं यत्रांगांगि-

नोस्समानदेशे पाठः। यथा–दधिमन्त्रस्य, उपांशुयाजस्य चेत्यादि (र-मा-पृ. १७२) ति। वदन्निदमेवोदाहरणमित्यभिप्रेयाय, तथाहि–दर्शपूर्णमासयोर्याजमाने मन्त्रकाण्डे कश्चिन्मन्त्रस्समाम्नायते 'दधिरस्यदब्धो भूयासममुंदभेयमि. ('तै. सं. १–६–२) ति। अस्य मन्त्रस्य ब्राह्मणे विनियोगमनाम्नाय, अर्थविवरणमेव कृतं दृश्यते, अतोऽस्य मन्त्रस्योपांशुयाजागतायां न श्रुतिः, वाक्यं वा विद्यते, इति पूर्वपक्षयित्वा, सिद्धान्तः कृतः—आध्वर्यवे काण्डे आग्नेयोपांशुयाजाग्नोषीययागास्त्रयः क्रमेण विहिताः। याजमाने काण्डे तद्विषयास्त्रयो मन्त्राः क्रमेणाऽऽम्नाताः, तेषूपरि निर्दिष्टो मन्त्रः आग्नेयाग्नीषोमीयमन्त्रयोर्मध्ये पठितः। तस्माद्यथासंख्यपाठेन मध्यवर्तिन उपांशुयाजस्य मध्यवर्ती मन्त्रोंऽगमिति, पार्थसारथिमिश्रो न्यायरत्नमालायां प्रतिपादयांबभूव। इदमेवानुसरन्नधिकरणमालाकारः क्रमाधिकरणे ( मी. द. ३–३ ) सिद्धान्तं न्यरूरुपत्।

### अत्र कर्कोपाध्यायमतम्।

कात्यायनश्रौतसूत्रभाष्यकारः कर्कोपाध्यायः 'तदंगमितरत् समभिव्याहारप्रकरणाभ्यामि (का. श्रौ. सू. अ. १-कं-सू. ३) ति सूत्रव्याख्यानप्रसंगे यच्चेत्यादिना .. विनियोगः इत्यन्तेन पितृभूत्याचार्यमतमनूद्य, तन्नातीव शोभत इत्यादिना सन्दूष्य स्वमतमुपचिक्षेप—यदत्र प्रकरणेन विनियोगः, तद्यदि विशेषे व्यवस्थाप्येत क्रमेण, प्रकरणं बाधितं स्यात्' ( क. भा. पृ. १२ ) इति।

### तत्परीक्षणञ्च।

अत्र वयं ब्रूमः- दुर्बलस्यापि प्रमाणस्य प्रबलप्रमाणलिंगाश्रितत्वेन दर्शपूर्णमासप्रकरणे पठितस्य पूषानुमन्त्रणमन्त्रस्य प्रकरणेन न विनियोगः, अपि तु समाख्याया लिंगाश्रितत्वेन विकृतौ विनियोग इति।

प्रकृतेऽपि प्रकरणात् दुर्बलस्यापि क्रमस्य प्रबललिंगाश्रितत्वेन प्रकरणस्य बाधात्।

'अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः' ॥ इति।

एवञ्चोपाध्यायमतं चिकित्सितमिति वेदितव्यम्।

### सन्निधिनिरूपणम्।

सन्निधेरुदाहरणम्—शुन्धध्वं दैव्याय कर्मणे ( तै. सं. १–१–२ ) इत्ययं मन्त्रः पौरोडाशिकमिति याज्ञिकैस्समाख्याते काण्डे पठितः। समाख्यायौगिकः शब्दः, योगश्च शास्त्रसिद्धः। पुरोडाशस्येमे पौरोडाशाः, तेषां व्याख्यानं ( प्रतिपादकं काण्डं ) पौरोडाशिकम्। 'तस्य व्याख्या न इति व्याख्यातव्यनाम्नः' (पा. ४-३-२६ सू.)। एवञ्चात्र प्रकृतिः पुरोडाशमभिधत्ते, तद्धितप्रत्ययश्च काण्डम्। तेन पुरोडाशपात्राणां न मन्त्रसन्निधिः प्रत्यक्षः, अर्थापत्त्या कल्पनीयः। सान्नाय्यपात्राणां कुम्भी–शाखा–पवित्रादीनां शोधने मन्त्रसन्निधिस्तु प्रत्यक्षः। इध्माबर्हिस्संपादनस्य हविर्निर्वापस्य चान्तरालदेशस्सान्नाय्यपात्राणामुक्तः। मन्त्रश्चायमिध्माबर्हिर्निवापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते, अतस्सन्निधिना सान्नाय्यपात्रशोधने मन्त्रस्य विनियोग इति।

### अत्र मयूखमालिकाकारस्य मतम् ।

शास्त्रदीपिकाव्याख्याता निट्टिलकुलतिलकस्सर्वतोमुखसोमयाजी सोमनाथदीक्षितः कथयति—यन्नेदं सन्निधेरुदाहरणं भवितुमर्हति—इति । तस्यायमाशयः । तथाहि–नहि शुन्धध्वमिति मन्त्रः सान्नाय्यपात्रशुन्धनविधिसन्निधावाम्नातः । यतः पात्राणामासदनोत्तरकाले प्रोक्षणं (शुन्धनं) मन्त्रस्य शुन्धनप्रकाशनसामर्थ्यात् शोधनीयपात्रप्रकाशकस्यापि सान्नाय्यपात्रशोधनांगत्वं वक्तव्यम् । तन्न संभवति, तद्विधिसन्निधौ पाठाभावात् ।

किञ्च तैत्तिरीयब्राह्मणेऽस्य मन्त्रस्य पौरोडाशिकपात्रप्रोक्षणे विनियोगस्समाम्नायते, प्रजापतिर्यज्ञमसृजत, तस्योखे अस्रंसेतां (तै. ब्रा. सं. ३-२-३) मित्यादिना । अतएव कौस्तुभकृताऽभ्यधायि क्वचित्सन्निधेः क्रमस्यापूर्वसाधनतालक्षणतात्पर्यग्राहकत्वेऽपि नांगत्वे प्रामाण्यम् । प्रकृते तु वाचनिकांगसन्दंशेनैवापूर्वसाधनतालक्षणाग्राहकत्वेन, तदपि नास्तीति बहुपराक्रान्तम् । तथा च सन्निधिना शुन्धनमन्त्रस्य सान्नाय्यपात्रप्रोक्षणांगत्वकथनमयुक्तमिति । अतएव सोमनाथीये शाखान्तराभिप्रायेण वेदं बोध्यम् । (शा. दी. पृ. २४०) इति प्रतिपादितम् । सोमनाथीयस्यैव वाक्यसन्दर्भस्य प्रभावल्याम ( पृ. २४–२५ ) क्षरशोऽनुवादः कृत इति बोध्यम् ।

### सन्निधेर्विकृतिविषयत्वव्यवस्थापनम् ।

अतस्सन्निधिलक्षणः क्रमो विकृतिविषय इति वक्तव्यमापतति, अन्यतराकांक्षया तत्र संबन्धो भवति । तथाहि—विकृतिसन्निधौ यदपूर्वमंगं पठ्यते, तत्र फलस्याश्रवणात् तदंगं फलमाकांक्षति, अस्यानर्थक्यं माभूदिति तत्प्रत्याकांक्षा कल्पते, सोऽयमन्यतराकांक्षालक्षणः क्रमः । उदाहरणम् । यथा सांग्रहणीष्टिसन्निधावाम्नाता आमनहोमाः । अतएव न्यायप्रकाशादौ यथासंख्यपाठक्रमं निरूप्य, सन्निधिपाठक्रमस्य आमनहोमा उदाहृताः, तथाहि - यानि तु वैकृतान्यंगानि प्राकृतांगाननुवादेन विहितानि संदंशापतितानि, तेषां विकृत्यर्थत्वं सन्निधिपाठात् । तेषां कैमर्थ्याकांक्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन संबध्यते, उपस्थितत्वात्, अतएव तेषु न विश्वजिन्न्यायावतारः, स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेः' ( न्या. प्र. पृ. ८४ ) इति । तस्मादामनहोमानां विकृत्यर्थत्वं सन्निधिपाठादिति ज्ञेयम् ।

### आमनहोमविषये शास्त्रदीपिका-न्यायरत्नमाला-तन्त्ररत्नग्रन्थ-सन्दर्भाणां सामञ्जस्यवर्णनम् ।

अत्रेदमवधेयम्—पार्थसारथिमिश्रेण न्यायरत्नमाला-शास्त्रदीपिका-तन्त्ररत्नादिग्रन्थेषु प्राकृतांगप्रयाजानुयाजमध्ये आमनहोमानां विधानमिति प्रतिपादितं दरीदृश्यते, विकृतिष्वपि यत् प्राकृतांगमध्ये पठितम् । यथा—आमनहोमः । तस्य प्रकरणेन ग्रहणम् ( न्या. र. मा. १६४ ) ति । अनेन ग्रन्थसन्दर्भेणामामनहोमानां प्राकृतांगमध्य एव पाठ उक्तः ।

एवम्—प्रयुक्तिलक्षणे चतुर्थचतुर्थाधिकरणे प्राकृतांगमध्ये विहितत्वेन प्रकरणसंस्पर्शस्यापि संभवादि ( शा. दी. पृ. ३९६ ) ति शास्त्रदीपिकासन्दर्भेणोपर्युक्त एवार्थः प्रतिपादितः ।

एवम्—तन्त्ररत्नेऽपि प्राकृतास्तावदाकांक्षयैव गृह्यन्ते। तयोर्द्वयोः परामृश्यमानयोर्मध्ये पतितमपूर्वमप्यंगमाकांक्षायामव्यावृत्तायां विधीयमानमाकांक्षापरनामधेयप्रकरणेन गृह्यते। यथा—'यत्प्रयाजानां पुरस्तात् जुहुयात्, बहिरात्मानं सजातानां दध्यात्, यदनुयाजानां परस्तात्, स्वर्गम् लोकमपक्रामेत्, मध्ये जुहोति, मध्यत एव सजातानामात्मन् धत्ते (मै. सं. २-३-२) इति। त्रयाणां ग्रन्थानां परामर्शेनामनहोमाः प्रकरणेन गृह्यन्त इति प्रतीयते। परं विचार्यमाणे प्रकरणग्राह्यत्वस्यापि संभवादिति शास्त्रदीपिकायामेवकारेणऽस्य सूचनात्। आमनहोमानां सन्निधिग्राह्यत्वमेव युक्तमिति प्रतीयते। एवं सति बलाबलाधिकरणगतराणकग्रन्थोऽपि आमनहोमानाम् सान्निधिविषयत्वप्रतिपादनपरः संगच्छते, अतस्तन्त्ररत्नाद्युक्तिमात्रमाश्रित्य न्यायप्रकाशग्रन्थः 'यत्तु विकृतौ ...... तदपि प्रकरणेन विनियुज्यते। इति व्याख्यातव्यः। एवं न्यायरत्नमालासन्दर्भेऽपि योजनीय इति।

तथा चायमत्र निष्कर्षः—'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः (तै. सं. २. ३. ९. २) इति वाक्यविहितायास्सांग्रहणीष्टेः सन्निधौ विहितानां 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' (तै. सं. २-३-९-४) इत्यामनहोमानां सान्निधिग्राह्यत्वमेव पार्थसारथिमिश्रस्याभिमतम्, युक्तियुक्तञ्चेति, वयं प्रतीमः।

### यथासंख्यपाठरूपक्रमस्योदाहरणविषये दीक्षितेन्द्राणां मतम्।

अध्वरमांसकाः मन्त्रकाण्डस्यैव काम्ययाज्यानुवाक्याकाण्डमिति समाख्यया याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमम्, द्वितीयस्य द्वितीयमित्येवं यो विनियोगः, स यथासंख्यपाठादिति मन्यन्ते, परन्तु परिमलकाराः तृतीय तृतीय चतुर्दशेऽधिकरणे न्यायसंग्रहोक्तमाश्रित्य प्रकारान्तरम् वर्णयन्ति। तथाहि—प्रदेशद्वयसमाम्नातयोस्संबन्धनिमित्तं संज्ञैक्यम् समाख्येति मीमांसकोक्तप्रकारं प्रहाय प्रकारान्तरमुपापादि उदाहारि च अतिमुक्तिहोमानाम्, अग्निर्यज्ञं नयतु प्रजानन् (तै० सं०) मन्त्राणाञ्च संबन्धनिमित्तमाध्वर्यवमिति समाख्या, तथा प्रकृतेऽपीष्टि—मन्त्रकाण्डयोः काम्येष्टिकाण्डमित्येवमादिरूपैका संज्ञाऽस्तीति। एवञ्च काम्येष्टिकाण्डस्य याज्यानुवाक्याकाण्डस्य समाख्यायास्संज्ञाया एकत्वात् सामान्यसंबन्धः सिद्ध्यति—एतासामिष्टीनामेते याज्यानुवाक्यामन्त्रा इति विशेषसंबन्धः प्रथमाया इष्टेः प्रथमं याज्यानुवाक्यायुगलम्, द्वितीयाया द्वितीयमित्येवंरूपः सन्निधिवशात्। तथा चायं संपिण्डितोऽर्थः—मीमांसकमते मन्त्रकाण्डस्यैव याज्यानुवाक्याकाण्डमिति संज्ञया (समाख्यया) संबन्धः—इति मखीन्द्राणां मते तु इष्टीनाम्, मन्त्राणाञ्च संबन्धो यो मीमांसकेनोक्तः इष्टिकाण्डस्य च संज्ञैक्यमिति विशेषो बोध्यः।

### शिवादित्यमणिदीपिकायां दीक्षितेन्द्रैः प्रतिपादितस्य प्रकारस्य कथनम्।

मीमांसकमूर्धन्या दीक्षितेन्द्रास्तु शिवार्कमणिदीपिकायां स्थानं सावान्तरभेदं भंग्यन्तरेणोपपादयन्ति। तथाहि—स्थानं द्विविधम्—यथासंख्यम् सन्निधिश्चेति। तत्राद्यस्योदाहरणं दब्धिमन्त्रः। तस्याग्नीषोमीयमन्त्रद्वयमध्ये समाम्नातस्याग्नेयाग्नीषोमीयद्वयमध्येऽनुष्ठेयोपांशुयाजशेषता। इदञ्च न्यायरत्नमालानुसारेणैव। परं सन्निधौ विशेषः-

आम्नानसन्निधिः, अनुष्ठानसन्निधिश्चेति सन्निधेद्वैविध्यम्। आद्येन शुन्धमन्त्रस्य महाप्रकरणावान्तरप्रकरणरहितस्य सान्नाय्यपात्रप्रोक्षणशेषता, इदञ्च यथाश्रुतशास्त्रदीपिकानुसारेण। द्वितीयेन पशुधर्माणामग्नीषोमीयपशुशेषतेति प्रतिपादयांबभूवुः—इति।

### समाख्यानिरूपणम्

समाख्या यौगिकशब्दः। तेनास्याः लिंगात् भेदः सूचितः। सा च द्विविधा वैदिकी लौकिकी चेति। तत्र होतृचमस इति वैदिक्या समाख्यया होतुश्चमसभक्षणांगत्वम्। आध्वर्यवमिति लौकिक्या समाख्ययाऽध्वर्योः तत्तत्पदार्थांगत्वमिति स्थितिः।

अत्रेदं बोध्यम्। तथाहि—'तस्य व्याख्यान इति व्याख्यातव्यस्य नाम्नः' ( पा० सू० ४-३-३६ ) इति पाणिनीयं स्मरणम्। तेनाध्वर्योरिमे आध्वर्यवास्तेषां व्याख्यानमित्यर्थे अण्प्रत्ययो विहितः। 'अध्वर्युं वृणीते' इति विधिनाऽध्वर्योर्वरणाख्यस्संस्कारो विहितः, तेन संस्कृतस्याध्वर्योः प्रयोजनाकांक्षा जायते समाख्यावगतसंबन्धेन शाखाच्छेदनादिपदार्थोपस्थितिर्जायते। पदार्थानाञ्च कर्त्रपेक्षायां तेनैव संबन्धेनाध्वर्योरुपस्थितेः। मिथ उपस्थितानां तेषां परस्परसंबन्धस्य योग्यतावशात् क्रियाकर्तृभावलक्षणतया सिद्धस्य प्रयोगविधिना ग्रहणमुपपद्यते। अत अध्वर्य्योस्तत्तत्पदार्थांगत्वं सिद्ध्यति। अनुष्ठानस्य प्रवाहानादितया प्रत्यक्षेणैव क्रियाकारकभावसंबन्धमवगत्य प्रयोगोपपत्तौ पश्चात् न्यायविदामन्यमूलसंभवे समाख्यात एव तत्प्रतीतिकल्पनं संगच्छते, अत एव यत्र यौगिकपद–तदवयवाभ्यां शेषशेषिभावेनान्वययोग्यपदार्थोपस्थितिः, नतु द्वितीयातृतीयादाविव शेषशेषित्वान्यतरस्य, अतस्तत्र होतृचमसाध्वर्यवपदरूपसमाख्या षष्ठं प्रमाणमिति मीमांसका मन्यन्ते, समाख्याचानादिः, संकेतयितुरस्मरणात्।

तथा च वार्तिकम्—

'लौकिकं वैदिकं वापि प्रमाणं दोषवर्जितम्।
सर्वमाश्रीयते स्वार्थे न चास्मिन् दोषसंभवः'॥ इति॥

अतो गवादिशब्दानां शक्तिग्रह इव, अत्रापि संभवेन नान्योन्याश्रयत्वापत्तिः। एतेन प्रभावल्यामन्योन्याश्रयत्वापादनमभित्तिचित्रायते।

### अत्राचार्यखण्डदेवमतम्।

खण्डदेवाचार्यस्तु—क्लृप्तावयशक्तिकं पदं द्विविधं प्रकृतविधौ वाक्यार्थान्वय्यर्थकम्, तद्भिन्नञ्च। आद्यं निर्मन्थ्यादिपदम्। द्वितीयन्तु आध्वर्यवमधीयते, प्रैतु होतृचमस इत्यादौ। अत्र चैकवाक्यतासंपादकपदमात्रम् कल्प्यते—यमध्वर्युं वृणीते, सोऽग्नीनन्वादधातीति। तच्चान्वादधातीत्यादिविधेः, अध्वर्युं वृणीते इति विधेश्च कथञ्चिदस्त्येकबुद्धिविषयता, अतः पदमात्रकल्पनमिति प्रतिपादयांबभूव।

### तस्य समीक्षा

अत्र वयं ब्रूमः—इदञ्चापातरमणीयमिति। यतो हि अंगवाक्यानाम् बहुत्वात् तत्तद्वाक्यैकवाक्यतासंपादकानां तत्तच्छब्दानां कल्पनापत्तेर्महत् गौरवं स्यात्। धर्मिग्राहकप्रमाणेन काण्ड एव स्वतन्त्राध्वर्युकर्तृकत्वविनियोगविध्येकवाक्यताकल्पनमेव

युक्तम्, न हि तत्तदंगविध्येकवाक्यताकल्पनम्, गौरवात्। अतः प्राचीनमतमेव साधीय इति तत्त्वम्।

**समाख्या यौगिकश्शब्द इति यथाश्रुतमीमांसकप्रसिद्धिमनुरुद्ध्य वदतां मतानुवादः।**

दीक्षितेन्द्रैश्शिखरिणीमालायाः—

'त्वदन्यं कं ब्रूमः परमशिव सर्वेश्वर इति,
त्वमीशानादीनां ननु भवसि वाच्यश्रुतिगिराम्।
समाख्यानन्त्वेताश्श्रुतय इति मोहान्धकुहरे
स्फुरन्मीमांसादृक् प्रपतति न चेतः कृतधियाम्' ॥

इति (श्लो. ४२ पृ. १४५) शिवतत्त्वविवेकव्याख्याने समाख्या यौगिकः शब्द इति मीमांसकश्लोकैकदेशश्रवणमात्रसन्तुष्टैरुक्तम्—यदीशानादिशब्दास्समाख्याः, अत एव 'पतिंविश्वस्यात्मेश्वरमि'त्यादिवाक्येभ्यः दुर्बला इति परमतमनूद्य दूषितम्। तथाहि—श्रुति-लिंगादीनां स्वस्वप्रमेयपरिच्छेदं प्रति सन्निकर्ष-विप्रकर्षविशेषकृतं बलाबलम्। शीघ्रतरेण प्रमाणेन क्वचिदर्थे परिच्छिन्ने पुनः परिच्छेदान्तरं नोपपद्यत इति श्रुतिलिंगाधिकरणे मीमांसकानां मर्यादा। तथा च प्रकृते ईशानादिशब्दाश्च प्रयुज्यमानास्तद्गतैश्वर्यप्रतिपादने सन्निकृष्टाः, पदान्तरनिरपेक्षत्वात्। 'पतिंविश्वस्यात्मेश्वरमि'त्यादयस्तु नारायणादिदेवताविशेषगतैश्वर्यप्रतिपादने पदान्तरसमभिव्याहारसापेक्षतया विप्रकृष्टा इति व्यवस्थिते बलाबले कथंकारं परिभाषामात्रेण वैपरीत्यमापतेत्।

किञ्च समाख्या यौगिकः शब्द इति वदतामपि मीमांसकानाम् अयमभिप्रायः—यत्र यौगिके पदे प्रकृति-प्रत्ययाभ्यां तदवयवाभ्यां शेषशेषिभावेन पदार्थयोरुपस्थितिर्भवति, तत्रैव होतृचमसपौरोडाशिकापदरूपे शेषशेषिभावे समाख्यारूपं षष्ठं प्रमाणमित्यभ्युपगमः, नतु यत्र यौगिकपदे योऽर्थः प्रकृत्यादिवाच्यः, तत्रापि समाख्येति। मीमांसकानाम् तद्धितान्तेषु यौगिकत्वमुररीकुर्वाणानामाग्नेयादिषु तद्धितान्तेषु श्रुतित्वव्यवहारस्येष्टत्वात्। प्रकृते चेशानादिपदेषु शिवैश्वर्यस्य प्रकृत्यंशवाच्यत्वेऽपि न किञ्चिद्धीयते। अतो मीमांसकमतमर्यादयाऽपि न समाख्यात्वशंकावकाशः।

**तत्र शारीरकन्यायसंग्रहानुसारेण समाख्यास्वरूपवर्णनम्।**

विवरणाचार्यैः प्रकाशात्मयतिभिश्शारीरकन्यायसंग्रहे समा चासावाख्या चेति व्युत्पत्त्याऽन्यत्र प्रतिपन्नसंबन्धनिमित्तसंज्ञासाम्यं समाख्या। अर्थात् प्रदेशद्वयाम्नातयोस्संबन्धनिमित्तं संज्ञासाम्यं समाख्येति स्वरूपम् सिद्ध्यति। यथाऽतिमुक्तिहोमानाम्, 'अग्निर्नयतु प्रजानन्' इत्यादिमन्त्राणाञ्च भिन्नप्रदेशाम्नातयोः संबन्धनिमित्तमाध्वर्यवसंज्ञैक्यम्—इति। एवमेव वेदान्तकल्पतरुपरिमलेऽपि वेधाद्यधिकरणे 'न्यायसंग्रहे हीत्याचार्याणामभिप्राय इत्यनेन सन्दर्भेण (७८४-७८५) विवेचितम्। शारीरकन्यायसन्दर्भस्त्वधस्तादुद्ध्रियते। तथाहि—तच्च वाक्यस्य सामर्थ्यम्, तच्च क्रमद्वयप्रतिपादकमपेक्षते। संबन्धप्रतिपादने वाक्यान्तरप्रतिपन्नेनाऽर्थेन संबन्धनिमित्तं संज्ञासामान्यं समाख्या। न तेषां श्रुत्यादीनाम् प्रत्यक्षादिवत् स्वसत्तयैव प्रामाण्यमिष्यते,

आगमभेदत्वात्। आगमप्रामाण्यस्य तात्पर्याधीनत्वात्। अतः पूर्वस्मादपि प्रमाणादुत्तरं फलसंबन्धवत्तया तात्पर्यवच्चेत्, उत्तरेणाऽपि तात्पर्यवता पूर्वमपि तात्पर्यहीनम् बाध्यत इति तत्र अवगन्तव्यम्। (शा० न्या० सं० पृ० सं० ९-१०) इति।

### प्रभावल्यां दीक्षितेन्द्रमतस्यानुवादः।

कविमण्डनशंभुभट्टो दीक्षितेन्द्रैः परिमले, शिवतत्त्वविवेके च परमतखण्डनायोपपादितस्य विवरणाचार्यैरभिहितस्याऽनुवदति स्म तत्र दूषणमभिधातुम्। तथाहि तत्रत्यो ग्रन्थः-यत्तु शिवतत्त्वविवेके समा चासावाख्या चेति व्युत्पत्त्या अन्यत्र प्रतिपन्नस्याऽन्यत्र प्रतिपन्नेन संबन्धनिमित्तं संज्ञासाम्यम्—समाख्या, यथा—'अग्निर्यज्ञं नयतु प्रजानन्' इत्यादिमन्त्राणाम्, अतिमुक्तिहोमानाञ्च परस्परसंबन्धनिमित्तमाध्वर्यवसंज्ञासाम्यमिति समाख्यास्वरूपान्तरं स्वमतत्वेनोक्तम्, तत् अध्वर्य्वादीनां कर्तृत्वेन विनियोगे अव्यापकत्वादुपेक्ष्यम्। पशुबन्धप्रकरणे 'चतस्रोऽतिमुक्तीर्जुहोती'त्याम्नातानाञ्चतुर्णामतिमुक्तिहोमानां पूर्वोक्तमन्त्रैस्सह संबन्धो न समाख्यातः, किन्तु आपस्तम्बसूत्रोक्त एवेति, तदर्थमीदृशं मीमांसकविरुद्धं तत्स्वरूपम् प्रमाणवदिति ध्येयम्, (प्र. पृ. सं. २८६) इति।

### तत्समीक्षा।

अत्र वयं ब्रूमः—तथाहि—ईश्वरादिशब्देषु शिवैश्वर्यं प्रकृत्यंशस्य वाच्यमेवेति, न तत्रैतन्मतमर्यादयापि समाख्यात्वशंकावकाशः। अस्माकन्तु विवरणाद्युक्तरीत्या समाख्यास्वरूपवर्णने न कथमपि समाख्यात्वचोद्यावकाशः।

अपि च पशुबन्धप्रकरणे 'चतस्रोऽतिमुक्तोर्जुहोती'त्याम्नातानामतिमुक्तिहोमानाम्, मन्त्राणामुपर्युद्धृतवचनेन विनियोगोऽवगम्यत इति, आपस्तम्बसूत्रपर्यन्तमनुधावनं कविमण्डनस्यानर्थकमेव। बौधायनसूत्रमेव विवरणाद्युक्तेर्मूलमिति विदांकुर्वन्तु सन्तः। किञ्च 'न हि युक्तिबलाद्विपरीतलेखनं वस्तुसिद्धौ बाधकमि'ति न्यायेन मीमांसान्यायकान्तारे संञ्चरिष्णूनाम् मीमांसकमूर्धन्यानां मखिवर्याणामुपर्याक्रमणं शिवब्राह्मे तात्पर्यमिति न्यायमनुकरोति।

इति श्रुत्यादीनां विनियोगसमीक्षा समाप्ता।



### तृतीयाध्यायविषयसंक्षेपः

एवं सिद्धे भेदेऽङ्गाङ्गिभावचिन्तनाय तृतीयाध्यायः प्रावर्तिष्ट। ग्रन्थकारश्शास्त्रदीपिकायामाह—एवं सिद्धे भेदे शेषशेषित्वमिदानीं चिन्त्यते—'भिन्नानां हि तत् संभवति, नाऽभिन्नानामिति भेदलक्षणस्य हेतुत्वमि'ति। (पृ. सं. १८२)। तत्रायं विचारो बहुधा प्रवर्तते, तथाहि—कः शेष इति स्वरूपम्, केन हेतुना शेष इति शेषपदप्रवृत्तिनिमित्तम्। कथं विनियुज्यत इति विनियोगप्रकारः। श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि विनियोगे—शेषस्य शेषिणाऽन्वयबोधने, कारणानि—प्रमाणानि, तेषां विरोधे, वाचश्च क्रमवर्तित्वादिति न्यायेन द्वयोर्द्वयोर्विरोधे कीदृशं बलाबलम्, विरोधश्च क्वास्ति, क्व नास्तीति, आध्यायपरिसमाप्ति वर्तिष्यते।

तत्र शेषस्वरूपम्, शेषपदशक्यतावच्छेदकम् (शेषशब्दप्रवृत्तिनिमित्तम्) अंगताबोधकप्रमाणेषु श्रुतिश्चेति प्रथमपादस्य प्रतिपाद्याः। लिंगरूपम् प्रमाणं द्वितीयपादस्य विषयः, तृतीयपादे वाक्य–प्रकरण–स्थान–समाख्यारूपाणि चत्वारि प्रमाणानि, तेषां विरोधे प्रबलाबलविचारपूर्वकम विरोधसदसद्भावविचार उपक्रान्तः। इयमेव विचारसरणिराध्यायसमाप्ति अनुवर्तते, तत्रायं विशेषः–चतुर्थ–पञ्चमयोष्षष्ठस्य पादस्य च षष्ठाधिकरणम् यावत् प्रकरणस्य श्रुति-लिंग-वाक्यैस्सह विरोधाविरोधविचारोऽवसितः। ततस्स्थानस्य प्राचीनैः प्रमाणैस्सह विरोधसदसद्भावविचारः 'तुल्यस्सर्वेषामि'त्यादिना 'रशना च लिंगदर्शनादि' त्यन्तेनाधिकरणचतुष्टयेन। ततः प्रासंगिकः प्रकरणवाक्यविरोधाविरोधविचारः सप्तमपादस्य सप्तमाधिकरणपर्यन्तम्। सप्तमस्याष्टमाधिकरणमारभ्य प्राचीनैः प्रमाणैस्समाख्याया विरोधाविरोधचिन्ताऽवशिष्टेनाऽध्यायेन कृतेति विज्ञेयम्।

## चतुर्थाध्यायस्य विषयः।

तृतीयेनाध्यायेनाऽङ्गाङ्गिभावेऽवधारिते, चतुर्थे किमंगि, कस्यांगस्य प्रयोजकम्, किं वा प्रयोज्यमिति पूर्वोत्तरपक्षाभ्यां निर्धारयितुं चतुर्थः अध्यायः प्रावर्तिष्ट। तत्रेतिकर्तव्यतात्वेन भावनायामन्वितत्वं क्रत्वर्थत्वम्, तद्भिन्नकरण—फलवृत्तित्वं पुरुषार्थत्वमिति क्रत्वर्थपुरुषार्थविचारमुखेन समग्रेऽध्याये प्रयुक्तिरेव विचारिता ग्रन्थकृता। अस्य विस्तरो (न्या. र. मा. पृ. १८०–१८१) टिप्पण्यां द्रष्टव्यः। तत्र ग्रन्थकारस्स्वयमेवाक्षेपमुखेन अमुमर्थं प्रतिपादयामास, तथाहि–'यदि प्रयोजकत्वाप्रयोजकत्वचिन्ताचतुर्थे, कथं तर्हीत्यादिना प्रयोजकत्वाप्रयोजकत्वसिद्ध्यर्थमेव तदि'त्यन्तेन (न्या. र. मा. १७८)। तत्र प्रथमपादे प्रधानस्य प्रयोजकत्वं आमिक्षा—पुरोडाशश्रपण-सोमक्रयादिभिर्बहुभिरुदाहरणैर्विवेचितम्।

## तत्र विशेषः।

शेषलक्षणे भिन्नानां कर्मणां श्रुत्यादिभिष्षड्भिः प्रमाणैश्शेषशेषिभावस्सबलाबलं प्रसंगागतश्चान्यच्च न्यरूपि। एवं सिद्धशेषशेषिभावानाम् कर्मणामनुष्ठापनरूपा प्रयुक्तिश्चतुर्थे निरूपिता। तथाहि–शेष्येव शेषम् स्वसिद्ध्यर्थमनुष्ठापयति, न त्वनुनिष्पाद्यपि, नाऽपि शेषः शेषिणं प्रयुंक्ते। अनेकेषां शेषिणां सत्त्वेऽपि यत्रान्यप्रयुक्तस्यैवान्यत्र विनियोगः, तत्र यत्प्रयुक्तस्यैवान्यत्र विनियोगः, स एव शेषं प्रयुंक्ते, न तु शेष्यपि सन्नन्योऽपि, यथा 'तप्ते पयसि दध्यानयति' इति वाक्यैर्विधीयमानस्य दधिकर्मकानयनस्य द्विकर्मकस्य कर्मान्तराकांक्षायां समभिव्याहृतं पयः कर्मान्तरत्वेनाविधीयमानं सप्तमीविभक्त्याऽधिकरणत्वेन निर्देशात् प्रधानकर्मतया पर्यवस्यतीति, प्रकृतस्य प्रधानभूतस्य पयसः परामर्शिना 'सा वैश्वदेव्यामिक्षे'ति तत्पदेन सामानाधिकरण्येन निर्देशात् पयोरूपत्वेनावगताऽऽमिक्षैव प्रधानम्। सैव स्वशेषभूतं दध्यानयनमनुष्ठापयति, न तु तदनुनिष्पादि वाजिनमपि। अत आमिक्षाया अपचार एव पयोऽन्तरे दध्यानयनस्य प्रयुक्तिः, न तु वाजिनस्यापचारेऽपीति विशेषो बोध्यः।

एवम्—'पुरोडाशकपालेन तुषानुपवपती'त्यत्र पुरोडाशप्रयुक्तस्यैव कपालस्य तुषोपवापं प्रति विनियोगः, कपालेनेति तृतीयाविभक्तिश्रवणात्।

यत्र पुरोडाशो नास्ति, किन्तु 'हस्तेन तुषानुपवपती'ति बह्वृचब्राह्मणोक्त एव पक्षस्समाश्रयणीय इत्यापस्तम्बश्रौत्रसूत्रादिति बोध्यम्। तथाऽप्रधानप्रयोक्तृत्वम्, फलचिन्ता—जघन्यांगचिन्ताचेति सापवादा प्रयुक्तिश्चतुर्थे प्रपञ्चिता।

पञ्चमप्रतिपाद्यनिरूपणम्।

पञ्चमेऽध्याये प्रयोज्यवर्गे निरूपिते किं पूर्वं प्रयुज्यते, किमनन्तरमित्यनुष्ठेयगतस्य पौर्वापर्यरूपस्य क्रमस्य निरूपणं कृतम्। तत्र १ श्रुतिः ( वृत्त्या क्रमपरवचनम् ) २ अर्थः ( प्रयोजनम् ) ३ पाठक्रमः ( विधायकवाक्यानामङ्गीभूतमन्त्राणां वा ) ४ स्थानम् ( क्लृप्तक्रमकपूर्वपदार्थोपस्थितिः ) ५ मुख्यक्रमः ( अङ्गिनां क्रमः ) ६ प्रवृत्तिक्रमश्चेति।

तत्र—क्रमप्रमाणानि निरूपितानि प्रथमे पादे। तत्र द्वितीयपादे पूर्वोक्तप्रमाणगम्यक्रमं स्वीकुर्वन् प्रयोगविधिरनुष्ठेयस्वरूपनिरूपणन्यायोपबृंहणेन, अनुष्ठातृस्वरूपनिरूपणन्यायोपबृंहणेन क्रमेण क्वचित्पदार्थानुसमयेन गृह्णाति, क्वचित्काण्डानुसमयेनेति रीत्या श्रुत्यादिप्रमाणगम्यस्य क्रमस्य विशेषपर्यवसानं व्युत्पाद्यते द्वितीये पादे काण्डम्—पदार्थवर्गः, अनुसमयः—पश्चात्सङ्गतिः इण् गताविति धातुनिष्पन्नत्वादनुसमयपदस्य। अयं भावः—याज्ञिकानामनुष्ठाने प्रकारद्वयमुपलभ्यते। तत्राद्यम्—अनेकेषु प्रधानेषु समानाङ्गसमुदायवत्सु एकस्मिन्प्रधाने सर्वाण्यप्यङ्गान्यनुष्ठाय, पुनस्तथैवान्यस्मिन् तान्यनुष्ठीयन्ते। एवमनुष्ठानं काण्डानुसमय इति याज्ञिकैर्व्यवह्रियते। यथा ब्राह्मणानां पूजने पादप्रक्षालनम्, गन्धादिभिरर्चनम्। दक्षिणादानम्, नमस्कार आशीःप्रार्थनञ्चेति। तथैव विप्रान्तरेऽपि क्रियत इत्यादि। श्रौतोदाहरणन्तु—अश्वप्रतिग्रहेष्टौ वारुणेषु चतुष्कपालेषु पुरोडाशेषु अधिवासदिनादि।

द्वितीयन्तु—क्वचिदेकमेवाऽऽनेकेषु प्रधानेष्वनुष्ठाय पश्चाद्द्वितीयमङ्गम् सर्वेषां प्रधानानां क्रियते। एवमनन्तराण्यङ्गानि। सोऽयं पदार्थानुसमय इति याज्ञिकमीमांसकानां प्रवादः। एतयोः काण्डानुसमय—पदार्थानुसमययोः कः कुत्र इत्ययं विषयः, तदन्तापकर्षः, तदाद्युत्कर्षश्चेत्यादिः द्वितीयपादस्य प्रतिपाद्यः। एवम्—बहूनां पदार्थानां क्रमविशेषश्चिन्तितः। तृतीयपादे त्वभ्यासाश्रितः क्रमश्चिन्त्यते। नानापदार्थाश्रितक्रमापेक्षयाऽऽवृत्तिनिबन्धनक्रमस्य सूक्ष्मत्वाद्विविच्यते। क्वचिद्दण्डकलितवदावृत्तिः, क्वचित्स्वस्थानविवृद्धिश्चेति। एवञ्चैकस्यैव पदार्थस्यावृत्तावपेक्षितायां तत्पौर्यापर्यविचारः तृतीयपादप्रतिपाद्य इति फलति। चतुर्थपादे पुनः क्रमबोधकप्रमाणानां मध्ये विरोधे बलाबलं विचारितम्।

षष्ठाध्यायस्य प्रतिपाद्यनिरूपणम्।

षष्ठेऽधिकारो विवेचितः। यथोक्तं मिश्रैः—

'भेदादिलक्षणैरेवमनुष्ठेये निरूपिते।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते॥

शा. दी. पृ. ४४३।

'निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम्।
तस्यां निरूपितायां तु तदधीनाऽधिकारधीः ॥'
( न्या. र. मा. पृ. ९३ इति च )।

अस्मिन्नध्यायेऽष्टौ पादाः सन्ति तृतीयाध्यायवत् तत्र प्राभाकरीयसङ्गतिं निरस्य, उपजीव्योपजीवकभावरूपा मूले, टिप्पण्याञ्च भाट्टमतावलम्बनेनोपपादितेति नेह प्रतन्यते। अत्राष्टसु पादेषु क्रमेणाधिकारी ( अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्त यजेतेति )। विशेषणम्, शक्तेरधिकारिविशेषणत्वतदभावौ सत्रे फलविचारोऽधिकारः, काम्ये कर्मणि सर्वपदार्थकरणशक्तस्य समर्थस्याधिकारः, नित्ये अशक्तस्यापीति।

'यस्य सर्वाणि हवींषि नश्येयुः, दुष्येयुः, अपहरेयुर्वा, द्रव्यनाशादिना दूषिते तन्निमित्तकप्रायश्चित्तम् आज्येन समापनम् कर्मान्तरविधिनिरासेन गुणमात्रविधानादभ्युदयेष्टौ, कालाद्यपराधनिमित्तकप्रायश्चित्तानि अपच्छेदन्यायस्वरूपमित्यादि। अहीनसत्रयोर्लक्षणम्। दक्षिणादानम्, अग्निविचार इत्यादयो निरूप्यन्ते।

सप्तमप्रतिपाद्यनिरूपणम्।

एवमधिकारचिन्तां परिसमाप्य, औपदेशिकाङ्गसम्बन्धप्रकारः पूर्वषट्केन प्रतिपाद्यते। अनन्तरमातिदेशिकाङ्गसम्बन्धविधा उत्तरस्मिन्। अतिदेशो नाम अन्यसंबन्धिनो ब्राह्मणस्य, पदार्थस्य, उपकारस्य वा तदतिक्रम्याऽन्यत्र देशनम् प्रापणं येन भवति, स उच्यते, इदञ्च लक्षणमुपकारपदार्थ–शास्त्रत्रितयसाधारण्येनेति बोध्यम्। पार्थसारथिमतन्तु टिप्पण्यां पृ. २१२–२१३ द्रष्टव्यम्।

स च त्रिविधः—प्रत्यक्षवचनात्, नामधेयात्, चोदनालिंगानुमितवचनाच्चेति शास्त्रदीपिकाकारः। भाट्टदीपिकाकारस्तु–अतिदेशो द्विविधः-वचनातिदेशः, नामातिदेशश्चेति। तत्राद्यो द्विविधः प्रत्यक्षवचनातिदेशः, अनुमितवचनातिदेशश्चेति, अनुमितिवचनातिदेशस्त्रिविधः, सादृश्यकल्पितवचनातिदेशः, स्थानापत्तिकल्पितवचनातिदेशः, आश्रयोपस्थितिकल्पितवचनातिदेशश्चेति। ( प्र. ३ भा. पृ. १२–१३ )।

मीमांसाकौतूहलन्तु ब्रूते—अतिदेशो द्विविधः वचन–नामधेयभेदेन, वचनं द्विविधं प्रत्यक्षमानुमानिकञ्चेति। नाम त्रिविधं कर्मनाम, संस्कारनाम, यौगिकञ्चेति भाष्यमतम्। तत्र केवलस्य यौगिकस्य नाम्नोऽतिदेशकत्वाभावेन नामधेयं द्विविधमेव कर्मनामधेयम्, संस्कारनामधेयञ्चेति, अत्रैव सर्वेषां नैर्भर्यमिति मन्तव्यम्।

प्रत्यक्षवचनेनातिदेशस्योदाहरणम्।

षड्विंशब्राह्मणविहिते इषुनामके क्रतौ 'इषुं विष्टुतिं करोति, सप्ताहं साम भवती'ति कांश्चिद्वैशेषिकान् धर्मान् विधाय समाम्नातेन 'समानमितरच्छ्येनेने'ति प्रत्यक्षवचनेन श्येनवैशेषिकांगानामिषावतिदेशः। द्वितीयेऽतिदेशोपयोगितया रथन्तरादिशब्दानामाकृतिन्यायेन गानमात्रवाचित्वनिर्धारणम्। विशिष्टवाचकानां शब्दानां विशेषणमात्रपरत्वमिति हि आकृत्यधिकरणसिद्धान्तः। तृतीये 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहति' तां–ब्रा. ( २५–४–१ ) इत्यत्र नित्याग्निहोत्रेऽग्निदेवतायास्सायंहोमे मन्त्रवर्णे प्राप्तैकदेशप्रवृत्तिनिमित्तमादाय क्लृप्तशक्तिकेन तत्सादृश्यविधित्सया कौण्ड-

पायिनामयने कर्मणि प्रयुक्तेनाग्निहोत्रनामधेयेन तस्मिन्नित्याग्निहोत्रधर्माणामतिदेशश्च सापवादस्सप्तमे पादत्रयेण प्रतिपादितः। चतुर्थे 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिविकृतिष्वनुपदिष्टधर्मकेषु प्रत्यक्षवचनस्य नाम्नश्चातिदेशिकस्याभावेऽपि कुतश्चिद्वैदिकात् कर्मणो धर्मप्रापकं 'प्रकृतिवद्विकृतिः कर्तव्ये'ति वचनमस्तीत्यानुमानिकवचनरूपेण चोदकेनातिदेशस्सामान्यतः निरूपितः।

### उक्तार्थस्य संक्षिप्य कथनम्।

तत्रातिदेशसामान्यलक्षणमतिदेशस्यावश्यकतेत्युपन्यासपूर्वकमातदेशप्रमाणानि प्रत्यक्षवचनेन नामधेयेन, चोदनाकल्पितवचनेनेति त्रीणि प्रमाणानि पर्यायेण प्रथम–तृतीय–चतुर्थेषु निरूपितानि। द्वितीयपादेऽतिदेशोपयोगितया प्रत्यक्षवचनेनातिदिश्यमानस्य 'कवतीषु रथन्तरं गायती'ति सामपदार्थस्य निर्धारणम्। यद्यपि द्वितीये 'गीतिषु सामाख्ये'त्यत्र निर्धारितमेव। तथाप्यतिदेशोपयोगितयातिदेशविषयनिर्णयार्थं तत्रार्थादुक्तमेव गीतिवाचित्वं स्थूणानिखननन्यायेन दृढीक्रियत इति।

### अष्टमस्य विषयः।

तत्र सप्तमान्तोक्तस्य चोदनालिङ्गातिदेशस्य विशेषविचारार्थमष्टमोऽध्यायः उपक्रम्यते, तत्र स्पष्टं प्रतीयमानेन सादृश्यविशेषेणास्मिन्कर्मण्यस्मात् कर्मणोऽङ्गान्यानीयन्ते, नेतरस्मादिति निर्धारणं प्रथमपादे क्रियते 'यस्य लिङ्गमर्थसंयोगादि'ति।

### प्रकृति-विकृतिस्वरूपनिरूपणम्।

अत्रेदं बोध्यम्–वेदस्य पूर्वकाण्डप्रतिपाद्यं कर्म द्विविधम्–प्रकृतिः, विकृतिश्चेति। प्रकर्षेणाङ्गोपदेशो यत्र क्रियते, साप्रकृतिः अवशिष्टं प्रकृतेरतिदिश्यते, सा विकृतिरित्यभिधीयते। एतदभिप्रायेणंव 'यत्र समग्राङ्गोपदेशः, सा प्रकृतिः, यत्र हि अन्यत अङ्गानामानयनम्, सा विकृतिरिति तयोर्लक्षणमाचक्षते मीमांसाविचक्षणाः।

तत्र प्रकृतिर्द्विविधा–मूलप्रकृतिः, अवान्तरप्रकृतिश्चेति। अग्निहोत्रम्, इष्टिः, सोमश्चेति तिस्रो मूलप्रकृतयः। तासु कस्याप्यङ्गस्यान्यतोऽतिदिष्टत्वाभावात्। अग्न्याधानेऽन्यतोऽतिदेशो नास्तीति चेत्? तर्हि तादृशं सर्वमग्निहोत्रादिरूपं लक्ष्यताम्।

अथवा—अग्निसंस्कारकतया कर्मत्वानादरेण मूलप्रकृतिष्वनुपन्यास इति मन्तव्यम्। अग्निहोत्रं नाम प्रतिदिनं सायं प्रातश्च क्षीराद्यादिद्रव्येणाऽग्नये सूर्याय च होतव्यं कर्म। स्विष्टकृत्स्थानीयं प्रजापतिदेवताकं द्वितीयं हवनम्। तद्विकृतिः कौण्डपायिनामयनगतं मासाग्निहोत्रम्। इष्टिर्नाम पुरोडाशाज्यचर्वादिद्रव्येण पक्षे पक्षे निष्पाद्यं दर्शपूर्णमासाख्यं कर्म। तद्विकृतिरैन्द्राग्नादयः काम्येष्टयः। सोमो नाम प्रतिवसन्तमनुष्ठेयं सोमलतारूपद्रव्येण निष्पाद्यमग्निष्टोमसंस्थाकं ज्योतिष्टोमाख्यं कर्म। तस्य साक्षाद्विकृतिविश्वजिदाद्येकाहादिः, परम्परया सहस्रसंवत्सरपर्यन्तः कर्मसंघः।

यद्यप्यग्नीषोमीयः पशुस्तेभ्य इष्ट्यग्निहोत्रसोमयागेभ्यो विलक्षणः, तथापि नासौ काचिन्मूलप्रकृतिः। अग्नीषोमीयपशौ प्रयाजानुयाजादीनामिष्टिधर्मोणामतिदेशेन तस्येष्टिविकृतित्वात्। तस्य विकृतित्वेऽपि तदीयधर्माणामुपाकरण–नियोजनादीनां सवनीयादिपशुष्वतिदेशात्प्रकृतित्वमप्यस्ति, ततो द्व्यात्मकत्वादवान्तरप्रकृतिरिति कथ्यते।

### केवलविकृतित्वम् ।

सहस्रसंवत्सरसत्रगतधर्माणामन्यत्रातिदेशाभावेन तस्मिन्सत्रे द्विविधस्यापि प्रकृतित्वस्याभावात्केवलविकृतित्वम् । एवं सौर्यार्यमणप्राजापत्येष्टीनामपि केवलविकृतित्वमेवेति मन्तव्यम् ।

### अपूर्वकर्मत्वम् ।

गृहमेधीयेष्टिः, उपसद्धोम इत्यादेः प्रकृतिविकृतिभिन्नत्वादपूर्वकर्मत्वम् सांख्यसम्मतपुरुष इव । अन्यदीयस्य धर्मस्य तस्मिन्, तदीयस्यान्यस्मिन् वा कश्चिदतिदेशोऽस्ति । तस्मादीश्वरकृष्णोक्तसांख्यसम्मतचतुर्विधप्रमेयवन्मीमांसकमतेऽपि प्रकृतिः, विकृतिः, प्रकृतिविकृतिः, ( उभयात्मकम् ) अनुभयात्मकं चेति । प्रकृतिविकृतिस्वरूपविचारेण वहु दूरं नीताः स्मः । प्रकृतमनुसरामः ।

### प्राभाकरमतेनोपदेशातिदेशयोर्विषयव्यवस्थापनम् ।

प्राभाकरमीमांसका द्वादशलक्षण्या विषयव्यवस्थामित्थं प्रतिपादयन्ति । तेषामयमाशयः । तथाहि–उपदेशो नाम ग्रन्थसन्दर्भः । स चार्थान्तरान्वितं ( स्वार्थं ) विध्यर्थं प्रतिपादयति । स तथाभूत एवौपदेशिकः । विध्यर्थरूपे कार्ये तस्य प्रमाणत्वावधारणाच्चोदनासूत्रे, ग्रन्थसन्दर्भापरपर्यायादुपदेशाद्योऽर्थः प्रतीयते, स एवौपदेशिक इति न नियमः, अपि तु विध्यर्थः स्वसिद्ध्यर्थं यमाक्षिपति, स सर्वोऽप्यौपदेशिक एव । यथा-पिण्डपितृयज्ञादावश्रुतो नियोज्यः, यथा वा दर्शपूर्णमासादावुपकारः, स एव विकृतावप्युपदेशेन प्राप्यते, परं प्राकृतस्योपकारस्य क्लृप्तत्वेन, विकृतावुपकारस्य कल्प्यत्वेन प्राकृत एवोपकार उपदेशेनोपादीयते ( आक्षिप्यते ) स्वसिद्ध्यर्थम् । एवञ्चोपकारः प्रकृतौ, विकृतौ चौपदेशिक एव । तस्योपस्थितिः प्रत्यक्षवचन–नाम–चोदनालिङ्गैः । स चोपकारव्यक्तिविशेषमाक्षिपन् वैकृतो विधिः प्राकृतोपकारोऽस्तीत्येतावन्मात्रमाक्षिपति । तावता प्रकृतिविशेषनियमस्य चोदकलभ्यत्वमात्रेणौपदेशिकत्वं न प्रहीयते यतो ह्युपदेशो नौपदेशिकः, न वातिदेशिकः, अपि तु केवलविध्याक्षेप्यत्वेनौपदेशिकता । तद्भद्भावेन प्रापितत्वादतिदेशिकतेति, उभयलक्षणाक्रान्तत्वेनोभयरूपत्वमुपकारस्याङ्गीक्रियते । अर्थादुपदेशप्रमेयं पूर्वषट्के विचार्यते, कार्यप्रमेयमुत्तरषट्के प्रपञ्च्यते । उपदेशप्रमेयं कार्यम्, कार्यप्रमेयभूताः पदार्था इति । उपकारस्तयोस्साक्षाद्विचारितः । तद्विचारेणैव तत्प्रमेयभूता अपि पदार्थास्तयोर्विचारिता इति । एवं चोपदेशादिदेशयोरेकत्रैव युगपत्सम्भवान्नैतौ प्रतिपक्षभूतौ शब्दप्रमाणभेदौ, अपितूपदेशकार्याश्रितौ–इति ।

### तन्निरासेन स्वमतेनोपदेशातिदेशाश्रितौ पूर्वोत्तरषट्काविति प्रतिपादनम् ।

भाट्टमीमांसकानामियमभिसन्धिः—दशमाद्ये प्रदर्शितरीत्योपकारस्य औपदेशिकत्वासम्भवात् तन्न विचारसहम् । यतोहि उपदेशः, विधिः, चोदना चेत्यनर्थान्तरम् । स चेत्थमिदं कर्तव्यमित्येवंरूपः । यथा 'प्रयाजादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदि'ति । तद्वदिदं कर्तव्यमित्येवं रूपोऽतिदेशः । यथा 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति सौर्यवाक्ये दृष्टे औषधद्रव्यकत्वेन, एकदेवताकत्वेन च सादृश्येना-

ग्नेयवाक्यमुपमीयते। तस्मिंश्चोपमिते तदर्थो ज्ञायते। सा च किमाद्याकांक्षात्रयविशिष्टा भावनैव वाक्यार्थ इति स्थितेः। तत्र सौर्यवाक्ये भावनायाः ब्रह्मवर्चसं भावयेदाग्नेयवदुपकृत्येत्युपकारोऽतिदिश्यते। अत उपदेशनिरूपणमुपजीव्यम्। अतिदेशनिरूपणञ्चोपजीवकम्। अतएव द्वादशलक्षणायां मीमांसायां पूर्वषट्के उपदेशविचारः कृतः। उत्तरषट्के चातिदेशविचारः। तत्रापि प्रमाणस्य सर्वोपजीव्यत्वादादौ तन्निरूपणं कृतम्। तन्त्रावापप्रसङ्गानां प्रयोगविधिव्यापाररूपत्वेन चतुर्थे निरूपणीयत्वप्रसक्तावपि प्रकृति-विकृतिसाधारण्येनान्ते निरूपणमिति भाट्टमतस्थितिः। विशेषस्तु ग्रन्थशरीरे टिप्पण्याञ्च द्रष्टव्यः।

## नवमाध्यायप्रतिपाद्यनिरूपणम्।

नवमेऽतिदिष्टानां मन्त्र-साम-संस्काराणां प्राकृतपदार्थकार्यापन्नपदार्थान्तरद्वारान्तरसंबन्धेनाऽन्यथाभावरूप ऊहो निरूपितः। 'यद्यपि ऊहशब्दस्तर्कमात्रवचनः। तथाऽप्यस्मिन् शास्त्रेऽन्यथावगतानां पदार्थानामन्यथाभावविषयकस्तर्कः, स ऊहशब्देनोच्यते'। ( न्या. र. मा. पृ. २१९-२२० ) इति ग्रन्थकृता स्वयमेवाभाणि, तन्न प्रस्मर्तव्यम्। प्राकृतपदार्थकार्यापत्तिः प्रत्यक्षेण, अनुमानेन, प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्देन प्रत्यक्षवचनागतलिंगोन्नीतनिवृत्त्यनुमितशब्देन वाऽवसीयते। अयञ्च विषयो दीक्षितेन्द्रैर्मयूरचावल्यामुपपादितः। अस्य मूलं तन्त्ररत्नग्रन्थः। अस्य विवेचनं मयूरवमालिकायां द्रष्टव्यमि। ( म. मा. पृ. ६१३ ) ति।

## क्रमेणोदाहरणानि।

'नैवारश्चरुर्भवति' इत्यत्र प्राकृतव्रीहिकार्यहविर्निष्पादकत्वं प्रत्यक्षेण अवगम्यते, न तु नैवार इति तद्धितेन, तस्येदमिति सम्बन्धसामान्ये अण्प्रत्ययविधानात्, तस्येह प्रकृति-विकृतिभावरूपसम्बन्धविशेषस्य पर्यवसानं प्रत्यक्षाधीनम्। 'नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नमि'त्यत्र श्रुतस्य नखस्य प्राकृतोलूखलमुसलकार्यापत्तिरनुमानेन अवसीयते, न तु प्रत्यक्षेण। 'परिधौ पशुं नियुञ्जीत' इत्यत्र प्राकृतयूपकार्ये पशुनियोजने परिधेर्विनियोगः प्रत्यक्षवचनेनावसीयते। 'न गिरा गिरे'ति ब्रूयात्, ऐरं कृत्वादुगेयम 'इत्यत्र गिरेप्रतिषेधादवगतया गिरापदनिवृत्त्या तत्कार्यस्य साधनापेक्षत्वप्रतीतौ तत्कार्यवाचिपदमनुमाय, गिरापदकार्यार्थं 'ऐरं कृत्वोद्गेयम्' इत्येवं रूपेण श्रुतानुमितैकदेशनिष्पादितेन वाक्येन गिरापदकार्यापत्तिरिरापदस्याध्यवसीयते। 'यस्योभयं हविरार्तिमाच्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि' ( तै० ब्रा० ३।७।१ ) त्यत्र पञ्चशरावपरिमितोदनद्रव्यकयागस्य दर्शकार्यापत्तौ दर्शनिवृत्तिः प्रत्यक्षवचनान्नावगम्यते, अपितु द्रव्यविनाशादवगम्यते। तन्निवृत्तौ तत्कार्यस्य साधनापेक्षायां तद्वाचिपदमनुमाय दर्शकार्यार्थं 'ऐन्द्रं पञ्चशरावमोदनम् निर्वपेत्' इति श्रुतानुमितैकदेशनिष्पन्नेन वाक्येन पञ्चशरावयागस्य दर्शकार्यापत्तिर्निश्चीयते, 'स प्रत्यामनेत् स्थानात्' ( मी० द० ६।४।३० ) षष्ठाध्यायाधिकरणपूर्वपक्षरीत्येदमुदाहरणमिति तत्रैव द्रष्टव्यम्। एवञ्च कार्यापत्त्यौषधधर्माणां व्रीहिधर्माणामवघातादीनां नीवारेषु, उलूखलमुसलधर्माणां नखे, यूपधर्माणां परिव्याणादीनां परिधौ चोहः, संस्कारोह इति बोध्यम्। गिरापदगतीतिक्रियायां इरापदे तूहः सामोह इति। दर्श-

धर्माणान्तु सिद्धान्ते नास्त्यूहः पञ्चशरावयागे। मन्त्रोहस्त्वष्टविधः। अस्य विवरणं (न्या० र० पृ० २२२) विस्तरेण द्रष्टव्यम्। एवमूहः सापवादः नवनेऽध्याये प्रपञ्चितः।

## दशमाध्यायस्य प्रतिपाद्यम्।

एवमातिदेशिकपदार्थगतरूपान्तरात्मकोहनिरूपणानन्तरं तन्निवृत्त्यात्मकः बाधो दशमेऽध्याये निरूपितः। अत एवोक्तम्—

'रूपान्तरत्वादासन्नं नवमे स्थितमूहनम्।
निवृत्तित्वाद्विप्रकृष्टो दशमे बाध उच्यते'॥ इति,
'ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया।
इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते'॥ इति च।

निवृत्तिश्च कचिदतिदेशप्रवृत्तिकाले प्रकृतावविज्ञातत्वेन तद्ग्राह्यत्वासम्भवात्। यथा दर्शपूर्णमासभूताङ्गायामारम्भणीयायामारम्भणीयाः। न ह्यारम्भणीयाविधानसमये दर्शपूर्णमासयोरारम्भणीयाऽङ्गमिति ज्ञाता। येन साऽपि प्रयाजाद्यङ्गवदतिदेशवाक्येन गृह्येत। कस्यचिदतिदेशवाक्यप्रवृत्तिकाले प्रकृतौ विज्ञातस्याप्यसम्भवान्निवृत्तिः। यथा पवमानेष्टावग्निहोत्रहवण्याः। ययाऽग्निहोत्रं हुतम्, साऽग्निहोत्रहवणी। प्रकृता'वग्निहोत्रहवण्या हवींषि निर्वपती'त्यादिना निर्वापकरणत्वेन ग्राह्येति स्थितम्। न च पवमानेष्टिसमयेऽग्निहोत्रं हुतम्।

## कचिद्द्वारलोपान्निवृत्तिरित्यस्य विवरणम्।

तत्र द्वारलोपो द्वारत्वेनाभिमतस्य स्वतस्सिद्धतया, क्वचित्पूर्वसिद्धतया, क्वचिद्द्वारसम्पादनाशक्त्या, क्वचित्सिद्धशेषिविरोधात्। क्वचित्साध्यशेषिविरोधात्, क्वचिद्विरोधाभावेऽपि प्रयोजनाभावान्निवृत्तिरिति बहुविधा। द्वारलोपान्निवृत्तिरित्यत्र द्वारशब्देन यद् द्वारतया, फलतया वा प्रयोजनम्, तत्सर्वं विवक्षितम्। तेन मृते यजमाने क्रियमाणायामिष्टौ आयुराशास्ते' इत्यादिमन्त्राणां विवक्षितफलानां मृतस्य यजमानस्यायुरादिफललोपान्निवृत्तिरप्युदाहरणमित्यादि शास्त्रदीपिकादौ द्रष्टव्यम्। क्रमेणोदाहरणानि। आद्यस्योदाहरणम्। कृष्णलेष्ववघातद्वारस्य वैतुष्यस्य स्वतसिद्धतयाऽवघातस्य निवृत्तिः। द्वितीयस्योदाहरणम्—'खलेवाली यूपो भवति' इत्यत्र खलेवाल्याः प्रागेव छित्वा तक्षणेन श्लक्ष्णीकृत्य, निखाताया ग्रहणेन तक्षणोच्छ्रयणादीनां निवृत्तिः। तृतीयस्योदाहरणम्—प्राशित्रेडाभक्षणार्थेषु कृष्णलेष्वभिधारणजन्यस्योपकारस्य स्वादिम्नः सम्पादयितुमशक्यत्वादभिधारणनिवृत्तिः। चतुर्थस्योदाहरणम्—आग्रयणे दक्षिणारूपे वत्से अन्वाहार्यधर्मस्य पाकस्य। पाके कृते हि वत्सो नश्येत्, तन्मांसमेव दक्षिणा स्यात्। पञ्चमस्योदाहरणम्—वाजपेये 'बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवति' इत्यत्र निर्वाप्येषु व्रीहिषु 'चतुरो मुष्टीन्निर्वपतीत्यतिदेशप्राप्तस्य चतुर्मुष्टिपरिमाणस्य व्रीहिसाध्यस्य सप्तदशशरावपरिमाणचरुरूपसाध्यशेषिविरोधात्संख्यामुष्टयोरन्यतरस्य बाधावश्यंभावे जघन्यत्वान्मुष्टेर्निवृत्तिः। षष्ठस्योदाहरणम्—'आग्रयणे दक्षिणारूपे वाससि पाकस्य'; प्रकृतौ हि—अन्वाहार्यरूपदक्षिणाद्रव्यनिष्पत्त्यर्थं 'दक्षिणाग्नावपरिमितं महान्तमोदनं पचति' इति पाको विहितः। तत्र दक्षिणाद्रव्ये वाससि

आगेव निष्पन्ने स्थिते तन्निष्पत्त्यनुपयोगिना किं पाकेनेत्येवंरीत्या बहुभिरुदाहरणे-र्द्वारलोपान्निवृत्तिरुपपादिता।

प्रत्याम्नानात् बाधः।

क्वचित् प्रत्याम्नानात् प्राकृतपदार्थनिवृत्तिः। प्रत्याम्नानम्-विरुद्धपदार्थकथनम्। साऽप्यनेकविधा। तथाहि—क्वचिदुपदिष्टपदार्थविरोधात् तन्निवृत्तिः। यथा—'औदुम्बरो यूपो भवती'ति वैकृतपशावतिदेशप्राप्तं यूपमुद्दिश्यौदुम्बररूपप्रकृतिद्रव्यविधानादुदुम्बर-प्रकृतिके यूपे प्राकृतस्य बिल्व—पलाशादेर्विरोधेन प्रकृतित्वासंभवान्निवृत्तिर्भवति।

क्वचिदुपदिष्टपदार्थगतश्रुतनैरपेक्ष्यश्रुतौ विरोधान्निवृत्तिर्भवति। यथा—नैवारश्चरु-र्भवती'त्यत्र नीवारप्रकृतिके चरौ व्रीहितण्डुलानामपि मिश्रणेन प्रकृतित्वसंभवेऽपि नीवारशब्दपरतद्धितोत्पत्त्यवगतनैरपेक्ष्यबाधात् व्रीहीणां निवृत्तिर्भवति। नैवाराणां व्रीहिसापेक्षाणां चरुप्रकृतिकत्वे हि ('सापेक्षमसमर्थमि') न्या. त्यसामर्थ्यात् तद्धितो-त्पत्तिर्न स्यात्।

क्वचिदविरोधेऽपि नैरपेक्ष्यान्निवृत्तिर्भवति। यथाऽऽग्रयणेष्टौ 'वासोदक्षिणा, प्रथमजो वत्सो दक्षिणा' इति श्रुताभ्यां वासो-वत्साभ्यां ऋत्विजामानतौ तयोरन्वाहार्य-निरपेक्षकारणत्वात्, प्राकृतान्वाहार्यदक्षिणायाः निवृत्तिः।

क्वचिन्नैरपेक्ष्याभावेऽपि नियमवशान्निवृत्तिर्भवति। यथा—ऋतपेये औदुम्बर-स्सोमचमसः दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः इति श्रुतेन सोमचमसेन केवलं ब्रह्मणे दत्तेन लौकिकोपायान्तरमनपेक्ष्य ऋत्विजामानतेरसंभवेऽपि, श्रुतनियम-विधिवशात् प्राकृत्या द्वादशशतदक्षिणाया निवृत्तिर्जायत इत्यादिरीत्या प्रत्याम्नानान्नि-वृत्तिः प्रपञ्चिता।

प्रतिषेधात् बाधः।

क्वचित्प्रतिषेधान्निवृत्तिर्भवति। अत्र प्रतिषेधशब्देन यः कश्चित् प्राकृतपदार्थ-निवृत्तिफलकोविधिः, स सर्वोऽपि विवक्षितः। तेन महापितृयेष्टौ 'नार्षेयं वृणीते' इत्या-र्षेयवरणवर्जं प्रकृतिवत् कुर्यादिति पर्युदासेन या तस्यामार्षेयवरणनिवृत्तिः, साऽपि गृह्यते, एवं 'न तौ पशौ करोति' इत्याज्यभागयोः प्रतिषेधात् या पशुयागे आज्यभाग-निवृत्तिः, साऽप्यभिमता। तथा गृहमेधीयेष्टौ 'आज्यभागौ यजति' इत्यपूर्वतापर-विधिनाऽऽज्यभागव्यतिरिक्तानामंगानां निवृत्तिरपि विवक्षिता। अधिकरणमालाकृता पदार्थसंग्रहो वर्णित इति तदुपेक्ष्य, विशेषः प्रपञ्चित इति ध्येयम्।

तथा—दर्शपूर्णमासयोः 'कपालेषु श्रपयति' इति वाक्यस्य तण्डुलहविष्केषु चित्रायागादिषु व्रीह्युपादाननिवृत्तिरेव फलमिति, साऽप्यत्रोदाहरणमिति मन्तव्यम्। तथा च 'कपालेषु श्रपयती'तिविधेस्तण्डुलहविष्कासु विकृतिषु व्रीहिरूपप्रकृतिद्रव्योपादान-निवृत्तिरेव फलमिति मीमांसकमूर्धन्यैर्दीक्षितेन्द्रैर्विधिरसायनसुखोपयोजिन्यां कण्ठेहत्य विवेचितम्। मया चात्र दशममाध्यायप्रतिपाद्यनिरूपणावसरे तत्रत्यग्रन्थसन्दर्भस्योद्धरणेन (न्या० र० मा० पृ०) प्रत्यपादि, तत् तत एव ज्ञेयम्।

### एकादशाध्यायस्य प्रतिपाद्यम् ।

एवमुपदेशविषये, अतिदेशविषये च पृथङ्निरूपणीयेषु विषयेषु निरूपितेषु तदुभयसाधारणयोस्तन्त्र–प्रसंगयोः निरूपणीययोरेकादशेऽध्याये तन्त्रम् निरूपितम् । तन्त्रलक्षणं मूल एव द्रष्टव्यम् ।

### तन्त्रस्य त्रैविध्यम् ।

तथाहि—तत् तन्त्रं त्रिविधं फलतन्त्रम्, पदार्थतन्त्रम्, अनुष्ठानतन्त्रञ्चेति । तत्र 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यत्र फलमुद्दिश्योपादीयमानानामाग्नेयादीनां षण्णां द्वंद्वावगतसाहित्यं विवक्षितम् । अतस्स आग्नेयादीनां षण्णां फलमिति फलतन्त्रम् सहितानां फलान्वयात् । अंगानुष्ठानं कालभेदेन भिद्यत इति देशभेदेनांगावृत्तिः क्रियते, तत्रैव 'गार्हपत्ये पत्नीसंयाजान् जुहोती'तिर्विहितानामापराग्निकहोमानां देशकालैक्येऽध्यध्वर्यु-प्रतिप्रस्थातृरूपकर्तृभेदात् भेदः ।

यत्र कर्तृत्वाधिष्ठानाभेदेऽपि कर्तृकारकभेदः, तत्रापि प्रयोगभेदेन अंगानुष्ठानावृत्तिरेव । यथा–'आग्नावैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा, सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणे' ( तै. सं. १-८-१ श. ब्रा. ३-१-३-१ ) त्यादिवाक्यविहितेषु राजसूयान्तर्गतेषु यागेषु देश-काल-फल-भेदाप्रतीतावपि वामनानतैराग्नावैष्णवयागः कर्तव्यः, श्यामानतैस्सोमापोष्णश्चरुः कर्तव्य इत्येवं दक्षिणाव्यवस्थया तद्भेदात् कर्तृरूपं भिद्यत इति प्रतियागं प्रयोगभेदादंगानुष्ठानावृत्तिस्सिद्धयति, यदि कालभेदेन कर्तव्यानां प्रधानानामेककालान्यंगानि, तान्यगृह्यमाणविशेषत्वात् सर्वेषाम् तन्त्रं भवन्ति, उदाहरणम् । यथा प्रकृतिभूते ज्योतिष्टोमेऽग्नीषोमीय-सवनीयानुबन्ध्यानां 'दीक्षासु यूपं छिनत्ति' इति दीक्षाकालकर्तव्यत्वेन विहितः यूपः । यथा वा द्वादशाहे द्वादशानां सोमयागानामहर्भेदेन कर्तव्यानां दीक्षोपसदादय इति रूपेण सापवादमेकादशे तन्त्रं निरूपितम् ।

### द्वादशाध्यायस्य प्रतिपाद्यनिरूपणम् ।

द्वादशे प्रसङ्गो निरूपितः । प्रसङ्गो नाम–अन्यार्थेनान्यस्य तत्प्रयुक्तिशक्तस्योपकारः । इदमेव स्वरूपं प्रसङ्गस्योक्तं शास्त्रदीपिकाकृताऽन्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्ग इति । अयंभावः । यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनं भवति, तत्र प्रसङ्ग इत्यर्थः । यथा—लौकिकमुदाहरणम् । भोजनार्थं प्रथममागतस्याचार्यस्य कृते कृतेन सूपापूपादिना पश्चादागतस्य स्वयमाचार्यनैरपेक्ष्येणापि सूपापूपादिप्रयुक्तिशक्तस्य जामातुरुपकारो भवति । एवं पशुयागार्थमनुष्ठितेन प्रयाजादिना तदङ्गभूतस्य पुरोडाशयागस्याप्युपकारो भवति । इदमेव मनसि निधाय नव्यमीमांसकेनाचार्यखण्डदेवेन प्रसङ्गस्वरूपं परिष्कृतम् । प्रसङ्गो नाम 'अन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानमि'ति ।

### प्रसङ्गस्य त्रैविध्यम् ।

स च प्रसङ्गस्त्रिविधः—अनुष्ठानप्रसङ्गः, पदार्थप्रसङ्गः, शास्त्रप्रसङ्गश्चेति । तत्र पश्वर्थं प्रयाजानुष्ठानेन पशुयागाङ्गभूतस्य पशुपुरोडाशादेरुपकारोऽनुष्ठानप्रसङ्गः ।

सौमिक्या वेद्या सोमयागाङ्गभूतानामिष्टिपशूनामुपकारः पदार्थप्रसङ्ग इति गीयते। 'याजनादिभिर्ब्राह्मणो धनमर्जयेदि'ति द्रव्याजनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकानामार्त्विज्यमाक्षेप्तुं प्रयुक्तस्योपकारः शास्त्रप्रसङ्गः। एवञ्च प्रसङ्गस्वरूपम्, तन्त्रिनिर्णयः, समुच्चयः, विकल्पश्चेत्येवमादिरूपेण द्वादशे सापवादः प्रसङ्गो निरूपितः। यद्यप्यधिकरणमालायामुपोद्घातप्रकरणे प्रमाणेत्यादिपद्यैरध्यायार्थाः, विध्यर्थवाद इत्यादिश्लोकैश्च पदार्थाः सङ्गृहीताः। 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन केचन विषयाः संक्षेपेणात्रोपवर्णिताः। ये सम्प्रदायैकसमधिगम्या इति।

### विकल्पप्रयोजकविचारः।

प्रसङ्गलक्षणे 'एकार्थास्तु विकल्पेरन्' इति सूत्रेणैकार्थत्वं विकल्पस्य प्रयोजकमित्युक्तम्। यथा—'व्रीहिभिर्यजेत, यवैर्वा यजेत' इति विधिभ्याम् व्रीहियवयोरेकार्थत्वाद्विकल्पो युज्यते। पदसम्बन्धिकार्ये सामर्थ्यम् प्रयोजकम्। तच्चैकार्थीभावलक्षणम्। 'समर्थः पदविधिः' इति पाणिनिस्मरणात्। एतावन्मात्रोक्तौ आग्नेयादीनामेकफलसाधनत्वाद्विकल्पः प्रसज्येत। तद्वारणाय निरपेक्षसाधनत्वं निवेशनीयम्। आग्नेयादीनामेकफलार्थत्वेऽपि निरपेक्षसाधनत्वरूपविशेषणाभावाददोषः। किञ्चास्मिन्पक्षे दण्डादीनां 'दण्डेन दीक्षयति' इत्यादिना विहितानां तृतीयाविभक्त्या निरपेक्षसाधनत्वावगमात् विकल्पस्स्यात्। क्रमलक्षणे पञ्चमे 'परेणावेदनाद्दीक्षितस्स्यादित्यधिकरणे दण्डादीनां समुच्चयस्साधितोऽनुपपन्नस्स्यात्। अतः पार्थसारथिमिश्रेण तन्त्ररत्नोक्तरीत्या समुच्चयप्रमाणाभावोऽपि विकल्पे कारणमित्यङ्गीकर्तव्यम्। अतस्समुच्चयबोधकप्रमाणाभावे सति एकार्थत्वम् विकल्पप्रयोजकमिति।

'व्रीहयो निरपेक्षा हि ज्ञायन्ते यागसाधनम्।
यवाश्चैवमतस्तेषां मिश्रत्वं नावकल्पते'॥ इति।

### अत्र न्यायसुधोक्तस्यार्थस्य निरासः।

विरोधाधिकरणवार्तिकन्यायसुधायाः परिशीलनेन निरपेक्षसाधनत्वम् विकल्पप्रयोजकमित्यवगम्यते। तत् दण्डादिषु व्यभिचारि। अतोऽयं ग्रन्थसन्दर्भो मिश्रताव्यावृत्तिद्वारा समुच्चयग्राहकप्रमाणाभावपरतया योजनीयः। एतेन दृष्टार्थत्वम्, अदृष्टार्थत्वं वा विकल्पप्रयोजकमिति पक्षः निरस्तः। दर्शपूर्णमासातिपातजन्यदोषनिर्घातार्थानां पथिकृद्वैश्वानरादीनाम्, काम्यानामेकफलानामुद्भिभिच्चित्रादीनां च विकल्पो निरस्त इति ध्येयम्।

### विकल्पे दोषप्रतिपादनम्।

विकल्पोऽष्टदोषदुष्ट इति मीमांसकमतप्रसिद्धिः। तथाहि—'व्रीहिभिर्यजेत' इत्यत्र प्रथमं व्रीह्यनुष्ठानपक्षे १ यवशास्त्रस्य प्रतीतप्रामाण्यपरित्यागः, २ अप्रतीताप्रामाण्यस्वीकारः, तथा प्रयोगान्तरे यवेषूपादीयमानेषु यवशास्त्रस्य ३ पूर्वं परित्यक्तप्रामाण्यस्य स्वीकारः, ४ प्राक्स्वीकृताप्रामाण्यपरित्याग इति यवशास्त्रे चत्वारो दोषाः। द्वितीयप्रयोगे यदा यवानुष्ठानम्, तदा १ व्रीहिशास्त्रस्य त्यक्तस्य प्रतीतप्रामाण्यस्य पुनरुज्जीवनम्, २—अप्रतीतस्य अप्रामाण्यस्य त्यक्तस्य स्वीकारश्च द्वौ दोषौ। पुनस्तृतीयप्रयोगे ३—व्रीहि-

घूयादीयमानेषु व्रीहिशास्त्रस्य स्वीकृतप्रामाण्यपरित्यागः, ४-परित्यक्तप्रामाण्यस्वीकारश्चेति द्वौ दोषौ। एवं प्रयोगत्रयेण यवशास्त्रे चत्वारो दोषाः, व्रीहिशास्त्रे चत्वार इति, अर्थात् व्रीह्यनुष्ठाने यवशास्त्रे द्वौ दोषौ, व्रीहिशास्त्रे द्वाविति चत्वारो दोषाः। एवं यवानुष्ठानेऽपि व्रीहिशास्त्रे द्वौ दोषौ यवशास्त्रे च द्वाविति चत्वारः, एवञ्च मिलित्वाऽष्टौ दोषाः।

'एवमेवाष्टदोषोऽपि यद्व्रीहियववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते' ॥ तं. वा. पृ. इति।

न ह्येकार्थत्वमात्रं विकल्पहेतुः, किन्तर्हि निरपेक्षाणामेकोपकारसाधनत्वमिति पृ. २०६-२०७ तृतीयपरिच्छेदान्ते वदति ग्रन्थकारः, तस्यापि तात्पर्यमत्रैवेति बोध्यम्। एवमष्टदोषदुष्टो विकल्पः-इति।

## तत्र शङ्का।

अत्रेयं शङ्का समुन्मिषति-यत्प्रामाण्यपरित्यागो नाम प्रामाण्याभावस्वीकार एव, अन्यस्य निर्वक्तुमशक्यत्वात्, तथाऽप्रामाण्यस्वीकारोऽपि स एव। एवञ्चापौरुषेये वेदे विपर्यासजनकत्वस्यासम्भवेनाप्रामाण्यस्वीकार इत्यत्राप्रामाण्यशब्दस्य प्रामाण्याभावपरत्वात्। तथा चाऽऽद्ययोः दोषयोर्न वैलक्षण्यम्-इति।

## उपाधिभेदेन तयोर्वैलक्षण्यमिति समाधानेन तन्निरासः।

अत्र समाधीयते-अप्रामाण्यम्-प्रामाण्याभावः। प्रामाण्यपरित्यागोऽपि प्रामाण्याभाव इत्युभयत्रापि प्रामाण्याभावस्वीकार एव पर्यवसितो दोष इति फलति। तस्य दूषकत्वबीजं द्विविधम्—प्रामाण्ये प्रमाणस्य निर्दोषत्वादेस्सद्भावरूपम्। प्रामाण्याभावे प्रमाणस्य प्रामाण्यानुपलम्भस्याभावरूपञ्चेति। तथा च भावप्रमाणसद्भावोपाधिकतया प्रथमो दोषः। अभावप्रमाणाभावावोपाधिकतया स एव दोष इति, उपाधिभेदेन दोष इति, उपाधिभेदेन दोषद्वैविध्यं विवक्षितम्। अतो न दोषः। तथा च वार्तिकम्—

'प्रमाणमप्रतीतं यदुज्ज्वलं तदपह्नुतम्।
एकस्तावदयं दोषः स्यात्प्रतीतिविपर्ययात्॥
तथा तदप्रमाणत्वं यदभावप्रमाणकम्।
भावे सत्यप्यभावेन विनैव परिकल्प्यते' ॥ तं. वा पृ. ति।

अत्र प्रथमे पद्ये प्रमाणविपर्ययादित्यनेन प्रामाण्यसद्भावविषयकप्रामाण्याभावस्वीकारस्य दोषत्वं प्रादर्शि। द्वितीयपद्येन त्वभावप्रमाणसद्भावमूलकं प्रामाण्याभावस्वीकारस्य दोषत्वमुपावर्णि। द्वितीयश्लोकस्यायमर्थः—यथा प्रामाण्यपरित्यागो दोषः, तथा तदप्रमाणत्वमपि दोषः। यत्-यस्मात्कारणात्। अभावप्रमाणकम्—प्रामाण्यानुपलब्धिरूपाभावप्रमाणग्राह्यं प्रामाण्याभावरूपमप्रमाणत्वम्। भावे सत्यपि—प्रामाण्योपलम्भरूपे भावे विद्यमानेऽपि तस्याभावेन विनैव कल्प्यते। ततो हेतोर्द्वितीयः दोष इति सर्वमनवद्यम्।

## विकल्पभेदप्रदर्शनम् ।

प्रथमं तावद्विकल्पस्त्रिविधः वाचनिकः, न्यायगम्यः, ऐच्छिकश्चेति । आद्यः 'रथन्तरं पृष्ठं भवति, बृहत्पृष्ठं भवति, इति–द्वितीयतृतीयौ प्रसिद्धौ । पुनरपि द्विविधः–व्यवस्थितविकल्पः, अव्यवस्थितविकल्पश्चेति । आद्यस्योदाहरणम् । यथा-अग्निहोत्रे दध्यादिदशद्रव्यविकल्पः । द्वितीयं व्रीहिभिर्यजेतेत्यादौ । न्यायगम्य एवायमष्टदोषदुष्टो विकल्पोऽगत्या स्वीकृत इति ।

## प्राभाकरमतेन शास्त्रार्थसंग्रहः ।

तृतीयादिद्वादशान्तप्रतिपाद्यम् । प्रमेयजातं संक्षेपेणाभिधाय, शास्त्रार्थसंग्रहः प्रदर्श्यते, तत्रादौ प्रभाकरमतमुपन्यस्य निरासः क्रियते । तथाहि—प्राभाकरमीमांसका लिङादियुक्तेषु वाक्येषु नियोगः लिङादीनाम् वाच्योऽर्थः, तदेव कार्यमित्युच्यते । तच्च कृत्युपहितमर्यादं कृत्या व्याप्तम्, अर्थात् कार्यवाचिनामेव लिङादिशब्दानां कृतिवाच्यत्वम्, अन्यत्र लडादौ कालसंख्यादीनामेव बोधः, न तु कृतिराख्यातार्थ इति । स एव वाक्यार्थः । अर्थात् तदेव वाक्यार्थे मुख्यविशेष्यतया भासते । कार्यञ्च सर्वं सर्वस्य न भवति । कस्यचिदेव किञ्चिदेव भवतीति कार्यस्वरूपविवरणम् । यथा-ज्ञानमाश्रयत्वविषयत्वाभ्याम् निरूप्यते, तथा कार्यमपि नियोगापरपर्यायं विषयनियोज्याभ्यां निरूप्यत इति तन्मतस्थितिः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ यागो लिङर्थे कार्ये विषयतयाऽन्वेति । अतः प्रतिपत्त्यनुबंधः विषय इत्युच्यते, कार्योत्पत्तावसाधारणकारणत्वात् विषयस्यैव करणत्वम् ।

यथोक्तम् ।

> 'कृति-तत्साध्यमध्यस्थो यागादिर्विषयो मतः ।
> कार्येऽसंघटिताकरे करणत्वेन सम्मतः' ॥ इति ॥

अयमर्थो विषयकरणीयनाम्नि प्रकरणे पंचिकायां विवेचितश्शालिकाचार्येण ।

## नियोज्यपरत्वं स्वर्गकामादिशब्दानाम् ।

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ स्वर्गकामादिपदं न कर्तृमात्रपरम्, अपितु नियोज्यपरमिति स्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या क्रियातिरिक्तं प्रमाणान्तरागोचरं अपूर्वमिति तदुपपत्तये नियोज्यपरमिति षष्ठाध्यायस्याद्येऽधिकरणे निरणायि । नियोज्यः स उच्यते यो ममेदं कार्यमिति स्वसम्बन्धितया कार्यमवगच्छति । अतो ममेदं कार्यमिति प्रत्येता नियोज्य इत्यभिधीयते । तथा च शालिकाचार्यः—

'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुद्ध्यते' इति-बोद्धृतयाऽन्वयनियोज्यान्वय इति । अयं प्रकारः लोकेऽपि प्रसिद्धः, पुष्टिकामः क्षीरम् पिबेदित्यादौ पुष्टिकामः क्षीरपानं मया कार्यमिति बोद्धृतयाऽन्वेति ।

तत्र स्वर्गशब्दः सुखविशेषवाचकः यन्न दुःखेन सम्भिन्नम्, इत्याद्यर्थवादप्रसिद्धः । सा च प्रीतिः देहान्तरभोग्या, कामनायोगाच्च तस्य साध्यत्वम् । नहि सिद्धे कामना भवति तेन साध्यस्वर्गविशिष्टो नियोज्यस्तदेव कार्यं बुध्यते, यत् स्वकाम्य-

साधनम्। तत्र कार्यमेव वाक्यार्थे मुख्यविशेष्यमित्युक्तम्। अन्यानि पदानि तदन्वितमर्थं प्रतिपादयन्ति, सर्वपदानाम् कार्यान्विते व्युत्पत्तेः।

पदार्थानामन्वये विशेपकथनम्।

तत्रान्वये परं विशेषः। तथाहि—तत्तत्प्रकरणपठितानां पदार्थानां नाना-प्रकारेणान्वयः। केषाञ्चित् करणतया। यथा यजेत इत्यादौ यागादेः। केषाञ्चिन्नियोज्यतया, स्वर्गकामः पशुकाम इत्यादेः, केषाञ्चिदितिकर्तव्यतया, केषाञ्चिन्नामधेयतया, केषाञ्चिदनुष्ठेयपदार्थस्मारकतया, यथा मन्त्राणाम्। केषाञ्चित् स्तावकतया यथाऽर्थवादानाम्, प्रगीतानां स्तोत्रमन्त्राणां गुणिनिष्ठगुणप्रकाशकतया, अप्रगीतानां शस्त्रमन्त्राणां तथाऽन्वयः। प्रैपमन्त्राणान्तु परप्रत्यायकतया इति यथायोगमन्वयो भवति। अतः कृत्स्नो वेदः कार्यपरतया प्रमाणम्। अयमर्थः 'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र वेदार्थः कार्यरूप इति टीकाकारेण व्याख्यातः। यथा 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरिति कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयती' ( टी॰ पृ॰ २० ) ति। इदमेव कार्यं मानान्तरागोचरत्वादपूर्वमित्यभिधीयते। स्वात्मनि पुरुषम् नियुञ्जानो नियोग इति गीयते।

ग्राहकग्रहणस्वरूपवर्णनम्।

तदेव स्वप्रकरणपठितं पदार्थजातं स्वशेषतया गृह्णन् ग्राहक इत्युच्यते। गृहीतं पदार्थवर्गं श्रुत्यादिभिस्स्वातन्त्र्येण वा द्वारशेषतया विनियुञ्जानः विनियोजक इत्याख्यायते। स्वशेषतया गृहीतं पश्चाद् द्वारशेषतया विनियुक्तमितिकर्तव्यताकलापम्, करणञ्चाऽनुष्ठापयन् प्रयोजक इत्युच्यते। ग्राहकस्यैव ग्राहकत्व-विनियोजकत्व-प्रयोजकत्वावस्थास्तिस्रः क्रमभाविन्यः। ताश्चाधिकारापूर्वस्यैवेति तत्र तत्रास्माभिर्विवेचितम्। प्रयोजकत्वञ्च व्यवस्थितं दृश्यते। यथा काम्यज्योतिष्टोमापूर्वप्रयुक्त्या स्वविषयानुष्ठानसिद्धौ, प्रासंगिकस्य नित्यज्योतिष्टोमापूर्वस्य 'नित्यनैमित्तिकाधिकारापूर्वस्य करणांशे, इतिकर्तव्यांशे च प्रयोजकता। कामाधिकारापूर्वस्य तु करणांशे न प्रयोजकत्वम्, कामनावशादेव प्रवृत्तेः, अपि त्वितिकर्तव्यतांशे इति।

तत्राबान्तरविशेषप्रतिपादनम्।

क्वचिदवान्तरपूर्वस्यापि परमापूर्वाधीनं . प्रयोजकत्वम्। आग्नेयोत्पत्तिपूर्वं प्रति करणत्वेनैवान्वयात्। तस्यैव साक्षात् प्रयोजकत्वे सम्भवति, द्वारद्वारितया प्रयोजकत्वकल्पनं न युक्तम्। 'व्रीहीनवहन्ति, तण्डुलान् पिनष्टी'ति विहितयोरवहनन-पेषणयोः परमापूर्वं न प्रयोजकम्, किन्त्वाग्नेयाद्यपूर्वमेव। इत्थं नियोज्यान्वयवशात् लिङ्गादीनामपूर्वपरत्वमभिहितम्। स चान्वयः प्रयोजकापूर्वस्यैव। अंगप्रधानोत्पत्त्यपूर्वाणाम् तच्छून्यामेवाभिधानं अंगोत्पत्तिनियोगा अपि ग्राहकग्रहीतप्रयाजादिविषयत्वात् अधिकारनियोगत एव लब्धस्वविषयानुष्ठानाः सिद्ध्यन्तीति, न तेषु नियोज्याभिधानम्। तथा प्रधानोत्पत्तिनियोगा अपि अधिकारनियोगाक्षिप्तविषयानुष्ठानेनावाप्तसिद्ध्य इति, न तत्र नियोज्यापेक्षा। यथा-अपूर्वप्रतीतौ नियोज्यः, एवं प्रतीत्यनुबन्धी विषयोऽपि। परन्त्वयम् विशेषः। नियोज्यान्वयः प्रायिकः-यथोक्तम्-नियोज्यान्विताभिधानञ्च प्रायि-

कम्, अध्ययनाधानांगप्रधानोत्पत्तिनियोगानां नियोज्यशून्यानामभिधानाभ्युपगमादि (प्र० पं० पृ० ४३१) ति। विषयान्वयस्तु नियत एव, अधिकारापूर्वप्रधानाङ्गोत्पत्यपूर्वाणां विषयनियतत्वात्। अतः प्रकृत्यर्थभूतो भावार्थ एव विषयत्वेनान्वेतीति।

## प्राभाकरमीमांसकानां शास्त्रार्थान्वयप्रकारस्य सामान्येनोक्तस्य विशिष्य प्रतिपादनम्।

तथाहि—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' ति प्रकृत्य तत्सन्निधौ दर्शपूर्णमासरूपकालयोगि आग्नेयादि यागषट्कं विहितम्। तथा 'समिधः यजति, तनूनपातं यजती'त्यादि आरादुपकारकपदार्थवर्गाश्च समाम्नातः। तत्र दर्शपूर्णमासवाक्यमेव विधिवाक्यमथवा अधिकारवाक्यमिति विध्युद्देशवाक्यमिति चाभिधीयते, भूतिकाम इत्येवमन्तो विध्युद्देश'इति भाष्यात्। तस्मिन्नेव वाक्ये विषय–नियोज्यान्वितं नियोगापरपर्यायम् क्रियातिरेकि कार्यमपूर्वनामकं प्रतीयते, तदेव कृत्युद्देश्यतया कृतिसाध्यत्वेन च प्रधानमधिकारापूर्वम्, इतरेष्वपि वाक्येषु प्रथमं साधिकारविधेः सन्निहितत्वेन प्रत्यभिज्ञायमानत्वात्, तदेवापूर्वं तत्तद्विधिप्रत्ययेनानूद्यते। तत्राग्नेयादियागषट्कस्योत्पत्तिवाक्ये कालसम्बन्धात् दर्शपूर्णमासपदवाच्यत्वम्। दर्शपूर्णमासाभ्यामिति द्विवचनञ्च, 'य एवं विद्वान् पौर्णमासीम् यजते, य एवं विद्वानमावास्यां यजते' इति विद्वद्वाक्यद्वयेन समुदायद्वयस्यानुवादात् समुदायगतं द्वित्वमादायोपपद्यते। एवञ्च विषयनियोज्यघटिते स्वयं प्रयोजनभूतेऽधिकारापूर्वे प्रतिपन्ने सति, तत्सन्निधिपठितस्य आरादुपकारक-सन्निपत्योपकारकपदार्थसमुदायस्य स्वयमप्रयोजनतया प्रयोजनाकाङ्क्षायां सत्यां प्रयोजनीभूतेन परमापूर्वेण अधिकारापूर्वापरपर्यायेण अन्वययोग्यत्वे सति 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति अधिकारवाक्यगतो लिङ्प्रत्ययः युगपत् सकलपदार्थान्वितं स्वार्थमाचष्टे।

## ग्राहकैदमर्थ्यवर्णनम्।

स चाऽन्वयः पदार्थवर्गं प्रतिग्राहकैदमर्थ्यरूपः। लोकेऽपि प्रयोजनप्रयोजनिभावेनाऽन्वयः प्रसिद्ध इति प्रागवोचाम। इदमेव ग्राहकग्रहणमित्युच्यते। अस्यैव नामान्तरमन्विताभिधानवाद इति। तत्र सन्निपत्योपकारकविधायकवाक्येषु विधिप्रत्ययेनाधिकारापूर्वेऽनूदिते सति, अवहननप्रोक्षणादयः तदन्वितं स्वार्थमभिदधतीति, अन्योन्यान्विताभिधानम्। आरादुपकारकांगविधायकवाक्येषु तदन्वितं स्वार्थाभिधानं न भवति। साधिकारविधिसन्निधौ प्रयाजादिवाक्यानि श्रुतानि, तानि च स्वस्वविषयम् नियोगान्तरमभिधातुं नेशते। अधिकारापूर्वस्याऽनुवादशंकाकुण्ठितत्वात्, किन्तु द्रव्यदेवताविशिष्टयागस्वरूपमेवोपपादयन्ति। तत्र लिङ्शब्दः तदन्वितं स्वार्थमभिधत्ते। प्रयाजादीनां क्षणिकत्वेन विनश्वरतया सम्भूयोपकारकत्वसिद्ध्येऽवान्तरापूर्वाण्यङ्गीक्रियन्ते। तत्र योऽसौ लिङादिशब्दः प्रागनूद्यमानार्थतया पूर्वं शंकित आसीत्। स इदानीं परमापूर्वाङ्गतयेव नियोगान्तरमभिधत्ते, अन्यथा विषयनियोगविरोधापत्तेः। अभिहिते च तस्मिन् प्रयाजादिवाक्यानि तदन्वितस्वार्थबोधकानि भवन्ति, न तु परमापूर्वान्वितस्वार्थबोधकानि। एवञ्च ग्राहकग्रहणाविशेषेऽपि सन्निपातिषु अन्योन्यान्विताभिधानमुपपद्यते। आरादुपकारकवाक्येषु नेति इति तन्मतस्थितिः।

### खलेकपोतन्यायेनाङ्गानामन्वयोपपादन ।

इदञ्च ग्राहकग्रहणं खलेकपोतन्यायेन अन्योन्यान्वितैः कृत्स्नपदार्थैः प्रत्ययार्थैश्च सहापर्य्यायेण भवति। एवञ्च सकलपदार्थशेषिणि प्रयोजनभूते ग्राहके प्रतीते सति, तस्य स्वतः साध्यतया करणाकाङ्क्षायां विषयभूतानामेवाग्नेयादीनां करणत्वेनान्वयः। इत्थं करणान्वितो नियोग इतिकर्तव्यतामपेक्षमाणः स्वयमेवोभयविधमपि पदार्थवर्गं करणशेषतया विनियुङ्क्ते। इदमेव प्राभाकरमीमांसकैः करणैदमर्थ्यमित्यभिधीयते। इदञ्च ग्राहकैदमर्थ्यनिर्वाहार्थं भवति। तदनन्तरं करणैदमर्थ्यनिर्वाहाय करणोपकारमपेक्षमाणो नियोग आदौ करणशरीरनिर्वर्तकं सन्निपत्योपकारकपदार्थवर्गं श्रुत्यादिसहितः तत्तद्द्वारशेषतया विनियुङ्क्ते। विनियुञ्जानोऽपि तत्प्रधानापूर्वभेदनिबन्धनः करणभेदमाश्रित्यैव तत्तदुपकारकगतातिशयाधानद्वारेण करणशरीरान्निवर्तकं भवति। तत्त्वञ्च सन्निपातित्वमिति मन्तव्यम्। तत्तत्कारकगतातिशय एवाऽवान्तरव्यापारः किञ्चित्करः।

तथा प्रकरणमात्रसहायः प्रयाजादीन् साक्षात्करणतया विनियुङ्क्ते। विनियुञ्जानोऽपि कृत्स्नकरणशेषतया, अगृह्यमाणविशेषत्वात्। अवान्तरापूर्वाण्येव करणोपकारः, स एव तज्जन्यः करणोपकारः इत्थं करणैदमर्थ्यनिर्वाहः, ग्राहकैदमर्थ्यनिर्वाहश्च भवति। अवान्तरापूर्वकरणोपकारकत्वमेवारादुपकारकत्वमिति तत्त्वम्। अनेन प्रकारेण सन्निपत्योपकारकाणां करणैदमर्थ्यनिर्वाहो भवति। अत एव प्रयाजादीनां समुच्चयेनान्वयः, तन्त्रेणानुष्ठानञ्च। अखण्डोपकारस्तूभयविधांगनिष्पाद्यः। तथा च दण्डचक्रादिन्यायेन प्रधानान्वयपूर्वकः कृत्स्नस्यापि पदार्थवर्गस्य द्वारान्वयः। एवञ्चाग्नेयाग्नीषोमीययोरुत्पत्तिशिष्टपुरोडाशावरोधात् व्रीहीणां न साक्षात्कारणत्वं, किन्तु प्रकृतित्वमेव, 'निरूढं प्रत्यनिरूढस्य शेषता' इति न्यायात्। व्रीहीणां प्रकृतितयाऽन्वये, अवहननादीनां द्वारद्वारिभावेनान्वयः। इत्थं यथाविनियोगं सकलपदार्थान्वितं ग्राहकत्वप्रयोजकत्वावस्थमधिकारापूर्वमेव प्रमेयं विधितत्त्वमिति प्राभाकरमतेन शास्त्रार्थस्य संक्षेपः।

### तन्मतनिराकरणम्।

इदञ्च प्राभाकरमतं तेषां सर्वस्वभूतान्विताभिधानवादं कार्यस्यलिङ्वाच्यत्वञ्चोपपादयदविमृश्यमानसुन्दरमिति ग्रन्थकारो मेने। तस्यायमाशयः। तथाहि—सर्वेषां कार्यपरत्वमिति नोपपद्यते। यतो हि लोके केषाञ्चित् सिद्धार्थपरत्वम्, केषाञ्चिच्च कार्यपरत्वं दृश्यते। लोकवेदाधिकरणन्यायेन लौकिक—वैदिकशब्दानां तदर्थानाञ्चाभेदात्।

'लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः'।

इति न्यायात्। अत एव भवदेवोऽपूर्वाधिकरणे कार्यस्य लिङादिवाच्यत्वं निराकुर्वन्नाह—

'प्रवर्तकत्वे कार्यस्य तथाऽपूर्वस्वरूपके।
विधिशब्दाभिधेयत्वे व्युत्पत्तिविरहस्त्रिधा'॥ तौ. ति. पृ. २३९ इति।

अत्रापि विधिनिर्णये कार्यस्य लिङर्थत्वम्, वाक्यार्थनिर्णये अन्विताभिधानवादः, नित्यकाम्यविवेकप्रकरणे च कश्चन प्रसंगमापाद्य ग्रन्थकारेण विचार्य आलूनविशीर्ण इति, नात्र पुनः पिष्टं पिष्यते।

भाट्टमतेन शास्त्रार्थसंक्षेपः।

अंगनिर्णयस्य पञ्चमपरिच्छेदे आचार्यास्तु शास्त्रप्रमेयमन्यथा प्रतिपादयन्ति भावना वाक्यार्थ इति। सैव सर्ववाक्येषु भाट्टमीमांसकमते कारकविशिष्टरूपेण वाक्यार्थोऽभ्युपगम्यते, न तु तार्किकवत्संसर्गः, 'अर्थैकत्वादेकं वाक्यमि'त्यत्राप्युक्तम् 'भावनैव च वाक्यार्थः स्वकारकविशेषितेति। तदुक्तं तद्भूताधिकरणवार्तिके।

'भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता' ॥ इति च ॥

अस्यायमर्थः—वाक्यार्थः वाक्यप्रयुक्तशाब्दबोधमुख्यविशेष्यम्, आख्यातवत्तया-आख्यातसामान्यप्रतिपाद्यत्वात्। अनेकगुणजात्यादीत्यनेन गुणादीनां प्रकारतया, भावनाया मुख्यविशेष्यत्वेन वाक्यार्थत्वं प्रतिपादयन्ति। भेदः, संसर्गो वा न वाक्यार्थः, अनेकार्थत्वप्रसंगादित्युक्तम्।

तत्रैव भाष्ये 'भेदस्संसर्गो वा वाक्यार्थ इति यद्युच्यते, तथाप्येकार्थता न स्यात्, बहुपदेषु भेदानाम्, संसर्गाणाञ्च बहुत्वात्'। इति। भाष्याभिप्रायविवरणन्तु वार्तिक इत्थं कृतमस्ति। तथाहि—व्यक्तिपदार्थपक्षे सर्वासाम् व्यक्तीनां गवादिपदेनैवोपात्तत्वात्, तद्विशेषशब्दैश्शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं कर्तव्यम्, तत्संसर्गः पदार्थान्तर्गतत्वान्न वाक्यार्थो भवतीति। तदुपसर्जनस्तेषां भेदो गृह्यते, स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वात् भवति। एवं शुक्लशब्दस्य गोशब्देनाश्वादिभ्यः व्यावर्तितस्य भवति, व्यवच्छेद्यमाननानात्वाच्च नास्त्येकवाक्यत्वे प्रमाणम्। भेदसामान्यग्रहणे च सर्ववाक्यार्थैकत्वप्रसंग इति।

आकृतिपदार्थपक्षे दूषणम्।

तथा—आकृतिपदार्थपक्षे शुक्लत्व-गोत्वयोस्स्वरूपेणाऽभिहितयोस्सन्निधानादितरेतरानुरंजनादर्थसिद्धो भेदः, न वाक्यार्थः। स च गोत्वे शुक्लत्वसंसर्गः, शुक्लत्वे च गोत्वसंसर्गः सामस्त्येनैकव्यक्त्युपसंहारादुपलभ्यत इति नाना। यद्यपि च कथञ्चित् द्विपदे स एवोभयत्रापि संसर्गः इत्येकत्वं गम्येत, तथापि बहुपदे येन प्रदेशेन पदद्वयं संसृज्यते, तेन तेन तत्संसर्गरूपोपलब्धेरनेकत्वम्—इति।

सा च भावना सर्वैः पदैः कारकविशिष्टत्वेन लक्ष्यते, तत्रैकैककारकविशिष्टत्वेन तत्तत्कारकपदैः, क्रियापदेन तु सर्वकारकविशिष्टत्वेनेति विशेषः।

सा च भावना द्विविधा शाब्दी, आर्थी चेति—

'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः'॥ ( तं. वा. पृ. २७८ ) इति

### ग्रन्थकारसंमतं भावनास्वरूपम् ।

सेयं वाक्यार्थभूता भावनाऽर्थभावनेत्यभिधीयते, अर्थयत इत्यर्थः-फलकामः पुरुषः, तद्धर्मत्वात् । सा च प्रयत्नरूपैवेति न्यायसुधाकारः खण्डदेवाचार्यश्च मेनाते ।

पार्थसारथिमिश्रस्तु प्रायेण पुरुषधर्मः प्रयोजकव्यापाररूपैवेति भावार्थाधिकरणशास्त्रदीपिकायामाह । सा च किं करोति ? पचति, पाकम् करोतीति च करोतिसामानाधिकरण्यात्सर्वाख्यातवाच्या, करोतिश्च किञ्चिदुत्पाद्यवस्त्वन्तरविषयं प्रयोजकव्यापारमेवाह । तस्याश्च पूर्वापरीभूतं सर्वकारकान्वययोग्यं क्रियारुपमाख्यातेनैवोच्यते, इत्यनन्याख्येयः भावार्थ इति चोभयेऽप्याहुः । सा च चेतनप्रवर्तनात्मकविध्यवरुद्धा पुरूषार्थरूपं साध्यं विना विधिर्नोपपद्यते, अतः पुरूषार्थरूपं सा भाव्यमलभवमाना तस्यानिर्ज्ञातकरणत्वात्, अनिर्ज्ञातेतिकर्तव्यताकत्वाच्च स्वयम् शास्त्रीयं सत् शास्त्रीय एव करणेतिकर्तव्यते परिगृह्णाति । एतामेव भावनाम् साक्षाद्विषयीकुरुतो विधि-प्रतिषेधौ, तद्द्वारा तु तद्विशेषणानि कारकाणि ।

यथोक्तं वाक्याधिकरणवार्तिके—

'विशिष्टां भावनां प्राप्य वृत्तिर्विधि-निषेधयोः' ।

### विधि-भावनयोस्सम्बन्धनिरूपणम् ।

विधिर्भावनायां पुरुषं विनियुङ्क्ते, व्यापारे पुरुषः कर्तृत्वेन नियोज्यत इति । यद्यपि विधिरन्यैरसंस्पृष्टो शुद्धां भावनां स्पृशति । तथापि शुद्धायाः भावनाया विधातुमशक्यत्वेन न तन्मात्रे विश्राम्यति । यथा-आकाङ्क्षा सम्वन्धकारणम्, एवं योग्यताऽपि, न चांशत्रयपरिपूर्णाऽऽर्थीभावना चेतनप्रवर्तनात्मकविध्यन्वययोग्या भवितुमर्हति, तस्याः प्रत्यासन्नत्वात्, भावनयोरन्वयेन भवितव्यमिति सामान्यतः सम्बन्धः प्रतीयते । इयञ्चावस्था विधिसंस्पर्शः, विधिप्रक्रम इति च ग्रन्थकृतां शास्त्रे व्यवहारः ।

एवञ्च—एकप्रत्ययोपात्तत्वेन विधि-भावनयोरन्वयावगमेऽपि विधिरयोग्यत्वात् भावनां विधातुं न शक्नोति । साध्यत्व-साधनत्व-इतिकर्तव्यतारूपांशत्रयविशिष्टा (किं केन कथमिति) यावन्न भवति तावत् प्रयोगयोग्या न भवति । यथा लोके परिणीतबालात्मको वरस्तावद्विलम्बमानः प्रसारितहस्त आस्ते, यावद् सर्वाङ्गसुन्दरीव प्रयोगयोग्या भावना भवति । एतस्यार्थस्योपबृंहणानि एतद्वार्तिकानि—

'विधि-भावनयोस्त्वेकप्रत्ययग्राह्यताकृतः ।
धात्वर्थात्प्रथमं तावत् सम्वन्धोऽध्यवसीयते' ॥ इति ।

तथा—

'यद्यप्यन्यैरसंस्पृष्टां विधिस्स्पृशति भावनाम् ।
तथाप्यशक्तितो नासौ तन्मात्रे पर्यवस्यति ॥
अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः ।
अंशत्रयेण चाऽपूर्णा नानुतिष्ठति भावनाम् ॥
तस्मात् प्रक्रान्तरूपोऽपि विधिस्तस्मात् प्रतीक्ष्यते ।
यावद् योग्यत्वमापन्ना भावनाऽन्यानपेक्षिणी' ॥

(श्लो. वा. पृ. ५२१) इति च

वाक्यार्थस्य निगमनम् ।

सा हि भावना वाक्यान्तरोपात्तमपि प्रकरणाधीतं प्राच्योदीच्याङ्गजातमपेक्षते । प्रकृतिवद्भावलभ्यमपि याचते, अर्थसामर्थ्यगम्यमपि स्पृहयतीति अनन्तप्रकार एव उपदेशातिदेशात्मकस्य शब्दप्रमाणस्य महिमा । अयमेव वाक्यार्थ एकयैव बुद्ध्या अनेकजातिगुणद्रव्यक्रियाद्यङ्गकल्माषितशरीरः सकलाङ्गपरिपूरितभावनातत्त्वविषयः प्रतिभासते । तत्र पदज्ञानात् प्रभृति, आ निराकाङ्क्षवाक्यार्थपरिच्छेदं एकैवेयं शाब्दी-प्रमितिः—इति ।

मण्डनाचार्योपज्ञस्य ग्रन्थकृदभिमतविध्यर्थस्य सिंहावलोकनन्यायेन दिग्दर्शनम्, तस्या आख्यातवाच्यत्वम् ।

इयमेवार्थीभावना पुरुषप्रवृत्तिरित्यादिशब्दैरभिलप्यते, सा सर्वाख्यातवाच्या । अभिधाभावनाशब्द-भावना, तस्य व्युत्पत्तिः ग्रन्थकृता त्रिधा दर्शिता विधिनिर्णये, तत्स्वरूपं तत एवावगन्तव्यम् । तत्राचार्यमते प्रवर्तनाविध्यर्थः । अयं भावः—प्रवृत्तिर्द्विधा स्वेच्छाधीना, परप्रेरणाजन्या चेति । परप्रेरणोत्तरं जायमानायाः प्रवृत्तेः प्रवर्तनैव कारणं तच्चेष्टसाधनताज्ञानानुमानद्वारा, इष्टसाधनताज्ञानस्याऽन्यलभ्यत्वान्न शब्दार्थत्वम्, अनन्यलभ्यः शब्दार्थ इति न्यायात् । आचार्यमण्डनमिश्र उभयविधायामपि प्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वं अन्वय-व्यतिरेकसिद्धमिति, तदेव विध्यर्थः । तत्रापि कर्तु-रिष्टसाधनत्वमिति मेने ।

तथा च तदीयकारिका—

'पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः' । इति

मीमांसकाग्रणीरयं प्रवर्तनाविध्यर्थ इति पक्षमङ्गीकुर्वन् इष्टसाधनत्वेन प्रवर्तना इति पक्षं समर्थयामास । अतो ग्रन्थकारमते इष्टसाधनत्वेन प्रवर्तना विध्यर्थः । इदमेव विधितत्त्वमिति विधिनिर्णयप्रतिपाद्यनिरूपणावसरे प्राचीकशम् ।

अत्रेदं तत्त्वम्—विध्यवरुद्धा भावना वाक्यार्थः, सैव शास्त्रप्रमेयमिति । लिङा-दीनां भावना विधिश्चेत्युभयमप्यर्थः । तत्राऽर्थभावना प्रवृत्तिरूपा, विधिस्तु पूर्वोक्ता शब्दभावना प्रवर्तनात्मिका । तयोरेकेन प्रत्ययेनोपादानात् प्रथमसन्वयः, स च सम्बन्धः भाव्यभावकभावेन परितिष्ठति । विध्यन्वयबलात् भावनाया इष्टसाधनत्वं नान्तरीयकम् । तथा च भावनायाः स्वतोऽभिलषितं भाव्यं फलमेवावतिष्ठते ।

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' समानपदश्रुत्योपादानात् सन्निहितमपि धात्वर्थं न साध्यत्वेन गृह्णाति, कष्टं कर्मेति न्यायात् । अपि तु धात्वर्थमतिलङ्घ्य पदान्त-रोपात्तं स्वर्गमेव भाव्यत्वेन गृह्णाति, कामपदसमभिव्याहारात् । ततः फलान्विता भावना फलसिद्ध्यर्थं करणमाकाङ्क्षति । तथा च धात्वर्थः करणत्वेन सम्बध्यते भावार्थाधिकरणन्यायेन । तस्य च क्षणिकस्य देवतोद्देशेन द्रव्यत्यागरूपस्य कालान्तर-भाविस्वर्गसाधनत्वं न सम्भवति । अतस्तदुपपत्तयेऽपूर्वं कल्प्यते, तच्च कल्प्यमानं वस्तु यागस्य शक्तिः, अवान्तरव्यापारो वा । यथोक्तमाचार्येण—

'कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा।
योग्यता शास्त्रजन्या या सा परापूर्वमिष्यते'॥ इति।

अत्र श्रुतार्थापत्त्याऽपूर्वं कल्प्यते। शब्दाच्च। अत एवोक्तं भाष्यकृता भावार्थाधिकरणे 'यागेनापूर्वं कृत्वा स्वर्गं भावयेदि'ति। अत एव भाट्टमीमांसकाः कल्प्यापूर्ववादिन इति गीयन्ते। प्राभाकरमीमांसकास्तु वाच्यापूर्ववादिन इति तु पर्वतवदकम्प्यं महदन्तरमनयोः प्रस्थानयोरस्मिन् विषये।

ततश्च साध्य-करणान्विता भावना कथमनेन फलं कुर्यादितीतिकर्तव्यतामपेक्षमाणाऽवतिष्ठते, एवं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति अधिकारवाक्ये प्रधानभावनायामाकाङ्क्षात्रयवत्यां 'यदाग्नेयोष्टाकपालोऽमावस्यायां पौर्णमास्याञ्चाच्युतो भवति, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रम् पयोऽमावास्यायाम्। अग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्। उपांशुयाजमन्तरा यजति' इति तत्सन्निधौ पठितेषु वाक्येषु द्रव्यदेवतासम्बन्धस्य तद्धितेनावगतस्य प्रमाणान्तरानवगततया विधिप्रत्यये कल्पिते एवं वाक्यार्थः सम्पद्यते—एतत्कालिकैर्यागैः किञ्चित् श्रेयो भावयेदिति। एताश्चावान्तरभावना किन्तच्छ्रेयः, यत्साध्यमिति आकाङ्क्षमाणा एवावतिष्ठन्ते। तत्सन्निधौ 'व्रीहिभिर्यजेत' इत्यादीनि वाक्यानि व्रीह्यादिविशिष्टेन यागेन किञ्चिद्भावयेदिति भाव्यविशेषं काङ्क्षमाणास्तिष्ठन्ति। यानि च 'समिधो यजति' इत्यादीनि वाक्यानि तेष्वपि समिदादिनामकैर्यागैः किञ्चित् फलं भावयेदिति ताश्चावान्तरभावनाः फलविशेषमपेक्षमाणाः अवतिष्ठन्त इति वस्तुस्थितिः। एवं परस्परं नष्टाश्व-दग्धरथन्यायेनाकांक्षावशेनोऽभयाकाङ्क्षालक्षणेन प्रकरणेनैकवाक्यतायाम्, अधिकारवाक्येन एकवाक्यं भवति तत्राग्नेयादिषड्भिर्यागैर्दर्शपूर्णमासनामकैः प्रयाजादिभिरुपकृतैर्फलं भावयेदिति। एवं सर्वेषामंगवाक्यानां प्रधानवाक्यानाञ्च परस्परमेकवाक्यता। एवञ्च प्रधानाङ्गवाक्यानामन्योन्यान्वयेनैकवाक्यतायां तत्तदङ्गैरुपकृतेन दर्शपूर्णमासशब्दवाच्येन फलं स्वर्गं भावयेदिति महावाक्यार्थः सम्पद्यते। तत्र प्रथमं प्रधानवाक्ये भावनायां प्रवर्तनैकरसविध्यन्वये प्रतीतेऽपि श्रुत्यादिभिर्योग्यांशत्रयान्वयेनानुष्ठानयोग्या भवति। इयमवस्था विधिप्रक्रम इति प्रागवोचाम। तथा च योग्यतया वाक्येन समभिव्याहारलक्षणेन फलान्वयः, समानपदश्रुत्या भावार्थाधिकरणन्यायेन धात्वर्थस्य करणत्वेनाऽन्वयः। यथायोग्यमङ्गताबोधकप्रमाणसहकृतेन विनियोगविधिनेतिकर्तव्यतान्वयः। तत्राराडुपकारकाङ्गवाक्येषु विध्यन्वितायाः प्रयाजादिभावनायाः प्रकरणेन साक्षात् प्रधानभावनैव भाव्यतयाऽन्वेति। सन्निपत्योपकारकेषु प्रकरणसहितैः श्रुत्यादिभिः प्रधानसम्बन्धिनामेव व्रीह्यादीनां साध्यत्वेनान्वयः। उभयत्रापि समानपदश्रुत्या धात्वर्थस्यैव करणत्वेनान्वयः। अत्र सर्वत्र भावनान्वितस्य विधेस्तत्तदंशान्वयस्तु भावनाद्वारकमेवेति मन्तव्यम्। तत्र साध्यांशस्य साक्षात्परम्परया वा अभिलषितत्वेन स्वयमेव तत्र रागात्प्रवृत्तेः न तत्र विधिव्यापारः समस्ति। यथोक्तम्—भाष्ये—जानात्येवासौ मयेतत् कर्तव्यं इति, उपायन्तु न वेद' इति।

'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा' इति च वार्तिकम्।

अतः करणेतिकर्तव्यतांशयोरेव भावनाद्वारा विधिव्यापारः पर्यवस्यति तत्र।

### विधेरवस्थाचतुष्टयनिरूपणम् ।

स च विधिः—उत्पत्ति-विनियोग-प्रयोगाधिकारभेदाच्चतस्रोऽवस्थाः अनुभवति । अयमर्थः—सूत्र-भाष्य-वार्तिक-विधिविवेकादिमहानिबन्धेषु विस्तरेण चोत्पत्यादिचतुर्विध-प्रमेयोपन्यासेन द्वितीयादिषष्ठपर्यन्तस्याध्यायगणस्य प्रतिपाद्योऽर्थस्संकलितः । अत्रापि ग्रन्थशरीरे पार्थसारथिमिश्रेण सोपपत्तिकं सम्यक् कणेहत्य विवेचितम् ।

### अस्यैव प्रकारस्य तदनन्तरकालिकेषु ग्रन्थेष्वनुसरणमिति वर्णनम् ।

अस्यैव विधिचतुष्टयप्रकारनिरूपणस्य न्यायरत्नमालायां फलितस्य शास्त्रदीपिका-मयूखमालिका-न्यायप्रकाशार्थसंग्रह-कुतूहलवृत्तिपर्यन्तेषु ग्रन्थेषु समादरः, समर्थनञ्च दरीदृश्यते ।

### स्वरूपैक्येऽपि प्रमेयभेदेन भेदप्रतिपादनम् ।

अत्रेदमवधेयम्—अप्रवृत्तप्रवर्तनैकरसः विधिरिति विधेस्स्वरूपमेकमेव । परन्त्वस्य प्रमेयमुत्पत्त्यादि चतुर्विधम् । अप्रवृत्तप्रवर्तकस्वरूपस्य विधेर्यदा तत्सिद्ध्यर्थं कर्मस्व-रूपपरत्वं भवति, तदा विध्यन्वयप्रतीतिवशादेव तद्विशेषस्य धात्वर्थस्य यागादिकर्मणः प्रमाणान्तराप्राप्तिकथनेनोत्पादकत्वं सिद्ध्यति । अयमेवोत्पत्तिविधिः । अत एव न्याय-प्रकाशादौ कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिरिति तल्लक्षणमुक्तम् । तस्याय-माशयः—अत्र मात्रशब्दो भिन्नक्रमः । कर्मस्वरूपबोधकतामात्रमुत्पत्तिविधिरित्यर्थः । बोधस्यानन्यसाध्यस्यैव फलत्वसम्भवादज्ञातबोधकत्वमिति लभ्यते । एवञ्च प्रमाणा-न्तरेण ( प्रत्यक्षानुमानाभ्याम् ) अज्ञातार्थज्ञापकत्वमुत्पत्तिविधेर्लक्षणं पर्यवस्यति ।

तद्वशेन तद्विषयस्य धात्वर्थस्य यागादेः कर्मणः स्वर्गादिफलसाधनत्वम्, फलव-दुपकारकत्वं वा कल्प्यत इति विनियोजकत्वसिद्धिः ।

फलसाधने कर्मणि पुरुषस्याधिकारः फलस्वाम्यञ्च सिद्ध्यतीति, अधिकारोऽपि विधिप्रमेयमेव, स्वरूपेण प्रयोजकत्वमिति युक्तमेव प्रमेयचातुर्विध्याद्विधेश्चातुर्विध्यम् । यथोक्तं ग्रन्थकृता विधिशब्दो हि प्रवर्तनैकरसं विध्यात्मानमभिदधानस्तदन्वयानुपपत्त्यैव प्रमेयचतुष्टयं कल्पयती'ति ।

### प्रसङ्गाद्भाट्टालंकारमतपरीक्षणम् ।

न्यायप्रकाशे—'विधिश्चतुर्विधः' इति मूलस्य व्याख्याने भाट्टालङ्कारे 'उत्पत्ति—विनियोग—अधिकार—प्रयोगभेदादि'ति प्रतीकमादाय सोपपत्तिकम्, सोदाहरणञ्च व्याख्यातं दृश्यते । तथा हि 'प्रयोगे'ति । यद्यप्याकरे चतुर्थपञ्चमाभ्यां प्रयोगविधिं निरूप्य, षष्ठेऽधिकारनिरूपणमस्तीति प्रयोगविधेर्निरूपणं पूर्वमुचितम्, तथाऽप्यधि-कारिणं प्रति साङ्गप्रधानप्रयुक्तः प्रयोगो विधिना कर्तुं शक्यत्वात् अधिकारनिरूपणानन्तरं तद्व्यापारनिरूपणमुचितमित्याशयेनेदम् । एवञ्चाकरेऽपि प्रकृति-विकृतिसम्बन्धिविधि-निरूपणान्ते प्रयोगविधिव्यापारनिरूपणपरेकादश-द्वादशाभ्यां प्रयोज्यपरिमाणनिरूपण-त्वादधिकारिनिरूपणात् प्राक् प्रयोज्यनिरूपणन्तु नाक्षेपायेति बोध्यम् (पृ० ९१ भाट्टालं.)

## उक्तस्यार्थस्यैव विवरणम् ।

प्रकृतमनुसरामः—तत्र प्रवर्तनैकस्वभावत्वात् विधेः प्रयोजकत्वं सम्भावितम् । आद्यास्तु तिस्रोऽवस्था तदन्यथानुपपत्त्या तत्सिद्ध्यर्था भवन्ति ।

विधिः प्रतीतस्सन् प्रथमं स्वस्य प्रवर्तकत्वसिद्ध्यर्थं श्रुत्यादिभिर्भावनाविशेषणतया प्रतिपन्नानां धात्वर्थयागादीनां प्रमाणान्तरेणाप्राप्तिं कल्पयति । प्रमाणान्तरप्राप्ते प्रवर्तकत्वन्तु न सम्भवति । द्रव्यादीनान्तु क्रियाकारकभावस्यान्वय-व्यतिरेकसिद्धत्वात् नियमांशेऽप्राप्तिं कल्पयति, एवं गुणादिष्वपि । एवमवहननादिक्रियास्वपि नियमकल्पनं बोध्यम् । इमामेवावस्थामादायोत्पत्तिविधिरिति व्यवह्रियते मीमांसकैः । अस्य च शब्दान्तरादयः सहायका भवन्ति ।

प्रकरणपठितेषु साधनेष्वङ्गेषु पुरुषस्य प्रवर्तयितुमशक्यत्वेन तत्साधनता कल्प्यते । तदा विनियोगविधिरित्युच्यते । विनियोगो नामांगाङ्गिभावरूपस्सम्बन्धः । समीहितमङ्गि भवति, तत्साधनमङ्गम् । तत्र फलभावनायाः साक्षात्फलसाधनतया सम्बन्धात्, इतरेषाम्—करणेतिकर्तव्यतादीनां परम्परया । तत्र विनियोगविधिः प्रमाणम्, तत्र श्रुत्यादयः सहायाः । श्रुत्यादिसहितो विधिरेव विनियोगविधिरुच्यते । अयञ्च विषयो द्वितीयपरिच्छेदे विवृतपूर्वः ।

यदा फलसाधनबलेनेदमनुष्ठेयमिति बुद्धिर्जायते, तदा त्वधिकारविधिरिति व्यवह्रियते । विध्यधीना ह्यनुष्ठेयबुद्धिः । यदाऽनुष्ठापयति, तदा प्रयोगविधिरिति । अस्य चार्थवादजन्यं प्राशस्त्यज्ञानम्, मन्त्रावगतपदार्थस्मरणम्, श्रुत्यादिक्रमश्च सहायः । एवञ्च सर्वेषामेव विधीनां प्रवर्तनैकरसतया स्वत एवावस्थाचतुष्टयकल्पनाशक्तावपि यत्प्रमाणान्तराप्राप्तम्, तदेव विधीयत इति । तत्र क्वचिदेकस्य, क्वचिद् द्वयोः, क्वचित्त्रयाणाम्, क्वचिच्चतुष्टयस्येति परमगहनो विधेर्महिमा ।

तथा च विधिविवेकसन्दर्भः—सर्वत्रापि प्रतीयमाने अस्मिंश्चतुष्टये ऐदम्पर्यं भिद्यते, तच्चैदम्पर्यं प्राप्त्युपपदाविशेषसम्बन्धात् । क्वचिच्चतुष्टयपरता, यथा उद्भिदा यजेतेति, अन्यतः कस्यचिदलाभात्, फलपदसम्बन्धात्, क्वचित् त्रिपरता, यथा ज्योतिष्टोमवाक्ये, उत्पत्तेरन्यतो लाभात् । क्वचित् द्विपरता, यथा दर्शपूर्णमासवाक्ये, उत्पत्तिप्रयोगयोरन्यतः सिद्धेः क्वचिदेकपरता, यथाऽग्निहोत्रं जुहोति, पौर्णमास्यां पौर्णमास्या यजेतेति, इतरे त्वंशा प्रतीता अप्यविवक्षिताः 'वि.वि. पृ. ३७७–३८० इति । अस्य विस्तरः न्यायकणिकायां द्रष्टव्यः । अमुमर्थं न्यायरत्नमालाकारः वर्णयांबभूव ।

यथोक्तं ग्रन्थकृता—

'चतुष्टयेऽपि चैतस्मिन् क्वचित् किञ्चित् विवक्षितम् ।
क्वचिदेकं द्विकं वापि त्रिकं वापि चतुष्टयम्' ॥ इति ॥

एवञ्चोपर्युक्तदिशा किं केन कथमित्यंशत्रयान्वितायां भावनायां तस्यानुष्ठानयोग्यतया तत्र विधिः पुरुषं प्रवर्तयतीति प्रथमप्रतीतो विधिभावनयोरन्वयस्तदा पर्यवस्यति । इयमेवावस्था विधिपर्यवसायिनीति ग्रन्थकृता कथिता ।

## प्रकृतावन्वयक्रमः ।

अत्र प्रथमं भावनाया विधेयत्वं भवति, तद्द्वारा यागादिक्रियायाः । तद्द्वारा व्रीह्यादीनां द्रव्याणां विधेयता । एवञ्च प्रधानविधिः करणम्, अङ्गानि च फलसिद्धिपर्यन्तमनुष्ठापयति । तथा फलगोचरविध्याक्रान्ता फलभावनाख्या साक्षात् फलमुत्पादयितुमनीशानांऽङ्गेष्ववतरन्तो तन्निष्पादयति । एवं प्रकृतावन्वयक्रमो बोध्यः ।

## विकृतावन्वयक्रमः ।

विकृतौ त्वयं विशेषः—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यादिविकृतिषु साध्यसाधनान्वितायां विकृतिभावनायां ज्ञातायां कथमनेन फलम् भावयेदिति करणोपकाररूपेतिकर्तव्यताकाङ्क्षायां प्रत्यक्षवचन—नामधेयचोदनालिङ्गैरतिदेशप्रमाणैः प्रथमं प्राकृत उपकारः, ततस्तज्जनकानाम् पदार्थानां वैकृतभावनाशेषत्वम् । प्रकृतावङ्गविधिभिः प्रकृतिभावनाशेषत्वं प्रतीयते । विनियोगस्य विधिप्रमाणकत्वात् प्रधानविधेरेव प्राकृतनामङ्गानां वैकृतभावनाशेषत्वेन विनियोगः ।

अयञ्चापरो विशेषः प्रकृतावङ्ग-प्रधानयोः परस्पराकाङ्क्षालक्षणेनान्वयः, विकृतौ त्वङ्गानां प्राकृतभावना-सम्बन्धेनैव निराकाङ्क्षतया प्रधानाकाङ्क्षावशादेवाङ्गान्वयः, उपदिष्टेष्वङ्गेषु प्रधानस्यान्यतराकाङ्क्षया सम्बन्धः । न प्रकरणादिति ।

## कृत्स्नशास्त्रार्थसंक्षेपस्योपसंहारः ।

एवञ्च प्रकृतावितिकर्तव्यताकाङ्क्षायां श्रुतैरङ्गैः प्रथमं शेष-शेषिभावेनान्वये सति, तत्रैव पश्चादुपकारकल्पनमिति ।

विकृतौ तु पदार्थानामुपस्थापकशब्दाभावादाकाङ्क्षानुरोधेन प्रथममुपकारस्यान्वयः । ततस्तज्जनकीभूतानां पदार्थानाम् । अत एव विकृतावुपकारपूर्वकं पदार्थानामतिदेशः । प्रकृतौ तु पूर्वं पदार्थसम्बन्धः, तदनन्तरमुपकारकल्पनमिति । यथोक्तं मिश्रैः—

'पदार्थपूर्वक एव प्रकृतावुपकारः' इति तन्त्रज्ञाः' ( र. १५६ ) इति । एवं प्रकृतिभावनां षड्विधेनोपदेशेनांशत्रयान्वय सति विकृतिभावनाया भाव्यकरणांशयोरन्वये श्रुत्यादिभिरुपदिष्टैरेभिः सर्वाङ्गविशिष्टास्तास्ता भावनाः । प्राकृतो वैकृतश्चविधिः श्रुत्यादिप्रमाणषट्कक्रमेण देश-काल-कर्तृभेदेऽङ्गानामावृत्त्या स्वर्गादिफलकामिनं पुरुषमनुष्ठापयति । तस्मात्प्रेरणा लिङादिप्रत्ययवाच्या विध्यर्थोऽनुष्ठापकतया कृत्स्नशास्त्रप्रमेयमिति ।

अत्रेदं पद्यमनुसन्धेयम् ।

'आम्नायान्तिमसीमनि स्फुरति यस्सद्भावनागोचरः
स्वे स्वे कर्मणि यः प्रशास्ति पुरुषं योग्याधिकारक्रमात् ॥
आधत्ते विविधोपकारमखिलैरंगैरशेषांगिनाम्
साक्षाद्विष्णुरिवैधते विधिरयं नानावताराश्रयः' ॥ इति ।



द्रव्यत्यागाद्धुतवहमुखक्षेपणाच्चातिशस्ता
निष्प्रत्यहं विधिपरिचिता भावनेयं चकास्ति।
यस्यास्संगादतिशयफलप्रापि यागादि जातं
तामद्याहं मुररिपुपदद्वंद्वपद्मेऽर्पयामि ।। इति।



## न्यायरत्नमालायामसकृत्प्रयुक्तस्यान्योन्याश्रय-चक्रकादेस्स्वरूपवर्णनम्।

न्यायशास्त्रे—आत्माश्रयः, अन्योन्याश्रयः चक्रकम्, व्याघातः, अनवस्था प्रतिबन्दी चेति दोषषट्कं कीर्त्यते, स्वरूपञ्चैषां वर्णितमस्ति। स्वस्य स्वाव्यवहितस्वग्रहसापेक्ष-ग्रहकत्वमात्माश्रयत्वम्। अन्योन्याश्रयेऽतिप्रसक्तिवारणायाऽव्यवहितेति विवक्षितम। स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वमन्योन्याश्रः। यथा महिषभिन्नत्वं गोत्वम्, गोत्वभिन्नत्वञ्च महिषत्वमिति लक्षणे गोत्वज्ञानाय महिषत्वज्ञानापेक्षा महिषत्वज्ञानाय गोत्वज्ञानापेक्षा अत्रान्योन्यस्याव्यवहितान्योन्यापेक्षितत्वम्, स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रह-विषयत्वम् चक्रकस्य लक्षणम्।

अप्रमाणिकानन्तोपपाद्योपपादकप्रवाहोऽनवधिरनवस्था अत एवाभियुक्ताः कथयन्ति 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणमि'ति। सा द्विविधाऽधोधावन्ती, 'ऊर्ध्वं धावन्ती चेति। तत्राधोधावन्ती यथा-घटजनने कपालापेक्षा कपालजनने कापालिकायाः कापालिकाजनने च तदवयवानामपेक्षा, एवमेव तत्र तत्रेति भेदः। आद्येऽपि ऊर्ध्वं धावन्ती यथा किं भिन्ने वा धर्मिणि वर्तते, अथवाऽभिन्ने वेति द्वेधा विकल्पः 'केन भेदेन भिन्ने कस्य भेदस्यावस्थितिरिति प्रश्ने द्वितीयभेदभिन्ने धर्मिणि प्रथमस्य, तृतीयभेदभिन्ने द्वितीयस्य, चतुर्थभेदभिन्ने तृतीयस्य, एवं तत्रापीत्यंगीकारे बोध्यम्।

व्याघातः विरुद्धार्थवाक्यत्वम्, परस्परविरुद्धधर्मयोरेकाधिकरणे समुच्चयः। यथा यावज्जीवमहं मौनी, ब्रह्मचारी च मे पिता माता तु मम बन्ध्याऽऽसीदपुत्रश्च पितामह इति। प्रतिबन्दी—अनिष्टान्तरप्रसञ्जकं वाक्यम्। यथा यदि पुरुषत्वादहं चोरः, तदा त्वमपि चोरः स्या इत्यापादनम्।

## लक्षणा—वाक्यभेदादीनां निरूपणम्।

अस्मिन् शास्त्रे तत्र तत्र लक्षणा स्यात्, वाक्यभेदस्स्यात्, अनर्थकमिदं वाक्य-मापद्येतेति ग्रन्थकृतां व्यवहारो दृश्यते, तदुपोद्बलकं वार्तिकं दृश्यते, श्रूयमाणस्येत्यादि। एवमेव सर्वज्ञकल्पो भगवानाम्नायो लक्षणया गौण्या, वाक्यभेदेन वा यदि कञ्चनार्थं प्रतिपादयेत्, को नु तं प्रतिकूलयेदिति च, एवं सति कथमेवंविधव्यवहाराणां सामञ्जस्य-मुपपादनीयमिति शंका समुन्मिषति।

तस्येदं समाधानम्-श्रूयमाणस्य वाक्यस्य विवक्षितार्थापेक्षया न्यूनत्वस्वीकारे कचित् लक्षणा भवति, क्वचिद्वाक्यभेदो भवति। यथा'वाजपेयेनेष्ट्वा बृहस्पतिस-वेने'ति। अत्र विवक्षितोऽर्थ उत्तरकालविशिष्टबृहस्पतिसवान्तरांगकत्वं वाजपेयस्य, तदपेक्षया न्यूनोऽर्थः प्रसिद्धस्यैव बृहस्पतिसवस्य वाजपेयोत्तरत्वम्। तदुररीकरणे

न

वाजपेयशब्दे उत्तरकाललक्षणा। वाक्यभेदस्योदाहरणम्-श्रूयमाणस्य वाक्यस्य विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे विद्वद्वाक्यविहितयोर्द्रव्यदेवते एव विधीयेते, न यागविधिरिति आग्नेयवाक्ये तदुररीकारे प्राप्तोद्देशेनानेकविधाने वाक्यभेदस्स्यादिति।

उदाहरणं यथा-'यदाग्नेयोऽष्टाकपाल अमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इति। अत्र श्रूयमाणोऽर्थः अग्निदेवता पुरोडाशद्रव्यकामावास्यापौर्णमास्यन्यतरकालविशिष्टयागविधिः। तदपेक्षया न्यूनोऽर्थः पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मानुवादेनोपर्युद्धृतेन यदाग्नयादिवाक्येन गुणविधिरिति द्वितीयपूर्वपक्षे शंकिते। विवक्षितार्थापेक्षया आधिक्याभ्युपगमे आदिशब्दोक्तमानर्थक्यम्। उदाहरणम्। 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इत्यामनहोमविधिः। अत्र 'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः (तै. सं. २-२-१०) इति प्रधानविधिवाक्यगतं ग्रामकामपदमनुषज्य विवक्षितार्थापेक्षयाऽऽमनहोमविधेराधिक्यस्वीकारे ग्रामकामपदानुषंगानर्थक्यमिति विवेकः।

## तस्यैव प्रकारान्तरेण व्याख्यानम्।

अथवा न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणा क्वचित्, क्वचिद्वाक्यभेदः, क्वचिच्च गौणत्वदोषः। क्वचिदध्याहारदोषः। क्रमेणोदाहरणानि। तत्राद्यस्योदाहरणम् यथा-'सोमेन यजेत' इति। अत्र मत्वर्थलक्षणा प्रसिद्धा। वाक्यभेदस्योदाहरणम्। यथा-'सौर्यञ्चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। अत्र स्वर्गकामपदाध्याहारं प्रयुक्तिलक्षणे विश्वजिन्न्यायेन शंकितं निराकर्तुमभिहितं ब्रह्मवर्चसस्यान्वाचयत्वे प्रमाणाभावात् ब्रह्मवर्चसमात्रं फलत्वेन न्यूनस्य स्वर्गकल्पनयाऽधिकार्थत्वे फलद्वयसमावेशाद्वाक्यभेदापत्तिरिति।

एवम्—न्यूनस्याधिकार्थत्वकल्पने गौणीकल्पनेव दोषः। यथा-'सृष्टीरुपदधाति' इति। अत्र हि सृष्टिशब्देन सृष्टिशब्दवन्त एव मन्त्राः अभिधीयन्त इति। न्यूनस्य गौण्याऽसृष्टिशब्दवतामपि मन्त्राणां ग्रहणेनाधिकार्थत्वे गौणत्वमेव दोषः। सतु गत्यन्तराभावादभ्युपगम्यते। एवं न्यूनस्याधिकार्थविषयत्वे अध्याहारदोषस्योदाहरणम्। यथा-विश्वजिता यजेत' इति। अत्र विध्युपपत्तये स्वर्गकामपदाध्याहारः। अयमप्यगत्या स्वीक्रियते।

अथवा न्यूनत्त्वे अधिकस्य सतः क्वचित् लक्षणा, कचित् वाक्यभेदः, अन्यथात्वकल्पने क्वचिद्विपरिणामः, क्वचित् व्यवहितकल्पना, क्वचित् व्यवधारणकल्पना।

तत्राद्यस्योदाहरणम्। यथा 'चतुरवत्तं जुहोती'ति, अत्र जुहोतिर्देवतोद्देशत्यागविशिष्टप्रक्षेपवाचकस्य प्रक्षेपमात्रत्वे च न्यूनत्वे लक्षणा, आग्नेयादिचोदनयैवोद्देशांश-त्यागांशयोः प्राप्तत्वात्।

द्वितीयस्योदाहरणम्। यथा—'वषट्कर्तुः प्रथमभक्षः' इति। अत्र भक्षानुवादेन प्राथम्यमात्रविधभक्षानुवादः, प्राथम्यं विधेयम्, उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात्, एकपदे उभयासंभवात् वाक्यभेदस्स्यात्। अतस्तत्परिहाराय प्राथम्यविशिष्टभक्षणविधानमिति सिद्धान्तः। अन्यथात्वकल्पने विपरिणामस्योदाहरणम्। अन्यथात्वकल्पने

व्यवहितकल्पनाया उदाहरणम् । यथा—'प्रतितिष्ठन्ति ह वा ये एता रात्रीरुपयन्ती'ति । अत्र ये प्रतितिष्ठासन्ति, ते रात्रीरुतेयुः इत्यन्यथात्वे कल्पिते य इत्यस्य रात्रिसमभिव्याहृतस्य ये प्रतितिष्ठासन्तीति व्यवहितकल्पना । अन्यथात्वकल्पने व्यवधारणकल्पनाया उदाहरणम् । यथा—'यावतोऽश्वान् प्रतिगृह्णीयात्, तावतो वारुणांश्चतुष्कपालान्निर्वपेदि'ति । प्रतिग्राहयेदिति दातुरिष्टिरिति स्थितिः । एतत्सर्वं श्रूयमाणवाक्य एव, न तु कल्पिते वाक्ये इति विशेषः । तथा च चित्राधिकरणवार्तिकम्—

'श्रूयमाणस्य वाक्यस्य न्यूनाधिक्यविकल्पने ।
लक्षणावाक्यभेदादिदोषो नानुमिते ह्यसौ ॥' (तं. वा. पृ. ३२९ इति) ।

चित्राधिकरणे पञ्चदशान्याज्यानीत्यत्र पूर्वपक्षे प्रकरणेन स्तोत्रविनियोगेऽपि मत्वर्थलक्षणा नास्तीति प्रतिपादितस्यार्थस्य संग्राहकमिदम् । अस्य वार्तिकस्य व्याख्याप्रकाराश्चित्राधिकरणन्यायसुधायां द्रष्टव्याः ।

अयमत्र निष्कर्षः—न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणा-वाक्यभेद-गौणत्वाध्याहारदोषाः । न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये वाऽनर्थक्यम् । अन्यथात्वकल्पने विपरिणाम-व्यवहितकल्पना-व्यवधारणकल्पनादोषः । अनुमिते तु (कल्पिते तु) विध्याश्रितार्थाभिधानशक्तस्यैव कल्पनान्न कश्चिद्दोष इति ।

## अनेकार्थविधाने वाक्यभेद इत्यस्याभिप्रायवर्णनम् ।

यदि ह्यनेकार्थविधाने वाक्यभेदः, तर्हि विशिष्टविधिमात्रस्योच्छेदापत्तिः । किन्तु यत्रानेकार्थविधिव्यापारं विना विशेषणवैशिष्ट्यस्यासिद्धिः, तत्र विशेषणविशेष्यसंबन्धसिद्ध्यर्थम्, विशिष्टविधानार्थञ्च विधायकप्रत्ययस्य व्यापारभेदात् विध्यावृत्त्या वाक्यभेदः, यथा पौर्णमास्यधिकरणे विद्वद्वाक्येन विहिते कर्मणि आग्नेयादिवाक्यैर्गुणविधिपक्षे । नतु सर्वत्रेति बोध्यम् । अवसितो ग्रन्थार्थविचारः प्रासंगिकश्च ।



## ग्रन्थकर्तुः परिचयः ।

अथेदं प्रस्तूयते—निबन्धकारः पार्थसारथिमिश्रः कं देशं स्वजन्मना विभूषयति स्म, कावस्य पितरौ, कोऽस्य कालः, तत्प्रणीताः ग्रन्थाः के इति, अयञ्च सुगृहीतनामधेयः पार्थसारथिमिश्रः, मिश्रोपाधिना सरलसरसार्थबहुललेखनप्रणाल्यो मैथिल इति तर्कयामो वयम् ।

## तस्य जन्मस्थानविचारः ।

अयञ्च पार्थसारथिमिश्रः कस्मिन्देशे आविरभूदिति विचारे मण्डनमिश्र-मुरारिमिश्र पार्थसारथिमिश्र सुचरितमिश्रादयो मिश्रशब्दान्ता मैथिला इत्यवधार्यते, मिश्रशब्दसम्बन्धात् । आह्निकैबुगादिकं दाक्षिणात्यानामिति शास्त्रदीपिकायामपि मैथिल एवेत्यनुमीयते । श्रीविन्ध्येश्वरीप्रसादत्रिवेदिना न्यायवार्तिकभूमिकायां वाचस्पतिमिश्रप्रभृतीनां मैथिलत्वं प्रासाधि । अभियुक्तानां प्रसिद्धिरपि वस्तुनिर्णये साहाय्यमाचरति, प्रसिद्धश्चास्य मैथिलत्वं विद्वत्समाजे इति, वयमपि तथैवाङ्गीकुर्महे यावद्बाधकोपलम्भम् ।

(२) श्रीमानयं ग्रन्थकारोऽस्य ग्रन्थस्यावसाने स्वपितुर्नाम, स्वनाम च निर्दिशति, साभिमानं कथयति स्वपितुस्सकाशादेव सांगोपोपांगवेदशास्त्राणि यथाविधि समधीत्य सुप्रख्यातो जात इति।

यथा—

'भुवनत्रयविख्यातः श्रीमद्यज्ञात्मनन्दनः।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः' ।। १ ।।

'आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः' ।। २ ।।

'न्यायागमानुसारेण श्रीमद्यज्ञात्मसूनुना।
पार्थसारथिमिश्रेण कृतोऽयं विधिनिर्णयः ।।' इति।

एतैस्तदीयैरेव वचनैस्स्वपितुर्नाम श्रीयज्ञात्मन् इति, आत्मनो नाम पार्थसारथिमिश्रः इति, स्वपितुस्सकाशादेव सर्वविद्यावाप्तिश्चोदीरयन्। 'भातृमान् पितृमान्, आचार्यवान् पुरुषो वेद, त्रिभिरेत्य सन्धिमि'त्यादिश्रुतिशतसिद्धां प्राचीनभारतीयसंस्कृतिं संप्रदायविशुद्धां स्मारयति।

भाट्टप्रस्थान-प्राभाकरप्रस्थानयोरस्य वैशिष्ट्यम्।

अपि च—

'अविभक्तविभक्तमार्गयोर्मतयोर्भट्टगुरूपदिष्टयोः ।
उभयोरपि पार्थसारथिः प्रथितः प्राथमिकेऽभियोगवान्' ।। इति।

स्वयं रामानुजाचार्यो ब्रवीति—यत्-गुरुतन्त्रदीक्षितोऽप्यहं पार्थसारथिमिश्रे बहुमानेन तदुपज्ञस्यास्य प्रकरणस्य व्याख्यां करोमीति।

यथा—

'गुरुतन्त्रनियन्त्रितोऽपि सन् बहुमानादिह पार्थसारथेः।
विवृणोमि मतान्तराश्रितां स्थिरभावां नयरत्नमालिकाम्' ।। इति।

'अस्पष्टभावमपरीक्षकदुष्प्रवेशम् आचार्यतन्त्रमधिकृत्य नयप्रकाशम्।
न्यक्कृत्य पार्थरथसारथिरन्यतन्त्रम् सत् प्रीतये प्रथितवान्नयरत्नमालाम् ।। इति च।

अपि च पार्थसारथिमिश्रस्यानितरसाधारणं भाट्टप्राभाकरतन्त्रयोर्वैदुष्यम्। उभयत्राप्रतिहतप्रतिभावैशिष्ट्येऽपि कुमारिलभट्टे, तदुपबृंहिते भाट्टप्रस्थाने चानितरसाधारणः श्रद्धासमादरः, अभिनिवेशश्च। तत्र प्राभाकरमीमांसकमतोपरोधात् कौमारिलप्रस्थानसंरक्षणगौरवमस्यैव, नान्यस्य कस्य चिदित्युक्तिः नात्युक्तिकोटिमाटीकते। अनेन तिरस्कृतस्य प्राभाकरसंप्रदायस्य नाद्यावधि कोऽप्युद्धर्ता श्रूयते।

अस्य शैली।

श्रीमान् मीमांसकाग्रहणीस्सुप्रसिद्धः पार्थसारथिमिश्र आस्तिकनास्तिकदर्शनप्रवीणो मीमांसाशास्त्रीयग्रन्थकर्तॄणां गोष्ठ्यां तात्पर्याचार्यस्य वाचस्पतिमिश्रस्यानन्तरं तदीयस्थानमधितिष्ठतीत्युक्तिरिति। अस्य शास्त्रीयव्युत्पत्तिस्सुपरिष्कृता, वचोभङ्गी

मनोहारिणी, प्रभाकरमतप्रतिक्षेपेऽनन्यसाधारणी चातुरी सहृदयमसौ कौमारिलमतमवलम्बते। कुमारिलभट्टपादेऽतिभक्तिमतेऽस्मै प्राभाकरीया शास्त्रविचारसरणिर्नैव रोचते। अयञ्च सोपहासमत्यन्तमभिनिवेशेन प्राभाकरमतं खण्डयति, प्रसन्नपदगम्भीरसरसवाहिनी चास्य वाग्वैखरी संस्कृतभाषायामस्य स्वातन्त्र्यमधिकम्। यद्यपि समेषां ग्रन्थकर्तॄणां प्राचामयमंशस्साधारणः, तत्राप्युपहासे निन्दायाञ्च समर्थान् शब्दविशेषान् प्रयुञ्जानः विशिष्यते। कानि चन वाक्यान्यधस्तादुदाह्रियन्ते।

तथाहि—१ यथा अहो बत भवानात्मानं शिष्यान् सकलञ्च लोकमतिसन्धातुमुद्युक्तः सकललोकविपरीतमभिदधानं न विजहति लोकाः ( न्या. र. पृ. ५ ) इति।

२—तदिदं बालसम्मोहनम्, महेन्द्रजालोपमं वा सम्यङ्न्यायौषधसंस्कृतस्वान्तानां न सम्मोहाय कल्पते ( न्या. र. पृ. ४१ ) इति।

३—तदेतदापातकल्याणं सूक्ष्मन्यायदृष्ट्या निपुणं निरूप्यमाणमारकूटायते (न्या. र. पृ. १२२ ) इति।

४—अत्र कश्चिन्निपुणंमन्यः प्रभाकरदर्शनं शिक्षयन्निदं ब्रह्मास्त्रमुत्सृजति, ( न्या. र. पृ. १२५ ) इति।

५—स नूनमस्मिन् वार्तिकेऽश्रुतपूर्वी ( १५९ ) इति,

६—स्वदर्शनानुरागोऽतीवाविष्कृतः ( १२५ )।

७—कथमिदं परस्परं व्याहतं बुद्धिमन्तोऽभिधीरन् ( १२३५ )।

८—कश्श्रुतिवाक्यबलाबलज्ञोऽभिदधीत।

९—अहो बत महामोहसमाश्रयणं भवता यदात्मीयमज्ञानमृषावारोपयति ( २३७ ) इति।

१०—सूक्ष्ममिदं न्यायरत्नं भाष्य-वार्तिकपरिचयोपचितचेतोलोचनसंस्कारैर्विवेक्तुं शक्यते, न स्थूलदृष्टिभिः, ( २४२ ) इति।

११—इदन्तु तेषामभिधानमिति प्रामाणिका न श्रद्दधति ( २६२ ) इति।

१२—द्वितीयस्यामिव शरेषु कापुरुषस्य विधेरनुरागो भवेत् ( २३७ )।



द्वादशानामध्यायानां प्रतिपाद्यविषये भाट्ट-प्राभाकरप्रस्थानयोर्भेदप्रदर्शिनी पट्टिका।

प्रथमेऽध्याये

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| १—धर्मे यावन्ति प्रमाणानि सम्भाव्यन्ते, तेषां सर्वेषां कार्त्स्न्येन निरूपणम्। तत्र प्रथमे साक्षाद्विधिप्रामाण्यम्, द्वितीयेऽर्थवादमन्त्रयोः, तृतीये स्मृतिशिष्टाचारयोः, चतुर्थे नामधेयादिप्रामाण्यविचार इति विवेकः। | १—चोदनाविध्यपरपर्यायशास्त्रप्रामाण्यनिरूपणम्, तदर्थमेवार्थवाद-मन्त्र-स्मृति-शिष्टाचारनामधेयादिविचारः, |

## द्वितीयेऽध्याये

**भाट्टप्रस्थाने**

२—शब्दान्तरादिभिष्षड्भिः प्रमाणैः भावनापरपर्यायस्य कर्मणो भेदनिरूपणम्। धात्वर्थभेदस्य, अपूर्वभेदस्य चानुषंगिकतया निरूपणमिति।

**प्राभाकरप्रस्थाने**

२—अनुबन्धनिरपेक्षसाध्यभेदेन शास्त्रभेदनिरूपणम्, अनुबन्धभेदश्च संख्यां विहाय, अविशिष्टैः प्रमाणैरिति विशेषः।

## तृतीयेऽध्याये

३—श्रुत्यादिप्रमाणषट्कसहकृतेन विनियोगविधिना शेष-शेषिभावनिरूपणम्, प्रकरणं द्विविधं-महाप्रकरणावान्तरप्रकरणभेदेन तेषां परस्परविरोधे प्राबल्यदौर्बल्यविचारश्च।

३—वैनियोगिकं शेषित्वं श्रुत्यादिभिः अवान्तरप्रकरणं नास्ति।

## चतुर्थेऽध्याये

४—प्रयोज्यप्रयोजकभावविचारः क्रत्वर्थ-पुरुषार्थविचारमुखेन।

४—उपादानाख्यं प्रमाणं विध्याक्षेपरूपविधिव्यापारात्मकम्-शब्दप्रमाणान्तरम्, तस्योपादानाख्यस्य चातुर्थिकस्य शेषत्वप्रयुक्त्यधिकारोत्पत्त्याख्यचतुष्टयं विषयः।

## पञ्चमेऽध्याये

५—श्रुत्यर्थपाठ-स्थान-मुख्य-प्रवृत्त्याख्यैष्षड्भिः प्रमाणैः क्रमनिरूपणम्, क्रमश्च पौर्वापर्यरूपः स च पदार्थविशेषणतया विधेयः तेषां प्राबल्य-दौर्बल्यविचारश्च।

५—श्रुत्यादिभिः प्रमाणैः क्रमनिरूपणम्, परमयं विशेषः, शब्दबलवादिनो विवरणकारस्य मते, अर्थबलवादिनः निबन्धनकारस्य मते च सोऽविधेय एवेति।

## षष्ठेऽध्याये

६—अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो यजेतेत्यनेकाधिकरणसाध्याधिकारनिरूपणम्, अन्यच्च तदनुबन्धि क्वचिच्च चान्यत् पूर्वोक्तस्यापवादः।

६—अधिकारनिरूपणं भाट्टमतवदेव अत्रायं विशेषः।
रथकारकर्तृकमाधानमर्थकर्म नाग्निसंस्कारार्थम्, अतो विश्वजिन्न्यायेन कल्प्यफलम्, प्राभाकरप्रस्थानन्तु रथकारस्य क्रत्वधिकारमङ्गीकरोति यथोक्तं टीकाकृता 'आहिताग्नितया च ज्योतिष्टोमादिष्वधिकारो द्रष्टव्यः' बृ. भा. ५ पृ. ८८ इति।

### सप्तमेऽध्याये

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| ७—सामान्यातिदेशः । | ७—प्राभाकरमीमांसकानां सर्वस्वभूतमन्विताभिधाननिरूपणपूर्वकं सामान्येनातिदेशः । |

### अष्टमेऽध्याये

| | |
|---|---|
| ८—विशेषातिदेशः । | ८—तथा |

### नवमेऽध्याये

| | |
|---|---|
| ९—ऊहो मन्त्र-साम-संस्काराणाम् । | ९—मन्त्र-साम-संस्काराणामूहनिरूपणम् |

### दशमेऽध्याये

| | |
|---|---|
| १०—अर्थलोप-प्रत्याम्नान-प्रतिषेधैः । उत्सर्गापवादाभ्यां बाधनिरूपणम्, बाध्यस्य पदार्थस्य अतिदेशतो विकृतौ न प्राप्तिः । | १०—प्राकृतानां पदार्थानां विकृताङ्गत्वमस्ति, परं द्वारलोपादिनाऽनुष्ठानं न भवति । |

### एकादशेऽध्याये

| | |
|---|---|
| ११—तन्त्रावापाभ्यामङ्गपरिमाणनिरूपणम् । | ११—तथैव |

### द्वादशेऽध्याये

| | |
|---|---|
| १२—अन्यत उपकारप्रयुक्तांगाननुष्ठानरूपः प्रसङ्गः । | १२—तथा |



### अस्य कालः–सि०ए०डि० १०५०–११२०

पार्थसारथिमिश्रस्यायं पूर्वावधिः १०५० इतः पूर्वमयं नासीत् । ११२० इयमुत्तरावधिः । यतो हि हलायुधभट्टोधनञ्जयभट्टस्यात्मजः उत्कलाभिजनो मीमांसाशास्त्रसर्वस्वे शास्त्रदीपिका-न्यायरत्नमाला न्यायरत्नाकरवचनानि प्रमाणतया समुद्धरति । अयञ्च हलायुधः श्रीभट्टनारायणवंशसम्भूतः । अयं भट्टनारायणः श्रीवंगाधिपादिशूरेणानीतेषु ब्राह्मणेष्वन्यतमः । अस्मात् भट्टनारायणात् द्वादशः पुरुषः हलायुधभट्टः । हलायुधभट्टो वंगाधिपतेर्लक्ष्मणसेनस्य सभापण्डित आसीत् । स च लक्ष्मणसेनो अस्मै बाल्ये आस्थानपण्डितपदं, यौवने मन्त्रिपदं, वार्धके धर्माधिकरणिकपदञ्च दत्तवान् । तथा च सर्वस्ववचनम्—

'बाल्ये ख्यापितराजपण्डितपदः श्वेतांशुबिम्बोज्ज्वल-
च्छत्रोत्सिक्तमहामहत्तमपदं दत्वा नवे यौवने।
तस्मै यौवनशेषयोग्यमखिलक्ष्मापालनारायणः
श्रीमान् लक्ष्मणसेनदेवनृपतिर्धर्माधिकारं ददौ'॥

( ब्रा० स० श्लो० १२-इति )।

सोऽयं लक्ष्मणसेन ईसवीयद्वादशताब्दीप्रारम्भे आसीदिति प्रत्नतत्त्वविदो मन्यते। तेन सुतरां हलायुधोऽपि ईसवीयद्वादशशताब्दीप्रारम्भकालिक इति सिध्यति।

अयञ्च ब्राह्मणसर्वस्वम्, धर्मशास्त्रसर्वस्वम्, मीमांसासर्वस्वमित्यादीन् बहून् ग्रन्थान् निर्ममे। तेषु मीमांसासर्वस्वे स्वोक्तिदार्ढ्याय न्यायरत्नमाला-न्यायरत्नाकर-वचनानि समुद्धरति। अतस्तत्पूर्वकालिकः पार्थसारथिमिश्र इत्यायाति। तत्रापि दशमशतकस्योत्तरार्द्ध एकादशशतकस्य पूर्वार्द्धे वाऽऽसीदिति सम्प्रधार्यते यावद्दृढलवद्बाधकोपनिपातम्।

अस्य संस्करणस्य वैशिष्ट्यम्।

अस्मिंश्च संस्करणे पाठकमहाभागानाम्, तदर्थमधिगन्तुमनसाञ्च सौकर्यार्थं मूले शुद्धपाठः, अर्थसुलभत्वाय, विषमतापरिहाराय, क्वचित् स्पष्टप्रतिपत्तये, क्वचित् पाठान्तरबोधनाय, क्वचिद्विरोधपरिहाराय, क्वचित्समानार्थस्थलान्तरस्थविषयबोधनाद्येत्येवंविधविभिन्नप्रयोजननिर्वर्तयित्रीभिष्टिप्पणीभिः परिष्करणमित्येवंलक्षणा पद्धतिस्समादृता, मध्ये मध्ये भाट्ट-प्राभाकरप्रस्थानयोस्साम्य-वैषम्यबोधकाः सम्प्रदायैकसमधिगम्याः विपर्यासस्संयोजिता जिज्ञासूनामुपकाराय।

❧❧

न्यायरत्नमालाविषये वक्तव्या विशेषाः।

अस्मिन् प्रकरणे द्वादशस्वध्यायेषु प्राभाकरमतं खण्डयित्वा प्रत्यध्यायमाचार्यमतेनाध्यायक्रमेण विषयविशेषा विविच्य व्युत्पाद्यन्त इति प्रागवादिष्म। तत्र यथा मिथिलामण्डलमण्डनायमानस्य मण्डनाचार्यस्योद्वेगे शालिकाचार्यस्येव, शालिकनाथस्योद्वेगे पार्थसारथिमिश्रस्य महद्दैवासहनमासीत्। तदेव निमित्तं पार्थसारथिमिश्रस्य न्यायरत्नमालाख्यस्य प्रकरणस्य विरचनेऽपि। इदन्तु प्रकरणस्यास्य परिशीलनेन करतलामलकवदवभासेत पण्डितपुण्डरीकाणाम्।

अत्र 'गतानुगतिको लोकः' इति न्यायेन सम्मुखस्थितादर्शावलम्बनेनोद्धरणवाक्यानि श्लोकाश्च प्रथमे द्वितीये च संस्करणे मूल एव नियोजितानि। तेषां स्थानादिक्रममन्विष्य पार्थक्यसूचनेन तानि यथास्थानं समावेशितानि। यथा—

१—'जिज्ञासैकोपनीतस्य' न्या० र० मा० पृ० ७। इति।

२—याऽपि किमध्ययनस्याचार्यकम्, अर्थज्ञानं वा प्रयोजनमिति चिन्ता ( न्या. र. मा. पृ १८ ) इति। नात्र विलिख्यन्ते, पूर्वसम्पादकेन समादृता मूलेऽसंलग्नकाः पाठभेदा टिप्पण्यां संयोजिताः न्यायरत्नमालायास्संक्षेपेणार्थानुसन्धानाय मूलकारिका-

स्संगृहीताः। प्रकरणप्रतिपाद्यानामर्थानां सूचनी विषयानुक्रमणिका, भाट्ट-प्राभाकर-प्रस्थानसम्मतानां द्वादशलक्षणगतानामर्थानां विवरणावेदिका च सन्निवेशिता जिज्ञासूनां विनेयानाञ्च परिज्ञानाय। न्यायरत्नमालायामुद्धृतानां ग्रन्थानाम्, तत्कर्तृणाञ्च निर्देशो यथोपलम्भं कृतोऽस्ति, प्रमादपाठ-शुद्धपाठपत्रिका च।

इदञ्च संस्करणं नायकरत्नस्य निवेशोऽत्यन्तगौरवभीत्या तदनुसृतया सरस-सरलसुललितपदयुक्तया टिप्पण्या योजितमिदं प्रकरणं यावदुपलब्धमनेककोशाधारेण संशोध्याप्रमाद्यता मया समपादि।

## समर्पणम्

प्रातःस्मरणीयचरिता अस्मदाचार्यपादा महामहोपाध्यायाश्चिन्नस्वामिशास्त्रिचरणा वारं वारं तदा विवेचनपाठभेदादिसमुद्धरणपूर्वकं विशिष्टं संस्करणं न्यायरत्नमालायाः कर्तव्यमिति आत्मीयं संकल्पं प्रपूरयितुमसकृदस्मानन्तेवसत आदिक्षन्, सांप्रतं ते चास्माकं पूज्यपादास्सत्यसंकल्पा इति प्रमोदते मामकं चेतः।

## धन्यवादः

इदन्त्विहावसरप्राप्तम्—यदेतस्य प्रकाशने परस्परविचारविनिमयेन स्वीय-सम्मतिप्रदानेन च भारतसर्वकारेण सम्मानितानां भृशमुपकृतवताम् एस-सुब्रह्मण्य शास्त्रि-भागानामध्यत्वे वाराणसेयसंस्कृतविश्वविद्यालये यू. जि. सि. प्रोफ़ेसरपदमलंकुर्वाणानां साहाय्यं न विस्मर्तुमीश्महे। अतस्तेभ्यः कृतज्ञतामाबिभर्मि।

वा. सं. वि. वि. अनुसन्धानविभागीयपण्डितप्रवरः अस्मत् सहयोगी आद्योप-नामको मध्वाचार्यः स्वीयं कार्यमतिरिच्य अस्यास्तदा तदा प्रतिलिपिकरणेऽन्यान्येषु चैतत् प्रसक्तेषु कार्येषु केवलमात्मीयभावेन परिश्रमस्वीकारेण स्वीयकर्तव्यबुद्ध्यैव महत् साहाय्यमकार्षीत्। अतः प्रार्थ्यते काशीपुराधीश्वरोऽन्नपूर्णाजानिस्तस्य समुन्नतिं करिष्यतीति।

## अस्य प्रसाधनकर्मणि सामग्री।

अस्य ग्रन्थस्य सम्पादनाय आदर्शकोशा इमे—

१—म. म. चिन्नस्वामिशास्त्रिचरणानां संशोधितः प्रथमः क इति संकेतेन व्यवहृतः।

२—ब्रह्मश्रीयुतरामस्वामिशास्त्रिमहाभागैः वटपत्तनात् (बड़ोदा) प्रकाशितो द्वितीयः।

३—काशी सरस्वतीभवनस्थं तृतीयम्, अनेनांशिकस्तत्रोपयोगः, अस्य परि-शीलनं तदा तदा तत्र गमनेनाभूदिति ग इति व्यवहृतः।

४—अन्ये च द्वित्रास्तालपत्रीयाः परिशीलिताः, सन्देहस्थलेषु पाठभेदाय कल्पन्ते स्म।

५—अस्मदध्ययनकाल एव शोधितमपरम्। एतानादर्शकोशानाधारीकृत्येदं सम्पादनकृत्यं समवर्तिष्ट।

अन्ते च विद्वद्वरेण्याः प्रार्थ्यन्ते यत् सदसद्व्यक्तिहेतवो गुणैकपक्षपातिनः प्राज्ञा मधुलिह इह न्यायरत्नमालासाररसं पायं पायं सफलयन्तु मम परिश्रमम् ।

लेखेऽस्मिन् नाप्यपूर्वः क्वचिदनवगतो नाप्यसम्भावनीयः,
विद्वद्भिर्नीतिविद्भिर्न मितिमतिगतः नाप्यमूलो न वौद्धः ।
अर्थः प्रादर्शि किन्तु गुरुमतमथनीमिश्रसूक्तीर्विभाव्य
प्राचां संगृह्य किञ्चिल्लिखितमिति · मया हन्त तुष्यन्तु सन्तः ॥

सिद्धान्तरीतिषु मया भ्रमदूषितेन
स्यादन्यथापि लिखितं यदि किञ्चिदस्य ।
संशोधने सहृदयास्सदया भवन्तु
सत्सम्प्रदायपरिपालननिर्विशंकाः ॥

कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्रानुभूयताम् ॥

यदत्र गर्हणीयं स्यान्मदीयं तत् कुकल्पनम् ।
शास्त्रीयं युक्तियुक्तञ्च गुरुभिर्भाषितन्तु तत् ॥

विदुषामाश्रयः
म० म० श्रीचिन्नस्वामिशास्त्रिचरणानां शिष्यः-
**शास्त्ररत्नाकरः मीमांसारत्नं अ. सुब्रह्मण्यशास्त्री**

२७-५-८२
(कपालतडागपुराभिजनः)
पूर्वोत्तरमीमांसाद्वयाचार्यः
धर्मशास्त्र-मीमांसादर्शनविभागाध्यक्षचरः
प्राच्य तथा धर्मविज्ञान संकायः
का. हि. वि. वि.
वाराणसी–५

# न्यायरत्नमालायाविषयानुक्रमणिका



## द्वितीयप्रकरणस्य

**विषयविवरणम्** **पृष्ठ सं०**



## तृतीयप्रकरणस्य

**विषयविवरणम्** **पृष्ठ सं०**



## चतुर्थप्रकरणस्य

**विषयविवरणम्** **पृष्ठ सं०**

## सप्तमप्रकरणस्य

**विषयविवरणम्** **पृष्ठ सं०**



## अङ्गनिर्णये द्वितीयः परिच्छेदः

**विषयविवरणम्** **पृष्ठ सं०**

## अथाङ्गनिर्णये तृतीयः परिच्छेदः

## चतुर्थाध्यायप्रतिपाद्यार्थः





## अथ पञ्चमाध्यायार्थः

**विषयविवरणम्** **पृष्ठ सं०**



## अथ षष्ठाध्यायार्थः

**विषयविवरणम्** **पृष्ठ सं०**





## अथांगनिर्णये चतुर्थः परिच्छेदः

## सप्तमाष्टमाध्यायप्रतिपाद्यार्थः



## अथ नवमाध्यायार्थः



## अथ दशमाध्यायार्थः

विषयविवरणम् पृष्ठ सं०

**विषयविवरणम्** **पृष्ठ सं०**

**विषयविवरणम्** **पृष्ठ सं०**

इत्येकादशाध्यायार्थः



## अथ द्वादशाध्यायार्थः



इति न्यायरत्नमालाया विषयानुक्रमणिका समाप्ता



पार्थसारथिमिश्रविरचिता

# न्यायरत्नमाला

## नायकरत्नाख्यव्याख्यया टिप्पण्या च सहिता

प्रयुक्तितिलकः ॥ १ ॥

'आनन्दममृतं ज्ञानमजं साक्षिणमीश्वरम् ।
ब्रह्म सर्वमसर्वं सदसद्वन्दे हरिं विभुम् ॥ १ ॥

### कर्तव्यार्थप्रतिज्ञा

मीमांसार्णवसंभूतैः कुमारस्वामिनाऽऽहृतैः ।
न्यायरत्नैरहं मालां सङ्ग्रथ्नामि मनोरमाम् ॥ २ ॥

---

### नायकरत्नम्

सम्यङ्नयाञ्जनसमेधितमस्तदोषमाम्नायसंज्ञमनुशास्ति विशुद्धचक्षुः ।
मानान्तरानधिगतं क्रतुरत्नतत्त्वं तत्त्वान्तरं च पुरुषोत्तमसंज्ञकं त१ ॥ १ ॥

आम्नायान्तिमसीमनि स्फुरति यः सद्भावनागोचरः
स्वे स्वे कर्मणि यः प्रशास्ति पुरुषं योग्याधिकारक्रमात् ।
आधत्ते विविधोपकारमखिलैरङ्गैरशेषाङ्गिनां
साक्षाद्विष्णुरिवैधते विधिरयं नानावताराश्रयः ॥ २ ॥

अविभक्तविभक्तमार्गयोर्मतयोर्मंट्टगुरूपदिष्टयोः ।
उभयोरपि पार्थसारथिः प्रथितः प्राथमिकेऽभियोगवान् ॥ ३ ॥

अस्पष्टभावमपरीक्षकदुष्प्रवेशमाचार्यतन्त्रमधिकृत्य नयप्रकाशम् ।
न्यक्कृत्य पार्थरथसारथिरन्यतन्त्रं सत्प्रीतये ग्रथितवान्नयरत्नमालाम् ॥ ४ ॥

गुरुतन्त्रनियन्त्रितोऽप्यहं बहुमानादिह पार्थसारथेः ।
विवृणोमि मतान्तराश्रितां स्थिरभावां नयरत्नमालिकाम् ॥ ५ ॥

---

### टिप्पणी

१. ओं नमो ब्रह्मादिभ्योधर्मविद्यासंप्रदायकर्तृभ्यः वंशर्षिभ्यो नमो महद्भ्यः गुरुभ्यः ।

श्रीमान् मीमांसकाग्रणीः पार्थसारथिमिश्रः न्यायरत्नमालाख्यं प्रकरणं प्रारिप्सुः निर्विघ्नपरिसमाप्त्यर्थं प्रचयगमनार्थञ्च स्वाभिमतदेवतास्तुतिरूपं मंगलमाचरन् शिष्यशिक्षायै ग्रन्थादौ निबध्नाति आनन्दमित्यादिना । वन्दे-स्तवीमि । 'वदि अभिवादनस्तुत्यो'रिति शाब्दिकानां स्मरणेऽपि स्तुतिरेवार्थः, न त्वभिवादनम् । तस्य नामग्रहणसमनियतत्वेन स्वनामग्रहणं विनाऽसंभवात् । स्तुतिश्च गुणवत्त्वप्रकारकंबोधानुकूलव्यापाररूपा । तथा च हरिनिष्ठगुणवत्त्वप्रकारकबोधानुकूलव्यापारवानहमितिबोधः । इदञ्च पद्यं ब्रह्मसिद्धिमंगलपद्यस्य शब्दतोऽर्थतश्च संवादि । इति बोध्यम् ।

तत्र स्वाध्यायविध्यर्थः प्रथमं तावदुच्यते।
आचार्यपक्षमाश्रित्य प्रतिपक्षनिरासतः ॥ ३ ॥

## प्राभाकरमतेन पूर्वपक्षः

[2]तत्र तावदिमं केचित्पूर्वपक्षं प्रचक्षते।
आचार्यकनियोगार्थः स्वाध्यायस्तत्प्रयुक्तितः ॥ ४ ॥

---

अथ प्रारिप्सितग्रन्थस्य प्रत्यूहप्रशान्तये सर्वोत्कृष्टां श्रुतिशिरःसमधिगतां स्वेष्टदेवतां नमस्यति—**आनन्दमिति**। आनन्दं—निरतिशयसुखस्वरूपम्। अमृतं—नित्यमुक्तस्वभावम्। ज्ञानं—संवित्स्वरूपम्। अजं—उत्पत्तिरहितम्। अनेन नित्यत्वमपि सूचितम्। साक्षिणं—सर्वदा सर्ववस्तुसाक्षात्कारिणम्। "साक्षाद्द्रष्टरि संज्ञायाम्" (पा. ५–२–९१) इति हि व्याकरणानुशासनम्। ईश्वरं—सर्ववस्तुनियन्तारम्। सर्वं—सर्वप्रपञ्चात्मकम्। असर्वं सर्वज्ञत्वादिगुणयोगात्—सर्ववस्तुविलक्षणम्। सदसत्—सत्सदात्मकं नित्यानित्यवस्त्वात्मकमिति यावत्। एतच्च—सर्वमित्यस्यैव विवरणम्। विभुं—व्यापिनम्। ब्रह्म—सर्वश्रुतिषु बहुशो ब्रह्मशब्दवाच्यम्। हरिं—पुरुषोत्तमं नारायणं वन्दे—प्रह्वीभवामीत्यर्थः ॥ १ ॥

उभयोरप्याचार्य—गुरुमतयोः पारदृश्वा पार्थसारथिमिश्रः प्राथमिके—गरीयस्याचार्यमते निरूढाभियोगस्तन्मतमाश्रित्य प्रबन्धं प्रवर्तयन्, प्राचीनप्रबन्धेषु प्रवृत्तेष्वपि स्वप्रबन्धप्रवृत्तेः प्रयोजनातिशयञ्च दर्शयन् प्रबन्धारम्भं प्रतिजानीते—**मीमांसेति**। सूत्र-भाष्य-तन्त्रवार्तिकादिष्वितस्ततो विप्रकीर्णानां न्यायानां मतान्तरनिरासपूर्वं विशिष्टानुपूर्व्या संकलय्य-सन्दर्शनमेव स्वप्रबन्धप्रयोजनमित्याशयः ॥ २ ॥

तत्र नानाप्रकरणात्मके न्यायरत्नमालाभिधाने स्वप्रबन्धे शास्त्रारम्भाक्षेपसमाधानात्मकतया सर्वप्रकरणोपजीव्यं प्रयुक्तितिलकाख्यं प्रकरणं वक्तुमुपक्रमते—**तत्रेति**। 'स्वाध्यायोऽध्येतव्यः' इत्यनेन वाक्येन योऽध्ययनविधिः, तस्यार्थ इत्यर्थः ॥ ३ ॥

'अथातो धर्मजिज्ञासा' जैमिनि १.१.१ इत्यत्र शास्त्रादौ भाष्यकारेण मीमांसा किमारम्भणीया, अनारम्भणीया वेति, विचिन्त्य तदर्थं स्वाध्यायध्ययनविधेरर्थज्ञानपर्यवसानमस्ति वा—नवेति चिन्ता कृता। तत्र स्वाभिमतपूर्वपक्ष—राद्धान्तौ पश्चात् प्रवर्तयिष्यन् प्रथमं प्राभाकरमतेन पूर्वपक्ष—राद्धान्तौ दूषयितुमनुवदति—**तत्र तावदिति**। एषा हि तन्मतस्थितिः—उभावप्यध्ययनाध्यापनविधी स्वतन्त्रौ। न तु तयोः परस्परमङ्गाङ्गिभावः। अथाप्यध्यापनविधिप्रयुक्तं सेतिकर्तव्यताकमध्ययनम्। उपनयनमुपनेयश्चाऽध्यापनाङ्गमेव। एतावत् पूर्वपक्ष—राद्धान्तयोः—

---

१. अस्य ग्रन्थस्य मीमांसाशास्त्रप्रकरणत्वेन तदीयविषयाद्यनुबन्धचतुष्टयेनैव तद्वत्त्वमिति-बोध्यम्। धर्मोविषयः, धर्मज्ञानं प्रयोजनं, धर्मज्ञानकामोऽधिकारी, प्रतिपाद्यप्रतिपादकभावस्संबन्धः। प्रकरणलक्षणञ्च शास्त्रैकदेशस्य प्रक्रिया प्रकरणमिति समाचक्षतेऽभियुक्ताः। तत्प्रयोजनञ्च नानाप्रदेशेषु संक्षेपतश्चार्थसिद्धश्च सिद्धवच्च यदुक्तम्, तदेकत्रप्रदेशेविस्तरेण साक्षात् सोपपत्तिकमनाकुलं विप्रतिपत्तिनिरासद्वारेण प्रतिपाद्यत इति अर्थवत् प्रकरणं, तदारम्यश्चोपपद्यत इति ध्येयम्।

२. सर्वेषु ग्रन्थेषु प्रायशः, प्राभाकरमतेन मीमांसाशास्त्रारम्यविचारप्रसंगे शालिकनाथेन-प्रकरणपञ्चिकायामुक्तं 'उपनीयतु याशिशष्यमि'त्यादि मानववचनकल्पितं माणवकमुपनी-

प्रथमावगतत्वेन तद्धि युक्तं प्रयोजनम् ।
न तु वाक्यार्थविज्ञानं तद्धि पश्चात्प्रतीयते ॥ ५ ॥
तेनाऽविवक्षितार्थत्वाद्वेदस्यार्थविचारणम् ।
न कर्तव्यमतः शास्त्रं मीमांसाख्यमनर्थकम् ॥ ६ ॥

आचार्यकरणविधिप्रयुक्तस्य हि स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां पुरुषान्तरगामित्वेन बहिरङ्गमपि प्रथमावगतत्वेन तत्सिद्धिरेव प्रयोजनं युक्तम् । न त्वर्थज्ञानम्, तस्य पश्चाद्भावित्वात् । तेनाऽन्यार्थत्वाद्वेदाध्ययनस्याऽविवक्षितोऽर्थः । अविवक्षितश्च न निर्णेतव्यः, प्रयोजनाभावात् । अकर्तव्ये च निर्णये न विचारः कर्तव्य इति—तदात्मकं मीमांसाशास्त्रमनर्थकत्वादनारम्भणीयमिति ।

---

समानम् । एवं सत्यध्यापनप्रयुक्तस्य स्वाध्यायाध्ययनस्याध्यापनविधिसिद्धिरेव प्रयोजनमिति—पूर्वः पक्षः । अर्थज्ञानमिति राद्धान्तः—इति । आचार्यकनियोगार्थः स्वाध्याय इति । आचार्यकम्—आचार्यत्वम् । तच्च दीक्षितत्वादिवदलौकिकं शिष्यकर्तृकदक्षिणादानादिहेतुतया पुरुषार्थोऽध्यापनसाध्यश्च । तत्प्रयोजनकाध्यापनजन्यनियोगः । तदर्थः स्वाध्यायाः स्वाध्यायाध्ययनं तत्प्रयोजनकमित्यर्थः । तत्र हेतुः तत्प्रयुक्तित इति । अध्यापनविधिप्रयुक्तत्वादध्ययनस्य तत्सिद्धिरेव प्रयोजनमित्यर्थः । सर्वो हि विधिः स्वसिद्ध्यर्थमेवान्यत् प्रयुङ्क्ते ॥ ४ ॥

प्रथमावगतत्वेनेत्यादि तद्धि,—आचार्यकं हि । स्वाध्यायाध्ययनानुष्ठानसमकालनिर्वर्त्याध्यापनजन्यत्वेनाऽर्थज्ञानात् पूर्वभावि । अर्थज्ञानं त्वध्ययने निर्वृत्ते मीमांसाश्रवणोत्तरकालभावितया ततः पश्चात्भावीत्यर्थः । वाक्यार्थविज्ञानं-वेदवाक्यार्थनिर्णयः । मीमांसाख्यम्—मीमांसा विचारः, तदर्थं शास्त्रं तदात्मकमित्यर्थः ॥ ५ ॥

श्लोकांस्तात्पर्यतो व्याचष्टे—आचार्यकरणेति । आचार्यकरणविधिः—आचार्यकार्थाध्यापनविधिः । प्रयोजनापेक्षायामिति । सर्वोऽपि विधिरधिकारपर्यवसायी । अतोऽध्ययनविधेरपि स्वतन्त्रविधितया प्रयोजनापेक्षायां सत्यामित्यर्थः । नन्वध्येतृपुरुषनिष्ठत्वेनाऽन्तरङ्गत्वादर्थज्ञानमेवाध्ययनस्य प्रयोजनं युक्तम् । न त्वध्यापकपुरुषान्तरनिष्ठमाचार्यकं, बहिरङ्गत्वादित्याशङ्क्याह—पुरुषान्तरेति । विधेः प्रयोजनापेक्षायां तुल्यकालप्राप्तयोः प्रयोजनयोरन्तरङ्गं प्रयोजनं बलीयः । भिन्नकालप्राप्तयोस्तु प्रथमभाविनैव निराकाङ्क्षत्वात् पश्चाद्भाव्यन्तरङ्गमपि नाश्रयणीयमिति भावः । तेनाऽन्यार्थत्वादिति । अध्ययनस्याध्यापननिर्वर्तनैकप्रयोजनत्वात् स्वाध्यायस्य चाध्ययनशेषत्वात् प्रतीयमानोऽपि स्वार्थो न तात्पर्यविषय इति भावः । ननु वेदस्य तत्र तात्पर्याभावेऽपि शब्दस्वभावात् प्रतीयमानतया तदर्थो निर्णेतव्यः । तदर्थं च मीमांसारम्भः स्यादित्यत्राह—अविवक्षितश्चेति । यस्य शब्दस्य यस्मिन्नर्थे तात्पर्यं, स एव निर्णयार्हः । न तु प्रतीतिमात्रसिद्धः । यथा गार्हपत्योपस्थाने विनियुक्ताया ऐन्द्र्या इन्द्ररूपोऽर्थ इति भावः । प्रयोजनाभावादिति । अनपेक्षितत्वादित्यर्थः । ततः किं, तत्राह—अकर्तव्ये इति ॥ १–६ ॥

---

याध्यापनेनाऽऽचार्यकं भावयेदिति प्रथमः पक्षोऽनूद्यमानो दृश्यते । तदनन्तरं विवरणटीकोक्तः 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते'ति कस्याञ्चित् शाखायां प्रत्यक्ष एवाध्यापनविधिः पठ्यत इति विवरणमतमुपन्यस्यत इति । परन्तु पञ्चपादिकाविवरणे द्वितीयपक्षमेव उपन्यस्य, अनन्तरं प्रथमपक्षोदूषितः । तत्कारणं भूमिकायां द्रष्टव्यमिति ।

कथं पुनः आचार्यकरणविधिप्रयुक्तमध्ययनं, न स्वविधिप्रयुक्तम् ?

उच्यते—

न स्वाध्यायविधावस्ति नियोज्यस्तत्र चासतः।
न प्रयोजकता युक्ता प्रयाजादिनियोगवत् ॥ ७ ॥

न ह्यनधिकारस्य विधेर्विषयानुष्ठापकत्वं सम्भवति प्रयाजादिविधिवत्। नच—स्वाध्यायाध्ययनविधावधिकारी श्रूयते। तस्मान्नास्य प्रयोजकत्वं सम्भवति।

न च कल्पयितुं शक्यो नियोज्यः पितृयज्ञवत्।
अकल्पितेऽपि यत्तस्मिन्ननुष्ठानं प्रसिद्ध्यति ॥ ८ ॥

स्यादेतत्—अश्रूयमाणोऽपि नियोज्यः पितृयज्ञादिवत्कल्प्यत इति। न। अकल्पितेऽपि नियोज्ये यस्मादनुष्ठानं प्रसिद्ध्यति। सिद्धे तु तस्मिन्नासौ कल्पयितुं शक्यते, अनुपपत्त्यभावात्। अनुष्ठानाधीनसिद्धिर्हि नियोगः। तत्सिद्ध्यर्थमनुष्ठातारमाक्षिप्याऽनधिकारिणोऽनुष्ठातृत्वासम्भवादनियोज्यस्य चाधिकारासम्भवान्नियोज्यं कल्पयति। यदा तु विध्यन्तरानुष्ठापितेनैव विषयेण स्वात्मलाभं पश्यति, तदाऽनुपपत्त्यभावान्न नियोज्यं कल्पयति प्रयाजादिनियोगवत्। सम्भवति चेहाचार्यकरणविध्यनुष्ठापितेनैवात्मविषयेणाध्ययनेन नियोगसिद्धिरिति, न नियोज्यकल्पनासम्भवः।

---

ननु स्वतन्त्राध्ययनविधिः स्वयमेवाध्ययनानुष्ठापकः किमिति न स्यादित्याशयेनाक्षिपति—कथमिति। परिहरति—उच्यत इति। विधिवाक्येषु ममेदं कार्यमिति कार्यप्रत्येता नियोज्यः। ततश्च मत्कार्यसाधनत्वात् मदनुष्ठेयमिदं कर्मेति कर्मणि मादर्थ्यज्ञानवानधिकारी। तदनु कर्मनिर्वर्तकस्तु कर्तेति तिस्रोऽवस्था एकस्यैव क्रमभाविन्यः। तत्र यो विधिः सनियोज्यकः, स एव तस्य कर्मण्यधिकारमुपजनय्य तत्कर्मानुष्ठानं प्रयुङ्क्ते। यथा स्वर्गकामनियोज्यकदर्शपूर्णमासविधिः। यत्र तु नियोज्यो न श्रूयते, स त्वप्रयोजकः। यथा 'समिधो यजती'त्यादिविधिः। अयं त्वध्ययनविधिः नियोज्याश्रवणादप्रयोजक इति श्लोकार्थः ॥ ७ ॥

अनधिकारस्य—अनियोज्यकस्य। विषयानुष्ठापकत्वमिति। विषयो नाम कार्यावच्छेदको धात्वर्थः। इत्थं हि तन्मतस्थितिः—'यजेत' 'दद्यात्' 'जुहुयात्' इत्यादिषु लिङादिभिः कार्यं प्रतीयमानं स्वरूपेण प्रत्येतुमशक्यमिति धात्वर्थावच्छिन्नमेव प्रतीयते—यागकार्यं, होमकार्यमिति। अतश्च कार्यप्रतीतिदशायां योऽवच्छेदको धात्वर्थः, स विषयः। स एवैतत्कार्यनिर्वृत्तिदशायां करणं भवति। अधिकारी-नियोज्यः।

ननु 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यत्र यथाश्रुतोऽपि स्वर्गकामो नियोज्यः कल्प्यते, तथात्रापि तत्परिकल्पनादध्ययनविधेरेव स्वविषयप्रयोजकत्वं स्यादित्याशङ्क्याह- नचेति। श्लोकं व्याचष्टे—स्यादेतदित्यादिना। विधिर्हि स्वप्रतीत्यर्थं, स्वसिद्ध्यर्थं वा विषयवत् करणवच्च न साक्षान्नियमेन नियोज्यमाकाङ्क्षते। निर्नियोज्यकानामपि प्रयाजादिविधीनां दर्शनात्। किंतु स्वस्य कार्यत्वेन स्वविषयानुष्ठानापेक्षायां तत्कर्त्रधिकार्यपेक्षाप्रणालिकया नियोज्यमपेक्षते। अत्र तु तदनुष्ठानस्यान्यतः सिद्धत्वात्, न तदपेक्षेति भावः। अनधिकारिण इत्यादि। यो हि ममेदं कार्यमिति नियोगं प्रत्येति, स एव तत्साधनं कर्म कार्यमित्यवगच्छति। स एव तदनुतिष्ठतीति भावः। प्रयाजादिनियोगवदिति। प्रयाजादिनियोगा हि दर्शपूर्णमासापूर्वेणैवानुष्ठापितस्वविषया इति न नियोज्यापेक्षिण इत्यर्थः ॥ ८ ॥

कथं पुनराचार्यकरणविधिरध्ययनं प्रयुङ्क्ते ? तदुच्यते—उपनीयाऽध्यापनादाचार्यकं भवति। न चाध्यापनमध्ययनमन्तरेण सम्भवतीति, तत् तदाक्षिपति। उपनयनमपि क्त्वाप्रत्ययेनाऽध्यापनसमानकर्तृकमवगम्यमानं तदङ्गमेव विज्ञायते। तस्य च द्वारापेक्षायामुपनेयासत्तिरेव द्वारं लिङ्गादवगम्यते। उपनेयोऽपि नाकिञ्चित्कराऽङ्गमिति, तद्व्यापारापेक्षायामुपनयनप्रक्रमाधीतमध्ययनमध्यापनोपकारित्वेन तद्व्यापारत्वेनाध्यवसीयते। एवञ्च वैधमेवाध्ययनं कुर्वन् माणवकोऽध्यापनस्योपकरोतीत्यवगमात् तद्विषयमेवाध्यापनमाचार्यकसाधनमिति, तद्द्वारेण सर्वस्याध्ययनाङ्गस्य व्रतादेस्तत एवानुष्ठानसिद्धिः। तस्मादाचार्यकरणविधिसिद्धिप्रयोजनत्वादध्ययनस्य अविवक्षितस्वार्थत्वाद्वेदस्य, न तदर्थनिर्णयार्थं मीमांसाशास्त्रमारब्धव्यमिति।

## प्राभाकरमतेन सिद्धान्तोपवर्णनम्

सिद्धान्तस्तु—सत्यमाचार्यकरणविधिप्रयुक्तमध्ययनम्। न तु तत्सिद्धिरेवास्य प्रयोजनम्, बहिरङ्गत्वात्। कर्तृगामित्वेनान्तरङ्गत्वादर्थज्ञानं प्रयोजनत्वेन स्वीक्रियते। ननु प्रथमावगतत्वेन प्रयोजनापेक्षमध्ययनमध्यापनविध्यवगतमाचार्यकमेव तावत् स्वीकरोति। स्वीकृते च तस्मिन्नपेक्षाभावात्पश्चादवगतमर्थज्ञानमन्तरङ्गमपि न—

---

नन्वध्ययनविधेरध्यापनविधिप्रयुक्तविषयानुष्ठानत्वे भवतु निर्नियोज्यता। तत्प्रयुक्तिप्रकार एव कथमिति पृच्छति—कथं पुनरिति। उत्तरमाह—तदुच्यत इति।

'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥' (मनु. अ. २. श्लो. १४०) इति।

वचनार्थं तावदनुसन्धत्ते—उपनीयेति। नचाध्यापनमिति। अध्ययनस्याध्यापननिर्वर्तकत्वात् तत्प्रयुक्तिरस्य युक्तेत्यर्थः। साक्षात् प्रयोजकत्वमुक्त्वा स्वाङ्गभूतोपनयनप्रयुक्तिद्वाराऽप्यध्ययनप्रयुक्तिप्रकारमाह—उपनयनमपीति। 'शिष्यमुपनीय शिष्यमध्यापयेदि'ति वचनबलादुपनयनोपनेययोरप्यध्यापनाङ्गत्वम्। तत्रोपनयनस्याध्यापनापेक्षितोपनेयप्रत्यासत्तिसामर्थ्यात् किंचित्कारः। उपनेयस्य त्वध्ययनमेव किंचित्कारतया पर्यवस्यतीति भावः। उपनयनप्रक्रमाधीतम्—उपनयनसंनिधौ पठितम्। अध्ययनं नाम गुरुमुखोच्चारणानूच्चारणम्। तच्च यद्यपि लौकिकमेवाध्यापनोपकारि संभवेत्। तस्यापि उपनयनसंनिधिपाठबलात्—सनियमकं वैदिकमेव संपत्स्यत इत्याह—एवञ्चेति। तद्विषयम्—वैधाध्ययनोद्देशप्रवृत्तम्। यद्यप्यध्यापनविधिरवैधमेवाध्ययनं प्रयुङ्क्ते, तदान्यतोऽसिद्धस्याध्ययनस्वरूपस्य, तदनुष्ठानस्य च तेनैवाक्षेपात् प्रयुक्तिगौरवं स्यात्। वैधस्यैव प्रयोज्यत्वे तु विध्यन्तरसिद्धाध्ययनस्वीकारेण तदनुष्ठानमात्राक्षेपादध्यापनविधेः प्रयुक्तिलाघवमपि स्यादिति हृदयम्। यतो वैधमेवाध्ययमध्यापनविधिप्रयोज्यम्, अतस्तदङ्गभूतानां भिक्षाचरणादीनामपि तत्प्रयुक्तत्वं—स्यादित्याह—तद्द्वारेणेति। पूर्वपक्षं निगमयति—तस्मादिति। अविवक्षितस्वार्थत्वादिति। अध्ययनस्याध्यापननिर्वर्तनैकप्रयोजनत्वात् स्वाध्यायस्य चाध्ययनशेषत्वात् प्रतीयमानेऽप्यर्थे न तात्पर्यमिति भावः॥

सिद्धान्तं वक्तुमुपक्रमते—सिद्धान्तस्त्वित्यादिना। अध्ययनस्य परप्रयुक्तत्वं सिद्धान्तेऽप्यभिमतमेवेत्याह—सत्यमिति। तर्हि राद्धान्तोदयः कथमित्यत्राह—न तु तत्सिद्धिरिति।

प्रयोजनं भवितुमर्हति। मैवम्। प्रथममाचार्यकस्य प्रयोजनत्वापरिकल्पनात्। यद्यकल्पिते तस्मिन्नध्ययनस्यानुष्ठानं न सिद्ध्येत्, तर्हि तत्कल्प्येत। न त्वेतदस्ति। अकल्पितेऽपि तस्मिन्नध्ययनस्यानुष्ठानसंभवात्। अनुष्ठिते त्वध्ययने प्रयोजनापेक्षायामन्तरङ्गत्वादर्थज्ञानमेवाङ्गीक्रियते। ननु नियोग एव शब्दावगतः प्रयोजनं स्यात्, नाऽर्थज्ञानम्। न। अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात्। तेनोभयोरपि प्रयोजनत्वं युक्तमवगतत्वादर्थज्ञानस्य नियोगस्य च। तत्रार्थज्ञानरूपं प्रयोजनं न विचारमन्तरेणाध्ययनेन सम्पादयितुं शक्यत इत्यध्यनविधिरेव तत्सिद्ध्यर्थं विचारमाक्षिपतीति, तदात्मकं शास्त्रमारब्धव्यमिति।

## उपपादितस्य प्राभाकरसिद्धान्तस्य निरासः

अत्राभिधीयते नायं विचार उपपद्यते।
अध्यापनप्रयुक्ते हि स्वाध्यायाध्ययने सति॥ ९॥
विचारो युज्यते कर्तुं न तत्तेन प्रयुज्यते।
स्वकीयेनैव विधिना प्रयोक्तुं शक्यते यतः॥ १०॥

---

कर्तृगामित्वेन-अध्येतृगामित्वेन। पूर्वपक्षिणः शङ्कामनुवदति—**नन्विति**। समाधत्ते—**मैवमिति**: अयं भावः—अध्ययनस्य प्रयोजनापेक्षायां हि प्राथमिकत्वादाचार्यकं प्रयोजनमङ्गीक्रियेत। नत्वेतदस्ति। अनुष्ठानस्यान्यतः सिद्धेः। अनुष्ठानार्थं खलु प्रयोजनाकाङ्क्षेति। **प्रयोजनत्वापरिकल्पनादिति**। अनाकाङ्क्षितत्वेनेति शेषः। **अनुष्ठानसम्भवादिति**। परप्रयुक्त्येति शेषः।

ननु अनुष्ठानस्यान्यतः सिद्धेरनाकाङ्क्षितत्वेनाऽर्थज्ञानं वा कथं प्रयोजनं स्यादित्यत्राह—**अनुष्ठिते त्विति**। अनुष्ठानार्थं प्रथममनाकाङ्क्षितत्वेऽपि पश्चादर्थज्ञानदर्शनेन प्रयोजनापेक्षायामुत्थापितायां तदेव प्रयोजनतया स्वीकर्तुमुचितमिति भावः। **ननु** माभूदध्ययनस्याध्यापननिर्वर्तनैकप्रयोजनकता, तथापि नित्याधिकारत्वाद्विधिसिद्धिरेव प्रयोजनं स्यात्। ततश्च तन्मात्रनिर्वर्तकतया वेदस्याविवक्षितार्थता तदवस्था। तत्र प्रतीयमानस्याप्यर्थज्ञानस्य न प्रयोजनत्वम्। एकस्मिन् विषये प्रयोजनद्वयायोगात्। ततश्च मीमांसारम्भो न स्यादेवेति शङ्कते—**नन्विति**। परिहरति—**अर्थज्ञानस्यापीति**। शब्दतः प्रतिपन्नस्य नियोगस्य, वस्तुस्वभावलब्धस्यार्थज्ञानस्य च प्रयोजनत्वे विरोधाभावात् तदन्यतरपरित्यागे कारणाभावादुभयमपि प्रयोजनमित्यर्थः। **अवगतत्वादिति**। शब्दतोऽर्थतश्चेति भावः। अस्त्वेवम्। तथापि मीमांसारम्भे किमायातम्? तत्राह—**तत्रार्थेति**। **अध्ययनविधिरेवेति**। यद्यप्ययं स्वाविषयस्यैव स्वाङ्गानामप्यप्रयोजकः, तथापि परप्रयुक्त्यैव साङ्गाध्ययने निर्वृत्ते साङ्गाध्ययनसंस्कृतात् स्वाध्यायादापाततोऽर्थप्रतीतौ सत्यां मदनुष्ठेयकर्मावबोधसाधनत्वात् मदर्थमिदमध्ययनमित्यध्येतुरधिकारो जायते। ततश्च मध्येऽधिकारलाभादुत्तरकालभाविन्या मीमांसाया अध्ययनविधिरेव प्रयोजकः—इति भावः॥ ७–८॥

एवं गुरुमतेन पूर्वोत्तरपक्षावुपन्यस्य स्वयं दूषयितुमुपक्रमते—**अत्राभिधीयत इति**। विचारः—पूर्वोत्तरपक्षरूपः। **स्वकीयेनैवेति**। स्वतन्त्रस्य भिन्नविषयस्याध्ययनविधेः स्वविषयप्रयोजकत्वसंभवात् पूर्वोत्तरपक्षसाधारणमध्यापनप्रयुक्तत्वमयुक्तमित्यर्थः। श्लोकौ व्याचष्टे-

यदि ह्यध्ययनमध्यापनविधिप्रयुक्तमभविष्यत्, ततः किं तत्सिद्धिरेवास्य प्रयोजनम्, उतार्थज्ञानमिति विचार उपापत्स्यत। न तु तत्तेन प्रयुक्तम्। स्वकीयेनैव विधिना प्रयुक्तिसम्भवात्।

नियोज्याभावतो यत्तु प्रयोक्तृत्वनिवारणम्।
अध्यापनेऽपि तत्तुल्यं न हि तत्राप्यसौ श्रुतः॥ ११॥

नियोज्याभावान्नाध्ययनविधिरध्ययनस्य प्रयोजको भवितुं क्षमत इति यदुक्तं, तदध्यापनविधावपि तुल्यम्। न हि 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यत्र,

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते॥'

इत्यत्र वा कश्चिन्नियोज्यः श्रुतः। तेनाध्यापनेऽपि न तावत्प्रयोजकत्वं स्यात्। कुत एवाध्ययने।

अथाचार्यककामस्य नियोज्यत्वं प्रकल्प्यते।
ज्ञानकामस्य किन्नैवमन्यत्रापि प्रकल्प्यते॥ १२॥

यदि ह्यध्यापनविधावाचार्यककामोऽश्रुतोऽपि नियोज्यः कल्प्यते, तर्ह्यध्ययनविधावप्यर्थज्ञानकामस्य कल्पना तुल्यैव। ननु नार्थज्ञानकामस्सम्भवति। यो नियुज्यते। ज्ञातस्तावदर्थो ज्ञातत्वादेव न ज्ञातुमिष्यते। नाप्यज्ञातेऽर्थे ज्ञानेच्छा संभवति। कथं हि बुद्धावनारूढमर्थमिममहं जिज्ञासेयेति ज्ञातुमाशंसीत। तस्मान्नार्थज्ञानकामस्यनियोज्यता सम्भवतीति।

तदुच्यते। अहो बत भवानात्मानं शिष्यान् सकलञ्च लोकमतिसंधातुमुद्युक्तः। कथं हि दुर्गवर्त्मगामिनं दस्यु-सरीसृप-कण्टक-व्याल-व्याघ्र-कण्ठीरवादिसदसद्भावजिज्ञा-

---

यदीत्यादीना। नन्वध्ययनविधेरनियोज्यकत्वादप्रयोजकत्वमुक्तमेवेत्यत आह—नियोज्याभावत इति। श्लोकं व्याचष्टे—नियोज्येति। कश्चिन्नियोज्य इति। 'अष्टवर्षम्' इत्यादिश्रुतौ, "उपनीय तु यः शिष्यम्" इत्यादिस्मृतौ चाध्यापनविधेः स्वर्गकामादिवत् कश्चिन्नियोज्यो न श्रूयत इत्यर्थः। ततश्चानियोज्यकत्वादध्यापनविधेरध्ययनविधिवत् स्वविषयाप्रयोजकस्य तद्द्वारा परप्रयोजकत्वं दूरोत्सारितमित्याह—तेनेति॥ ९–११॥

ननु 'तमाचार्यं प्रचक्षते' इत्याचार्यकस्य प्रतीतत्वादध्यापनसाध्यत्वाच्च तत्कामो नियोज्यः स्यादिति शङ्कते—अथेति। तर्हि विषयस्वभावजन्यस्यार्थज्ञानस्यापि पश्चात् प्रतीतत्वात् तत्कामो नियोज्यः स्यादिति परिहरति—अर्थज्ञानकामस्येति। नन्वर्थज्ञानस्य काम्यत्वे हि तत्कामो नियोज्यः स्यात्। तस्य च काम्यत्वमेव न संभवति। ज्ञातार्थविषये च, अज्ञातार्थविषये च ज्ञाने कामनायोगादिति शङ्कते—ननु नार्थेति। न ज्ञातुमिति। निर्णीति निर्णयेच्छायोगादित्यर्थः। नाप्यज्ञातेऽर्थ इति। ज्ञानस्य स्वरूपेण काम्यत्वासंभवादर्थोपरक्तस्यैव काम्यत्वम्। ततश्चापरिज्ञातेऽर्थे तदुपरक्तज्ञानस्यापरिज्ञातत्वात् तद्विषया कामना नोत्पद्यत इति भावः। एतदेवाह—कथमिति। बुद्धावनारूढमर्थमिति। अज्ञातमर्थमित्यर्थः। जिज्ञासेय-ज्ञातुमभिलषेयम्। सर्वथा अर्थज्ञानस्याकाम्यत्वे लौकिकवैदिकस्वप्रवृत्तिविरोध इति परिहरति—तदुच्यत इति। अहो बतेत्युपहासे। अतिसन्धातुम्—अपह्नोतुं वञ्चयितुमिति यावत्। अपवरकः—गृहाभ्यन्तर-

सया तत्र तत्र दृष्टिं चालयन्तमात्मानं वेदार्थबुभुत्सया चाऽऽत्मानमुपधावतः शिष्यान् प्रियादिसदसद्भावजिज्ञासया तं तमपवरकादिदेशमवलोकमानं शास्त्रश्रवण पुस्तकनिरीक्षणादिषु च तत्तदर्थज्ञानार्थं घटमानं सकलञ्च लोकमनतिसंधाय ज्ञानेच्छापह्नवः-शक्यते कर्तुम् ।

अथवाऽस्य नेदृशो निह्नवो विस्मयपदम् । अयं ह्यागोपालं सर्वलोकप्रसिद्धं द्विचन्द्रादिज्ञानं, धर्माधर्मानुष्ठानस्य चार्थानर्थहेतुत्वं निह्नुते । तानेव तु वयं शोचामः य एवेनं वेदार्थबुभुत्सयोपधावन्तो वेदार्थबुभुत्सा नाम नास्तीति सकललोकविपरीतमभिदधानं श्रद्दधते, न जहति ।

सूत्रकारश्च कथं हि विहायस्सुमनस्सदृशीं जिज्ञासां कर्तव्यत्वेन प्रतिपादयति । भाष्यकारेणापि चैषा प्रसिद्धाप्रसिद्धत्वेनाक्षिप्य समाहिता ।

---

प्रदेशः । तत्तदर्थज्ञानार्थम्—अभिमतार्थज्ञानार्थम् । घटमानं—चेष्टमानम् । अत्र च यथायोग्यं लौकिक-वैदिकस्वप्रवृत्तिविरोधो द्रष्टव्यः ।

न केवलमेतावत् । अन्योऽपि महान् लोकव्यतिक्रमोऽस्तीति पुनरप्युपहसन्नाह—अथ वेति । अपि चेत्यर्थः । द्विचन्द्रादिज्ञानमिति । स तावदित्थमयथार्थज्ञानमपलपति, दोषवशात् द्वेधा प्रवृत्तं चाक्षुषं तेज एकस्मिन्नेव चन्द्रमसि क्रमेण ज्ञानद्वयं जनयति । ततश्चन्द्रज्ञानगतद्वित्वे चन्द्रे च गृहीते उभयोरसंबन्धाग्रहात् द्वौ चन्द्राविति व्यवहारः । नतु विशिष्टज्ञानमस्तीति ।

आदिशब्दा'दिदं रजतमि'त्यत्रापि दोषवशादगृहीतविशेषधर्मके शुक्तिकास्वरूपे गृहीते सदृशदर्शनात् रजतमात्रे च स्मृते सत्युभयोरपि भेदाग्रहादिदं रजतमिति विशिष्टव्यवहारः । नतु विशिष्टज्ञानम् । तत् सर्वं ज्ञानं यथार्थमिति । अयमर्थः शालिकनाथेन नयवीथ्यां-समर्थितः ।

## अर्थज्ञानस्य काम्यत्वाभावेऽनिष्टस्य, काम्यत्वेऽनुगुण्यस्य च निरूपणम्

धर्माधर्मानुष्ठानस्येति । 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिनित्यविधिवाक्येषु नियोगस्य स्वतः कार्यतया प्रतिपन्नत्वेन साक्षात्फलस्यानाकाङ्क्षितत्वात्, तत्फलकामस्य नियोज्यस्य चाश्रवणात्, जीवनविशिष्टस्य तस्य च स्ववाक्यलब्धत्वेन तत्कल्पनायोगात् केवलं विधिसिद्ध्यर्थमेव कर्मानुष्ठानं, न फलार्थमिति ।

तथा 'न कलञ्जं भक्षयेत्' इत्यादिनिषेधवाक्येष्वपि भक्षणाभावविषयस्य नियोगस्य स्वतः कार्यतया प्रतीतत्वेन फलानपेक्षत्वात्, भक्षणे च प्रवृत्तस्य नियोज्यस्य सामर्थ्यलब्धत्वेन फलकामकल्पनायोगात् भक्षणानर्थहेतुत्वस्य चैतद्वाक्याप्रतिपन्नत्वात् विधिसिद्ध्यर्थमेव भक्षणनिवृत्त्यनुष्ठानं, नानर्थपरिहारार्थमिति धर्माधर्मयोरर्थानर्थहेतुत्वमपलपतीत्यर्थः ।

किंच वेदार्थज्ञानस्य काम्यत्वाभावे भवतो विवक्षितशिष्योपसंग्रहणं, शास्त्रप्रवृत्तिरपि न सिध्यतीत्याह—तानेव त्विति । बुभुत्सया—कामनया । उपधावन्तः—उपसर्पन्तः ।

किं चैवं—कथयतस्तव "अथातो धर्मजिज्ञासा" इति सूत्रप्रवृत्तिविरोधोऽपीत्याह—सूत्रकारश्चेति । विहायस्सुमनःसदृशीं—गगनकुसुमकल्पाम् । किं च ज्ञाताज्ञातविकल्पेनार्थज्ञानस्य काम्यत्वमेव नास्तीत्याक्षिप्य समाहितत्वात् । भवतो भाष्यविरोधोऽपीत्याह—भाष्यकारेणापीति ।

## स्वमतेन समाधानम्

कथं पुनः समाधानम्? उच्यते। यद्यपि नात्यन्तापरिज्ञातोऽर्थो ज्ञातुमिष्यते। नापि सर्वात्मना ज्ञातः। तथाऽपि केन चिदात्मना ज्ञातः, केन चिदात्मनाऽनवगतः जिज्ञास्यते, तथा दर्शनात्। यथोद्भिदादिपदं गुण-कर्मान्यतराभिधायित्वेनावगतं विशेषरूपेण जिज्ञास्यते। यथा च लोके कुड्यादिव्यवहिते देशे छायाचलनादिना वस्तुसत्तामात्रमवगम्य गवाश्वादिविशेषं जिज्ञासते। तथा धर्माधर्मयोरर्थानर्थहेतुत्वमात्रेण स्वरूपं वृद्धेभ्यः पित्रादिभ्योऽवगम्य विशेषरूपेणापरिज्ञातयोस्तयोर्हानोपादानाशक्तेस्तत्परिज्ञानेच्छा सम्भवतीति युक्तमेवैतज्ज्ञानकामस्य नियोज्यत्वम्—धर्माधर्मज्ञानकामः स्वाध्यायमधीयीतेति।

यस्तु वदति न वयं ज्ञानेच्छामपह्नुमहे, तस्याः सर्वलोकप्रसिद्धत्वेनाशक्यनिह्नवत्वात्। इष्टानिष्टप्राप्तिपरिहारोपायज्ञानं हि सर्वः प्रार्थयते। कस्तत्र विप्रतिपद्यते। वेदार्थज्ञाने तु नास्ति कामनेत्युच्यते। यदि हि सकलस्य वेदार्थस्येष्टानिष्टप्राप्तिपरिहारहेतुता भवेत्, ततस्तज्ज्ञानं पुरुषेणार्थ्येत। न त्वसावस्ति। नैमित्तिक-निषेधाधिकारयोर्विध्यनुष्ठानमात्रपरिनिष्ठितत्वात्। तस्मान्नार्थज्ञानकामस्य नियोज्यत्वमिति।

---

भाष्याभिप्रेतं समाधानं पृच्छति—कथं पुनरिति। उत्तरमाह—उच्यत इति। सर्वात्मना—सर्वप्रकारेण। केन चिदिति। सामान्याकारेण निश्चितो विशेषाकारेण त्वनिश्चितो जिज्ञास्यत इति भावः। तथा दर्शनादिति। लोके वेदे चेति शेषः।

तदेव दर्शयति—यथेत्यादिना। 'उद्भिदा यजेत' 'बलभिदा यजेत' इत्यादिवाक्येषु भावार्थोपनिबद्धानामुद्भिदादिपदानां 'ज्योतिष्टोमेन यजेत' 'पशुना यजेत' इत्यत्र ज्योतिष्टोमपशुपदयोः नामधेयपरत्वस्य गुणपरत्वस्य च दर्शनात् तथैवान्यतरपरत्वे निश्चिते विशेषांशे जिज्ञासा जायत इत्यर्थः। उक्तं परिहारक्रमं प्रकृतेऽप्युपपादयन्निगमयति—तथेति। नन्वध्ययनात् पूर्वं धर्माधर्मयोः सामान्यकारेणाप्यपरिज्ञानात् तद्विशेषजिज्ञासाभावे कथं तत्कामस्याध्ययनविधिनियोज्यत्वमित्यत्राह—वृद्धेभ्य इति। विशेषरूपेणेत्यादि। इत्थं वृद्धसकाशात् सामान्यतोऽवगच्छतो माणवकस्य पश्चात् को धर्मः? कश्चाधर्मः? किं तत्फलम्? किं वा तत्साधनम्? कान्याङ्गानि? कस्तेषामनुष्ठानक्रमः? को वाऽधिकारीति प्रायेण विशेषजिज्ञासासंभवात् तन्निर्णयार्थं तं प्रत्यध्ययनविधिर्मीमांसापर्यन्तमध्ययनं विधत्तइत्यर्थज्ञानकामस्य नियोज्यत्वं युक्तमिति स्वविधिप्रयुक्तमेवाध्ययनमिति। हानोपादानेति। हानम्—अननुष्ठानम्। उपादानम्—अनुष्ठानम्।

नन्वस्तु ज्ञानस्य काम्यत्वम्। वेदार्थज्ञानस्य तु काम्यत्वासंभवात् न तत्कामोऽध्ययनविधावधिकारीति कस्यचिन्मतमनुवदति—यस्त्विति। ननु तर्हि वेदार्थेऽपि जिज्ञासा स्यादित्याशङ्क्य, तत्र तदभावं वक्तुकाम तदुत्पत्तौ प्रयोजकमाह—इष्टानिष्टेति। यदि हीत्यादि। वेदार्थज्ञानस्य स्वरूपेणापुरुषार्थत्वात् स्वतो न काम्यत्वम्, किंतु पुरुषार्थसाधनकर्मानुष्ठानहेतुतया। तत्तु कृत्स्नस्य वेदार्थज्ञानस्य नास्तीत्यर्थः। कुतो नास्तीत्यत्राह—नैमित्तिकेति। नैमित्तिकनिषेधानुष्ठानयोर्विधिसिद्धिमात्रप्रयोजनत्वमधस्तात् 'धर्माधर्मानुष्ठानस्य' (१० पृ.) इत्यत्रोक्तम्।

**स वक्तव्यः किमिदानीन्नैमित्तिकवाक्यार्थज्ञानमनपेक्षितमेव। यद्येवं तर्हि पिकदशन-काकदशनविमर्शसदृशं किं सर्वशक्तौ प्रवृत्तिः स्यात्, अपि वाप्येकदेशे। तथा-सति कालमपि किमनादृत्य यजस्वेत्येव यष्टव्यम्, उत काल एव। मुख्याभावे द्रव्यान्तरं प्रतिनिधेयम्, उत न। तच्च सदृशमसदृशमित्यादि न कर्तव्यं स्यात्। निर्णयार्थत्वाद्विमर्शस्य, तदर्थस्य चानिर्णिनीषितत्वात्। अतोऽवश्यमसत्यपि फले विध्यर्थानुष्ठानसिद्ध्यर्थमेव तद्वाक्यार्थज्ञानमपेक्षितमित्यभ्युपगन्तव्यमिति युक्तमर्थ-ज्ञानकामस्य नियोज्यत्वम्।**

---

अपुरुषार्थसाधनतया नित्यनैमित्तिकाधिकारपरिज्ञानस्यानपेक्षितत्वे त्वनेकाधिकरणैस्त-द्विचारः काकदन्तपरीक्षाकल्पः स्यादिति दूषयति—**स वक्तव्य** इत्यादिना। तान्येवाधिकरणानि-दर्शयति—**किं सर्वशक्ताविति**त्यादिना। 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिनित्यविधिषु सर्वाङ्गो-पेतप्रधानानुष्ठानसमर्थस्यैवाधिकारः, उत यावच्छक्त्याङ्गोपेतप्रधानानुष्ठानसमर्थस्येति विचिन्त्य, विनियोगानुसारेणैवाधिकारस्य तिर्यगधिकरणे निर्णीतत्वादङ्गवैकल्ये साध्यनियोगासिद्धेः सर्वाङ्गो-पसंहारसमर्थस्यैवाधिकार इति पूर्वपक्षयित्वा, अधिकारवाक्ये प्रथमं प्रधानमात्रानुष्ठानसमर्थस्यै-वाधिकारप्रतीतेः, तदनुसारेणाङ्गेषु शक्त्यनुसारस्य कल्पयितुमुचितत्वात् शक्याङ्गानुष्ठानेऽपि साध्यनियोगसिद्धेः संभवात् शक्याङ्गोपसंहारसमर्थस्याप्यधिकार इति राद्धान्तितम्। अमुं विचारं नित्यकाम्यप्रकरणे ६ स्वयमेव प्रपञ्चयिष्यति।

**तथा सतीत्यादि**। अग्निहोत्रादिनित्यविधिष्वेव किमशक्याङ्गान्तरवत् कालस्यापि कदाचित् परित्यागः, उत नियमेनोपादानमिति विचिन्त्य, नित्येष्वशक्याङ्गपरित्यागस्याङ्गीकारात् काल-स्यापि कदाचित् परित्याग इति पूर्वपक्षं कृत्वा कालस्य स्वतः सिद्धाङ्गत्वेनानुपादेयत्वात् तत्र च यथाशक्तिसंपादनस्यासंभवादस्मिन् काले एतत् कर्तव्यमिति काले साङ्गकर्मविधानाच्च काल-व्यतिरिक्ताङ्गेष्वेव यथाशक्तिप्रयोगः, नतु काल इति कालस्य नियमेनोपादानमिति राद्धान्तितम्।

**मुख्याभाव इति**। 'अग्निहोत्रं जुहोति' इत्यग्निहोत्रकर्म विधाय तत्र 'दध्ना जुहोति' 'पयसा जुहोति' इति द्रव्यं विहितम्। तस्य द्रव्यस्यापचारे किं कर्मोत्स्रष्टव्यम्, किं वा द्रव्यान्तरं—प्रतिनिधाय समापनीयमिति विचार्य, कर्मशास्त्र-द्रव्यशास्त्रयोरन्योन्यसापेक्षत्वेनैकशास्त्रत्वात् द्रव्यापचारे द्रव्यान्तरेण कर्मानुष्ठानेऽपि शास्त्रार्थानुष्ठानासिद्धेः कर्मोत्स्रष्टव्यमित्याशङ्क्य, निरपेक्षस्यैव कर्मणो नियोगसाधनत्वात् तदाक्षिप्तद्रव्याणां च कर्मसाधनत्वश्रवणात् निरपेक्ष-साध्यभेदेनोभयोर्भिन्नशास्त्रत्वात् द्रव्यापचारेऽप्याक्षिप्तद्रव्येण कर्मानुष्ठानेऽपि प्रधानशास्त्रस्यार्थ-वत्त्वसिद्धेः द्रव्यान्तरं प्रतिनिधाय समापनीयमिति राद्धान्तितम्।

**तच्चेति**। तत्रोपनीयमानं द्रव्यं पूर्वद्रव्यसदृशमेवोपादेयम्, उत यत्किंचिदिति विचिन्त्य, येन केनापि द्रव्येण कर्मनिष्पत्तेरविशेषात् यत्किंचिदिति पूर्वपक्षं कृत्वा, सदृशद्रव्ये मुख्यद्रव्या-वयवबाहूल्येन तेन कर्मनिर्वृत्तौ मुख्यशास्त्रार्थानुसारात् सदृशमेवोपादेयमिति परिहृतम्। तदर्थस्य-वेदार्थस्य। नन्वनेकाधिकरणविप्लवभयेन कथमफलसाधनज्ञानस्य काम्यत्वम्। तदभावे वा कथं तत्कामस्य नियोज्यत्वमित्याशङ्क्याह—**अत इति**। नित्य—नैमित्तिकाधिकारेषु फलसाधनत्वा-भावेऽपि भवन्मते विधिसिद्धेरेव प्रयोजनत्वात्, तत्साधनज्ञानं तदनुष्ठानार्थमपेक्षितमित्यर्थः।

एवं तर्हि प्रागेव वेदाध्ययनाद्धर्मजिज्ञासोत्पादा'दथातो धर्मजिज्ञासे'त्यनुपपन्नं-स्यात्। न। जिज्ञासाभेदात्।

यथाह—'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः।
ज्ञातविद्यान्तरस्यान्या या मीमांसापुरःसरा ॥' बृ. टी. ॥ इति।

प्रथमं तावद्धर्माधर्मौ ज्ञातव्याविति वृद्धेभ्यः श्रुत्वा तज्ज्ञानमिच्छन् स्वाध्यायाध्ययनविधिना तादर्थ्येन विहितमध्ययनमपि तेभ्य एवावधार्याऽधीते वेदम् ततोऽव्युत्पन्नस्याधीतादपि वेदादर्थज्ञानानुदयात् किमनेनोच्यत—इति पुनरन्यादृशी जिज्ञासा जायते। तद्वशेन च व्युत्पत्त्युपाये निगम-निरुक्त-व्याकरणश्रवणे यतते। ततश्च पदार्थज्ञानाद्वाक्यार्थः प्रतीयमानो न्यायानवधारणात्संशयितो भवति। ततः पुनर्वाक्यार्थविशेषजिज्ञासा भवति। तदिदं पश्चात्तनं जिज्ञासाद्वयमभिप्रेत्य 'अथातो धर्मजिज्ञासे'-त्युक्तम्। यथोक्तं भाष्यकारेण न जिज्ञासामात्राभिप्रायेणेदमुच्यते। किन्तु 'तादृशीं धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः या वेदाध्ययनमन्तरा न सम्भवति' इति। प्रामाण्याप्रामाण्यजिज्ञासा तु यद्यपि वेदाध्ययनात्प्रागपि सम्भवति, तथाऽप्यध्ययनकालातिपत्तिभयात्पश्चादेव तु करिष्यते। तदलमतिदूरं गत्वा।

सिद्धं तावदर्थज्ञानकामस्याध्ययने नियोज्यत्वमिति। प्रत्युताध्यापन एव नियोज्यो—न सम्भवति। आचार्यकस्य सामान्यतोऽपि प्रागस्माद्वचनादनवगमादित्यनन्तरमेव वक्ष्यामः ॥ १२ ॥

---

नन्वर्थज्ञानकामस्याध्ययनविधिनियोज्यत्वे अध्ययनात् पूर्वमेव तदनुष्ठानार्थं जिज्ञासा-वक्तव्या। सूत्रकारेण त्वध्ययनानन्तरं साऽभिहिता। अतः सूत्रविरोध इति शङ्कते—**एवं तर्हीति**। अथ—अध्ययनानन्तरम्। अतः—अध्ययनविधेरर्थज्ञानपर्यन्तत्वादित्यर्थः। परिहरति—**नेति**। अध्ययनार्थजिज्ञासायाः सौत्रजिज्ञासातो भिन्नत्वादित्यर्थः।

जिज्ञासाभेदपरं वार्तिकमाह—**यथाहेति**। उपनीतस्याध्ययनात् पूर्वमिति शेषः। श्लोकं व्याचष्टे—**प्रथममिति**। **तज्ज्ञानमिच्छन्निति** प्रथमजिज्ञासाऽभिहिता। **तेभ्य एवेति**। अर्थज्ञानोपायस्य स्वयमपरिज्ञानादध्ययनविधिविहितं तमुपायं वृद्धेभ्यो निश्चित्येत्यर्थः। **अन्यादृशीति**। तदानीं प्रकृतिप्रत्ययविभागेन पदार्थनिर्णयोपयोगिनी द्वितीयेत्यर्थः। **पदार्थज्ञानादिति**। पदैरभिहितानां पदार्थानामेव वाक्यार्थबोधकत्वादित्यर्थः। **प्रतीयमान इति**। आपाततः सामान्याकारेणेति शेषः। **वाक्यार्थविशेषेति**। अयं वाक्यार्थः, अयं वेति पूर्वपक्षसिद्धान्तविशेषविषया तृतीया जिज्ञासा जायते। ततस्तन्निर्णयोपायन्यायनिबन्धनरूपमीमांसाशास्त्रे प्रवर्तते-इत्यर्थः। उक्तेऽर्थे भाष्यसंमतिमप्याह—**यथोक्तमिति**। इह सूत्र इति शेषः। **अध्ययनमन्तरेति**। तस्मिन् सत्येव भवतीत्यर्थः।

ननु निर्णीतवेदप्रामाण्यस्यैवाध्ययनेऽधिकारसंभवात् प्रामाण्याप्रामाण्यचिन्ताऽध्ययनात् पूर्वभाविनीति, सा कथं तदनन्तरभावितया सूत्रकारेण प्रथमाध्याये निबद्धेत्यत्राह—**प्रामाण्येति**। वेदवाक्यार्थान्योन्यान्वयानन्वयविरोधनिमित्तप्रामाण्याप्रामाण्यचिन्ता त्वध्ययनानन्तरभाविन्येव। सामान्याकारेण प्रवृत्तां चिन्तां त्वधिकृत्यायं शङ्काग्रन्थः। कालातिपत्तिः—कालव्यतिक्रमः। प्रसक्तानुप्रसक्तिं परिसमाप्य प्रकृतमुपसंहरति—**तदलमित्यादिना**।

एवमध्ययनविधौ नियोज्यमुपपाद्य, इदानीमध्यापनविधिप्रवृत्तिवेलायामाचार्यकस्याप्रतीतेः—तत्कामस्यैवासंभवात् तत्रैव नियोज्यो न संभवतीति दूषयति—**प्रत्युतेति**। अस्मात्—'उपनीय—तु यः शिष्यमि'त्यादिवचनात्। **अनन्तरमेवेति**। 'किंच प्रमाणान्तरे'त्यादिश्लोक इत्यर्थः ॥१२॥

अथानियोगजन्यत्वान्नियोज्यस्य विशेषणम् ।
न युक्तमर्थविज्ञानं तुल्यमाचार्यकेऽपि तत् ॥ १३ ॥

यदेव हि नियोगजन्यं फलं, तदेव काम्यमानतया नियोज्यमवच्छेत्तुमलम् । न-विषयफलं तुषविमोकादिवत् । ज्ञानन्तु विषयभूताध्ययनफलं, न नियोगजन्यमिति, न-तत्कामस्य नियोज्यत्वं सम्भवतीति चेत् ? तर्ह्यनेनैव हेतुनाऽऽचार्यकमपि न नियोज्य-विशेषणं स्यात् । तस्यापि विषयफलत्वात् ।

किञ्च--प्रमाणान्तरविज्ञाते कामनोत्पद्यते प्रिये ।
आचार्यकं तु न ज्ञातं मानेनान्येन केनचित् ॥ १४ ॥

आहवनीयादिवदलौकिकमाचार्यकं प्रमाणान्तरेणानवगतमध्यापनविधायकेनैव-वचनेनावगम्यत इति भवतो दर्शनम् । नचानवगते कामना सम्भवतीति, न तत्कामस्य-नियोज्यत्वसम्भवः ।

अनेनैव तु वचनेन ज्ञात्वा काम्यत इत्याश्रीयमाणे परस्पराश्रयदोषापत्तिः ।

सिद्धं तत्काममुद्दिश्य विधिरेषः प्रवर्तते ।
विधावस्मिन् प्रवृत्ते च तत्कामस्य निरूपणम् ॥ १५ ॥

---

अर्थज्ञानस्य नियोज्यविशेषणत्वासंभवात् न तत्कामस्य नियोज्यत्वमिति मुखान्तरेण शङ्कते—अथेति । प्रतिवन्द्या परिहरति—तुल्यमिति । श्लोकं व्याचष्टे व्याचष्टे—यदेवेति । यो हि ममेदं कार्यमिति नियोगं मन्यते, स नियोगप्रतिसंबन्धितया तत्साध्यमेव फलं कामयत इति, तदेव तस्यावच्छेदकम्, नत्वन्यत् । तस्य नियोगानन्वयादिति भावः । विषयफलं—करणफलम् । तुषविमोकेति । क्रियाफलत्वमात्रे दृष्टान्तः । अध्ययनफलमिति । अध्ययनस्य स्वाध्यायप्राप्तिद्वारा दृष्टेनैव द्वारेणार्थज्ञानोपायत्वात् ज्ञानं तत्फलमिति भावः । प्रतिवन्द्या परिहरति—तर्हीति । तस्यापीति । अध्यापनानन्तरमेव ह्यध्यापकमाचार्यं इति व्यपदिशन्ति । अतस्तदध्यापनफलमेव, न तु नैयोगिकमित्यर्थः ।

अनन्तरं वक्ष्याम इति यदुक्तं, तदेवेदानीमाह—किं चेति । 'स्वर्गकामो यजेत' पशुकामो यजेत' इत्यादिषु पुरुषार्थतया प्रमाणान्तरावगते स्वर्गपश्वादौ कामना जायते । नात्र-तथेत्यर्थः । आहवनीयादिवदिति । आधानादिसंस्कारविशेषजन्यस्यैवाग्नेराहवनीयत्वेन तस्या-लौकिकत्वम् । आदिशब्दाद्गार्हपत्यादि गृह्यते ।

ननु मा भूदाचार्यकस्य मानान्तरादवगतिः । अनेनैव तदवगतौ तत्कामस्य नियोज्यत्वं-स्यादित्याशङ्कामनूद्य परस्पराश्रयमाह—अनेनैव त्विति । अधिकारवाक्येषु मानान्तरप्रसिद्ध-फलकामोद्देशेन कर्मविधानात् खलु वाक्यपर्यवसानम् । अत्र त्वाचार्यकस्य प्रमाणान्तरागोचर-त्वादनेनैव वचनेनाचार्यके, तत्कामे च परिज्ञाते तदुद्देशेनाध्यापनविधानात् वाक्यपर्यवसानं-वक्तव्यम् । ततश्चाचार्यककामसिद्धौ तदुद्देशेनाध्यापनविधानात् वाक्यपर्यवसानम् । तस्मिंश्च सति तत्कामसिद्धिरिति व्यक्तः परस्पराश्रय इत्यर्थः ॥ १४–१५ ॥

स्यादेतत्—अधिकारादनुष्ठानं विद्यते स त्विहापि च।
असत्यपि नियोज्यत्वे तद्धि साक्षान्न साधनम् ॥ १६ ॥

नियोगम्प्रति हि नियोज्यता। नासौ साक्षाद्विषयानुष्ठानसाधनम्। किन्तु नियोज्यत्वेन सम्बद्धस्य पुरुषस्य नियोगः कर्तव्यो भवति। स एव हि नियोज्यः, या नियोगं ममेदं कार्यमिति बुध्यते। यस्य च नियोगः कर्तव्यः, तस्य च तत्साधने कर्मण्यधिकारो भवति। स्वकार्यसाधनत्वात्। अधिकाराच्चानुष्ठानम्। यत्र चान्तरेणापि नियोज्यत्वमधिकारो भवत्यवगतः, तत्र तत एवानुष्ठानसिद्धेः किं नियोज्यत्वेन। विद्यते चाध्यापनेऽधिकारः। आचार्यकसाधनत्वात्। आचार्यकसाधनत्वेनाध्यापने वचनेन प्रतिपादिते, तदर्थिनस्तत्राग्न्यर्थिन इवाधानेऽनुष्ठानसिद्धिः। तदाक्षिप्तानुष्ठानेनैवाध्ययनेन—लब्धात्मकोऽध्ययननियोगो न नियोज्यं परिकल्पयतीति।

एवं तर्हि—अधिकारादनुष्ठानसिद्धेरध्ययनस्य च।
अध्यापनप्रयुक्तत्ववाचोयुक्तिरनर्थिका ॥ १७ ॥

विनापि नियोज्यत्वमर्थज्ञानसाधनेऽध्ययने स्वाधिकारादेव तदर्थिनोऽनुष्ठानसिद्धेरध्यापनप्रयुक्तत्वानुपपत्तिः। भवद्भिरपि चेष्यत एवाध्ययनेऽधिकारः। नियोज्यत्व-

---

ननु मा भूदध्यापनविधावाचार्यककामस्य नियोज्यता, तथाप्यध्ययनस्याध्यापनप्रयुक्ततैव। न स्वविधिप्रयुक्ततेति शङ्कते—स्यादेतदित्यादिना—न नियोज्यं परिकल्पयतीत्यन्तेन। कर्मणि मादर्थ्यज्ञानमधिकारः। तन्निमित्तकं खलु सर्वत्रानुष्ठानम्, न तु नियोज्यत्वनिमित्तकम्। इहाध्यापने नियोज्याभावेऽप्यसावधिकारो विद्यत इति, तन्निमित्तमनुष्ठानं स्यात्। अन्यत्र संभवदपि हि तत् नियोज्यत्वं साक्षान्नानुष्ठानसाधनमिति श्लोकार्थः। अधिकारस्यैव साक्षाद्विषयानुष्ठानसाधनत्वं वक्तुं नियोज्यत्वस्य तद्धेतुत्वमेव, नतु साक्षात् तद्विषयानुष्ठानहेतुत्वमिति प्रथमं तावदाह—नियोगं प्रतीत्यादिना। नियोज्यस्य नियोगप्रतिसंबन्धित्वमेव। न विषयप्रतिसंबन्धित्वम्। अतस्तस्यां दशायां न विषयानुष्ठानहेतुत्वमित्यर्थः। तर्हि नियोज्यकृत्यं किमित्यत्राह—किंन्त्विति। नियोगानुष्ठानमेव तस्य कृत्यमित्यर्थः। तस्य कथं नियोगोऽनुष्ठेयः इत्याशङ्क्य नियोगप्रतिसंबन्धिनियोज्यस्वभावादेवेत्याह—स एवेति। नियोज्यदशापन्नस्य नियोगोऽनुष्ठेयतया प्रतीयते। तस्य साक्षादनुष्ठातुमशक्यतया तदनन्तरं तत्साधने कर्मणि तस्यैवाधिकारदशा भवतीत्याह—यस्य चेति। अधिकारो नाम कर्मप्रतिसंबन्धिनो मदीयताबुद्धिः। अनुष्ठानमिति। अधिकारानन्तरं तस्यैव कर्मणि कर्तृत्वदशा भवतीत्यर्थः।

ननु नियोज्यत्वस्य साक्षादनुष्ठानहेतुत्वाभावेऽपि अधिकारद्वारा तस्य हेतुत्वमस्त्येव। अध्यापने तु नियोज्याभावेनाधिकारासंभवात् कथमनुष्ठानमित्याशङ्क्य, विषयफलेनापि तत्साधने कर्मण्यधिकारसंभवात् नियोज्याभावेऽप्यनुष्ठानसिद्धिरित्याह—यत्र चेत्यादिना। आधान इति। आधाने नियोज्याभावेऽप्यग्निनिष्पादकत्वेनाधिकारमात्रादेवानुष्ठानमित्यर्थः। अस्त्वधिकारमात्रादेवाध्यापनानुष्ठानं, तथाप्यध्ययनस्य कथं न स्वविधिप्रयुक्तिरित्यत आह—तदाक्षिप्तेति॥ १३–१६ ॥

तर्हि अध्यापनविधिन्यायेनाध्ययनविधावपि नियोज्याभावेऽप्यधिकारादेवानुष्ठानस्य सिद्धेः न परप्रयुक्तिरङ्गीकार्येति साम्येन परिहरति—एवं तर्हीति। वाचोयुक्तिः—वचनम्। श्लोकं व्याचष्टे—विनाऽपि नियोज्यत्वमिति। भवद्भिरित्यादि। भवद्भिरध्ययनविधावध्ययना-

मात्रन्तु नेष्यते। न तावता परप्रयुक्तत्वमनुष्ठानायाध्ययने भवति। स्वकीयादेवाधिकारादनुष्ठानलाभात्। सत्यपि च नियोज्ये फलसाधने कर्मणि तत एवानुष्ठानम्, न नियोगात्। कामाधिकारवत्। फलं चासत्यपि नियोज्ये साधनानुष्ठानं प्रयोक्तुं क्षममिति, किं नियोज्यसदसद्भावविचारेण।

यत्र तु नियोज्याधीनैव फलावगतिर्विश्वजिदादौ, तत्र भवतु नियोज्यापेक्षा। अत्र त्वन्तरेणापि नियोज्यमर्थज्ञानसाधनत्वेनाध्ययनमवगम्यत इति, तत एवानुष्ठानसिद्धेर्नाध्ययनस्याध्यापनप्रयुक्तत्वसम्भवः।

ततश्च—अप्रयोजकता तुल्या नियोज्याभावतो द्वयोः।
अधिकारात्प्रयोक्तृत्वं समानमुभयोरपि ॥ १८ ॥

यदि नियोज्याभावादप्रयोजकत्वमध्ययनविधेः, ततोऽध्यापनविधेरपि तदभावादप्रयोजकत्वं भवति। अथाधिकारसद्भावात्, तस्य प्रयोजकत्वम्, अध्ययनविधेरपि तर्हि तत्सद्भावात् प्रयोजकत्वं युक्तमित्युभयोरपि तुल्यत्वान्नाध्यापनविधिप्रयुक्तत्वमध्ययनस्य संभवति।

विचारस्य प्रयुक्तिश्च नाचार्यकविधानतः।
स्वेनैव त्वधिकारेण तद्वदध्ययनस्य सा ॥ १९ ॥

आचार्यकमध्यापनसाध्यमध्ययनमात्रमाक्षिपेत्, न विचारम्। विचारमन्तरेणाप्यात्मलाभात्। तेनावश्यमध्ययनजन्येनैवाधिकारेण विचारमन्तरेणानुपपद्यमानेन तत्प्रयुक्तिरास्थेया। तद्वदेवाध्ययनस्यापि तेनैव प्रयुक्तिः संभवतीति, न प्रयोजकान्तरं मृग्यम्। येन हि फलेनार्थज्ञानाख्येनेतिकर्तव्यताभूतो विचारः प्रयुज्यते, प्रयुज्यतेतरामनेन करणभूतमध्ययनम्।

---

नन्तरं मीमांसाश्रवणात् पूर्वमापाततोऽर्थप्रतीतिरूपो मीमांसाश्रवणप्रयोजको योऽधिकारोमध्येऽङ्गीकृतः, स एवाध्ययनानुष्ठानहेतुतया प्रथमत एवाङ्गीकार्य इति भावः। अध्ययनविधौ नियोज्याभावेऽपि फलाधिकारादेवानुष्ठानं युज्यत इत्युक्तम्। तदेव मुखान्तरेणोपपादयति—सत्यपीति। कामाधिकारवदिति। वतिरविवक्षितः। कामाधिकार इत्यर्थः। कामाधिकारे फलसाधने कर्मणि सत्यपि नियोज्ये करणांशे फलरागादेव प्रवृत्तिः, न नियोगात्। अङ्गेषु तु विधित इति भवताऽङ्गीकृतमित्यर्थः। अतः फलसंभवे सतोऽपि नियोज्यस्यानुष्ठानसिद्धेः तदर्थं नियोज्यसदसद्भावचिन्ता वृथेत्याह—फलं चेति।

यदि नियोज्यमन्तरेणाप्यनुष्ठानसिद्धिः, तर्हि विश्वजिदधिकरणेऽपि विषयानुष्ठानसिद्ध्यर्थं कर्तारं परिकल्प्य, तदर्थमधिकारिणं, तदर्थं च नियोज्यपरिकल्पनं कृतम्। तत् कथमित्यत्राह—यत्र त्विति। फलसंभवे खलु नियोज्यस्यानुष्ठानाप्रयोजकत्वम्। 'विश्वजिता यजेते'त्याद्यधिकारवाक्ये तु साक्षात् फलस्याश्रुतत्वात्—कर्त्रधिकारिप्रणाडिकया नियोज्ये कल्पयितव्ये तद्विशेषणतयैव स्वर्गस्य कल्पनीयत्वात्—तदनुष्ठानार्थं स्वर्गकामनियोज्यपरिकल्पनं कृतमित्यर्थः। प्रकृते तु फलसंभवान्नैवमित्याह—अत्र त्विति। उभयोरपि विध्योः प्राक्प्रतिपादितं साम्यमुपसंहरन्नध्ययनस्य परप्रयुक्त्यभावं निगमयति—ततश्चेत्यादिना।

इदानीमध्ययनाधिकारस्याध्ययनङ्गभूतमीमांसाश्रवणप्रयोजकत्वं भवतैवाङ्गीकृतम्। तद्वत् करणभूताध्ययनप्रयोजकत्वमप्यङ्गीकार्यमिति प्रतिपादयितुमुपक्रमते—विचारस्येत्यादिना। श्लोकं व्याचष्टे—आचार्यकमिति। आत्मलाभादिति। अध्यापननिर्वृत्तिरध्ययनमात्रा-

## अध्यापनविधिमंगीकृत्य तत्प्रयुक्तमध्ययनं न भवतीति दूषणं

अथोच्येताध्यापनविधिरेव विचारस्यापि प्रयोजकः। स हि विशिष्टप्रयोजनाध्ययनगोचरमध्यापनं विदधत् तत्सिद्ध्यर्थं तादृशमध्ययनं प्रयुङ्क्ते। तादृशत्वं चाध्ययनस्य विचारमन्तरेणानुपपन्नमिति तेनैवासावाक्षिप्यत इति।

तद्युक्तं विशिष्टस्य यद्यप्यध्ययनस्य सः।
अनुष्ठानं प्रयुङ्क्ते न ज्ञानस्यानङ्गभावतः॥ २०॥

यद्यप्युपनयनद्वारेणाध्ययनं प्रयुञ्जानोऽध्यापनविधिरुपनयनप्रक्रमाधीत'स्वाध्यायोऽध्येतव्य' इत्येतद्वाक्यविहितं यदर्थज्ञानार्थमध्ययनं, तस्यैवानुष्ठानं प्रयुङ्क्ते, तथाऽपि तत्स्वरूपमात्रमेवोपकारकत्वात्प्रयुङ्क्ते। न त्वर्थज्ञानानुष्ठानम्। अनुपकारकत्वात्। यदि त्वर्थज्ञानमध्ययनाङ्गं भवेत्, ततोऽध्ययनप्रयोजकेन विधिना तद्द्वारेण प्रयुज्येत। ज्योतिष्टोमविधिनेव दीक्षणीयाद्वारेण वाङ्नियमः। न तु ज्ञानमध्ययनाङ्गम्। अध्ययनमेव तु ज्ञानाङ्गम्। न चाङ्गद्वारेण प्रधानं प्रयोक्तव्यम्। यश्च ज्ञानं न प्रयुङ्क्ते, नासौ तत्सिद्ध्यर्थं विचारं प्रयोक्तुमर्हति।

---

पेक्षिणी—न विचारापेक्षिणीत्यर्थः। अध्ययनजन्येनाधिकारेण—अध्ययनजन्येनार्थज्ञानरूपेण फलेनेत्यर्थः। तदेवोपपादयन् निगमयति—येन हीति॥ १७–१९॥

अध्ययनाधिकारस्य विचारप्रयोजकत्वे खल्वध्ययनस्यापि प्रयोजकत्वं सिध्येत्, तदेव नास्ति। विचारस्याप्यध्यापनविधिप्रयुक्तेरिति शङ्कते—अथोच्येतेति। कथमध्यापनविधिः-विचारस्य प्रयोजकः। तस्य स्वोपकारकत्वाभावादित्यत्राह—स हीति। अध्ययनं हि अर्थज्ञानरूपप्रयोजनसाधनत्वेन विहितम्। तादृगेवाध्ययनमध्यापनोपकारि। ततश्च तादृशमध्ययनं प्रयुञ्जानोऽध्यापनविधिर्विचारमन्तरेणाध्ययनस्य तत्साधनत्वायोगात् विचारमपि प्रयुङ्क्त इति—अध्ययनगोचरम्—अध्ययनपेक्षया प्रवृत्तम्। तादृशत्वम्—अर्थज्ञानसाधनत्वम्।

दूषयति—तद्युक्तमिति। विशिष्टस्य—अर्थज्ञानसाधनस्य। अनङ्गभावतः—अध्ययनानङ्गत्वात्। श्लोकं व्याचष्टे—यद्यपीति। नियोगस्यार्थज्ञानस्य चोभयोः प्रयोजनत्वेनाङ्गीकारात् 'स्वाध्यायोऽध्येतव्य' इत्यनेनार्थज्ञानार्थमध्ययनं विधीयते। स्वाङ्गभूतोपनयनद्वाराऽध्ययनं प्रयुञ्जानोऽध्यापनविधिरप्युपनयनसंनिधिपाठबलादेव वैधम्। अत एव प्रयोजनापेक्षमध्ययनं प्रयुञ्जीत, इत्यर्थज्ञानसाधनस्यैव प्रयोज्यत्वं सिध्यतीति भावः। तर्हि विचारस्याप्रयोज्यत्वं कुतः? तत्राह—तथापीति। स्वभावतोऽर्थज्ञानसाधनमप्यध्ययनमनुपकारकत्वान्न तेन वेषेण प्रयुज्यते। तत्साध्यमर्थज्ञानमपि न प्रयोज्यमनुपकारकत्वादेव। किंत्वध्ययनस्वरूपमेवेति भावः। अर्थज्ञानस्य साक्षादनुपकारकत्वेऽपि कथंचित् प्रयोज्यत्वं भवेदित्यत आह—यदि त्विति। साक्षादनुपकारकस्यापि प्रयोज्यान्तरशेषत्वे तद्द्वारा भवति प्रयोज्यत्वम्। तदप्यस्य नास्तीति भावः।

प्रयोज्यशेषस्य तद्द्वारा प्रयोज्यत्वे दृष्टान्तमाह—ज्योतिष्टोमेति। 'मन्द्रं दीक्षणीयायामनुब्रूयात्' इति दीक्षणीयाङ्गतया विहितस्य वाङ्नियमस्य ज्योतिष्टोमापूर्वेण स्वाङ्गभूतदीक्षणीयापूर्वद्वारेण प्रयुक्तिरित्यर्थः। न केवलाध्ययनानङ्गत्वमात्रेण तद्द्वाराऽर्थज्ञानस्याप्रयुक्तिः। अध्ययनाङ्गित्वादपि न तद्द्वारेण प्रयुक्तिरित्याह—अध्ययनमेवेति। न च स्वाङ्गार्थमङ्ग्यनुष्ठानम्। किं त्वङ्ग्यर्थमेवेति भावः। ततः किम्? तत्राह—यश्चेति। असाविति। अध्यापनविधिः।

ननु यद्यपि न ज्ञानमङ्गं, विचारस्त्वङ्गमेव। सत्यम्। न त्वध्ययनाङ्गस्यापि तद्द्वारेणाध्यापनेन प्रयुक्तिसम्भवः।

यदि तेन विना न स्यात्प्रधानस्यात्मसम्भवः।
प्रयोजकस्य चासिद्धिस्ततस्तेन प्रयुज्यते ॥ २१ ॥
अन्यथाऽपि तु तल्लाभे स्वात्मलाभे च सिद्ध्यति।
नैव कार्यान्तराङ्गस्य प्रयुक्तिस्तेन सिद्ध्यति ॥ २२ ॥

अध्यापनं ह्यध्ययनमन्तरेणानुपपद्यमानं तत्स्वरूपमात्रमेव तावत्साक्षात्प्रयुङ्क्ते। न तु तदङ्गम्। यदि त्वङ्गेन विना प्रधानभूतमध्ययनमेव न सम्भवेत्, ततस्तद्द्वारेणाऽङ्गमपि प्रयुञ्जीत पशुपूर्वमिव यूपद्वारेण छेदनादीन्। यदि चाङ्गशून्येनाध्ययनेनाध्यापनं न सिद्ध्येत्, किन्त्वङ्गोपेतमेवाध्ययनमध्यापनोपकारि स्यात्, ततोऽध्यापनेनैवाध्ययनाङ्गं प्रयुज्येत। ज्योतिष्टोमेनेव वाङ्नियमः। न त्वेतदुभयमप्यस्ति। विनाऽप्यङ्गेनाध्ययनस्वरूपसिद्धेः। अध्यापनस्य तत्स्वरूपमात्रेणैवात्मलाभात्। तेन यद्यप्यविघ्नपरिसमाप्त्युपयोगितयाऽध्ययनस्वरूपोपयोगिनां व्रतादीनां सकलवेदाध्यापनविषयेणाचार्यकविधिनाऽविघ्नपरिसमाप्त्याकाङ्क्षिणा प्रयुक्तिसम्भवः, तथापि न विचारस्तेनाक्षिप्यते, कार्यान्तराङ्गत्वात्। अर्थज्ञानाख्यं हि कार्यान्तरं साधयतोऽध्ययनस्य विचारोऽङ्गम्। नाध्यापनोपकारिणः। तेन नासावध्यापनविधिना प्रयुज्यते। किन्त्वध्ययनजन्येनैवाधिकारेण।

---

ननु मास्त्वर्थज्ञानस्याध्यापनेन प्रयुक्तिः, तथाप्यध्ययनाङ्गतया विचारस्य तेन प्रयुक्तिः—स्यादिति शङ्कते—नन्विति। अङ्गमेवेति। अर्थज्ञानं साधयतोऽध्ययनस्य तत्फलोपकारीतिभावः। अङ्गत्वमङ्गीकृत्यैव प्रयोज्यत्वं नास्तीति परिहरति—सत्यमिति।

कथं प्रयुक्त्यसम्भवः—इत्याशङ्क्य तदसम्भवं श्लोकद्वयेनोपपादयति—यदीति। तेन—विना—विचारमन्तरेण। प्रधानस्यात्मसंभवः—अध्ययनस्वरूपनिष्पत्तिः। अन्यथापीति। विचाराभावेऽपि। तल्लाभे—अध्ययननिष्पत्तौ। स्वात्मलाभे—अध्यापननिष्पत्तौ। कार्यान्तराङ्गस्य—कार्यान्तरसाधनाध्ययनाङ्गस्य विचारस्य।

श्लोकौ तात्पर्यतो व्याचष्टे—अध्यापनं हीत्यादिना। पशुपूर्वमिति। छेदन-तक्षणादिना विना यूपस्वरूपस्यानिष्पत्तेर्यूपप्रयोजकं पशुपूर्वं तद्द्वारेण—तन्निष्पादकं छेदनादिकं प्रयुङ्क्ते इत्यर्थः। ज्योतिष्टोमेनेति। वाङ्नियमसहितमेव दीक्षणीयापूर्वंज्योतिष्टोमापूर्वोपकारकम्। न तु केवलमिति वाङ्नियमोऽपि ज्योतिष्टोमापूर्वेण प्रयुज्यत—इत्यर्थः। पूर्वं दीक्षणीयाद्वारेण वाङ्नियमस्य ज्योतिष्टोमापूर्वप्रयोज्यत्वमुक्तम्। अत्र तु तत्साहित्येन। एतत्तु—विचार्यम्। नन्वध्ययनाङ्गान्तरवदध्ययनाङ्गस्य विचारस्याध्यापनप्रयुक्तिः—स्यादित्यत आह—तेनेति। ब्रह्मचर्यादीनि व्रतान्यदृष्टद्वाराऽध्ययनप्रत्यूहप्रशामकतयाऽध्ययनस्वरूपनिष्पादकत्वादध्यापनप्रयोज्यानीति भावः।

अविघ्नेति। अध्ययनस्येति शेषः। तदेवोपपादयति—कार्यान्तरेति। यद्यप्यध्ययनमेकम्, तथाप्यर्थज्ञाननिर्वर्तकत्ववेषापन्नस्यैव विचारोऽङ्गम्, नत्वध्यापननिर्वर्तकत्ववेषापन्नस्य। तत्र तस्यानुपयोगादित्यर्थः। निगमयति—तेनेति। अध्यापनविधेरर्थज्ञानसाधनत्ववेषापन्नमध्ययनं प्रति प्रयोजकत्वासंभवात् साक्षादर्थज्ञानं प्रत्यपि तदसंभवादध्यापनानुपयोगित्वेनाध्ययनाङ्गभूतं विचारं प्रत्यपि तदसंभवान्न तत्प्रयुक्तिर्विचारस्येति निगमनाभिप्रायः। केन तर्हि विचारः प्रत्युज्यते तत्राह—किं त्विति।

ततश्च—तद्वदध्ययनस्यापि तत एव प्रयुक्तितः।
नाध्यापनविधानेन प्रयुक्तिरुपपद्यते ॥ २३ ॥

अथ मन्यसे—सत्यमध्ययनेऽस्त्येवाधिकारः, किन्तु—

अधीयानेन बालत्वात्तदा त्वेष न गम्यते।
न चाविज्ञायमानेन प्रयुक्तिरुपपद्यते ॥ २४ ॥
समाप्ताध्ययनेनासौ व्युत्पन्नेनावगम्यते।
ज्ञातेन च तदा तेन विचारोऽपि प्रयुज्यते ॥ २५ ॥

ज्ञायमानो ह्यधिकारः प्रयोजको भवति। न चाध्ययनावस्थायां बालेन माणवकेनासाववगन्तुं शक्यते। अतो नाध्ययनं स्वाधिकारप्रयुक्तम्। विद्वदधिकाराध्यापनवशेनैवानुष्ठितेऽध्ययने साङ्गे व्युत्पन्नेन माणवकेन वेदार्थावगमादध्ययने स्वाधिकारोऽवगम्यते। अवगतेन च तेन विचारः प्रयुज्यते—इति।

तदयुक्तम्—हितकारिभिरेवासौ ज्ञायमानः प्रयोजकः।
कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः ॥ २६ ॥

यथैव ह्यातुरं भिषज्यद्भिर्हितकारिभिरौषधसेवाफलवेदिभिरातुरापेक्षितफलान्तरप्रतिपादनेन, तत्फलप्राप्तिप्रदर्शनेन वा सामादिनोपायेनानुष्ठाप्यमानस्यौषधस्य स्वाधिकार एव प्रयोजकः, तदभिसन्धिप्रवृत्तत्वात्। औषधफलमेव ह्यारोग्यमभिसन्धाय भिषज्यन्तस्तमनुष्ठापयन्ति। तथाऽत्राप्यध्ययनसाध्यमधिकारमवगच्छद्भिर्हितकारिभिः पित्रादिभिरनुष्ठाप्यमानस्याध्ययनस्य तत्प्रयुक्तता किं नोपपद्यते। यदि चावश्यमनुष्ठात्रैव प्रयोजको ज्ञातव्यः, ततोऽध्यापनविधिरपि बालेन तेनाऽज्ञायमानः प्रयोजको न स्यात्।

---

नन्वस्त्वध्ययनाधिकारेण विचारप्रयुक्तिः। अध्ययनस्य पराप्रयोज्यत्वे किमायातमित्याशङ्क्यां परिहरन् 'विचारस्य प्रयुक्तिः' ( का. १९ ) इत्यादिना प्रक्रान्तं प्रमेयमुपसंहरति—तद्वदिति श्लोकेन ॥ २३ ॥

अध्ययन—मीमांसाश्रवणमध्यभाविनोऽध्ययनाधिकारस्य स्वानन्तरभाविमीमांसाश्रवणप्रयोजकत्वं स्यात्। पूर्वोक्ताध्ययनप्रयोजकत्वं तु न संभवतीति शङ्कते—अथ मन्यस इत्यादिना। सत्यमध्ययने अधिकार इति। अध्ययने अध्येतुः स्वाभिमतसाधनत्वमस्तीत्यर्थः। तदा तु—अध्ययनात् पूर्वम्। न गम्यते—न ज्ञायते। असौ—अधिकारः। ज्ञायमानो हीति। सर्वो हि मदभिमतसाधनमिति ज्ञात्वैव प्रवर्तत इत्यर्थः। अध्ययनावस्थायाम्—अध्ययनप्रवृत्त्यवस्थायाम्। विद्वदधिकारेति। अध्यापकस्तावन्मदीयाचार्यकसाधनमेतदिति ज्ञात्वैव प्रवर्तत इत्यर्थः। साङ्गे—व्याकरणाद्यङ्गोपेते। वेदार्थावगमात्। आपातत इति शेषः। साङ्गवेदाध्ययनात् प्रथममापाततो—ज्ञाने सति मदभिमतसाधनमध्ययनमित्यध्येतुरधिकारे चावगते, निर्णयपर्यन्तततया तस्य ज्ञानस्यापेक्षितत्तया विचारस्तेनैवाधिकारेण प्रयुज्यत इत्यर्थः ॥ २४–२५ ॥

अध्ययनप्रवृत्तिवेलायां माणवकेन स्वाधिकारापरिज्ञानेऽपि तद्धितकामिन एव तदभिमतसाधनमेतदध्ययनमिति ज्ञात्वा माणवकं तत्र प्रवर्तयन्तीति, माणवकाधिकार एव माणवकस्याध्ययनप्रयोजक इति परिहरति—तदयुक्तमिति। सदृष्टान्तं श्लोकं व्याचष्टे—यथैवेति। आतुरापेक्षितं फलं गुडादि। साम्ना—प्रियवचनेन। स्वयमपरिज्ञातस्यापि परैः परिज्ञातस्य-

अतो यथा तस्य ग्राहकावगतस्य प्रयोजकत्वम्, एवमध्ययनसाध्यस्याप्यधिकारस्य भविष्यतीति, नाध्यापनविधिप्रयुक्तमध्ययनम्।

यदि च तत्प्रयुक्तं स्यात्, ततो नार्थज्ञानार्थता सिद्ध्येत्। न हि प्रतिलब्धानुष्ठानस्य प्रयोजनापेक्षा समस्ति। यदन्तरङ्गत्वादर्थज्ञानस्य प्रयोजनत्वं स्यात्।

नन्वधिकारपर्यवसायिनस्सर्वे विधय इति, अध्ययनविधिनाऽपि तथा भवितव्यम्। न। अनुष्ठानलाभात्। अनुष्ठानार्थं ह्यधिकारोऽपेक्ष्यते। लब्धे तु तस्मिन्, न तदपेक्षायां-निबन्धनमस्ति।

स्यादेतत्—अध्ययनविधिरधिकारपर्यवसायी विधित्वादग्निहोत्रादिविधिवत् इति। तदयुक्तम्। अध्ययनविधिरधिकारविधुरः तदलाभेऽपि लब्धात्मकत्वात्। यस्य विधेर्यदलाभेऽप्यात्मलाभो भवति, स तद्विधुरः। नैमित्तिकविधिरिव फलविधुर इति-प्रतिहेतुसद्भावात्। यदि चानुपपत्त्यभावेऽप्यन्यत्र दृष्टमिति कृत्वाऽधिकारः कल्प्यते, ततः फलपर्यन्तत्वं काम्येषु दृष्टमिति, नैमित्तिक-निषेधविध्योरपि तत्पर्यन्तत्वं स्यात्। न-चैतदिष्टं। तस्मान्नाध्ययनेऽधिकारसिद्धिः।

अथ विधेरतत्परत्वेऽपि दृष्टत्वादर्थज्ञानं प्रयोजनमङ्गीक्रियते। तन्न। अतत्पर-त्वेऽध्ययनस्याध्यापनपरत्वेन प्रतीयमानस्याप्यर्थस्याविवक्षितत्वात्। अविवक्षितस्य च विचारानर्हत्वादनारभ्यमेव शास्त्रं स्यात्।

---

प्रयोजकत्वानङ्गीकारे दोषमाह—यदि चेति। ग्राहकः—स्वाध्यायप्रापकोऽध्यापकः। एवं विचार-प्रयोजकत्वबलेनाध्ययनस्य स्वाधिकारप्रयुक्तिमुपपाद्य, अध्यापनप्रयुक्तत्वे दोषमप्याह—यदि चेति। अध्यापनविधिप्रयुक्तस्याध्ययनस्याध्येतृगामित्वेनान्तरङ्गत्वादर्थज्ञानं प्रयोजनम्। नाचार्यकम्, बहिरङ्गत्वादिति हि भावत्को राद्धान्तः। एवं चानुष्ठानार्थं खलु प्रयोजनापेक्षा। तस्यां च सत्यामन्तरङ्गतयाऽर्थज्ञानं प्रयोजनं स्वीक्रियेत। अध्यापनविधिप्रयुक्तौ तु तेनैवाध्ययनानुष्ठान-सिद्धेरनाकाङ्क्षितत्वेनान्तरङ्गमपि तन्न स्वीकार्यमिति भावः।

ननु यद्यर्थज्ञानं न प्रयोजनं स्यात्, ततो मदर्थमध्ययनमित्यध्ययनेऽध्येतुरधिकारोदय-निमित्ताभावेनाध्ययनविधिर्निरधिकारः स्यात्। तच्चायुक्तम्। सर्वेषां विधीनामधिकार-पर्यवसानादिति शङ्कते—नन्वधिकारेति। न हि विधेः स्वभावतः कर्मण्यधिकारापेक्षा। किन्त्वनुष्ठानार्थमेव। तच्चात्राध्यापनप्रयुक्त्यैव सिद्धमिति, नात्राधिकारकल्पना युक्तेति परि-हरति—नानुष्ठानेति। अन्यतोऽनुष्ठानलाभेऽपि व्याप्तिमात्रबलादधिकारपर्यवसानं शङ्कते—स्यादेतदिति। स्वयं तु न्यायगर्भेण प्रतिहेतुना दूषयति—तदयुक्तमिति। तदलाभेऽपि फल-प्रयुक्ताधिकारमनपेक्ष्यापि। लब्धात्मकत्वादध्यापनप्रयुक्त्येति भावः।

सामान्यतो व्याप्तिमाह—यस्येति। न्यायमनपेक्ष्य व्याप्तिमात्रबलेनान्यत्र दृष्टस्यार्थ-स्यान्यत्र साधनेऽतिप्रसङ्गमाह—यदि चेति। नचैतदिति; भवत इति शेषः। नैमित्तिक-निषेधाधिकारयोः फलवैधुर्यं 'धर्माधर्मयोश्चार्थानर्थहेतुत्वम्' (पु. ८) इत्येतद्ग्रन्थव्याख्याना-वसरे प्रपञ्चितम्। अध्ययनस्य परप्रयुक्तत्वेऽर्थज्ञानस्य प्रयोजनत्वानुपपत्तेरधिकारसिद्धिम्-निगमयति—तस्मादिति।

नन्वध्ययनविधेः परप्रयुक्तविषयानुष्ठानतया प्रयोजनाकाङ्क्षाभावेऽपि विषयस्वभाव-लब्धमर्थज्ञानं प्रयोजनं स्यादिति शङ्कते—अथ विधेरिति। अर्थज्ञानस्य विध्यनाकाङ्क्षितत्वे-

अथापि कथंचिद्विवक्ष्यते, तथापि विधेरतत्परत्वान्न वैधत्वं विचारस्य सिद्ध्यति। अवैधश्च न वैधं स्नानमुत्कर्ष्टुमर्हति। यदि ह्यध्ययनविधिरेवाध्ययनमर्थज्ञानावसानं विदध्यात्, ततस्तेन विचारमन्तरेणार्थस्य ज्ञातुमशक्यत्वाद्विचारोऽप्यर्थाक्षिप्तः स्वविरुद्धं स्नानमुत्कर्षेत्। यदा त्वध्ययनमात्रादेव विध्यर्थोऽनुष्ठितः, तदा न विधिस्तावद्विचारानुष्ठानमाक्षिपति। यदि परमुत्तरकर्मानुष्ठानार्थं पुरुषः स्वेच्छया लौकिकेन रूपेणार्थज्ञानोपायेषूपदेष्टृवचनादिषु प्रवर्तमानः कदाचिद्विचारमपि कुर्यात्। तथा सति कर्मानुष्ठाने समुपस्थिते सत्युपदेष्टृलाभे चासावनुष्ठीयेत। ततो नावश्यमध्ययनानन्तरमेवानुष्ठानं सिद्ध्येत्।

नन्वध्ययनाङ्गभूतो विचारः। न चानङ्गेन करणेन विधिः सिद्ध्यतीति, विधिरेव स्वसिद्ध्यर्थं विचारमनुष्ठापयतीति, कथमवैधत्वं विचारस्य? सत्यमध्ययनाङ्गं विचारः। तथाऽपि न विधिसिद्धावुपयुज्यते। अर्थज्ञानाख्यकार्योपयोगित्वात्। न च कार्यान्तरोपयोग्यङ्गं कार्यान्तरेण तदेककरणकेनापि वृष्टिकामापूर्वेणेव सौभरकरणकेनान्नाद्यकामापूर्वोपयोगिसौभराङ्गमूष्ं निधनं प्रयुज्यते।

---

तस्य स्वारसिकप्रयोजनत्वानुपपत्तेरध्यापनप्रयुक्ततया तन्निर्वृत्तिरेवाध्ययनस्य प्रयोजनं स्यात्। ततश्च स्वाध्यायस्याध्ययननिर्वर्तकत्वेनाविवक्षितार्थतया पूर्वपक्ष एव स्थिरः। न तु सिद्धान्तोदयः—स्यादिति परिहरति—**अतत्परत्व इति**। अध्ययनविधेरिति शेषः। अध्यापनपरत्वेन—तन्निर्वृत्तिमात्रप्रयोजनत्वेन।

नन्वध्ययनस्याध्यापननिर्वृत्तिमात्रपरत्वेऽपि वेदवाक्यानां पदशक्तिबलात् प्रतीयमानेष्वर्थेषु तात्पर्यं स्यात्। ततश्च तन्निर्णयार्थं शास्त्रारम्भ एव स्यादिति शङ्कते—**अथापीति**। कथंचिच्छास्त्रारम्भेऽपि दूषणान्तरान्न मोक्ष इति परिहरति—**तथापीति**। **अतत्परत्वान्नवैधत्वमिति**। अर्थज्ञानस्य विध्यनाकाङ्क्षितत्वेन तदर्थं विचाराननुष्ठापकत्वान्न विधिबलात् तस्यानुष्ठानमित्यर्थः। ततः किम्? तत्राह—**अवैधश्चेति**। वैधं—'वेद धीत्य स्नायात्' इति—विहितं। दारग्रहणौपयिकं—समावर्तनकर्म। तदेवान्वयव्यतिरेकमुखेनोपपादयति—**यदि हीति**। अर्थज्ञानावसानम्—अर्थज्ञानप्रयोजनपर्यन्तम्। **उत्कर्षेदिति**। स्नानस्य विधिविहितमध्ययनानन्तर्यमध्ययनविधिविरोधात् बाध्येतेति भावः। माभूत् स्नानस्योत्कर्षः। अतः किमित्याशङ्क्य, तथात्वे विचारस्याध्ययनानन्तर्यनियमः, नियमेनारम्भश्च न स्यादित्याह—**यदि परमिति**। **उत्तरकर्मानुष्ठानार्थमिति**। दारपरिग्रहानन्तरभाव्यावश्यकाग्निहोत्रादिकर्मानुष्ठानार्थम्। स्वेच्छया—विधिमन्तरेण। लौकिकेन रूपेण लोकप्रमाणसिद्धेन स्वभावेनोपलक्षितेष्वित्यर्थः। उपदेष्टृवचनादिषु—यथाकथंचिन्निर्णीतवेदवाक्यार्थप्रामाणिकपुरुषवचनादिषु। आदिशब्दात्—कल्पसूत्रपरिग्रहः। कदाचित्—उपायान्तरालाभे। फलितमाह—**तथा सतीति**। स्वाध्यायस्याविवक्षितार्थत्वे मीमांसानारम्भस्यैवाधस्तादभिहितत्वात् तदनियमरूपमिदं दूषणं कथंचिद् विवक्षितार्थत्वाङ्गीकारपक्षे द्रष्टव्यम्।

ननु विचारस्यावैधत्वे खल्वयं दोषः। स तु वैध एवेति शङ्कते—**नन्वध्ययनेति**। अस्तु नामाध्ययनाङ्गं विचारः, तथाप्यध्ययनमात्रसाध्ये विधौ तस्यानुपयोगात् तत्प्रयुक्त्यभावेनावैधत्वं तदवस्थमेवेति परिहरति—**सत्यमिति**। कथं स्वकरणाङ्गभूतस्य विचारस्य स्वेनाप्रयुक्तिरित्याशङ्क्य, स्वकरणाङ्गभूतस्यापि कार्यान्तरोपयोगितया स्वेन प्रयुक्तिः,

अथाध्ययनविधिरेवार्थज्ञानार्थोऽध्ययनसाध्यत्वात्, तादृग्विषयसम्पत्त्यै विचारमाक्षिपतीत्युच्यते, तदध्यापनविधिप्रयुक्तत्वं विचारस्य निराकुर्वद्भिरस्माभिर्निराकृतम्। यद्यप्यर्थज्ञानार्थमध्ययनं, तथापि न तेन रूपेण विधिसाधनत्वम्। स्वरूपेणैव तत्साधनत्वात्। यदन्तरेण च विधिर्न सिद्ध्यति, तस्यैवासावनुष्ठानमाक्षिपति, नान्यस्य। यद्यपि विचारमन्तरेण विधिर्न सिद्ध्येत्, तथापि नासौ विचारानुष्ठानमाक्षिपति। नियोज्याभावात्। न ह्यसौ केन चित्पुरुषेण ममेदं कार्यमिति प्रतीयते। तेन न स स्वात्मन्यपि तावन्नरं प्रेरयेत्। कुत एव स्वसिद्ध्युपाये। अत एवाध्ययनेऽप्यस्यानुष्ठापकत्वं न सिद्ध्यति। यस्य हि करणेऽपि नियोज्याभावादनुष्ठापकत्वं न सम्भवति। तस्य कथमङ्गेषु सम्भवेत्। तस्मान्न वैधत्वं विचारस्य सिद्ध्यति।

स्यादेतत्। अध्ययनविधिरेवाध्ययनस्यार्थाज्जातमर्थज्ञानं प्रयोजनत्वेन स्वीकृत्य, तत्सिद्ध्यर्थं विचारमाक्षिपतीति। तदयुक्तम्। अध्ययनविधिरर्थाज्जातमर्थज्ञानं प्रयोजनत्वेन स्वीकरोतीत्यस्य कोऽर्थः? न तावत्तत्र विनियुङ्क्ते, प्रमाणान्तरत एव तत्साधनतावगमात्।

---

न घटत इति दृष्टान्तमुखेनोपपादयति—नचेत्यादिना। तदेककरणकेनापि न प्रयुज्यत इत्यन्वयः। करणैक्येऽपि तत्साध्यनानात्वे साध्यान्तरोपयोग्यङ्गं साध्यान्तरेण न प्रयुज्यत इत्यत्रायं दृष्टान्तः। ज्योतिष्टोमे 'यो वृष्टिकामस्स्यात्, योऽन्नाद्यकामः, यः स्वर्गकामः, स सौभरेण स्तुवीत' ता. ब्रा. ८–८–१८ इति वृष्ट्यादिफलत्रयसाधनतया सौभराख्यं साम विहितम्। तत्संनिधौ 'हीषिति वृष्टिकामायनिधनं कुर्यात्'। 'ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय', इति वाक्यश्रुतम्। तत्र च हीषादीनि सौभरफलत्रयव्यतिरेकेण न पृथक्फलसाधनतया विहितानि। किं तु फलत्रयसाधनस्यैव सौभरस्य तत्तत्फलं प्रति नियमेनाङ्गतया विहितानीति द्वितीयाध्याये २–२–१२-निर्णीतम्। तत्र यथा फलान्तरसाधनभूतसौभराङ्गं फलान्तरापूर्वेण न प्रयुज्यते, तद्वदर्थज्ञानोपयोग्यध्ययनाङ्गस्य विचारस्य नाध्ययनविधिना प्रयुक्तिरित्यर्थः। निधनं नाम—साम्नः पञ्चमोऽवयवः।

कार्यान्तरोपयोगिनो विचारस्य साक्षाद्विधिसिद्ध्यनुपयोगेऽपि विधेरर्थज्ञानसाधनीभूताध्ययनविषयकत्वेन तादृशविषयसिद्धये स्वयमेव विधिर्विचारमाक्षिपतीति शङ्कते—अथेति। इयं शङ्का प्रागुक्तन्यायसाम्येन परिहृतेत्याह—तदिति। तदेव न्यायसाम्यं दर्शयति—यद्यपीति। स्वभावतोऽर्थज्ञानसाधनस्याप्यध्ययनस्य तेन वेषेणाध्यापनानुपयोगित्वात् यथा तदप्रयुक्तिः-विचारस्य, तद्वदत्रापीति भावः। विचारस्य विधिसिद्ध्यनुपयोगात् तदप्रयुक्तिमुक्त्वा तत्सिद्ध्युपयोगाङ्गीकारेऽपि तत्प्रयुक्तिर्न घटत इत्युपपादयति—यद्यपीत्यादिना। विधिर्हि ममेदं कार्यमिति केनचित् पुरुषेण प्रतीतः स्वयं तस्यानुष्ठेयस्सन् स्वसिद्ध्यर्थं करणम्, इतिकर्तव्यताञ्च प्रयुङ्क्ते। अध्ययनविधेस्तु तादृक्प्रत्येतृपुरुषाभावात् प्रयाजादिनियोगवत् स्वस्यानुष्ठेयत्वमेव नास्ति। करणानुष्ठापकत्वं तु दूरे, इतिकर्तव्यतानुष्ठापकत्वं तु दूरतरमिति भावः। न संभवतीति। त्वयैवाङ्गीकृतमिति शेषः।

नन्वध्ययनविधिर्विषयस्वभावलब्धमर्थज्ञानं स्वविषयप्रयोजनतया स्वयं स्वीकृत्य, स्वसिद्ध्यनुपयोगिनमपि विचारं तदर्थं प्रयुङ्क्त इति विचारो वैध एवेति शङ्कते—स्यादेतदिति। स्वीकार एव न संभवतीति विकल्प्य दूषयति—तदयुक्तमिति। तत्र विनियुङ्क्त इति। साधनतयेति शेषः। प्रमाणान्तरत इति। अध्ययनस्यार्थज्ञानसाधनत्वं लोकप्रमाणसिद्धमित्यर्थः।

अवघातादिवन्नियमविध्यनवगमाच्च । अथ तादर्थ्यमनुमन्यत इत्युच्यते । तन्न । अननुमतस्यापि तादर्थ्यस्य लाभात् । यदनुमत्यभावेऽपि यल्लभ्यते, तत्तदनुमन्यते इति हास्यमेतत् । लभ्यते चान्तरेणापि विध्यनुमतिमध्ययनस्यार्थज्ञानार्थतेति, कोऽर्थोऽनुमत्या । तस्मान्न कथञ्चिद्विचारस्य वैधत्वं सिद्ध्यतीति, न तद्बलेन स्नानोत्कर्षः शक्यते कर्तुम् । अध्ययनमात्रेणैव समाप्ते विध्यर्थे सत्यनन्तरं 'वेदमधीत्य स्नायात्' इति स्मृतिबलेनानन्तरमेव स्नात्वा पश्चाज्ज्योतिष्टोमादिकर्मानुष्ठाने समुपस्थिते तन्निर्णयार्थमुपायान्तरालाभे च विचारोऽपि कदा चिदनुष्ठीयेत वा, न वेति न 'अथातो धर्मजिज्ञासा' इति सूत्रमानन्तर्यप्रतिपादनप्रयोजनपरमुपपन्नं स्यात् । तस्मान्नध्यापनविधिप्रयुक्तमध्ययनमिति ॥ २६ ॥

कश्चासावध्यापनविधिः ? यत्प्रयुक्तमध्ययनम् ।

यद्युच्येत—'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यम्प्रचक्षते ॥' इति—

स्मृत्यनुमितं 'उपनीयाध्यापनेनाचार्यकं भावयेत्' इत्येवंरूपं वचनमिति ।

तदयुक्तम्—नाध्यापनमिदं वाक्यं विधातुं क्षमते यतः ।
द्रव्यार्जनार्थप्राप्तत्वात् यच्छब्देन च सङ्गतेः ॥ २७ ॥

यथैव 'एतयाऽन्नाद्यकामं याजयेत्' इत्यादिषु याजयतेः परतः श्रूयमाणोऽपि विधिर्यागविधिपर एव । प्रयोजकव्यापारपरः शब्दो द्रव्यार्जनार्थप्राप्तऋत्विग्व्यापारा-

---

नन्वध्ययनेनैवार्थज्ञानं सम्पादयेत्, नतु लिखितपाठादिनेति नियमस्यानन्यलभ्यत्वात् तत्र विधेर्व्यापार एव स्वीकारशब्दार्थः इत्याशङ्क्य तदानीं स्वाङ्गीकारविरोध इत्याह—अवघातादिवदिति । तादर्थ्यं-तत्साधनम् । लभ्यते चेति । लोकप्रमाणादेवेत्यर्थः । निगमयति—तस्मादिति । विचारस्यावैधत्वे को दोषः ? तत्राह—न तद्बलेनेति । मामूत् स्नानोत्कर्षः, ततः किमित्याशङ्क्य तथात्वे विचारस्याध्ययनानन्तर्यनियमः, नियमेनारम्भश्च न स्यादिति पूर्वोक्तमेवानियमद्वयमापतेदित्याह—अध्ययनेति । आनन्तर्यप्रतिपादनप्रयोजनपरमिति । अथशब्देनाध्ययनानन्तर्यमुक्तम् । अतःशब्देन विचारस्यार्थज्ञानप्रयोजनकत्वमुक्तमिति भावः । महाप्रकृतमुपसंहरति—तस्मादिति ॥ २६ ॥

अथालौकिकमाचार्यकसाधनमुपनयनाङ्गकं भवदभिमतमध्यापनमेव नास्ति, प्रमाणाभावादिति वक्तुमुपक्रमते—कश्चेति । प्रमाणमाशङ्कते—यदीति । स्मृत्यनुमितश्रुतिस्वरूपमाह—उपनीयेति । स्मृतिवचनं यच्छब्दाद्युपबन्धादनुवादकमेव, न तु विधायकम् । विधायकत्वेऽप्यध्ययनविधिपरमेव, नाध्यापनपरमिति दूषयति—तदयुक्तमिति । द्रव्यार्जनार्थप्राप्तत्वादिति । 'द्रव्यमर्जयन् ब्राह्मणो याजयेत् अध्यापयेत् प्रतिगृह्णीयाद्वा' इति वचनादध्यापनं द्रव्यार्जनोपायतया प्राप्तमित्यर्थः । यच्छब्देन चेति । यत्तदादिशब्दानां प्रसिद्धार्थपरत्वाऽविधेयत्वप्रतिपादकत्वं 'य एवं विद्वान् पौर्णमासीं यजते' तै. सं. १–६–९ इत्येवमादिषु दृष्टमितिभावः । वचनस्याध्ययनविधिपरत्वं दृष्टान्तमुखेनोपपादयति—तथैवेति । 'अन्नाद्यकामं याजयेदि'त्यत्र णिच्प्रत्ययान्तयाजनसमभिव्याहृतोऽपि लिङ्शब्दो याजनस्य प्राप्तत्वान्न तद्विधिपरः । अन्नाद्यकामस्य नियोज्यस्य यजनविधावेवान्वयसंभवात् तद्विधिपर एवेति शास्त्रे निर्णीयत इति भावः । एतया—इष्टया । प्रयोजकव्यापारपरः शब्द इति । प्रयोजककर्तृव्यापाराभिधायी णिच्-

नुवाद इति स्थास्यति। तथाऽध्यापयेदित्यध्ययनविधिपर एव। नाध्यापनविधिपरः। द्रव्यार्जनोपायतयैव प्राप्तत्वात्। उपनयनमप्यध्ययनाङ्गमेव, अध्येतृसंस्कारत्वात्। एतेनैव अष्टवर्षं ब्राह्मणमुपनयीत 'तमध्यापयीत' इति वचनं व्याख्यातम्[1]।

## व्याकरणस्मृतिबलेन शंका–परिहारौ

ननु तत्रोपनयनस्यात्मनेपदश्रवणादाचार्यकार्थत्वमवगम्यते। न। अकर्त्रभिप्रायत्वान्नयतेरात्मनेपदविधानस्य। अन्यथा 'स्वरितञितः' (पा. १–३–७२)इत्यनेनैवाचार्यकसाधनेऽप्यर्थे वर्तमानान्नयतेरात्मनेपदं सिद्ध्यतीति 'सम्मानन' (पा १–३–३६) इतिसूत्रमनर्थकं स्यात्। यथा चाहुः 'अकर्त्रभिप्रायार्थोऽयमारम्भः' (काशिका. १–३–३६) इति। तस्मादध्येतृसंस्कारद्वारेणाध्ययनाङ्गमेवोपनयनमनुषङ्गाद्वाजिनमिवामिक्षार्थदध्यानयनमाचार्यकं साधयति। न तु तदर्थम्। तस्मान्नाचार्यकार्थतयाऽध्यापनस्य विधायकं वचनमस्ति।

---

प्रत्यय इत्यर्थः। अध्ययनविधिपर एवेति। द्रव्यार्जनार्थप्रवृत्ताध्यापकलाभे उपनीत एव शिष्योऽधीयीतेति स्मृतिवचनार्थ इति भावः। उपनयनमिति॥ २७॥ उक्तेन न्यायेन प्रत्यक्षश्रुतिवचनमप्यध्ययनविधिपरमेवेत्याह—एतेनेति।

ननु तत्र श्रुतौ उपनयीतेत्यात्मनेपदं नयतेर्ञित्वात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' (पा. १-३-७२) इत्यनेन सूत्रेण विधीयते। तच्चोपनयनस्याध्यापनाङ्गत्वे तत्फलस्यैवोपनयनफलत्वात् तस्य चोपनयनकर्तृभूताचार्यगामित्वाद्युज्यते। अध्ययनाङ्गत्वे तु तत्फलस्याध्येतृगततया क्रियाफलस्यान्यगामित्वेन नात्मनेपदं सिध्येत्। अतोऽध्यापनाङ्गमेवोपनयनमितिशङ्कते—नन्विति। नात्र नयतेः स्वरितेत्यादिनाऽऽत्मनेपदम्। किन्तु आचार्यकरणेऽर्थे 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' (पा. १-३-४६) इत्यनेन सूत्रेण। तच्च फलस्य कर्तृगामित्वे पूर्वेण सूत्रेणैव सिद्धेरकर्तृगामित्वेऽप्यात्मनेपदसिद्धचर्थम्। तच्चाध्ययनाङ्गत्वेएवोपपद्यते, नत्वध्यापनाङ्गत्व इति दूषयति—नेति। अकर्त्रभिप्रायत्वात्–अकर्तृगामिन्यपि फले आत्मनेपदं यथा स्यादित्येवमर्थत्वात्। तत्र वृत्तिकारसंमतिमाह—यथाहुरिति। निगमयति—तस्मादिति।

ननु 'तमाचार्यं प्रचक्षते' इत्यध्यापनस्याचार्यकफलकत्वश्रवणात् नेदं वचनं द्रव्यार्जनार्थप्राप्ताध्यापनानुवादपरम्। किं तु पृथगध्यापनविधिपरमित्याशङ्क्य, वृत्त्यर्थं यः शिष्यमध्यापयति, तस्यानुषङ्गादाचार्यकमपि सिध्यतीत्येवमनुवादपरम्। ननु तदर्थं पृथगध्यापनविधिपरमिति–सदृष्टान्तमाह—अनुषङ्गादिति। चातुर्मास्ये वैश्वदेवे पर्वणि 'तप्ते पयसि दध्यानयति, सा–वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति श्रुतम्। अस्यार्थः—तप्ते पयसि दधि प्रक्षिपेत्। तदेव घनीभूतमामिक्षा भवति। तया विश्वान् देवान् यजेत। तत्र जलावयवप्रचुरं वाजिनाख्यमपि द्रव्यमुत्पद्यते। तेन वाजिनो यजेतेति। अत्र पयःसंस्कारत्वात् दध्यानयनस्य पयस एवरूपरसप्रत्यभिज्ञानेनामिक्षात्वात्, आमिक्षाशेषभूतमेव दध्यानयनमनुषङ्गाद्यथा वाजिनं साधयति, तथेदमपीत्यर्थः।

---

१. अष्टवर्षो ब्राह्मणो गुरुसमीपं गच्छेत्, सोऽधीयीत इति तदर्थः–इति।

## आचार्यत्वं लौकिकं पाचकादिवत्, न यूपाहवनीयादिवदलौकिकमिति कथनम्

किञ्च न चालौकिकमाचार्यकम्। उपनीय वेदाध्यापयितुराचार्यशब्दो वाचकः। पाचकादिवत्। 'उपनीय तु यः शिष्यम्' इत्यपि शब्दार्थप्रतिपादनपरमेव। तेनाविद्यमानत्वादध्यापनविधेर्न तत्प्रयुक्तमध्ययनम्।

अथापि नाम 'विद्यादानेन सुमतिर्ब्रह्मलोके महीयते' इत्यादिभिर्विद्यादानात्मकत्वादध्यापनमपि फलान्तरशेषतया विहितं भवेत्, तथाऽपि तत्र सर्वत्र नियोज्याश्रवणादधिकारमात्रस्य चाध्ययनेऽपि सद्भावाद्विचारस्यावैधत्वप्रसङ्गान्नाध्यापनविधिप्रयुक्तमध्ययनम्।

## शालिकोक्तमर्थं निरसितुं तस्यानुवादः

कश्चित् पुनराह—यद्यप्यध्ययनस्य स्वाधिकारेणैव प्रयुक्तिः सम्भवति, तथाऽपि नासावाश्रयितुं युज्यते।

तथा हि—ज्ञानं नाध्ययनस्य स्यात् स्वमहिम्ना प्रयोजकम्।
तत्साध्यमग्निहोत्रादि तद्द्वारेण प्रयोजकम्॥ २८॥

न ह्यर्थज्ञानं स्वयमपुरुषार्थत्वादध्ययनस्य प्रयोजकं भवितुमर्हति। ज्ञानसाध्यानि त्वग्निहोत्राद्यपूर्वाणि तद्द्वारेणाध्ययनस्य प्रयोजकानि भवन्ति। न च तेषां ज्ञानमङ्गम्। किन्तूपकारकमात्रम्। आचार्यकस्य त्वध्यापनमङ्गमेव। अतस्तत्स्वाङ्गद्वारेणापि प्रयोजकत्वं लभते। अग्निहोत्राद्यपूर्वाणि तूपकारकद्वारेण। न चामिक्षावदङ्गद्वारेणापि

---

आचार्यत्वस्य पराभिमतमलौकिकत्वं, फलत्वञ्चाङ्गीकृत्यैव तदर्थाध्यापनविधिर्निराकृतः। इदानीं तु न तदलौकिकं, नापि फलं किंचित्। आचार्यशब्दस्तु पाचकादिशब्दवदध्यापनक्रियासंबन्धनिबन्धनः। स्मृतिवचनमपि शब्दप्रवृत्तिनिमित्तप्रदर्शनपरमेवेत्याह—**किंचेति**। ननु माभूदाचार्यकार्थमध्यापनम्। अथापि ब्रह्मलोकादिफलशेषतया वचनान्तरेण विहितं विद्यादानात्मकमध्यापनम्। तत्प्रयुक्तमध्ययनं स्यादिति शङ्कते—**अथापीति**। यद्यप्यस्योपनयनाङ्गकत्वाभावान्न वेदाध्ययनप्रयोजकत्वमुपपद्यत इति वक्तुं शक्यते, तथापि प्रकारान्तरेण परिहरति—**तथापीति**। नियोज्याभावात प्रयाजादिनियोगवत् प्रयोजकत्वमेव न घटत इति भावः। ननु नियोज्याभावेऽपि फलसाधनत्वश्रवणात् तावन्मात्रेणाधिकारोदये सत्यध्यापनानुष्ठाने तत्प्रयुक्तिरध्ययनस्य स्यादित्यत्राह—**अधिकारेति**। अध्ययनस्य परप्रयुक्तौ पूर्वोक्तन्यायेन विचारस्य न वैधत्वं स्यादित्याह—**विचारस्येति**।

इदानीं पूर्वोक्तेन न्यायसाम्येनोभयोरपि विध्योः प्रयुक्तिशक्तिसंभवेऽप्यध्यापनप्रयुक्त्याश्रयणे न्यायानुगुण्यात् तदेव युक्तमिति शालिकमतमाशङ्कते—**कश्चिदित्यादिना**। तदेवोपपादयति—**तथाहीति** श्लोकेन। स्वमहिम्ना—स्वसामर्थ्येन। तद्द्वारेण—ज्ञानद्वारेण। **अपुरुषार्थत्वादिति**। स्वर्गादिवत् सुखरूपत्वाभावादित्यर्थः। **नच तेषामिति**। श्रुत्यादिविनियोजकप्रमाणाभावादित्यर्थः। **उपकारकमात्रमिति**। विद्याविधुरस्योत्तरकर्मानुष्ठानासंभवात् तदुपकारकत्वं ज्ञानस्येत्यर्थः। **अङ्गमेवेति**। तमाचार्यं प्रचक्षते इति विनियोजकवाक्यसंभवादित्यर्थः। ननु शेषिणोऽपि प्रयोजकत्वं, न शेषित्वमात्रेण किंतूपकार्यत्वेन। तच्चाग्निहोत्रादेः, आचार्यकस्य च

प्रयोजकत्वलाभे सत्युपकारकद्वारेण वाजिनवदप्रयोजकत्वं युक्तमङ्गीकर्तुम्। तस्माद्ध्यापनविधिप्रयुक्तमध्ययनमिति। तदयुक्तम्।

यद्यपि हि—न ज्ञानं कर्मणामङ्गं ज्ञानस्याध्ययनं मतम्।
अङ्गं नाध्यापनस्यैतन्न तेनातः प्रयुज्यते ॥ २९ ॥

यद्यपि न कर्माङ्गं ज्ञानम्। अध्ययनन्तु ज्ञानाङ्गमेव। तेन प्रयुज्यमानमध्ययनं—शेषिप्रयुक्तमेव भवति। न त्वध्यापनस्याध्ययनमङ्गम्। अतस्तेन प्रयुक्तमध्ययनमुपकार्यमात्रप्रयुक्तं स्यात्। न शेषिप्रयुक्तम्। तेन शेषिप्रयुक्तत्वे सम्भवति, नोपकार्यमात्रप्रयुक्तत्वं युक्तमिति सुतरां स्वाधिकारप्रयुक्तमध्ययनम्। नाध्यापनप्रयुक्तम्।

यद्यपि ज्ञानं स्वरूपेणापुरुषार्थः, तथाऽपि कर्मानुष्ठानौपपयिकत्वात्पुरुषैरर्थ्यत एवेति पुरुषार्थत्वादध्ययनस्य प्रयोजकत्वं संभवत्याचार्यकवत्। तदपि हि स्वरूपेणानभिलषितं दक्षिणालाभसिद्ध्यर्थमेव पुरुषेणार्थ्यते। अतो यथा तस्य प्रयोजकत्वम्, एवं ज्ञानस्यापि। न ह्यवश्यं स्वरूपेणैवार्थितं प्रयोजकमिति नियमः समस्ति। सुखसाधनपशुपुत्रादिवत् फलान्तरसाधनतयाऽर्थितस्य प्रयोजकत्वाविरोधात्।

यद्यपि चाग्निहोत्राद्यपूर्वमेव ज्ञानद्वारेण प्रयोजकं, तथापि तदेव प्रयोजकं युक्तं, नाध्यापनम्, पुरुषान्तरगामित्वात्। अध्येतृगाम्येव तु ज्ञानं वा, तत्साध्यं वाऽग्निहोत्रादि प्रयोजकमध्ययनस्य युक्तम्।

---

ज्ञानमध्यापनं च प्रत्यविशिष्टमिति, नोभयोरप्यध्ययनप्रयोजकत्वे वैषम्यमस्तीत्यत आह—नचेति। यद्यप्युपकार्यस्यापि प्रयोजकत्वं संभवति, तथापि शेषिणःशेषेण सह संबन्धस्य श्रुत्यादिभिः झटिति प्रतिपन्नतया तस्य प्रयोजकत्वे संभवति, नाप्रतिपन्नसंबन्धस्येतरस्य युक्तमिति भावः ॥ २८ ॥

आमिक्षा दध्यानयनं प्रति शेषिणी, विनियोजकप्रमाणसंभवात्। वाजिनं तूपकार्यमात्रम्, तदभावात्। अङ्गद्वारेण—अङ्गत्वेनेति यावत्। तस्य स्वाङ्गतया तत्प्रति स्वस्य प्रयोजकत्वमित्यर्थः। उपकारकद्वारेण—उपकारकतयेति यावत्। उक्तन्यायानुगुण्यं ममैव, न तु तवेति दूषयति—तदयुक्तमिति। तिष्ठतु तावत् व्यवहितप्रयोजकमाचार्यकमग्निहोत्रादिकं च। संनिहितप्रयोजकयोस्त्वध्यापनार्थज्ञानयोरर्थज्ञानस्यैवाध्ययनप्रयोजकत्वे न्यायानुगुण्यमिति भावः। न कर्माङ्गं ज्ञानमिति। यद्यप्याचार्यमते ज्ञानमुत्तरकर्माङ्गमित्यग्निहोत्रादेरप्यङ्गद्वारेणैव प्रयुक्तिः संभवति, तथाप्यत्र तदनङ्गीकारेणैव परिहारः।

ननु ज्ञानस्याप्यपुरुषार्थत्वात् प्रयोजनत्वं न संभवतीत्युक्तमेवेत्याशङ्क्य, असुरवरूपस्यापि तस्य तत्साधनतया परंपरया पुरुषार्थत्वात् प्रयोजनत्वं युक्तमित्याह—यद्यपीति। दक्षिणालाभेति। 'आचार्याय हितमाचरेत्' 'आचार्याय वरो देय.' इत्यादिशिष्यस्मृतिविहितदक्षिणालाभादिहेतुतया लौकिकस्यापि तस्य पुरुषार्थत्वमिति भावः। परंपरया पुरुषार्थस्यापि प्रयोजकत्वे- गुरुमतमात्रसिद्धं दृष्टान्तमुक्त्वा, सर्वाभिमतमुदाहरणान्तरमाह—नहीति। अर्थितं—प्रार्थितम्। प्रकारान्तरेणाप्यध्ययनस्य स्वाधिकारप्रयुक्तिरेव युक्तेत्याह—यद्यपीत्यादिना। संनिहितस्य, व्यवहितस्य वा प्रयोजकत्वाङ्गीकारेऽपि अर्थज्ञानस्याग्निहोत्रादेरेव वाऽध्ययनसमानाश्रयत्वेनान्तरङ्गतया तद्युक्तम्। नत्वध्यापनाचार्यकयोः वहिरङ्गयोरिति भावः ॥ २९ ॥

योऽप्यङ्गद्वारेणाध्यापनविधेः प्रयोजकत्वमुपकारकद्वारेणाग्निहोत्रादीनामिति विशेषो ऽभिहितः, सो ऽपि नास्ति। द्वयोरप्यङ्गत्वम्, उपकारकत्वञ्च द्वारमेव। तथा हि-अग्निहोत्राद्युपकारकत्वात्तज्ज्ञानं तदङ्गत्वाच्चाध्ययनं प्रयुङ्क्ते। आचार्यकन्त्वङ्गत्वाद-ध्यापनं तदुपकारकत्वाच्चाध्ययनं प्रयुङ्क्ते इति क्रमभेदमात्रम्। नैतावता कश्चिद्विशेषः। समानपुरुषगामित्वादग्निहोत्रादीनामेव प्रयोजकत्वं, नाध्यापनविधेरिति। न चाग्निहोत्रादि-प्रयोजकम्। ज्ञानमेव तु प्रयोजकमित्युक्तम्। तदेतद्विस्पष्टं प्रपञ्चयिष्यते।

कथं चाचार्यकविधिः पुरुषान्तरगामी पुरुषान्तरकर्तृकमध्ययनं प्रयुञ्जीत। समानपुरुषगामिनो हि दर्शपूर्णमासादिविधयः कार्यतया प्रतीयमानास्तस्यैव पुरुषस्य स्वसाधनेषु प्रयाजादिषु स्वसिद्ध्यर्थमनुष्ठानं प्रयुञ्जते। अन्यसाध्यं तु कार्यमन्यस्य कथमिवानुष्ठापकं भवेत्। न हि स्वकार्यसाधनादन्यत्र चेतनः प्रवर्तते।

यद्यध्यापयितैवास्य स्वाधिकारप्रदर्शनात्।
अनुष्ठापयिता तत्र स्वाधिकारप्रयुक्तता ॥ ३० ॥

यद्युच्येत आचार्य एव स्वकार्यसिद्ध्यर्थमध्ययने माणवकं स्वाधिकारप्रदर्शनेन प्रवर्तयतीति। सत्यमेवम्। किन्तु तथा सति स्वाधिकार एव तत्र प्रयोजकः स्यात्, नाऽध्यापनविधिः। स्थपतीष्टेरिव स्वाधिकारः। सा ह्यनभिज्ञनिषादाधिकाराऽपि द्रव्या-र्जनप्रवृत्तैः ऋत्विग्भिरधिकारप्रदर्शनेन निषादेनानुष्ठाप्यमाना स्वाधिकारप्रयुक्तैव। न-द्रव्यार्जनप्रयुक्ता। तथाऽध्ययनमपि।

---

ननु व्यवहितस्य प्रयोजकत्वाङ्गीकारे त्वाचार्यकस्यैव तद्युक्तम्, नत्वग्निहोत्रादेरित्यध-स्तादुक्तमित्यत्राह—योऽपीति। अध्यापनविधेरित्यत्र आचार्यकस्येत्यर्थः क्रमभेदमात्रमिति। अग्निहोत्रादि प्रथममनङ्गं प्रयुज्य, पश्चात् तदङ्गं प्रयुङ्क्ते। आचार्यकं तु प्रथममङ्गं प्रयुज्य-पश्चादनङ्गमिति पौर्वापर्यभेदमात्रमित्यर्थः। व्यवहितस्य प्रयोजकत्वे न केवलमुभयोरविशेषः। अग्निहोत्रादेरेव प्रयोजकत्वे प्रागुक्तमन्तरङ्गत्वमप्यधिकं निमित्तमस्तीत्याह—समानेति। व्यवहितस्य प्रयोजकत्वमङ्गीकृत्यैतदुक्तम्। तदपि नास्ति, संनिहितस्य ज्ञानस्यैव तदुपपादनादित्याह—नचेति। प्रपञ्चयिष्यत इति। स्वसिद्धान्तप्रतिपादनावसर इति शेषः। इत्थमेकदेशिमते दूषणं परिसमाप्य, पुनरप्यध्यापनप्रयोजकत्वानुपपत्तिं प्रतिपादयति—कथं चेति। आचार्यकविधिः-अध्यापननियोगः। कथं वा न प्रयुञ्जीतेत्यत्राह—समानेति। योहि विधिं स्वस्यानुष्ठेयतया प्रत्येति, स एव तत्सिद्धयर्थं-तत्करणम्, इतिकर्तव्यतां, चानुतिष्ठति, नान्य इति भावः।

नन्वध्यापको माणवकमध्ययने तत्फलप्रदर्शनेन स्वकार्यसिद्धयर्थमेव प्रवर्तयतीत्यन्यकार्य-स्यापि तस्यान्यप्रयोजकत्वं युक्तमित्याशङ्कामनूद्य, तथासति प्रदर्शितस्यैव फलस्याध्ययनप्रयोजकत्वं-स्यात्, नाध्यापककार्यस्येति परिहरति—यदीति श्लोकेन। अस्य—माणवकस्य। स्वाधिकारप्रदर्शनात्—अध्ययनफलप्रदर्शनात्। तत्र—तथाङ्गीकारे सति। ननु माणवकाधिकारप्रदर्शनस्याध्यापककार्यार्थ-त्वात् तदेव प्रयोजकं स्यादिति शङ्कां दृष्टान्तमुखेन निराकरोति—स्थपतीति। 'रौद्रं वास्तुमयं चरुं निर्वपेत्' इति प्रकृत्य 'एतया निषादस्थपतिं याजयेत्' मैं. सं. इत्यत्रैवर्णिकमध्ययनानधिकारिण-मतएवाविद्वांसं स्वाधिकारानभिज्ञं निषादस्थपतिमधिकृत्येष्टिर्विहिता। तत्र यथा स्वप्रयोजन-सिद्धयर्थमृत्विग्भिरनुष्ठानेऽपि निषादाधिकार एवेष्टेः प्रयोजकः, तथा माणवकाधिकार एव प्रयोजकइत्यर्थः ॥ ३० ॥

पूर्वपक्षे न शक्यं स्यात् स्वाधिकारप्रदर्शनम् ।
नाध्यापनप्रयुक्तत्वमतस्तत्र प्रसिद्ध्यति ॥ ३१ ॥

भवतु वाऽध्यापयित्रा स्वाधिकारप्रदर्शनेनाप्यनुष्ठाप्यमानस्याध्ययनस्याध्यापनप्रयुक्तत्वम् । न चैतदपि पूर्वपक्षे सम्भवति । न हि तत्र माणवकस्य कश्चिदधिकारोऽस्ति । यत्प्रदर्शनेनासावध्याप्येत । आचार्यकसिद्धिमात्रप्रयोजनकत्वादध्ययनस्य-पूर्वपक्षे । ननु नियोगसिद्ध्या पूर्वपक्षेऽप्यधिकारः संभवति । न । अकार्यत्वात् । न हि-माणवकस्य नियोगः कार्यः, येन तत्सिद्ध्याऽधिकारः स्यात् । कुतः ? अनियोज्यत्वात् । न ह्यनियोज्यस्य नियोगः कार्यः । अतस्तत्सिद्ध्या नाधिकारसम्भवः ।

अथासत्यपि स्वाधिकारे सामादिनोपायान्तरेण कथञ्चिदध्याप्येत । तथा सति-विश्वजिदादीनामपि कथञ्चिदार्त्विज्ये प्रवृत्तैरेव ऋत्विग्भिः प्रवर्त्यमानेन यजमानेनानुष्ठानसम्भवान्नानुष्ठानसिद्धयेऽधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं सिध्येत् । अथानर्थक्यान्नर्त्विजो यजमानं याजयन्ति, न ह्यसावनधिकारी तेभ्यो दक्षिणां-ददातीति । तदत्रापि समानम् । न ह्यध्ययनेऽनधिक्रियमाणो माणवको दक्षिणादानाद्याचार्यस्याचरति । तल्लिप्सयाऽऽचार्यस्याचार्यकमिष्टम् । न ह्याचार्यकं पुरुषस्य स्वरूपेणाभिलषितम् ।

---

अथेदानीं माणवकाधिकारप्रदर्शनेन स्वकार्यसिद्धचर्थमध्यापनानुष्ठानेऽध्यापनविधेरेव प्रयोजकत्वमङ्गीकृत्यापि त्वन्मते पूर्वपक्षे निरधिकारत्वादध्ययनविधेरधिकारप्रदर्शनासंभवात् तन्मुखेन प्रयोजकत्वं न संभवतीति दूषयति—पूर्वपक्ष इति श्लोकेन ।

ननु पूर्वपक्षेऽप्यध्ययने फलप्रयुक्ताधिकारासंभवेऽपि नियोगप्रयुक्ताधिकारसंभवात् तत्प्रदर्शनमुखेनानुष्ठानं स्यादिति शङ्कते—नन्विति । परिहरति—नेति । यस्य हि नियोगः कार्यतया प्रतीयते, तस्यैवासौ स्वसाधनेऽधिकारं जनयति, नान्यस्येति भावः । कथं माणवकस्याध्ययननियोगो न कार्य इत्यत्राह—अनियोज्यत्वादिति । अध्ययनविधेर्नियोज्यत्वं पूर्वोत्तरपक्षद्वयेऽपि भवताऽङ्गीकृतम् । तस्यापूर्वत्वमेव । न तु कार्यत्वं, नापि नियोगत्वमिति त्वन्मतमर्यादेति भावः ॥ ३१ ॥

नन्वध्ययने फलप्रयुक्तस्य, नियोगप्रयुक्तस्य वाऽधिकारस्यादर्शनात् तत्प्रदर्शनेनानुष्ठापनासंभवेऽपि स्वकार्यसिद्धचर्थमध्यापकेन येन केनापि प्रकारेणानुष्ठापनसंभवात् परप्रयुक्तिः सिध्यतीति-शङ्कते—अथेति । उपायान्तरेण—बलात्कारादिना । विश्वजित्यप्येवमेव याजनविधिप्रयुक्त्यैवानुष्ठापनसिद्धेर्नियोज्यपरिकल्पनं न स्यादिति परिहरति—तथासतीति । अनुष्ठानसिद्धय इति । श्रुतनियोज्यकेषु दर्शपूर्णमासादिविधिषु प्रथमं नियोज्यान्वये सति तन्निमित्तं तत्साधनेऽधिकारोदयः । तदुदयनिमित्तं च विषयानुष्ठानम् । प्रथमं नियोगे सामान्यतः कार्यतया प्रतिपन्ने, तन्निर्वाहाय विषयानुष्ठानापेक्षा । तदर्थं चाधिकारापेक्षा । तदर्थं च नियोज्यापेक्षा । तेन तत्तदाकाङ्क्षाक्रमेण कर्त्रधिकारिनियोज्यपरिकल्पनमिति क्रमस्थितिः । सा न स्यादिति भावः ।

ननु विश्वजितो निरधिकारत्वे द्रव्यार्जनस्यैवासिद्धेर्याजका न याजयेयुः । अतः परप्रयुक्तिरेव न संभवतीति शङ्कते—अथेति । अनर्थकत्वात्—द्रव्यार्जनरूपप्रयोजनासिद्धेः । यद्वा अनर्थकत्वात्—विश्वजितो निष्फलत्वात् । कथं तेषां प्रयोजनं न सिध्यतीत्यत्राह—नहीति ।

न च पूर्वपक्षेऽध्ययनं माणवकमधिकरोतीति, नाध्यापनेन प्रयुक्तिः सम्भवति। पक्षद्वयसाधारणी तत्प्रयुक्तिर्भवद्भिरिष्यते। 'विद्यादानेन सुमतिरि'त्याद्यपि पुरुषार्थ-ज्ञानदानाभिप्रायम्। अन्यथा लौकायतिकशास्त्रार्थज्ञानदानमपि ब्रह्मलोकाय कल्पेत। न चाध्ययनस्य पूर्वपक्षे पुरुषार्थताऽस्तीति, न ब्रह्मलोकप्राप्तिफलकविद्यादानविधि-वशादपि तस्य प्रयुक्तिः सम्भवति। तत्सिद्धं नाध्यापनविधिप्रयुक्तमध्ययनमिति, नैवं-पूर्वपक्षोत्तरपक्षावुपपन्नाविति ॥ ३१ ॥

तस्माद्वार्तिककारोक्ता गम्भीरा भाष्यसम्मता।
स्वाध्यायविधिवाक्यार्थगोचरा नीतिरुच्यते ॥ ३२ ॥

'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनावच्छिन्नभावना विधियुक्ता तव्यप्रत्ययेना-भिहिता। तस्या भाव्यापेक्षायां (सा) समानपदोपात्तमप्यध्ययनमपुरुषार्थत्वादुल्लङ्घ्य पुरुषार्थपरं किमपि भाव्यमपेक्षमाणाऽवतिष्ठते। तत्र संदेहः—किं विश्वजिदादिन्यायेन स्वर्गोऽस्या भाव्यं कल्प्यताम्, उताक्षरसंस्कारादिपरम्परया साध्यमानं वाक्यार्थज्ञानमेव भाव्यमङ्गीकर्तव्यमिति।

---

न्यायसाम्येन परिहरति—तदत्रापीति। आचार्यकरणम्—आचार्यकम्। अपेक्षितमिति शेषः। अध्ययनविधेर्निरधिकारत्वात् पूर्वपक्षे परप्रयुक्त्यसंभवं निगमयति। न चेति।

पूर्वपक्षेऽध्ययनस्य निरधिकारतया दक्षिणाप्रदानाभावेनाचार्यकस्यापुरुषार्थतया च तदर्था-ध्यापनप्रयुक्तिर्माभूत्। ब्रह्मलोकप्राप्तेः स्वतः पुरुषार्थतया तदर्थाध्यापनविध्यन्तरप्रयुक्तिः स्यादि-त्याशङ्क्य, अध्ययनस्य निष्फलत्वे तदध्यापनमपि नोक्तफलहेतुः। ततश्च स्वानुष्ठानमेव न सिध्यति। अध्ययनानुष्ठापनं तु दूरत इत्याह—विद्यादानेति। पुरुषार्थप्रापकविद्यादानमेव ब्रह्मलोकप्राप्ति-हेतुरिति वचनाभिप्रेतत्वादनीदृशविद्यादानं नोक्तफलहेतुरिति भावः। महाप्रकृतं निगमयति—तत्सि-द्धमिति। अतएव तदवलम्बनेन प्रवृत्तौ भवन्मतपूर्वोत्तरपक्षावनुपपन्नावित्याह—नैवमिति ॥३१॥

एवं गुरुमताङ्गीकृतमर्यादयैव तन्मतं निराकृत्य, स्वाभिमतौ पूर्वोत्तरपक्षौ वक्तुं प्रति-जानीते—तस्मादिति। गम्भीरा भाष्यसंमतेत्यनेन मतान्तरस्य तद्वैपरीत्यमभिप्रेतम्। प्रतिज्ञातमर्थं-प्रतिपादयितुमुपक्रमते—स्वाध्याय इत्यादिना। तत्र लिङादिप्रत्ययानां तावत् विधिर्भावना-चोभयमपि वाच्यम्। तत्र विधिः—प्रेरणात्मको लिङादिव्यापारः। भावना तु पुरुषप्रयत्नः। उभयोश्चैकप्रत्ययवाच्यतया प्रथमं संबन्धः। भावना च स्वभावादाकाङ्क्षात्रयवती—प्रथमं भाव्यं, पश्चात् करणम्, अनन्तरं चेतिकर्तव्यतामपेक्षते ॥ ३२ ॥

ततश्च प्रेरणात्मकस्य विधेरपुरुषार्थे पुरुषस्य प्रेरयितुमशक्यतया विधिसंबन्धबलात् भावनायाः पुरुषार्थ एव भाव्यतयावतिष्ठते। इत्थं स्वमतमर्यादाक्रमे स्थिते, स्वयं पूर्वपक्ष-सिद्धान्तौ रचयितुमुपोद्घाततयाऽध्ययनविधिवाक्यार्थं निरूपयति—स्वाध्यायेति। समानपदो-पात्तमिति। एकपदाभिधानलक्षणया श्रुत्या प्रथममेव भावनासंबन्धार्हमपीत्यर्थः। पुरुषार्थपरं—पुरुषार्थरूपम्। अधिकरणं रचयितुं संशयमाह—तत्रेति। अध्ययनानन्तरं नियमेन मीमांसाऽऽरम्भ-णीया, 'उत नेति प्रथमं संशयः। उक्तस्तु संशयः तदर्थो द्रष्टव्यः। विश्वजिदादिन्यायेनेति। 'विश्वजिता यजेते' तां. ब्रा. १९-४-५ त्यत्र विध्यवरुद्धायां भावनायां लिङ्प्रत्ययप्रतीतायां पुरुषार्थ-रूपभाव्याकाङ्क्षिण्यां सत्यामश्रुतमपि फलमध्याहृत्य कल्प्यम्। कल्प्यमानमपि तत्सर्वापेक्षिततया स्वर्ग एव स्यादिति, तत्र निर्णीतमित्यर्थः। अक्षरसंस्कारेति। अध्ययनाद्विधिवदक्षरग्रहण—पदावधारण—पदार्थपरामर्शद्वारेणेत्यर्थः। वाक्यार्थज्ञानं—वेदवाक्यार्थनिर्णयः।

## विश्वजिन्न्यायेन स्वर्गकल्पना

तत्र पूर्वः पक्षः—नार्थज्ञानार्थता युक्ता प्रमाणान्तरसिद्धितः।
स स्वर्गः स्यादिति न्यायादतः स्वर्गार्थता भवेत् ॥ ३३ ॥

यद्यपि चाध्ययनानन्तरमक्षरग्रहणादि-पदावधारण-पदार्थसंवित्प्रणाडिकया वाक्यार्थ-ज्ञानमुपजायमानं दृश्यते। तच्च फलवत्कर्मानुष्ठानोपयोगितया पुरुषस्याभिलषितं-शक्नोत्येव भाव्यभावमनुभवितुम्। न च दृष्टे सम्भवत्यदृष्टं कल्पयितुं शक्यमित्यर्थ-ज्ञानार्थतैव युक्तेति बुद्धिर्भवति। तथाऽप्यप्राप्ते शास्त्रस्यार्थवत्त्वात्प्रमाणान्तरादेवार्थ-ज्ञानस्याध्ययनभावनाभाव्यतासिद्धेः, तादर्थ्ये विध्यानर्थक्यप्रसङ्गात् विश्वजिन्न्यायेन स्वर्गार्थतैव युक्ता ॥ ३३ ॥

## अवघातवन्नियमविधिशंका—तन्निरासौ

यद्युच्येत—प्रमाणान्तरसिद्धेऽपि नियमार्थोऽवहन्तिवत्।
उपपन्नो विधिर्नैवं क्रत्वर्थत्वाद्विना न तत् ॥ ३४ ॥

प्रमाणान्तरादेवार्थज्ञानार्थतासिद्धावप्यवघातादिवन्नियमार्थत्वाद्विधेर्नानर्थक्यमिति-चेत्? नैवं युक्तम्। अक्रत्वर्थत्वादध्ययनस्य। अवघातादयो हि क्रतावेव नियम्यन्ते-अवघातेनैव निर्वर्त्यमानास्तण्डुलाः क्रत्वपूर्वं साधयन्तीति। न तण्डुलस्वरूपे। प्रमाणा-न्तरविरोधात्। प्रस्थपृष्ठपेषण-नखनिर्लुञ्चनादिना तन्निर्वृत्तिदर्शनात्। एवमिहापि

---

पूर्वपक्षं तावदाह—तत्रेति। न्यायादिति। 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' ( जे. ४.३.१५ ) इति सूत्रसूचितन्यायादित्यर्थः। न्यायान्तरेण सिद्धान्तं विघटयितुं सिद्धान्त-प्रतिपादनक्रमं तावदनुवदति—यद्यपीत्यादिना। दृश्यत इति। वस्तुस्वभावाल्लभ्यते। अतः स्वर्गो न कल्प्यत इति भावः। शक्नोतीति। परम्परया पुरुषार्थत्वात् भाव्यत्वं युक्तमित्यर्थः। दृष्टे—अवघातेन वैतुष्यवदध्ययनसाध्यतया प्रसिद्धे। अदृष्टं—प्रोक्षणसंस्कारवत् तत्साध्यत्वेनाप्रसिद्धं-स्वर्गरूपं प्रयोजनम्। एवं सिद्धान्तमाविष्कृत्येदानीं तं विघटयति—तथापीति। शास्त्रस्य विधेः प्रमाणान्तराप्राप्त एवार्थे प्रवर्तकत्वसिद्ध्या सप्रयोजनत्वम्। न तु प्रमाणान्तरप्रतिपन्नस्थले। तत्र तु तेनैव प्रवृत्तिसिद्धेरिति भावः। तादर्थ्ये—अर्थज्ञानार्थत्वे ॥ ३३ ॥

नन्वध्ययनस्यार्थज्ञानार्थत्वे प्रमाणान्तरप्राप्तेऽप्यध्ययनेनैव तत्संपादयेदिति नियमांशस्या-प्राप्तत्वात् तत्र विधेः साफल्यमित्याशङ्कते—यदीति। परिहरति—नैवमिति। अक्रत्वर्थत्वादिति। अध्ययनविधेरनारभ्याधीतत्वात्, विनियोजकश्रुत्याद्यभावाच्च क्रत्वनङ्गत्वमित्यर्थः। अक्रत्वर्थत-याऽध्ययने नियमानुपपत्तिं वक्तुं क्रत्वर्थतयैवावघातादिषु नियममाह—अवघातादयो हीति। क्रतावेव—क्रत्वपूर्वशेषतयेत्यर्थः। तमेव नियमं दर्शयति—अवघातेनैवेति। तण्डुलेति। अपूर्व-साधनत्वेनाविशेषिते स्वनिर्वर्त्ये केवलतण्डुल एवेत्यर्थः। तत्र हेतुमाह—प्रमाणेति। तण्डुलस्य नानोपायसाध्यतया प्रतिपन्नत्वादवघातेनैव तण्डुलनिर्वृत्तिः स्यादिति नियमः प्रमाणान्तरविरुद्ध-इति भावः। निर्लुञ्छनं—विदलनम्। अवघातस्य तण्डुलस्वरूप इवाध्ययनस्याप्यर्थज्ञानमात्रे नियमः प्रमाणान्तरविरोधादनुपपन्न इत्याह—एवमिति। यद्यपि ज्ञानार्थं नियमासंभवेऽपि-

ज्ञानोत्पत्तेरन्तरेणाप्यध्ययनं पुस्तकनिरीक्षणादेरपि सम्भवात् तत्स्वरूपे तावन्नियमः सम्भवति। यदि परमध्ययनापादितज्ञानपूर्वकमेव क्रत्वनुष्ठानमभ्युदयाय घटत इति नियम्येत। तच्चाक्रत्वर्थत्वादध्ययनस्यायुक्तम्। तन्नियमार्थत्वानुपपत्तेः स्वर्गार्थतैव वरमिति।

## रात्रिसत्रन्यायेनार्थवादिकफलकल्पना न तु स्वर्गकल्पनेति शंका–निरासौ

अथ निर्देशादार्थवादिकमेव फलं युक्तम्। अश्रुतौ हि फलस्यानुमानं स्यात्। इह तु 'यं यं क्रतुमधीते, तेन तेनास्येष्टं भवति' इति क्रतुफलावाप्तिः। 'यदृचोऽधीते, पयसः कुल्या अस्य पितॄन् स्वधा अभिवहन्ति, पय आहुतिभिरेव तद्देवांस्तर्पयति, ते'–पितरो देवाश्चैनम्–अध्येतारं तृप्ता आयुरादिभिस्तर्पयन्ति' इति आयुरादिप्राप्तिः,

"यस्तु सम्यग्द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्।
इहैव स नखाग्रेभ्यः परमं तप्यते तपः" ॥ म. २–१६७ ॥

इति तपःफलप्राप्तिरपि श्रूयत एव। तस्मान्न स्वर्गार्थता युक्तेति।

अत्र ब्रूमः—आद्ये त्वध्ययने नैव काचिदस्ति फलश्रुतिः।
धारणे जपयज्ञे च फलश्रुतिरियं यतः ॥ ३५ ॥

क्रतुफलायुरादिप्राप्तिस्तावज्जपयज्ञाध्ययनगोचरा। धारणाध्ययनगोचरा तु तपःफलप्राप्तिः। आद्ये तु स्वीकरणाध्ययने न किञ्चित्फलश्रवणमस्ति। यतो निर्देशादश्रुतानुमानं न क्रियेत। चोदकादपि शब्दभावनेतिकर्तव्यताभूतं प्राशस्त्यमात्रं लभ्यते।

---

क्रत्वपूर्वशेषतयाऽध्ययनेऽपि नियमो वर्णयितुं शक्यते। सोऽपि तच्छेषत्वस्यैवाभावान्न युक्त इत्याह–यदि परमिति। ज्ञानस्य भाव्यत्वानुपपत्तेः स्वर्गस्यैव भाव्यत्वं फलितमिति निगमयति–तन्नियमेति।

ननु 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' २३–२०–४ इत्यर्थवादवाक्ये प्रतिष्ठारूपफलश्रवणात्–सैव रात्रिसत्रक्रतोः फलम्। न त्वत्यन्ताश्रुतः स्वर्गः। तद्वदत्राप्यार्थवादिकमेव फलं स्यादिति–शङ्कते–अथेति। निर्देशादिति। 'फलमात्रेयो निर्देशात्' (जै. ४–३–१५) इति सूत्रैकदेशोपादानम्। आत्रेयस्तावदाचार्यः श्रुतत्वात् प्रतिष्ठामेव फलं रात्रिसत्रस्य मन्यत–इत्यर्थः। अनुमानं–कल्पनम्। आर्थवादिकमेव फलमध्ययने दर्शयति–इह त्विति। यं यमिति। तत्तत्क्रतुप्रतिपादकवेदभागाध्ययनेन तत्तत्क्रतुफलमवाप्यत इत्यर्थः। 'त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति' इति पूर्वपठितश्रुतिशेषभूतायाः श्रुतेरर्थमनुसंधत्ते–ते पितर इति। नखाग्रेभ्यः परममिति। सर्वावयवसाध्यतपःफलं प्राप्नोतीत्यर्थः।

अर्थवादानामध्ययनान्तरशेषतया। नाद्याध्ययनस्य तत्फलकत्वम्। अतस्तत्र स्वर्ग एव कल्प्यत इति परिहरति—अत्र ब्रूम इति। जपयज्ञः–ब्रह्मयज्ञाद्यध्ययनम्। प्राप्तस्य दृढीकरणार्थमध्ययनं धारणाध्ययनम्। गुरुमुखात् स्वाध्यायप्राप्त्यर्थमध्ययनं स्वीकरणाध्ययनम्।

ननु विधिप्रत्ययेन प्रेरणात्मको विधिः प्रतीयते। सैव शब्दभावना। साप्यर्थभावनावदाकाङ्क्षात्रयवती। तस्याश्च समानप्रत्ययोपात्तार्थभावनैव भाव्यतयावतिष्ठते, अर्थभावनासमीहितसाधनत्वज्ञानं करणम्। प्राशस्त्यज्ञानं त्वितिकर्तव्यता। प्राशस्त्यं च यत्रार्थवादः श्रूयते, तत्र साक्षाल्लभ्यते। यत्र तु न, तत्रातिदेशेनेति स्थितिः। ततश्चाध्ययनेऽर्थवादाभावेऽप्यतिदेशेनार्थवादिकं फलं लभ्यत इति, न स्वर्गः कल्प्यत इत्याशङ्क्याह–चोदकादिति। चोदकात्–अतिदेशप्रमाणात्। शब्दभावनायां प्राशस्त्यस्यैवेतिकर्तव्यतात्वात्, तदेवातिदिश्यते, न फलमित्यर्थः ॥३५॥

---

१—इदञ्च श्रुतेरर्थतोऽनुवादः—इति।

न त्वायुरादिफलस्वरूपम्। तस्मात् स्वर्गार्थत्वादध्ययनस्यानुवचनमात्रेण विचारमन्तरेणैव: शास्त्रार्थसमाप्तेनं तद्वशेन स्नानोत्कर्षः शक्यते कर्तुम्, इत्यध्ययनानन्तरं 'वेदमधीत्य स्नायादि'ति स्मृत्यनुमितश्रुतिवचनबलेन स्नात्वा, पश्चात्प्रयोजनवशेन विचारयतु, मा वा।

नन्वन्यार्थादध्ययनात्प्रतीयमानोऽर्थो न विवक्षित इति, कथं विचाराभ्यनुज्ञा ? नैष दोषः। अर्थप्रतिपादकस्याप्यदृष्टार्थाध्ययनसम्भवात्। यथा तावत् सिद्धान्त एव 'याजयित्वा, प्रतिगृह्य वा अनश्नंस्त्रिः स्वाध्यायं वेदमधीयीत' तै. आ. प्र. २ अनु. १३. इति प्रायश्चित्तार्थेऽप्यध्ययने विहिते न वेदस्याविवक्षितार्थताऽऽपद्यते. तथा स्वर्गार्थेऽप्यध्ययने द्रष्टव्यम्। न ह्यर्थप्रतिपादनसमर्थस्य वाक्यस्य कदाचिददृष्टार्थमुच्चारणं कृतमित्येतावता, स्वाभाविकमर्थपरत्वं हीयते। तत्सिद्धं नाध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति।

## भाट्टमतेन सिद्धान्तवर्णनम्

अत्रोच्यते—दृष्टप्रयोजनाभावे ह्यदृष्टं परिकल्प्यते।
दृष्टमेव त्विह ज्ञानं विधेश्च नियमार्थता॥ ३६॥

यद्यप्यध्ययनस्यार्थज्ञानार्थता प्रमाणान्तरसिद्धा, तथाऽपि न विधेरानर्थक्यम्। नियमार्थत्वात्।

अक्रत्वर्थतया यत्तु नियमार्थत्ववारणम्।
तत्प्रयोजनमात्रत्वान्नियमस्य न दूषणम्॥ ३७॥

यदि हि वाक्यार्थ एव नियमः स्यात्, ततोऽर्थज्ञानस्वरूपे नियमायोगात् क्रतौ चातदर्थस्यानियमान्न नियमार्थताऽवकल्प्येत। न त्वेतदस्ति। अप्राप्तविधिरेवायम्।

---

अस्तु स्वर्गस्यैव भाव्यता। ततः किमित्यत्राह—तस्मादिति। अनुवचनमात्रेण—गुरुमुखादनूच्चारणमात्रेण नार्थनिर्णयपर्यन्तेन। शास्त्रार्थसमाप्तेः—अध्ययनशास्त्रार्थानुष्ठानसिद्धेरित्यर्थः। प्रयोजनवशेन कर्मानुष्ठानार्थं तन्निर्णयापेक्षया। नन्वनारम्भनियमेनैव पूर्वपक्षे प्रवर्तयितव्ये, किमित्यनियमेन प्रवर्त्यत इति शङ्कते—नन्विति। अध्ययनस्य स्वर्गार्थत्वे स्वाध्यायस्य तन्मात्रनिर्वर्तकतया स्वार्थविवक्षाभावादविवक्षितस्य चानिर्णिनीषितत्वात् न तदर्थं विचाराभ्यनुज्ञेति—भावः। अन्यार्थत्वेऽप्यध्ययनस्य पदशक्तिस्वभावलभ्यार्थपरता न निरोद्धुं शक्यत इति परिहरति—नैष दोष इति। तदेवोपपादयति—यथेति। तस्मादनियमेनैव पूर्वपक्षपर्यवसानमित्याह—तत्सिद्धमिति।

अत्यन्ताप्रतिपन्नं स्वर्गादिफलं परिकल्प्य, अध्ययनस्य तत्साधनत्वपरिकल्पनाच्चाध्ययनानुनिष्पाद्यतया प्रमाणान्तरप्रसिद्धार्थज्ञानस्यैव प्रयोजनत्वाश्रयणं लाघवात् युक्तमित्याशयेन सिद्धान्तमाह—अत्रोच्यते—इति ॥३६॥ ननु नियमविधित्वं दूषितमेवेत्याशङ्कामनूद्य नायं साक्षान्नियमविधिः, किं त्वपूर्वविधिरेव। नियमस्य च पश्चात् स्वत एव लभ्यतया न विधेरानर्थक्यमपीति परिहरति—अक्रत्वर्थतयेति। नियमस्य प्रयोजनमात्रत्वात्, स्वत एव पश्चाल्लभ्यत्वात् तन्न दूषणमित्यन्वयः। वाक्यार्थ एवेति। अध्ययनेनैवार्थज्ञानं संपाद्यं क्रत्वीयज्ञानमध्ययनेनैव संपाद्यमिति वाक्यार्थः स्यादित्यर्थः। अतदर्थस्य—अक्रत्वङ्गस्य। कथं तर्हि वाक्यार्थ इत्यत्राह—अप्राप्तेति। अध्ययनेनार्थज्ञानं संपादयेदित्येव वाक्यार्थ इत्यर्थः।

यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतयाऽध्ययनादिनानोपायानुष्ठानं नोत्प्रेक्षितं, तावद्द्विजातीनामुपनीतानां तत्प्रक्रमाधीतया 'स्वाध्यायोऽध्येतव्यः' श. ब्रा. ११.५.७.२. इति-प्रत्यक्षश्रुत्याऽध्ययनं विधीयते। श्रुतेर्लिङ्गाच्छीघ्रं प्रवृत्तेः। विहिते तु तस्मिंस्तदापादित ज्ञानैरेव लब्धानुष्ठानान्युत्तरकर्माणि 'अवेद्यत्वादभावः कर्मणि स्यात्, जै सु ६-१-३७ इत्यनेन न्यायेन विद्वांसमधिकृत्य प्रवृत्तानि न तस्य ज्ञानसिद्ध्यर्थमुपायान्तरमाक्षिपन्तीति, फलतो नियमभाषा; तद्यथा-रशनादानमन्त्रस्य लिङ्गादेवाश्वरशनाङ्गत्वे सिद्धेऽपि, प्रत्यक्षश्रुतिर्विनियोगः, परिसंख्या तु फलम्। न हि तत्र परिसंख्या वाक्यार्थ एव। स्वार्थ-हानादिप्रसङ्गात्। श्रुतेश्च पूर्वं लिङ्गेन गर्दभरशनायामप्राप्तेः। अतोऽप्राप्तविधिरेव।

---

अप्राप्तविधित्वमेवोपपादयति—यावद्धीति। उपनीतस्य कर्मानुष्ठानौपयिकज्ञानसंपादनार्थं तज्ज-ननसमर्थनानोपायपरिग्रहस्तावदुपायगतसामर्थ्यादिपरामर्शसापेक्षतया विलम्बितः। अध्ययनन्तु-प्रत्यक्षश्रुतिविहितया ततःपूर्वमेवोपनीतमधिकृत्य प्रवर्तते। तत्प्रवृत्तिवेलायामुपायान्त-राणामप्राप्ततया तन्निवृत्तिफलकोऽयं नियमविधिर्न संभवति। किं तु अप्राप्तविधिरेवायमिति भावः। नानोपायानुष्ठानमिति। लिखितपाठ—हितैषिवचनानीत्यर्थः। तावत्—ततः पूर्वमेव। अस्त्वपूर्वविधित्वं, नियमफलकत्वं कुतः? तत्राह—विहिते त्विति। असत्यध्ययनविधावुत्तरकर्माणि स्वानुष्ठानौपयिकज्ञानाय नानोपायानाक्षिपेयु। सति तु तस्मिन् तत्सिद्धज्ञानवतोऽधिकारिणो लब्धत्वात् नोपायान्तरोन्मेष इति, क्रतावेव नियमः फलिष्यतीति भावः। तदापादितज्ञानैरिति। पुरुषैरिति शेषः। न्यायेनेति। अपशूद्राधिकरणसिद्धन्यायेनेत्यर्थः। नियमभाषा—नियमविधि-त्वव्यपदेशः।

अपूर्वविधित्वेऽप्यस्य फलतो नियमविधित्वं तादृशविध्यन्तरप्रतिपादनमुखेनोपपादयति—तद्यथेति। 'इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्ये' तै. सं. ५-१-२. त्यादिमन्त्रः-'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्त—इति श्रुत्या अश्वरशनादाने विनियुज्यते। लिङ्गात्त्वविशेषेणाश्वरशनादान-गर्दभरशनादानयोर्विनियोगः प्रतीयते। अत्र श्रुतिविनियोगा-भावेऽपि लिङ्गादेवाश्वरशनाशेषत्वस्यापि सिद्धेस्तादर्थ्ये विनियोजकविधेरानर्थक्यप्रसङ्गात्-गर्दभरशनाशेषत्वनिवृत्तौ विधेस्तात्पर्यं वक्तव्यम्। सा च फलत एवेत्यङ्गीकर्तव्यमित्यर्थः।

किमिति फलतः परिसंख्या। साक्षात् वाक्यार्थत्वे को दोष इत्याह—नहीति। तस्याः—वाक्यार्थत्वे त्वेवं वाक्यार्थविपरिणामः स्यात्—अनेन मन्त्रेण गर्दभाभिधानीं नादद्यादिति। ततश्च विधिरूपस्वार्थपरित्यागः। निषेधरूपास्वार्थस्वीकारः। लिङ्गेन गर्दभरशनाशेषतया—प्राप्तस्य मन्त्रस्य तत्र बाधश्चेति स्वार्थहानास्वार्थस्वीकरणप्राप्तबाधलक्षणदोषत्रयं प्रसज्येतेत्यर्थः।

परिसंख्याया वाक्यार्थत्वे दोषत्रयमभिहितम्। इदानीं नायं परिसंख्याविधिः, किन्त्व-पूर्वविधिः। परिसंख्या तु स्वयमेव संपत्स्यत इत्याह—श्रुतेश्चेति। प्राप्तस्य खलु परिसंख्या। गर्दभरशनायां प्रापकं च लिङ्गमेव। तच्च विलम्बितप्रवृत्तीति, श्रुतिप्रवृत्तिवेलायां तत्र तस्या-प्राप्ततया न तत्परिसंख्या संभवति। तस्याश्वरशनाशेषत्वमपि तदानीमप्राप्तमिति, तत्परतयाऽ-यमपूर्वविधिरेव। किं त्वस्य विधेरभावे लिङ्गान्मन्त्रस्य रशनाद्वयशेषत्वं स्यात्। विधिसंभवे त्वनेन प्रथमत एवाश्वरशनाशेषत्वे मन्त्रस्य सिद्धे, नैतद्विरोधेन लिङ्गं तस्य गर्दभरशनाशेषत्वं-प्रापयितुं क्षममिति, स्वत एव गर्दभरशनातो मन्त्रस्य निवृत्तिः सिध्यतीति, फलतोऽस्य-परिसंख्याविधित्वव्यपदेश इति भावः॥ ३७॥

फलतः परिसंख्यावाचीयुक्तिः। एवमध्ययनविधावपि नियमवाचोयुक्तिर्द्रष्टव्या। न-चैतावताऽध्ययनस्य क्रत्वर्थत्वप्रसङ्गः। तदापादितमर्थज्ञानं क्रत्वङ्गम्। अध्ययनन्तु ज्ञानाङ्गमेव। यथाऽऽधानसाध्यानामग्नीनां क्रत्वर्थत्वेऽपि नाधानस्य 'द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगस्सर्वार्थस्स्यात् स्वकालत्वात्' जै. सू ११-३-२ इति न्यायेन क्रत्वर्थत्वम्, एवमिहापि द्रष्टव्यम्।

एकदेशिनाऽपि चाध्ययनविधिगोचराध्यापनविधिप्रयुक्ताध्ययनसम्पादितमेव ज्ञानमुत्तरकर्माङ्गमित्युपगन्तव्यम्। अन्यथा यः कश्चिच्छूद्रोऽपि वैयात्यादध्ययनेन, उपायान्तरेण वा क्रत्वर्थं ज्ञानं सम्पादयेत्, तस्यानिवार्योऽधिकारः स्यात्। तेनाध्ययनविधिविहितोपनीतकर्तृकव्रतनियमादीतिकर्तव्यतोपेताध्ययनसम्पादितज्ञानवतामेवोत्तर-कर्मस्वधिकारः। तथा सत्यपि नाध्ययनस्य क्रत्वर्थत्वमिति।

इदं तावदेकदेशिनामस्माकं च तुल्यमेव। अध्ययनन्तु स्वविधिप्रयुक्तम्, आचार्यकरणविधिप्रयुक्तं वेत्यत्र विवादः। तेनाप्रकरणाधीतत्वान्नापूर्वीयज्ञानार्थतयाऽध्ययनविधानम्। येन क्रत्वर्थं स्यात्। किं त्वध्ययनापादितं ज्ञानं क्रत्वर्थमिति।

---

तथाऽध्ययनविधिरपि फलतो नियमविधिरित्याह—एवमिति। अध्ययनसंपादितज्ञानवन्तं-पुरुषमधिकृत्य क्रतूनां प्रवृत्तावपि नाध्ययनस्य क्रत्वङ्गत्वं, किं तु ज्ञानस्यैवेत्याह—नचेति। ननु ज्ञानस्य क्रत्वङ्गत्वे तदङ्गस्याध्ययनस्यापि तद्द्वारेण व्रीह्यङ्गभूतावघातादेरिव क्रत्वङ्गत्वं स्यादिति शङ्कां दृष्टान्तप्रदर्शनमुखेन परिहरति—यथेति। 'आहवनीये जुहोति' तै. ब्रा. १-१-१०. इत्यादिभिरग्नीनां क्रत्वङ्गत्वेऽपि तदर्थस्याधानस्य न तन्मुखेन तदङ्गत्वम्। स्वशेषिभूतानामाहवनीयादिद्रव्याणां क्रतोर्भिन्नकालनिष्पाद्यतया स्वस्यापि क्रतोर्बहिरेवानुष्ठेयत्वादनारभ्याधीतत्वाच्चेत्याधानाधिकरणे निर्णीतम्, तद्वदत्रापीति भावः। द्रव्यस्याकर्मकालेत्यादिकमाधानाधिकरणसिद्धान्तसूत्रम्। अध्ययनसंपादितज्ञानस्यैव क्रतुशेषत्वं, नतु तद्द्वाराऽध्ययनस्य।

एतत् गुरुमतेऽप्यङ्गीकार्यमित्याह—एकदेशिनेति। त्रैवर्णिकोद्देशेन विहितोपनयनाङ्गकाध्यापनविधिना स्वाङ्गभूतोपनयनद्वारा वैधाध्ययनस्यैव प्रयुक्तेः, तत्संपादितज्ञानवन्तमेवाधिकृत्योत्तरकर्मप्रवृत्तेस्तज्ज्ञानमुत्तरकर्माङ्गं, नाध्ययनमित्यङ्गीकार्यमित्यर्थः। एवं नियमानङ्गीकारे सिद्धज्ञानवतोऽधिकारिणोऽलाभात् उत्तरकर्माणि स्वानुष्ठानसिद्ध्यर्थं ज्ञानं तदुपायांल्लौकिकानप्यनियमेनाक्षिपेयुः। ततश्च शूद्रस्याप्यधिकारः स्यादित्याह—अन्यथेति। वैयात्यात्—धार्ष्ट्यात्। अध्ययनेन—अवैधेन। फलितमाह—तेनेति। तथा सत्यपीति। उपायनियतज्ञानस्यैव क्रत्वङ्गत्वेऽपि नोपायस्याङ्गत्वमित्यर्थः। कथं न तस्य क्रत्वङ्गत्वमुपपद्यत इत्याशङ्क्य, यतोऽध्ययनसिद्धज्ञानवन्तमेवाधिकृत्य कर्मप्रवृत्तिरुपपादिता। तेनैवेत्याह—तेनेति। अयं भावः—'व्रीहीनवहन्ती'त्यत्र 'व्रीहिभिर्यजेते'ति व्रीहीणामपूर्वसंबन्धस्य पूर्वमेव निरूढत्वादवहननस्य च क्रतुप्रकरणपाठात् व्रीहीणामपूर्वसाधनत्वलक्षणमाश्रित्य तद्द्वारेण तस्य क्रत्वङ्गत्वं युज्यते। अत्र तु कर्मणामध्ययनसिद्धज्ञानोपजीवनेन प्रवृत्त्या पश्चात् ज्ञानस्य क्रत्वङ्गत्वावगमादध्ययनविधिप्रवृत्तिवेलायां ज्ञानस्य क्रतुसंबन्धानिरूढेरपूर्वीयत्वलक्षणाभावादनारभ्याधीतत्वाच्च न

'तत्सिद्धं नियमार्थत्वान्नानर्थक्यं विधेर्भवेत् ।
तेन दृष्टार्थतालाभादर्थज्ञानार्थता स्थिता ॥ ३८ ॥

## शंका—तन्निरासौ

कथमिदानीमनर्थकानां हुं—फडादीनामध्ययनमर्थज्ञानार्थम् ? कथं च क्षत्रिया-द्यधिकाराश्वमेधादिप्रतिपादकस्य वेदभागस्य ब्राह्मणादिभिरर्थज्ञानार्थमध्ययनम् ? यद्यपि कथञ्चिद् ब्राह्मणस्य याजनोपयोगिज्ञानार्थमध्ययनं सम्भाव्येत, तथाऽपि-क्षत्रिय-वैश्ययोर्वैश्यस्तोमाश्वमेधाध्ययनमनर्थकमेव, अदृष्टार्थं वा। कथञ्च निषेधवाक्येषु-

तन्मुखेनाध्ययनस्य तदङ्गत्वमिति सिद्धान्तं श्लोकेन निगमयति—तत्सिद्धमिति । तेन—विधेरानर्थक्याभावेन ॥ ३८ ॥

नन्वर्थज्ञानार्थत्वमध्ययनस्यायुक्तम् : तस्याप्रातिस्विकत्वात् । नियमविधित्वं चायुक्तम् । एवं हि नियमः स्यात्—अध्ययनसम्पादितज्ञानवन्तमेव क्रतवोऽधिकुर्वन्तीति । तथात्वे च दोप-प्रसङ्गादिति शङ्कते—कथमिदानीमित्यादिना । हुम्—फडादीनामिति हुं—फट्—श्रौपडित्या-दीनां नैवार्थो दृश्यते । ब्राह्मणादिभिरिति । तेषां तत्र ज्ञानोदयेऽपि स्वानुष्ठानानुपयोगादपुरुषा-र्थत्वात् न तादर्थ्यमध्ययनस्येत्यर्थः । आनर्थक्यम् , अदृष्टार्थत्वं चेति । याजने ब्राह्मणमात्रस्यै-

### टिप्पणी

१. अध्ययनविधौ नियमस्य द्वेधोपपादनं दृश्यते । तत्र अध्ययनविधेरधिकारनियमः—फलमिति शास्त्रदीपिकाकारो मन्यते । तथाहि—योऽयमग्निहोत्रादिकर्मसु अधीतवेदानां त्रैवर्णिका-नामेवाधिकारः, नानधीतवेदानामित्यधिकारनियमः फलमध्ययनविधेः । सोऽयमधिकारनियमोऽधि-कारलक्षणे षष्ठे अपशूद्राधिकरणे वक्ष्यमाणोऽध्ययनविधिप्रसादलभ्य इति पार्थसारथिर्मेने ।

अधिकरणमालायान्तु माधवाचार्यः क्रत्वपूर्वेनियमं वर्णयाम्बभूव । अतएव विवरणप्रमेयसंग्रहे—अयं प्रकार उक्तः पृ. ५५ । अत्र तु ग्रन्थकारो अपूर्वविधिरेव, फलतोनियमविधित्वव्यपदेश इति, अन्वारुह्य प्रतिपादयामासेति ध्येयम् ।

उपनयनमध्ययनस्याङ्गम्, न त्वध्यापनस्य, सर्वासु स्मृतिषु उपनयनप्रकरणेऽध्ययनस्य पाठात्, सर्वस्मृत्यनुमितश्रुतिषूपनयनं प्रकृत्याऽध्ययनस्य विधानात्, फलवदध्ययनप्रकरणानुगृहीतः-एवोपनयनविधिरध्ययनांगतामात्मनः प्रतिपादयति । तस्मात् संस्कारस्योपनयनस्य स्वाध्याया-ध्ययनार्थत्वमेव युक्तम् । अपि च शतपथब्राह्मणे 'ब्रह्मचर्यमागामि'ति—प्रस्तुत्य 'य एवं विद्वान्—स्वाध्यायमधीते ··· ··· तस्मात् 'स्वाध्यायोऽध्येतव्यः' श० ब्रा० ११-५-७-२ इति श्रूयते ।

ननु इदं ब्रह्मयज्ञं प्रकृत्य श्रूयमाणं कथं गुरुमुखाध्ययनं ( आद्यग्रहणाध्ययनं ) स्यात् ? सत्यम् । अध्यनासंस्कृतेन स्वाध्यायेन जपयज्ञरूपस्वाध्यायायोगादिति, उपनीतस्य तदेवाऽत्र-विधीयते । अतएवोक्तं वेदभाष्ये 'य एवं विद्वानि'ति—वागादेर्जुह्वादिसंपत्तिपुरस्सरं वेदाध्ययनस्य यज्ञरूपतां जानन्नित्यर्थः । इत्थंप्रेक्षावत्प्रवृत्ति—तत्प्रयोजकफले प्रतिपाद्य, तद्धेतुभूतमध्ययनं-विधत्ते 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति । यस्मादेवं ब्रह्मयज्ञस्वाध्यायस्यैतावत्फलम्, तस्मात् स्वाध्यायोगुरुमुखादवगन्तव्यः । अध्ययनसंस्कारसंस्कृतो हि तावत् फलं साधयितुं शक्नोति । ननु प्रकारान्तरादवगत इति प्रघट्टकार्थः ।

'नावगुरेन्न हन्यादि'त्यादिषु नियमवर्णनम् ? यदि तावदध्ययनापादितज्ञानवतः-एवावगोरणानुष्ठानं प्रत्यवायकरं, नान्यस्येति कल्प्यते, तथा सत्यनिष्टफलत्वमेवाध्ययनस्य स्यात । को हि नाम प्रत्यवायफलकं निषेधवाक्यार्थज्ञानमिच्छेत् । यतस्तदर्थमध्ययनमनुतिष्ठेत् ।

अथ निषेधेऽननुष्ठानस्य शास्त्रार्थत्वात् तद्विषय एवायं नियम इत्यध्ययनपूर्वकज्ञानवत एवाननुष्ठानं प्रत्यवायपरिहाराय भवति । इतरेषान्त्वननुष्ठानेऽपि नैवाऽसौ-परिह्रियत इति । तथा सत्यनधीतवेदानामननुष्ठानेऽपि प्रत्यवायस्यावश्यकत्वादनुष्ठानेऽपि तस्य तावत्त्वाद्यथाकामं निषिद्धानुष्ठानं स्यात् । न चैतदिष्टम् । अहिंसादीनां सर्ववर्णसाधारणत्वात् तस्मान्न तत्र नियमोपपत्तिः ।

कथञ्च स्वाध्यायाध्ययनवाक्ये नियमः ? न हि तदर्थानुष्ठानं तदध्ययनपूर्वकं-सम्भवति । अध्ययनमेव हि तत्र वाक्यार्थः । कथञ्चाध्ययनपूर्वकमध्ययनं सम्भवति । आत्माश्रयदोषप्रसङ्गात् । अथैवमादिष्वदृष्टार्थमध्ययनं, तथा सत्यवैरूप्यात्सर्वत्रैव तथा-प्रसज्येत । तस्मान्नार्थज्ञानार्थमध्ययनमिति ।

अत्राभिधीयते—न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम् ।
अपेक्षितं दृश्यते यत्सर्वं तत्फलमिष्यते ।। ३९ ।।

---

वाधिकारात् क्षत्रियवैश्ययोरनधिकृतकर्मपरिज्ञानस्य याजनेऽप्यनुपयोगित्वेनापुरुषार्थत्वात् तत्परवेदभागाध्ययनस्य नैष्फल्यं वा, स्वर्गार्थत्वं वा स्यादित्यर्थः । कथं चेति । 'नावगुरेदि'त्यादिष्वेवं-वाक्यार्थः—अवगोरणनिवृत्त्या प्रत्यवायपरिहारं भावयेदिति । तत्र रागादवगोरणे प्रवृत्तस्य तत्रानिष्टप्रदर्शनमन्तरेण निवर्तयितुमशक्यतया तत्करणे प्रत्यवायो भवतीत्यर्थात् सिद्ध्यति । तत्रार्थिके वाक्यार्थे नियमवर्णनं, शाब्दे वेति । तत्र प्रथममनूद्य दूषयति—यदि तावदिति । नान्यस्येति । अन्यस्यावगोरणानुष्ठानेऽपि प्रत्यवायो न भवतीत्यर्थः । को हीति । अनिष्टज्ञानकरत्वात् तत्संपादकतद्भागाध्ययनमेव न सिध्येदित्यर्थः ।

द्वितीयं शङ्कते—अथेति । शास्त्रार्थत्वात्–साक्षाद्वाक्यप्रतिपाद्यत्वात् । दूषयति—तथा सतीति । तस्य–प्रत्यवायस्य । तावत्त्वात्–तथैव संभवात् । सर्ववर्णसाधारणत्वात्–अनधीतवेदैरप्यनुष्ठेयत्वात् । कथं चेति । अत्राध्ययनेन स्वाध्यायविधिवाक्यं गृहीत्वा तदर्थज्ञानवतः-एवाध्ययनं फलाय भवतीति नियमः स्यात् । ततश्च प्रथममध्ययनानुष्ठानं विनैतद्वाक्यार्थसंपत्त्यप्रसिद्धेः प्रथमं वेदाध्ययनं वक्तव्यम् । ततश्च वेदाध्ययनमित्यात्माश्रयः स्यादित्यर्थः ।

ननूक्तेषु सर्वेष्वर्थज्ञानार्थत्वासंभवेऽपि स्वर्गार्थमध्ययनं स्यादिति शङ्कते—अथेति । तर्हि सकलवेदाध्ययनस्याप्येकरूपफललाभाय स्वर्गार्थत्वमेव स्यादिति, न सिद्धान्तोदयः स्यादिति-दूषयति—तथा सतीति । निगमयति—तस्मादिति ।

परिहरति–अत्रेति । नास्माभिः क्रतुज्ञानमेवाध्ययनस्य प्रयोजनमङ्गीक्रियते । किं तु क्रतु-जप-पारायणादिविध्यपेक्षितं यद्यदध्ययनगृहीतस्वाध्यायेन संपादयितुं शक्यं, तत्सर्वमध्ययनप्रयोजनम् । दृष्टे चैतत्प्रयोजने संभवति, नादृष्टः स्वर्गः कल्प्यः । 'एतत्सर्वमध्ययनेनैव संपाद्यमिति ।

यदि ह्यध्ययनस्य केवलमर्थज्ञानं प्रयोजनमस्माभिरिष्येत, ततो यथोदाहृतेषु तदसम्भवादुपालम्भः स्यात्। न तु केवलं तत्प्रयोजनम्। यदेव हि विध्यन्तरोपयोग्यपेक्षितमध्ययनेन साध्यमानं दृश्यते, तत्सर्वमस्य प्रयोजनम्। तेन यथा क्रतुविधिभिस्तज्ज्ञानमपेक्षितमिति, तत्प्रयोजनम्। एवं नित्य-नैमित्तिक-जपयज्ञ-पारायणादिविधिभि'रहरहः स्वाध्यायोऽध्येतव्यः, याजयित्वा प्रतिगृह्य वाऽनश्नंस्त्रिः स्वाध्यायं वेदमधीयीते'त्यादिभिर्वेदस्वरूपावधारणमपेक्षितव्यमिति भवति, तदपि प्रयोजनम्। तेनाध्ययनोपात्तस्य वेदस्य यथायोगं प्रयोजनकल्पनात्, तदनुरोधेन च नियमवर्णनात्, ज्योतिष्टोमादिष्वध्ययनार्जितेनैव वेदेन विज्ञातः क्रतुः फलं साधयतीति नियमः। मन्त्रेष्वध्ययनोपात्तमन्त्रकृतमेव स्मरणमनुष्ठानाङ्गमिति। हुमादिष्वध्ययनोपात्ता एव हुमादयः गीतिकालोपलक्षणं भवन्तीति, स्तोत्र-शस्त्र-जपमात्रोपयोगिषु च तदुपात्तैरेव स्तोत्रादि कार्यमिति। निषेधवाक्येषु च ब्राह्मणादीनां चाश्वमेधादिषु जपयज्ञादिमात्रोपयोगिष्वध्ययनोपात्तैरेव जपयज्ञादि कर्तव्यमिति।

आह च 'यत्र तावद्गुरुसकाशादध्ययने विचारः, तत्र धारण-पारायण-जपयज्ञ-क्रतुज्ञानसिद्धिनिराकाङ्क्षत्वान्न कश्चित्फलान्तरकल्पनावसरः' इति। अध्ययनविधौ तु तद्विधेयस्याध्ययनस्य ग्रहणान्तस्य करणांशस्याध्ययनपूर्वकत्वमात्माश्रयदोषप्रसङ्गान्न सम्भवतीति तद्विधेयस्यैव विचारस्येतिकर्तव्यताभूतस्य भवति तत्पूर्वकत्वनियमः। अध्ययनोपात्तेनैवाध्ययनविधिना विचारस्य कर्तव्यतामवगम्य विचारोऽनुष्ठातव्यः—इति। अत एवाध्ययनविधिनैव विचारस्य कर्तव्यतां विचारानुष्ठानात्प्रागेवावगन्तुं शास्त्रादावध्ययनविधिवाक्यार्थविचारः कृतः। अर्थवादेष्वध्ययनोपात्तैरेवार्थवादैः प्ररोचितं कर्मानुष्ठातव्यमिति।

---

नियमश्चोपपद्यत इति, नोक्तदोष इति भावः। विध्यन्तरोपयोग्यपेक्षितमिति। विध्यन्तरोपयोगितया तैरपेक्षितमित्यर्थः। जपयज्ञः—ब्रह्मयज्ञः। अहरहरिति-नित्याध्ययनविधिः। याजयित्वेति-नैमित्तिकः। वेदस्वरूपावधारणं—स्वाध्यायप्राप्तिः। तदनुरोधेन—तत्तत्प्रयोजनोद्देशेन।

नियमक्रमं दर्शयति—ज्योतिष्टोमेत्यादिना। मन्त्रेषु—क्रत्वीयपदार्थप्रकाशकेषु। अनुष्ठानार्थस्मृत्यपेक्षाकाले तत्तदनुष्ठेयपदार्थस्मारका भवन्तीत्यर्थः। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्। अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं—शस्त्रम्। तदुपात्तैः—अध्ययनोपात्तैः-मन्त्रैः। अश्वमेधादिषु—अश्वमेधप्रतिपादकवेदभागेषु। जपयज्ञादीति। तदध्ययनस्यार्थज्ञानार्थत्वे पूर्वोक्तदोषादेतदेव प्रयोजनमिति भावः।

अध्ययनस्य नानाप्रयोजनत्वे आचार्यसंमतिमाह—आह चेति। गुरुसकाशादध्ययने—आद्याध्ययने। विचारः—प्रयोजनविचारः। धारणं—धारणाध्ययनम्। सिद्धिशब्दस्य प्रत्येकमभिसंबन्धः। फलान्तरकल्पना—स्वर्गकल्पना। अर्थज्ञानफलकाध्ययनविधौ तु स्वाध्यायप्राप्तिपर्यन्तमङ्गिभूतमध्ययनमर्थज्ञानोपकारितया तदङ्गभूता मीमांसा चोभयमपि विधीयते। तत्र प्रथमांशे नियमासंभवेऽपि, द्वितीयांशे नियमः संभवतीत्याह—अध्ययनविधाविति। ग्रहणान्तस्य—प्राप्तिपर्यन्तस्य। अध्ययनविधिना—अध्ययनविधायकवाक्येन। शास्त्रादाविति। धर्मजिज्ञासासूत्रे। विचारःकृत इति। मीमांसा आरम्भणीया वा, न वा। तदर्थमध्ययनविधिना मीमांसा विधीयते, नवा-इति।

उपनिषत्सु यानि क्रतूपयोगिकर्तृभोक्तृरूपात्मप्रतिपादकानि वचनानि, तैरध्ययनोपात्तैरेव भूतभौतिकसंघातातिरिक्तं सांपरायिकफलोपभोगयोग्यमात्मानं ज्ञात्वा—क्रतुरनुष्ठेय इति। यानि त्वकर्तृभोक्तृरूपात्मप्रतिपादका'न्ययमात्माऽपहतपाप्मा विरजो-विमृत्युरि'त्येवमादीनि, तेषु तज्ज्ञानस्य 'स्वयमेव सर्वांश्च कामानाप्नोति, न स पुनरावर्तते' इत्यादिप्रदर्शिताऽभ्युदय-निःश्रेयसफलत्वादध्ययनोपात्ताभिरेवोपनिषद्भिः सम्पादितमात्मज्ञानमभ्युदय-निःश्रेयसफलकं भवतीति नियमः। सर्वश्चायं नियमः फलत एव सम्पन्नः, न तु वाक्यार्थ एवेति द्रष्टव्यम्।

न चैवं नानाप्रयोजनाङ्गीकरणाद्वैरूप्यमध्ययनविधेर्मन्तव्यम्। स्वाध्यायसंस्कारभूतेनाध्ययनेन यच्छक्यतेऽपेक्षितं संपादयितुं, तत्कुर्य्यादित्येकयैव वचनभङ्ग्या सर्वार्थलाभेन वैरूप्याभावात्। यदि ह्यध्ययनं स्वाध्यायद्रव्यकं कदा चित्स्यात् प्रधानं कर्म, कदाचिच्च स्वाध्यायसंस्कारः, तदा 'स्वाध्यायोऽध्येतव्यः' इति पदद्वयार्थयोर्गुणप्रधानभावाद्वैरूप्यं स्यात्। न त्वेतदस्ति। सर्वथैवाध्ययनस्य स्वाध्यायप्रधानत्वात्।

---

तदर्थं चाध्ययनमर्थज्ञानार्थं, स्वर्गार्थं वेत्येवं विचार इत्यर्थः। अर्थवादेषु नियमप्रकारं दर्शयति—अर्थवादेष्विति। प्ररोचितं—प्रशंसितम्।

जीवात्म—परमात्मपरेषूपनिषद्भागेषु प्रथमं जीवात्मपराणां नियमप्रकारमाह—उपनिषत्स्विति। क्रतूपयोगीति। शरीरव्यतिरिक्तस्य देहान्तरभाविफलोपभोगयोग्यस्य नित्यात्मनः परिज्ञानाभावे क्रतुषु प्रवृत्तिरेव न सिद्ध्यतीति, तज्ज्ञानस्य क्रतूपकारित्वम्। भूतानां—पृथिव्यादीनां, भौतिकानाम्—इन्द्रियाणां च संघातो देहः। सांपरायिकफलं—पारलौकिकफलम्। परमात्मपरेषु वाक्येषु तज्ज्ञानस्य क्रतूपयोगासंभवेन तत्र नियमासंभवेऽपि साक्षादेव पुरुषार्थसाधनतया तत्र नियम इत्याह—यानि त्विति। अकर्तृभोक्त्रिति। अवाप्तसमस्तकामतया-कर्मणामकर्ता। सततास्पृष्टसंसारतया तत्फलानामभोक्ता च सर्वेश्वर इत्यर्थः। स्वयमेव—साक्षात् सर्वांश्च कामानि'त्यभ्युदयफलत्वं तस्याम्नातम्। 'न स पुनरि'ति मोक्षफलत्वमित्यर्थः। सर्वेषामेतेषां नियमानां पूर्वप्रतिपादितमार्थिकत्वं स्मारयन् नियमवर्णनमुपसंहरति—फलत इति।

ननु जपपारायणादिविधिभिः स्वाध्यायप्राप्तिरपेक्षिता, क्रतुविधिभिस्त्वर्थज्ञानमित्युभयमप्यध्ययनस्य प्रयोजनम्। ततश्चाध्ययनेन स्वाध्यायप्राप्तिं संपादयेत्, तेनार्थज्ञानं चेति वाक्यभेदः—स्यादित्याशङ्क्य परिहरति—नचेति। स्वाध्यायसंस्कारभूतेन—व्रीहीन् प्रत्यवहननादिवत् स्वाध्यायं प्रति शेषभूतेन। अपेक्षितम्! उत्तरविधिभिरिति शेषः। एकयैव वचोभङ्ग्या—एकरूपया वाक्यप्रवृत्त्या। सर्वार्थलाभेन—सर्वप्रयोजनलाभेन।

ननु स्वाध्यायप्राप्त्यर्थत्वेऽध्ययनस्यैवं वाक्यविपरिणामः स्यात्—'यः स्वाध्यायः' तमध्ययनेन प्राप्नुयादिति। तदा स्वाध्यायस्याध्ययनं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानि स्युः। अध्ययनस्य तु तं प्रत्युपादेयत्व-विधेयत्व-गुणत्वानि। अर्थज्ञानार्थत्वे त्वध्ययनेनार्थज्ञानं सम्पादयेत्। तच्च स्वाध्यायेनेति वाक्यविपरिणामः स्यात्। तदा च स्वाध्यायस्याध्ययनं प्रत्येवोपादेयत्व-विधेयत्वगुणत्वानि स्युः। अध्ययनस्य तु तं प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानि स्युः। ततश्च वाक्यप्रवृत्तेरैकरूप्यं कथमित्याशङ्कामनूद्य परिहरति—यदीति।

पदद्वयार्थयोः—अध्ययन—स्वाध्यायपदार्थयोः। गुणप्रधानेत्युपादेयत्वादेरुद्देश्यत्वादेश्चोपलक्षणम्। सर्वथैवेति। न स्वाध्यायोद्देशेनाध्ययनं विधीयते। नाप्यध्ययनोद्देशेन स्वाध्यायविधिः।

## शालिकनाथोक्तस्यार्थस्यानुवाद-निरासौ

'कश्चित्त्वाह न संस्कारत्वमध्ययनस्योपपद्यते। स्वाध्यायस्य भूतभाव्युपयोगाभावात्। न हि तस्यार्थज्ञाने विनियोजकं किञ्चिदस्ति। न चाध्ययनविधिरेवास्य विनियोजक इति युक्तम्। संस्कारविधित्वात्। सक्तुसंस्कारहोमविधिवत् न संस्कार्यं विनियोक्तुमर्हतीति। तेन नाध्ययनसंस्कारार्थत्वं संभवति'—इति। तदेतद्भाष्यवार्तिकपरिश्रमविधुरस्याऽपन्यायशिक्षातमिस्रातिरस्कृतविवेकस्य मीमांसान्यायसौक्ष्म्यानभिज्ञस्याऽनुपासितगुरोर्मातुःप्रियस्य यत्किञ्चित्प्रलपितम्।

तथा हि— स्वाध्यायमात्रपर्यन्ते विनियोगे भवदेयम्।
दोषोऽर्थज्ञानपर्यन्ते सति सामादिवद्भवेत्॥ ४० ॥

यदि ह्यध्ययनस्य स्वाध्यायसंस्कारमात्रपर्यन्तो विनियोगः स्यात्, तदाऽयं दोषः स्यात्। यदा त्वध्ययनस्याक्षरग्रहणादिपरम्परयाऽर्थज्ञानसाधनस्य दृष्टसामर्थ्यानुसारेण तत्पर्यन्त एव विनियोगः, तदाऽनेनैव विधिना स्वाध्यायस्याप्यर्थज्ञाने विनियोगो-

---

किं तु स्वाध्यायाध्ययनेन विध्यन्तरापेक्षितं संपादयेदित्येकरूपैव वाक्यप्रवृत्तिः। स्वाध्यायप्राप्तिरप्यर्थज्ञानवदपेक्षितप्रभेद एव। अपेक्षितसंपादनं चाध्ययनस्य स्वाध्यायसंस्कारमुखेनैवेति स्वाध्यायस्य प्राधान्यम्, अध्ययनस्य तच्छेषत्वं च सिद्ध्यतीति, न वैरूप्यमिति भावः।

ननु निरूढं प्रत्यनिरूढस्य शेषत्वम्। स्वाध्यायस्यान्यशेषतया विनियोजकप्रमाणाभावेन न निरूढिरस्ति। ततस्तच्छेषत्वमध्ययनस्य न सम्भवतीति कश्चित् ब्रूते। तन्मतमनुवदति—कश्चिदिति। भूतभावीति। भूतोपयोगिसंस्कार्यं यथा कण्डूयनोपयुक्ता कृष्णविषाणा चात्वालप्रासनेन। तथा भाव्युपयोगी च यथा भाविपुरोडाशोपयोगिनो व्रीहयोऽवहननेन। अत्र तु तादृशोपयोगो नास्तीत्याह—न हीति। अर्थज्ञाने क्रत्वङ्गभूते विनियोजकं श्रुत्यादिकमिति शेषः।

ननु विनियोजकान्तराभावेऽप्यध्ययनविधिवाक्यमेव स्वाध्यायमप्यर्थज्ञानशेषतया विनियुङ्क्तामित्याशङ्क्याह—न चेति। संस्कारविधिः पूर्वविनियुक्तसंस्कार्योद्देशेन संस्कारं विनियुङ्क्ते। नतु स्वयं संस्कार्यमन्यत्र विनियोक्तुं क्षमते, वाक्यभेदप्रसङ्गात्। यथा 'सक्तून् जुहोती'ति द्वितीयाश्रुत्या संस्कारविधित्वेन शङ्कितोऽपि होमविधिः स्वस्य संस्कारविधित्वनिर्वाहाय पूर्वमविनियुक्तान् सक्तून् स्वयमन्यत्र विनियोक्तुं न क्षमते, वाक्यभेदप्रसङ्गादेव। तद्वदध्ययनविधिरपि स्यादिति भावः। दूषयति—तदेतदिति। अनुपासितगुरोः—सम्प्रदायरहितस्य। मातृप्रियस्य, नतु विद्वदभिमतस्येति भावः।

श्लोकं व्याचष्टे—यदि हीति। अयं भावः—यद्यध्ययनेन स्वाध्यायं संस्कुर्यादिति—वाक्यविपरिवृत्तिः स्यात्, तदा स्वाध्यायस्यार्थज्ञाने विनियोजकान्तराभावात् स्वस्यापि विनियोजकत्वानुपपत्तेः संस्कारविधित्वमेवोच्छिद्येतेति भवदुक्तदोषः स्यादेव। नैवं विपरिवृत्तिः। किंत्वध्ययनेन दृष्टसामर्थ्यानुसारादर्थज्ञानं भावयेदिति वाक्यविपरिवृत्तेर्न दोष इति ॥४०॥

---

१. शालिकनाथेन वाक्यार्थमातृकाया द्वितीयपरिच्छेदे ४२१ पृ० अभिहितमर्थं निरसितुं तन्मतमनुवदति कश्चिदित्यादिना।

लभ्यते। तत्संस्कारद्वारेणैव तस्यार्थज्ञानजननसामर्थ्यात्। किमिति पुनस्तावन्मात्रे-पर्यवस्यति, तत् तदपि द्वारीकृत्य क्रत्वनुष्ठानं, फलं वा यावन्न गच्छति। न। अन्यत एव सिद्धत्वात्। ज्ञानस्य फलवत्क्रत्वनुष्ठानाङ्गत्वं सामर्थ्यादेव नियमेन सिद्धमिति, न तत्र स्वाध्यायविधेर्नियमेन व्यापारः। अध्ययनादि तु ज्ञानपर्यन्तं न नियमतः सिद्धमिति, तत्र विधेरर्थवत्ता। तेन ज्ञानप्रयुक्तमध्ययनं, न तु क्रतुप्रयुक्तमिति। तेनाध्ययनेन यथा-दृष्टसामर्थ्येनार्थज्ञानं कुर्यादित्युक्तेऽयमर्थः संपद्यतेऽधीतेन स्वाध्यायेनाऽर्थं जानीयादिति। अत एवार्थज्ञानं प्रत्युपादेयतया स्वाध्यायस्य संख्याविवक्षा, स्वीयत्वविवक्षा च शाखा-न्तराधिकरणे ( पू. मी. २–४–२ ) दर्शिता।

## वैरूप्यशंका-परिहारौ

तद्यथा साम्नः स्तुतौ विनियुक्तस्यापि स्वाभाविक्यक्षरसंस्कारता न हीयते। तद्द्वारेणैव स्तुतिसाधनत्वात्। न हि तत्र ऋचां वाक्यान्तरेण स्तुतौ विनियोगोऽस्ति।

---

ननु दृष्टसामर्थ्यानुसारेणाध्ययनस्यार्थज्ञानार्थत्वे, ज्ञानस्यापि क्रतुं प्रति दृष्टोपकारितया तेनैव सामर्थ्येन क्रतुरेव साक्षात्पुरुषार्थतया, तत्फलं वा किमित्यध्ययनफलं न स्यादित्याशङ्कते— किमिति। तावन्मात्रे–ज्ञानमात्रे। परिहरति—नेति। अध्ययनविधेर्दृष्टप्रयोजनार्थत्वे नैरर्थक्यं-नियमविध्याश्रयणेन खलु परिहृतम्। ततश्च यावत्यां दृष्टसाध्यपरम्परायामुपायान्तरप्रसक्तिः, तत्र तन्निवृत्त्यर्थं नियमविधिराश्रयणीयः। नान्यत्र। विधिव्यापारवैयर्थ्यप्रसङ्गात्। एवं च स्वाध्यायप्राप्तावर्थज्ञाने च लिखितपाठ-हितैषिवचनाद्युपायान्तरसंभवादर्थज्ञानपर्यन्तं नियमविधि-राश्रयणीयः। ततः परं चाऽज्ञातुरनुष्ठानासंभवेन ज्ञानस्य क्रतुं प्रत्यव्यभिचरितोपायतया नैयत्यस्य स्वत एव सिद्धेर्न तत्र विधिव्यापारः समाश्रयणीय इत्यध्ययनविधिरर्थज्ञानपर्यन्त एवेति भावः। अन्यत एवेति। विधिव्यापारमन्तरेणेति शेषः। तदेव विवृणोति—ज्ञानस्येति। क्रतुप्रयुक्तमिति। क्रतुं प्रत्यशेषतया न तत्प्रयुक्तमित्यर्थः। एवमध्ययनस्यार्थज्ञानपर्यन्तत्वोप-पादनात् तस्य स्वाध्यायसंस्कारता, तस्य चार्थज्ञानशेषता सिद्ध्यतीति प्राक्प्रतिपादितमेवोप-संहरति—तेनेति।

यतोऽनेनैव विधिना स्वाध्यायस्यार्थज्ञाने विनियोगः। अतोऽस्मिन् वाक्ये स्वाध्यायस्य संस्कार्यत्वेऽप्युपादेयतया तद्गतैकत्वस्य विवक्षितत्वादेकशाखाध्ययनेऽप्यध्ययनशास्त्रार्थनिर्वृत्तिः— सिद्ध्यतीत्यधिकरणान्तरप्रतिपादितं युक्तमित्याह—अतएवेति। उपादेयतयेति। उद्देश्यगता तु संख्या वाक्यभेदप्रसङ्गात् 'ग्रहं संमार्ष्टी'त्यत्र ग्रहैकत्ववदविवक्षिता। उपादेयगता तु विशिष्ट-विधिलाभात् वाक्यभेदाभावेन विवक्षितेति भावः।

नन्वेकेनैव वाक्येन स्वाध्यायस्यार्थज्ञानं प्रत्युपादेयत्वम्, अध्ययनं प्रति संस्कार्यत्वं च कथं सिध्यतीत्याशङ्क्य, तादृशदृष्टान्तप्रदर्शनमुखेनैतत् द्रढयति—तद्यथेति। स्तोत्रं नाम गुणिनिष्ठ-गुणाभिधानम्। तच्च पदकदम्बरूपाणामृचां कृत्यम्। 'साम्ना स्तुवीत' इत्यत्र गीतिरूपं साम-विनियुक्तम्। ऋचां तु न तत्र विनियोजकं प्रमाणमस्ति। तत्र साम्नां स्तुतिसाधनत्वं स्वस्य ऋगक्षराभिव्यञ्जकतया तत्संस्कारकत्वमृचां स्तोत्रशेषत्वं चान्तरेण न संभवतीति, ऋचां साम-संस्कार्यत्वं, स्तोत्रं प्रत्युपादेयत्वं चैकेनैव वाक्येन यथा सिध्यतीति भावः।

अथ च तत्संस्कारकत्वमेव साम्नो भवति। तथा स्थण्डिलनिष्पत्तावविनियुक्तेऽपि चरौ 'चरुमुपदधाती'त्यनेनैव चरूपधाने स्थण्डिलाङ्गतया विनियुक्ते तस्य स्वयं स्थलनिर्वर्तकत्वाभावादुपहितेन चरुणा तन्निर्वृत्तिदर्शनात्तद्द्वारेण चरूपधानस्यापि दृष्टार्थत्वे सम्भवति, आरादुपकारकत्वकल्पनायोगाच्चरोः स्थलाङ्गत्वमुपधानस्य च तत्संस्कारकत्वं भवति। अत एवञ्जातीयकं स्वभावतः संस्काररूपमपि पूर्वविनियुक्तसंस्कार्योद्देशेनाविधानात्-कदाचिदर्थकर्माभिधानमपि लभते। अनेनैवाभिप्रायेणोक्तम् 'अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्त्येव' (तंत्र-वा पृ ६०५) इति। न तु परमार्थतोऽर्थकर्म। सामवदेव तु संस्कारकर्म। संस्कार्यं त्वनेनैव विनियुक्तं कार्यस्याङ्गमिति। एतेन ऋचां स्तुताव-विनियोगादनङ्गत्वमभिदधाना उपेक्षणीयाः। तत्सिद्धं नाध्ययनविधेर्वैरूप्यमिति।

## नानाप्रयोजनकल्पने गौरवशंका–परिहारौ

नन्वसत्यपि वैरूप्ये नानाप्रयोजनकल्पनमयुक्तम्। 'एकं वा चोदनैकत्वात्' (जै ४-३-१४) इति न्यायात्। स्यादेतत् यदि कल्पनीयं स्यात्, क्लृप्तमेव तु तत्।

---

तथा स्थण्डिलेति चयने 'चरुमुपदधाति' इति श्रूयते। अत्र चरूपधानं किमारादुपकारकम्, उत संनिपातीति विचारे संनिपातित्वे द्वितीयाश्रुत्या चरुसंस्कारकत्वं वक्तव्यमुपधानस्य। तच्चायुक्तम्। चरोरन्यत्राविनियुक्ततया सक्तुन्यायनिरूढत्वभावेन तच्छेषत्वानुपपत्तेरारादुपकारकत्वमेवेत्यापतितम्। तच्चायुक्तम्। अदृष्टार्थत्वात्। अतो दृष्टार्थत्वलाभात् संनिपातित्वमेव। तथाहि—यद्यपि चरोरन्यत्र न वाक्यान्तरेण विनियोगोऽस्ति। तथापि चरूपधानस्य दृष्टसामर्थ्यपरामर्शे सतीष्टकाद्युपधानवत् चितिनिर्वर्तकत्वदर्शनात् तच्छेषतया चरूपधाने विनियुक्ते सति, तस्य तत्साधनत्वं तस्य चरुसंस्कारकत्वं चरोश्चितिशेषतां चान्तरेण न सिद्ध्यतीति, तदुभयमप्येकेनैव वाक्येन यथा सिद्ध्यति, तथाऽध्ययनविधाविति भावः। अविनियुक्तेऽपि चराविति। वाक्यान्तरेणेति शेषः। स्थलनिर्वर्तकत्वाभावादिति। स्वस्य केवलं क्रियारूपतया—चितेश्च द्रव्यनिष्पाद्यतयेति भावः।

ननु भवता चरूपधानस्य संस्कारकर्मत्वमुक्तम्। आचार्यैस्त्वर्थकर्मत्वव्यपदेशादारादुपकारकत्वमेवाभिहितमिति प्रतिभाति। तत्कथमित्यत्राह—अतएवेति। अर्थकर्म–साक्षादपूर्वसाधनं कर्म। लभत इति उपचारवृत्त्येति शेषः। उपचारे च हेतुरुक्तः पूर्वविनियुक्तेत्यादिना। अर्थकर्मण्यपीति। उपधानस्यार्थकर्मत्वे सत्यपीत्यर्थः। प्राधान्यमिति। चरोरिति शेषः। नतु परमार्थत इति, प्रयाजादिवत् साक्षादपूर्वसाधनत्वाभावादिति भावः। पूर्वोक्तमितरसंस्कारकर्मभ्यो वैलक्षण्यं स्मारयति—संस्कार्यंत्विति। कार्यस्य। कार्यं-साध्यं स्थलनिर्वृत्त्यादि। तस्येत्यर्थः। प्रसङ्गान्मतान्तरं निरस्यति—एतेनेति। सामविनियोगेनैव सामर्थ्यादृचामपि स्तोत्रविनियोगोपपादनेनाध्ययनविधौ वाक्यभेददोषाभावं निगमयति—तत्सिद्धमिति।

नन्वध्ययनस्य नानाप्रयोजनत्वे माभूत् वाक्यभेददोषः। कल्पनागौरवं तु स्यादिति शङ्कते—नन्विति। इति न्यायादिति। प्रवर्तनैकरसो विधिः पुरुषार्थसाधने कर्मणि पुरुषं प्रवर्तयन् तस्यैकमेव फलं कल्पयति। नानेकम्। अनपेक्षितत्वात्। तथापि कल्पने कल्पनागौरवप्रसङ्गादिति भावः। कल्प्यस्थले खलु कल्पनागौरवम्। अत्र तूत्तरविध्यपेक्षितानां नानाप्रयोजनानामध्ययनविधिसाध्यतया प्रमाणान्तरेणैव क्लृप्तत्वात्, न कल्पनागौरवमिति—परिहरति–स्यादेतदिति। यद्द्वारम् येन द्वारेण–येनोपायेन। स्वाध्यायप्राप्तिरूपेण, अर्थज्ञानरूपेण

यथोक्तं बहुप्रयोजनसाधनत्वमध्ययनस्य स्वभावतः। ततश्चाध्ययनेन द्वारं ( यद्द्वारं ) यदपेक्षितं शक्यते संपादयितुं, तत्सम्पादयेदित्येकप्रयत्नेनैव सर्वार्थत्वलाभान्न किंचिद्गौरवं, वैरूप्यं वा। अत एव विधायकानामपि समिदादिवाक्यानां स्मारकत्वमभ्युपगम्यते, यत्र मन्त्रः स्मारको न विद्यते। शक्यते हि विधायकैरपि सम्बन्धिदर्शननिमित्तं स्मरणं संपादयितुम्। अस्मिंश्चांशे स्वाध्यायविहितस्य वाक्यक्रमस्याङ्गत्वमेवंक्रमकैरेव वाक्यैः पदार्थाः स्मर्तव्या इति। न हि विधौ तेषां क्रमेण कार्यमस्ति। स्मरणन्तु कुर्वतामेषां क्रमः स्मरणे क्रममाधाय स्मार्यपदार्थानुष्ठानक्रमं फलतीति भवत्यङ्गम्।

तदेतत् सूत्रकारेण पञ्चमे स्पष्टमीरितम्।
क्त्वेकत्वे परार्थत्वात्तद्व्याख्यद्भाष्यकृत्स्वयम् ॥ ४१ ॥

'क्त्वेकत्वे परार्थत्वात्' ( जै. ५-१-६ ) इत्येतत्सूत्रं व्याचक्षाणो भाष्यकारो वक्ष्यति-परार्थो हि वेदः। यदनेन शक्यते कर्तुं, तस्मा एष समाम्नायते। शक्यते, चानेन पदार्थोऽभिधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम्। तस्माद्वेदः पदार्थांश्च

---

वेति यावत्। यदपेक्षितम्-यदुत्तरविधिभिरपेक्षितम्। एकप्रयत्नेन-अनायासेन। कल्पनां विनेति यावत्। सर्वार्थलाभात्-सर्वप्रयोजनसिद्धेः। वैरूप्यं वेति पूर्वसिद्धस्यैवानुवादः। उत्तरविध्यपेक्षितमध्ययनेन यत् संपादयितुं शक्यं, तत्सर्वमस्य प्रयोजनं यतः। अत एव तदपि प्रयोजनमध्ययनविधिलभ्यमित्याह अतएवेति।

अयं भावः-एकेन कर्त्रा नानापदार्थाननुष्ठापयतो विधेरनुष्ठेयपदार्थानामनुष्ठानक्रमोऽपेक्षितः। यत्र साक्षात् क्रमसमर्पकं प्रमाणमस्ति, तत्र तदेवोपादत्ते। यत्र तु न तत्रानुष्ठानक्रमसिद्धयर्थमनुष्ठानहेतुभूतस्मरणक्रममपेक्षते। तत्र मन्त्रक्रमे तु सति तेनैव क्रमेण स्मरणम्। यत्र तु सोऽपि नास्ति, तत्र तु विधानेन चरितार्थानामपि नियतक्रमाणां विधिवाक्यानां स्मारकत्वमाश्रित्याध्ययनविध्यध्यापितस्वस्वक्रमेणैव स्मारकत्वमित्यप्याश्रीयत इति विध्यन्तरापेक्षितस्मरणक्रमोऽप्यध्ययनविधिप्रसादलभ्य इति।

ननु कथं विधायकानां स्मारकत्वं घटत इत्याशङ्क्याकाङ्क्षाबलात्, योग्यतया चेत्याह-शक्यते चेति। वाक्य-तदर्थयोर्वाच्यवाचकभावसंबन्धात् प्रतिसंबन्धिवाचकदर्शने वाच्यस्मृतिराविरस्तीति भावः। अस्तु विधायकवाक्यानामपि स्मारकत्वोपपादनम्। अत्र विध्यन्तरापेक्षितं प्रत्यध्ययनविधेः कथमुपयोग इत्यत्राह-अस्मिंश्चांश इति। स्मारकत्वांशेऽपि विध्यन्तरापेक्षितस्मरणक्रम एवाध्ययनविध्युपयोग इति भावः। अङ्गत्वमिति। स्मरणक्रमं प्रतीति शेषः। अध्ययनविध्यध्यापितक्रमविशिष्टैरेवेत्यर्थः। ननु अध्ययनविध्यध्यापितस्य विधायकवाक्यक्रमस्य विधानद्वारेणैवोत्तरविध्युपयोगः किमिति न स्यादित्यत्राह-नहीति। परस्परनिरपेक्षैरेव विधिवाक्यैस्तत्तत्कर्मपरिज्ञानसिद्धेः विधिवेलायां न क्रमोऽपेक्षित इत्यर्थः। तत् स्मरणमुखेन वा पाठस्य कथमुत्तरविध्युपयोगस्तत्राह—स्मरणं त्विति। तेषां वाक्यानां स्मरणेऽनुष्ठानोपयुक्ते। फलति-साधयतीत्यर्थः।

विधायकानामपि स्मारकत्वे सूत्रभाष्यकारसंमतिमाह-तदेतदिति ॥ ४१ ॥ व्याख्यत्-व्याख्यातवान्। परार्थः-सर्वविध्यपेक्षितपूरक इत्यर्थः। यदनेन वेदेन संपादयितुं शक्यं-तस्मै तत्संपादनार्थमेष समाम्नायः-इदमध्ययनमित्यर्थः। प्रतिपत्तुं-स्मर्तुं म्। समाम्नायते, अधीयते।

ज्ञातुमुपादेयः क्रियाकाले च प्रतिपत्तुम्। न च गम्यते विशेषो विधातुमयं समाम्नायते, न प्रतिपत्तुमिति। अनवगम्यमाने विशेषे उभयार्थमुपादेय इति गम्यते प्रतिपत्तुं चानेन क्रमेण शक्यते, नान्येन' इति। यत्र तु मन्त्रो विद्यते तत्र तस्यानन्यार्थत्वाद्विधायकस्य तु विधानेनापि कृतार्थत्वान्मन्त्रस्यैव स्मारकत्वम्। अत एव तत्र मन्त्रक्रमेणैव पदार्थानुष्ठानं, न विधिक्रमेण। तत्र ब्राह्मणक्रमो जपयज्ञादावुपयुज्यते। तथा क्रत्वन्तरप्रतिपादकानामपीत्यलमतिविस्तरेण।

तत्सिद्धं दृष्टार्थत्वेऽप्यध्ययनविधेर्नियमार्थत्वादानर्थक्याभावादर्थज्ञानार्थमध्ययनमिति। न चायं नियमो यत्क्रत्वर्थेष्वेव नियमविधिरिति। पुरुषार्थेष्वपि द्रव्यार्जनादिषु नियमविध्यभ्युपगमात्। तेन तद्वन्नियमविधिरर्थवानेव। फलत एव तु पूर्वोक्तनीत्या नियमं न्यायविदो वर्णयन्ति। तस्माज्जपयज्ञ-पारायण-क्रतुज्ञानसिद्धिप्रयोजनमध्ययनम्। अत एव नित्यम्। तत्फलस्य कर्माधिकारस्यावश्यकत्वात्। असति तस्मिन्नित्यनैमित्तिकाननुष्ठानेन प्रत्यवायात्। सर्वस्यापि वेदस्याध्ययनमावश्यकपारायणाद्युपयोगित्वादावश्यकमेव। तथा चानधीतवेदस्यानधिकाराच्छूद्रवद्भावं स्मरन्ति—

'यो ऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' (मनु. २-१६८)
'शूद्रेण हि समस्तावद्यावद्वेदान्न जायते।' (मनु. २-१७२)

इत्यादिभिः।

---

अत्र स्मरणक्रमे तु वाक्यक्रम उपकरोतीत्याह—प्रतिपत्तुमिति। यत्र तु विधिवाक्यक्रमो मन्त्रक्रमश्च संभवति, तत्र विध्यपेक्षितस्मरणक्रमे मन्त्रक्रमस्यैवोपयोगः। न विधायकक्रमस्येत्याह—यत्र त्विति। अनन्यार्थत्वात्—स्मरणव्यतिरेकेण प्रयोजनान्तरशून्यत्वात्। तत्र विधायकवाक्यक्रमस्य कुत्रोपयोगः—इत्यत्राह—तत्रेति। अध्ययनविध्यध्यापितक्रमेणैव जपादि कार्यमिति भावः। स्वतन्त्रनानाक्रतुप्रतिपादकवेदभागक्रमस्यापि प्रतिपाद्यक्रतुषु क्रमासंभवात् जपादावेवोपयोग इत्याह—तथेति। प्रासङ्गिकं समापयति—अलमिति। अध्ययनविधेरक्रत्वर्थत्वेऽपि फलतो नियमसिद्धेरर्थज्ञानार्थत्वमुपपादितम्। तन्निगमयति—तस्मादिति (तदिति)।

इदानीमक्रत्वर्थस्याप्यध्ययनस्य दृष्टेऽपि प्रयोजने साक्षादपि नियम उपपद्यत इत्याह—न चायमिति। 'द्रव्यमार्जयन् ब्राह्मणो याजयेदध्यापयेत्प्रतिगृह्णीयाद्वा' 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादिषु यथा प्रतिग्रहादिनैवोपायेन द्रव्यं प्राप्नुयात्, नोपायान्तरेण, उपायान्तरेण तु प्राप्नुवन् प्रत्यवेयादित्यक्रत्वर्थत्वेऽपि साक्षान्नियम उपपद्यते, तद्वदध्ययनविधावपि स्यादित्यर्थः। यद्यपि साक्षात्पुरुषार्थेऽपि नियमः संभवति, तथाप्यार्थिकनियम एव न्यायसह इत्याह—फलत एवेति। इदानीमध्ययनस्य नानाप्रयोजनत्वमुपसंहरति—तस्मादिति।

यतोऽवश्यानुष्ठेयजपयज्ञाद्यपेक्षितमध्ययनं, अत एवाध्ययनस्यापि नित्यत्वं सिध्यतीत्याह—अत एवेति। एतदेवाह—तत्फलस्येति। कर्माधिकारस्य—कर्मानुष्ठानयोग्यत्वस्य। आवश्यकत्वमुपपादयति—असतीति। काम्यादिप्रतिपादकवेदभागस्याप्यावश्यकजपयज्ञाद्युपयोगात् तदध्ययनस्याप्यवश्यकत्वं सिध्यतीत्याह—सर्वस्यापीति। सर्वस्य वेदस्य—सर्वस्याः शाखायाः।

तस्मादर्थज्ञानार्थत्वादध्ययनस्य, तस्य च विचारमन्तरेणासम्भवात्तदनन्तरं-धर्मजिज्ञासा कर्तव्येति सिद्धम्।

आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः ॥ ४२ ॥

इति महामहोपाध्यायपार्थसारथिमिश्रेण विरचितायां न्यायरत्नमालायाम्-प्रयुक्तितिलको नाम (अध्ययनविधिचर्चा) प्रथमं प्रकरणं समाप्तम्।



---

एवं न्यायसिद्धमेवाध्ययनस्य नित्यत्वं स्मृतिवाक्यैरनूद्यत इत्याह—तथा चेति। वेदान्न जायत इति। द्विजन्मनो द्वितीयं जन्म वेदाध्ययनाधीनं, तद्यावन्नास्तीत्यर्थः। सिद्धान्तं निगमयति—यस्मादिति। प्रक्रान्तं प्रकरणं समापयति—आचार्येति ॥ ४२ ॥

इति धर्मपुरी श्रीमद्रामानुजाचार्यविरचिते न्यायरत्नमालानायकरत्ने प्रयुक्तितिलकव्याख्यानं समाप्तम्।



# अथ स्वतः प्रामाण्यनिर्णयो नाम द्वितीयं प्रकरणम्

कर्तव्यार्थप्रतिज्ञा

'विज्ञानस्य प्रमाणत्वं स्वतो निर्णीयते यथा ।
परतश्चाप्रमाणत्वं तथा न्यायोऽभिधीयते ॥ १ ॥

'स्वतः सर्वप्रमाणानाम्' (श्लो. वा. २-४७) इत्यारभ्य स्वतःप्रामाण्यं, परतश्चाप्रामाण्यमाचार्यैर्निबद्धम् । तत्र व्याख्यातारो विवदन्ते ? स्वशब्दः किमात्मवचनः, आत्मीयवचनो वा । तथा प्रामाण्यं किं स्वतो भवति, किं वा भाति, तथा प्रामाण्यं नाम-किमर्थतथात्वं, किं वा तथाभूतार्थनिश्चायकत्वमिति ?

स्वमतस्योपन्यासः

तत्र च--आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता ।
अर्थस्य च तथाभावः प्रामाण्यमभिधीयते ॥ २ ॥

तत्र केचित्तावदाहुः-प्रामाण्यं नामार्थाव्यभिचारित्वं तथाभूतार्थविषयत्वमिति-यावत् । तच्च ज्ञानानां स्वत एव जायते । स्वशब्दोऽयमात्मीयवचनः । स्वीयादेव कारणात्तथाभूतार्थविषयत्वं ज्ञानस्य जायते । न गुणादिति यावत् । अप्रामाण्यन्त्वयथार्थविषयत्वलक्षणं न स्वीयादेव कारणाज्जायते । अपि तर्हि तद्गताद्दोषादिति परतः-इत्युच्यते । यदि हि सत्यार्थविषयता गुणनिमित्ता स्यात्, स्वकारणदोषात्त्वसत्यविषयतेव । तथा सति दोषयुक्ताद्गुणहीनादिन्द्रियादेः पीतशङ्खादिज्ञानेषु जायमानेषु

---

नायकरत्नम् ।

भूसुराणां सुराणां च सभाजयति संसदम् ।
जातवेदगुरुर्यज्वा व्याख्यया च तथेज्यया ॥ १ ॥
अस्ति गोदावरी नाम नदी तत्तीरवासिनम् ।
नरसिंहं नमस्यामि शश्वद्धर्मपुरीश्वरम् ॥ २ ॥

संप्रति वेदप्रामाण्यसिद्धयर्थं स्वतः प्रामाण्यं, परतश्चाप्रामाण्यमाचार्यैरुक्तम् । तदधिकृत्य प्रकरणं प्रवर्तयति-विज्ञानस्येति । आचार्यमतेऽपि तत्तच्छिष्यविप्रतिपत्तिनिमित्तमवान्तरभेदमाह-तत्रेति । स्वतः प्रामाण्यमित्यत्र स्वतः शब्दार्थे, प्रामाण्यशब्दार्थे, अध्याहृतक्रियाशब्दार्थे च विप्रतिपद्यन्त इत्यर्थः । भवति-उत्पद्यते । अर्थतथात्वमिति । विज्ञानेन पदार्थो यादृशोऽवभासते, तस्य वस्तुतस्तथावस्थितत्वं प्रामाण्यमित्यर्थः । तत्र प्रथमं स्वाभिमतं निर्धारयति-आत्मवाचीति ।

संप्रति मतान्तरमुपन्यस्यति दूषयितुम्-तत्रेति । अर्थतथात्वमेवाऽर्थाव्यभिचारित्वम् । स्वतःपदव्यावर्त्यमाह-न गुणादिति । स्वकीयकारणमात्रप्रयुक्तत्वं प्रामाण्यस्याभिधाय, तस्य गुणप्रयुक्तत्वेऽप्रामाण्यस्येव स्वकारणप्रयुक्तत्वं स्यात् । अतश्च दोषमाह-यदि हीति । पीतशङ्खज्ञानं-

---

टिप्पणी

१. अर्थासंस्पर्शिताशंका निराक्रियत इति प्राभाकरीयं व्याख्यानम् । तस्य खण्डनं-काशिकायां पृ. ६६-६७ द्रष्टव्यम् । ज्ञानानां स्वतःप्रामाण्यं प्रतिपाद्यत इति भट्टपादीयं, व्याख्यानमुपपादयितुमाह-विज्ञानस्येति ।

न किंचित्सत्यं गम्येत। गम्यते तु तत्रापि शङ्खस्वरूपादिकं सत्यम् दोषाधीने त्वसत्यार्थत्वे, स्वकारणाधीने सत्यविषयत्वे सत्युभाभ्यां मिलिताभ्यां जायमानं सत्यासत्यार्थविषयकं भवतीत्युपपन्नम्। तस्मात्स्वीयात्कारणाद्यथार्थत्वलक्षणं प्रामाण्यं जायते, नतु भाति। न हि ज्ञानमात्मानम्, आत्मीयं वा प्रामाण्यमवगमयति। अर्थप्रकाशमात्रोपक्षीणत्वात्। परतस्तु कारणदोषादयथार्थत्वलक्षणमप्रामाण्यमिति, दोषाभावाद्धेदस्ययथार्थत्वमिति।

## अस्मिन् मतेऽनुपपत्तिदर्शनम्

अस्मिंस्तु पक्षे 'जातेऽपि यदि विज्ञाने' (श्लो. वा २-४९) इत्यादिनाऽनवस्थाप्रसङ्गेन परतःप्रामाण्यदूषणं न घटते। गुणज्ञानाधीने हि प्रामाण्ये स्यादनवस्था। गुणस्वरूपायत्ते त्वनवगता एव गुणा इन्द्रियवज्ज्ञानप्रामाण्यं जनयन्तीति, नानवस्थापत्तिः।

तथा 'दोषाभावो गुणेभ्यश्चेन्ननु सैवास्थितिर्भवेत्' (श्लो. वा. २-६६) इतिचोदयित्वा,

'तदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः' (श्लो. वा. २-६७) इतिपरिहरन् परपक्षे गुणज्ञानादेव प्रामाण्यं, न गुणस्वरूपादिति दर्शयति।

तथा—'तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्व-हेतूत्थदोषज्ञानादपोद्यते'॥ (श्लो. वा. २-५३)॥ इति-

---

शङ्खांशे सत्यम्। पीतांशे चासत्यम्। अत्र च कारणदोषस्य विद्यमानत्वात् गुणलेशोऽपि नास्ति। ततश्चात्र गुणस्य प्रामाण्यप्रयोजकत्वे गुणाभावादंशे सत्यविषयत्वं न स्यादित्यर्थः। प्रामाण्यस्य—स्वकीयकारणप्रयुक्तत्वे, अप्रामाण्यस्य च दोषप्रयुक्तत्वे त्वयं दोषो नास्तीत्याह—दोषाधीने त्विति। एकदेशिमतमुपसंहरति-तस्मादिति। जायत इत्यस्य प्रतिपक्षं निराकरोति—नत्विति। कुतः? तत्राह—नहीति। भातीति पक्षे स्वशब्दस्य स्वकीयवचनत्वमयुक्तम्, ज्ञानव्यतिरिक्तस्य प्रकाशकत्वायोगात्। ततश्च स्वशब्दो ज्ञानवचन इति वाच्यम्। तस्मात् घटोऽयं पटोऽयमिति विषयमात्रं—प्रकाशते। नतु स्वस्वरूपं, स्वधर्मभूतं प्रामाण्यं वा प्रकाशत इति भानपक्षे स्वतः प्रामाण्यमयुक्तमित्यर्थः। स्वतः प्रामाण्योपपादनस्य प्रयोजनं वदन् एकदेशिमतमुपसंहरति—परतस्त्विति। यथार्थत्वमिति। वक्तृगुणाभावेऽपि सिद्धमिति शेषः।

एकदेशिमतमाचार्यग्रन्थानुगुणं न भवतीति दूषयति—अस्मिंस्त्विति। स्वीयात् कारणात् प्रामाण्यं जायत इत्यस्य प्रतिपक्षस्तु केवलं गुणात् प्रामाण्यं जायत इति परिणमते। तत्र च दूषणं वक्तव्यम्। न तत्र दूषणमभिहितम्। गुणज्ञानाधीने प्रामाण्येऽनवस्थादि दूषणमुक्तम्। अतो नायं पक्षो ग्रन्थानुगुण उक्त इति भावः। तर्हि श्लोकोक्ताऽनवस्था कदा घटते, कदा तु नेत्यत्राह—गुणज्ञानाधीने हीति। गुणज्ञानाधीने हि प्रामाण्ये, तस्यापि ज्ञानस्य गुणान्तरज्ञानाधीनं प्रामाण्यं, तस्यापि तथेत्यनवस्थेत्यर्थः।

श्लोकान्तरानुगुण्यमपि नास्तीत्याह—तथेति। स्वतः प्रामाण्यपक्षेऽप्यप्रामाण्यनिवर्तनेन प्रामाण्यदृढीकरणार्थं दोषाभावोऽवधार्यः। तदवधारणं गुणज्ञानाच्चेत्? तत्प्रामाण्यावगतिरपि दोषाभावावगतिद्वारा गुणज्ञानपूर्विकेत्यनवस्था प्रसज्यत इति चोद्यार्थः। दोषाभावावधारणार्थं गुण-

वदन् सिद्धान्ते दोषज्ञानादेवाप्रामाण्यं, न दोषस्वरूपादिति व्यक्तमेवाह। तथा—'अपरे कारणोत्पन्नगुणदोषावधारणात्' (श्लो. वा. २-३४) इत्यादयो बहवः श्लोका अस्मिन् पक्षे न सङ्गच्छन्ते। अतो न वार्तिककाराभिमतोऽयं पक्षः।

अन्ये त्वाहुः-अनधिगततथाभूतार्थनिश्चायकत्वं प्रामाण्यम्। तच्च ज्ञानानां स्वत एव जायते। स्वशब्दश्चायमात्मवचनः। ज्ञानस्वरूपादेव तथाभूतार्थनिश्चयो जायते। न गुणज्ञानात्, संवादज्ञानात्, अर्थक्रियाज्ञानाद्वा, अनवस्थाप्रसङ्गात्। अर्थान्यथात्वनिश्चयस्तु परतो दोषज्ञानात्, अर्थान्यथात्वज्ञानाद्वेति परत इत्युच्यत इति।

अस्मिन्नपि पक्षे स्वतः प्रामाण्यं जायते, न तु ज्ञायत इत्यत्रेदं वक्तव्यम्। यदि प्रामाण्यस्य जन्मनि स्वयमेव कारणं ज्ञानं, तथा सत्यप्रामाण्यस्यापि जन्मन्येव दोषज्ञान-बाधकज्ञानयोः कारणत्वं वक्तव्यम्। तत्र कस्याप्रामाण्यं कारणदोषज्ञानात्, बाधकज्ञानाद्वा जायते। न हि शुक्तौ रजतज्ञानस्य बाधकादिजन्यमप्रामाण्यम्। उत्पत्तावेव तस्याप्रमाणत्वात्। अतथाभूतार्थनिश्चयो ह्यप्रामाण्यं। तच्चाप्रमाणज्ञानात् स्वत एव भवतीति, न तद्बाधकज्ञानादिकमपेक्षते। न ह्युत्पत्तौ प्रमाणं सत् पश्चाद्बाधकेन अप्रमाणीक्रियते। अपि तूत्पत्तावेव भूतमप्रामाण्यं बाधकेन ख्याप्यते। न त्वर्थस्यान्यथाभावनिश्चयो बाधकेनैव जन्यते। सत्यम्। न तु तदेवाप्रामाण्यम्। न ह्यर्थान्यथाभावनिश्चयः पूर्वज्ञानस्याप्रामाण्यम्। किन्तु वस्तुतोऽर्थस्यान्यथाभावः। अन्यथाभूतेऽर्थे तथाभावनिश्चायकत्वम्। नैतदुभयमपि बाधकजन्यम्। स्वतः एवार्थस्यान्यथा-

---

ज्ञानमुच्यते, दोषनिवृत्तये वा। नाद्यः। दोषानुपलब्ध्यादिभिरेव दोषाभावनिर्णयात्। न द्वितीयः। अज्ञातैरेव गुणैः दोषनिवृत्त्युपपत्तेः। अतो नानवस्थेति परिहारार्थः। परपक्षे—परतः प्रामाण्यपक्षे। स्वतः प्रामाण्यपक्षे तु गुणस्य ज्ञायमानत्वनियमाभावादनवस्था नास्तीति वदता परतः प्रामाण्यपक्षे तन्नियमोऽस्तीत्युक्तं भवतीति, ज्ञानपक्ष एवाश्रित इत्यर्थः। अपरे—प्रामाण्यमप्रामाण्यं च परतः एवेति वदन्तो नैयायिकाः। तस्मादेकदेशिमतमनुपपन्नमिति निगमयति—अत इति।

मतान्तरमुपन्यस्यति—अन्ये त्वाहुरिति। निश्चयो जायत इति। निश्चयः—ज्ञानस्य ज्ञातता। अर्थक्रियाज्ञानात्—प्रवृत्तिसामर्थ्यज्ञानात्। तथाच ज्ञानस्य ज्ञानान्तरेण निश्चयोत्पादे तस्यापि ज्ञानान्तरादेव तदुत्पत्तिः स्यादित्यनवस्थाप्रसङ्ग इत्यर्थः। अर्थान्यथात्वज्ञानात्—बाधज्ञानात्।

तन्मतं निष्कर्षयति दूषयितुम्—अस्मिन्नपि पक्ष इति। दूषयति—अत्रेदमिति। ज्ञानस्वरूपादेव ज्ञानस्य प्रामाण्यं जायत इत्यस्य प्रतिपक्षस्तावदप्रामाण्यं दोषज्ञानात्, बाधकज्ञानाद्वा जायत इति वक्तव्यम्। तच्चानुपपन्नम्। न हि रजतज्ञानस्य पूर्वं स्वकारणात् प्रमाणतयोत्पन्नस्य पश्चादप्रामाण्यं दोषज्ञानात्, बाधकज्ञानाद्वा जायते। किंतु स्वकारणादुत्पद्यमानमप्रमाणमेवोत्पद्यते। बाधकेन तु भूतं—विद्यमानमप्रामाण्यं पश्चात् ख्याप्यत इत्यर्थः।

नन्वप्रामाण्यं नाम न वस्तुतोऽन्यथाभूतार्थनिश्चयः, किंतु पूर्वज्ञानस्यातथाभूतार्थनिश्चायकत्वख्यापनं, तद्विषयस्यातथात्वज्ञापनं वा। तच्च बाधकज्ञानजन्यमित्यप्रामाण्यं परत इति शङ्कते—नन्वर्थस्येति। न हि तदुभयमप्रामाण्यं पूर्वज्ञानस्य। किंत्वन्यथाभूतेऽर्थे तथाभावनिश्चयः, तद्विषयस्यान्यथात्वं वा। तदुभयमपि पूर्वज्ञानस्य न बाधकाधीनम्। किंतु स्वाभाविकमेव। ततोऽप्रामाण्यमपि स्वत एव प्राप्तमिति परिहरति—सत्यमिति। त्वन्मते ग्रन्थानु-

भावात्। स्वत एव चाप्रमाणज्ञानादन्यथाभूतेऽर्थे तथात्वनिश्चयात्। तथा चाप्रामाण्यमपि स्वत एवोत्पद्येत।

'तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥' (श्लो. वा २-५३.) इति—

श्लोकोऽपि भवता इत्थं व्याख्येयः-बुद्धेः स्वतो जातं प्रामाण्यं पश्चादपोद्यत इति। तच्चायुक्तम्। उत्पत्तावेवाप्रमाणत्वात्। अथ निश्चायकत्वमात्रं प्रामाण्यम्, तदभावोऽप्रामाण्यम्। तच्च बाधकेन क्रियत इति मतम्। तदयुक्तम्। न हि बाधकेन निश्चयस्य विनाशः क्रियते। तस्य स्वत एव विनश्वरत्वात्।

तस्मादेवं वक्तव्यम् - बुद्धेः स्वीयं प्रमाणत्वं स्वत एवावगम्यते।
परतश्चाप्रमाणत्वं दोष—बाधकबोधतः ॥ ३ ॥

नन्वत्रापि ग्रन्थविरोधः, न्यायविरोधश्च स्यात्। तथा हि—न हि विज्ञानमात्मानं गृह्णाति। न तरामात्मीयं प्रामाण्यम्, अप्रामाण्यं वा। अर्थग्रहणमात्रोपक्षीणत्वात्।

तथा—'ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते।
न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥' (श्लो. वा. २-८२) इति-

प्रामाण्याग्रहणदोषं चोदयित्वा—

'प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम्।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥' (श्लो. वा. २-८३) इति-

प्रमाणत्वाग्रहणमङ्गीकृत्यैव दोषप्रसङ्गं समाधत्ते। तद्विरुद्ध्यते प्रामाण्यस्यात्मना ग्रहणे।

---

ण्यमपि नास्तीत्याह—तस्मादिति। अर्थान्यथात्वहेतुभिर्दूरत्व-तिमिरादिभिर्यो दोष इन्द्रियादीनां जायते, तज्ज्ञानादित्यर्थः। अप्रमाणं ज्ञानमुत्पत्तावेव तावदप्रमाणम्। नतु पश्चादप्रमाणीक्रियत इति, पूर्वमुक्तमिति भावः।

'इदं रजतमि'ति निश्चिन्वतो रजतज्ञानस्य योऽयं निश्चायकत्वाभावः, तदप्रामाण्यम्—तद् बाधकायत्तम्। अतोऽप्रामाण्यं परतो जायत इति शङ्कते—अथेति। तत्र निश्चायकत्वाभावो-नाम निश्चयप्रध्वंसः। सच ज्ञानजन्यानां ज्ञातानां क्षणविनश्वरतया स्वाभाविकः। नतु—बाधकायत्तः। ततश्चाप्रामाण्यं स्वतः प्राप्तमिति परिहरति—तदयुक्तमिति।

इत्थमेकदेशिमतं निराकृत्य पूर्वं प्रतिज्ञातं स्वमतं परिशेषयति—तस्मादिति। अवगम्यते—प्रतिभाति। अप्रामाण्यमिति। अवगम्यत इति संबन्धः। शङ्कते—नन्वत्रापीति। प्रथमं न्यायविरोधमाह—नहीति। गृह्णातीति। अस्वयंप्रकाशत्वादिति शेषः। तथा च प्रामाण्यं स्वतो भातीत्यनुपपन्नमित्यर्थः।

ग्रन्थविरोधमप्याह—तथा च नन्विति। इत्थमगृहीतेन—प्रमाणमित्यगृहीतेन। व्यवहारः—प्रवृत्तिः। प्रामाण्यग्रहणात् पूर्वं ज्ञानं स्वरूपेणैव प्रमाणमित्यगृहीतमेव स्थितम्। अथापि तस्यामपि वेलायां स्वकार्येषु—प्रवृत्त्यादिषु निरपेक्षं सत् प्रत्ययान्तरैः पश्चात् प्रमाणमिति गृह्यते।

तथा—निश्चयात्मकवस्तुत्वात्प्रामाण्यं जन्यते गुणैः ।'
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ (श्लो. वा. २-३९) इति ।

निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात्संवादकारणगुणज्ञानकार्यत्वेन स्वध्यवसानमिति पूर्वपक्षे प्रामाण्यस्य जन्मन्येव गुणानां कारणत्वमिति वदन्, सिद्धान्तेऽपि जन्मैव स्वत इति दर्शयति। तस्मात्स्वतो भातीत्ययमपि पक्षोऽनुपपन्नः इति।

अत्राभिधीयते—यत्तावदुक्तं न ज्ञानमात्मानं गृह्णाति। विषयप्रकाशात्मकत्वात्। न चात्मन्यगृह्यमाणे तत्संबन्धितया प्रामाण्यं शक्यते गृहीतुमिति। यदि वयं ज्ञानम् अहं प्रमाणमित्येवं, मदीयं वा प्रामाण्यमित्येवं गृह्णातीति वदेम, तदैवमुपालभ्येमहि। न त्वेवमस्माभिरुच्यते। किं तर्हि? यद्वस्तुतो ज्ञानस्य प्रामाण्यं, यद्वशाज्ज्ञानं प्रमाणं भवति, तत् प्रमाणबुद्धिशब्दयोर्भावकतया लब्धप्रमाण्यपदाभिधानीयकमात्मनैव ज्ञानेन गृह्यत इत्युच्यते। किं पुनस्तत्? अर्थतथात्वम्। इदमेव हि ज्ञानस्य प्रामाण्यं यदर्थस्य तथाभूतत्वम्। तथाभूतार्थस्य ज्ञानस्य प्रामाण्यात्। इदमेव चाप्रामाण्यं यदर्थस्यान्यथात्वम्। तेन स्वत एव ज्ञानादर्थतथात्वरूपमात्मीयं प्रामाण्यं निश्चीयते। न तु गुणज्ञानात्, संवादज्ञानात्, अर्थक्रियाज्ञानाद्वा तदवगन्तव्यम्। अप्रामाण्यं त्वात्मीयमर्थान्यथात्वरूपं स्वतो नावगम्यते। तत्तु कारणदोषज्ञानात्, साक्षादेव वा नैतदेवमिति-ज्ञानादवगम्यत इत्येतदत्र प्रतिपाद्यते।

आह च—*'मिथ्यैतत्पूर्वविज्ञानमिति नाज्ञायि तेन हि।
प्रमाणवद्धि तेनार्थस्तथैवेत्यवधारितः॥
अन्यथात्वं कुतस्तस्य सिद्ध्यज्ज्ञानान्तरादृते।' बृ. टी. इति।

---

ततश्च तस्य स्वतो भानमयुक्तमित्यर्थः। विरोधान्तरमप्याह—तथा निश्चयात्मकेति। निश्चयरूपवस्तुत्वात् प्रामाण्यस्येति शेषः। जन्मैव—प्रामाण्यजन्मैव।

यदि प्रामाण्यं नामाऽर्थाव्यभिचारित्वादिलक्षणो ज्ञानधर्म इति अत्राङ्गीक्रियेत, तदा स्वतोभानमनुपपन्नम्। किंतु विषयधर्मः कश्चित्प्रामाण्यं नाम। सोऽपि प्रामाण्यमित्येवमाकारेण वा, ज्ञानसंबन्धितया वा न स्वतः प्रतीयते। किंतु तत्स्वरूपं ज्ञानादेव प्रतीयत इति, स्वतो भानमु-

---

## टिप्पणी

*पूर्वस्मिन् ज्ञानेऽर्थोयथाऽवभासते, तस्य तथात्वं तेनैव ज्ञानेनाऽवगतमिति, तस्य स्वतस्त्वं मिष्यते। अन्यथात्वन्तु मिथ्याज्ञाने न पूर्वज्ञानादेव गम्यते। किन्तु तथात्वमेव। अन्यथात्वन्तु पश्चात् बाधधज्ञानादिभिरेवावगम्यत इति परतस्त्वं। तथा च स्वाभिमतं स्वतःप्रामाण्यम्, अप्रामाण्यञ्च परत इति प्रतिपाद्यायं ग्रन्थाकारः प्रतिपादितार्थपरानाचार्यश्लोकान् तदुपष्टम्भकतयोसमुपन्यस्यति स्म—'मिथ्यैतत् पूर्वविज्ञानमित्यादि, एकं पक्षं प्रपद्यते' इत्यन्तम्।

टीकाकारोऽपि अप्रामाण्यस्य परतस्त्वोपपादनपरा इमे श्लोकाः। तथाहीत्यादिना तान् व्याचष्ठे स्म। अत्रेदमवधेयम्—इयमानुपूर्वीसमुपलभ्यमाने श्लोकवार्तिके न दृश्यते। यत्र तत्र कियानंशशशब्दतोऽर्थतश्चोपलभ्यते। अत इयमानुपूर्वी बृहट्टीकास्था एवोदाहृताः, टीकाकृता व्याख्याताश्चेति अस्मत्पूज्यपादाश्चिन्नस्वामिशास्त्रिपादाः मामुपादिक्षन्। तदेवोल्लिखितंमया। *चिह्नितञ्च—इति।

तथा —*'अप्रमाणं पुनः स्वार्थे प्रमाणमिव हि स्वतः ।

मिथ्यात्वं तस्य गृह्येत न प्रमाणान्तराद्दते ॥

न ह्यर्थस्यातथाभावः पूर्वेणाऽऽत्तस्तथात्ववत् । ( श्लो. वा. २. ८५-८६. १ )

तथात्वे ह्युपलब्धत्वान्निष्फला स्यात्पुनः प्रमा ॥

अन्यथात्वे त्वसिद्धत्वात्सावकाशं प्रमान्तरम् ।' बृ टी. इति ।

तथा विचारोपक्रमे--*'प्रमाणत्वाप्रमाणत्वे ज्ञानस्य स्वत एव किम् ।

अथवैकमपि स्पष्टं स्वभावेनानिरूपितम् ॥

पराश्रयादसन्दिग्धमेकं पक्षं प्रपद्यते ।' बृ टी. इति-

वदन् प्रमाणत्वाप्रमाणत्वनिरूपणमेवेह स्वतः परतो वेति चिन्त्यत इति-स्पष्टमेवाह ।

यत्तु--'ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते ।' ( श्लो वा २ ८२ ) इति-

'प्रमाणं ग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् ॥' ( श्लो. वा. २ ८३ ) इति च-

वार्त्तिकं, तत्प्रमाणमस्मीत्यनेनाकारेणाग्रहणात् । तथा च 'प्रमाणमहमित्येवं प्रत्यक्षादि न गृह्यते' इत्याह ।

---

पपन्नमिति परिहरति--अत्राभिधीयत इति । वस्तुतः तदानीमगृह्यमाणमपि विविच्यमानं परमार्थतो यत्प्रमाणतया पर्यवस्यतीत्यर्थः । भावकतया-निरूपकतया निमित्ततयेति यावत् । लब्धप्रामाण्यपदाभिधानीयकं-प्रामाण्यमिति पदेन लब्धमभिधेयकमित्यर्थः ।

नन्वर्थगतं तथात्वम् । तत्कथं ज्ञानप्रामाण्यं भवतीत्यत्राह-तथाभूतेति । एतद्वैपरीत्यमेवाप्रामाण्यमित्याह-इदमिति । स्वाभिमतं स्वतः प्रामाण्यं, परतोऽप्रामाण्यं च निष्कर्षयति-तेनेति । पूर्वस्मिन् ज्ञानेऽर्थो यथाऽवभासते, तस्य तथात्वं तेनैव ज्ञानेनावगतमिति, तस्य स्वतस्त्वम्, अन्यथात्वं तु मिथ्याज्ञानेन पूर्वज्ञानादवगम्यते । किंतु तथात्वमेव । अन्यथात्वं तु पश्चात् बाधकप्रत्ययादिभिरवगम्यत इति, तस्य परतस्त्वमित्यर्थः । प्रतिपादितार्थपरानाचार्यश्लोकानाह-आह चेति ।

अप्रामाण्यस्य परतस्त्वोपपादनपरा इमे श्लोकाः । तथा हि—पूर्वविज्ञानं मिथ्येति, तेनैव ज्ञानेन न ज्ञायते । किंतु प्रमाणज्ञानेनैव । तेनापि तथात्वमेव प्रतीयत इति, नाप्रामाण्यं स्वतः । किंतु ज्ञानान्तरात् प्रतीयमानत्वात् परत एवेत्यर्थः । अप्रमाणं पुनः स्वार्थ इत्यस्याप्ययमेवार्थः । न ह्यर्थस्येति । अर्थस्यान्यथाभावः तथात्वमिव पूर्वेण ज्ञानेन नात्तः-न गृहीतः । अतोऽप्रामाण्यस्य स्वतस्त्वं नास्तीति शेषः । बाधकज्ञानेन तु तथात्वं न प्रतीयते । तस्य गृहीततया-नैष्फल्यप्रसङ्गात् । अन्यथात्वं त्वप्रतीततया बाधकेन प्रतीयत इत्यप्रामाण्यस्य परतस्त्वमित्यर्थः । स्वभावेन-स्वरूपेण । पराश्रयात्-अन्यतरतस्तन्निराकरणपरिशेषादित्यर्थः । निरूपणमेवेति । न तु जननम् । अतः प्रतिभानमेव युक्तमिति भावः ।

पूर्वोक्तं ग्रन्थविरोधं परिहरति-यत्त्विति । अनेनाकारेणाग्रहणादिति । वस्तुतः प्रामाण्यमस्ति नवेत्यनेनाकारेण ग्रहणं नास्तीति भावः । इतिकरणादेतज्ज्ञायत इत्याह-तथा चेति ।

ननु यदि प्रामाण्यं ज्ञानोत्पत्तिसमयेऽवगम्यते, यदुत्पत्तौ प्रमाणतया न चकास्ति, तदप्रमाणमिति, उत्पत्तावेव परिशेषान्निश्चेतुं शक्यं विनापि कारणदोषबाधकप्रत्ययाभ्यामिति, अप्रामाण्यमपि स्वत एवापद्येत।

मैवं वोचः। न हि स्वशब्दोऽयं प्रामाण्यपरतया प्रयुक्तः प्रामाण्यादेव प्रामाण्यं भातीति। नापि प्रमाणपरतया। यदि हि तथा स्यात्, ततोऽप्रमाणेषु प्रामाण्यानवभासात् परिशेषसिद्धमप्रामाण्यं स्यात्। विज्ञानपरस्त्वयं स्वशब्दः। विज्ञानादेव प्रामाण्यं भातीति। ततश्चाप्रमाणज्ञानादपि प्रामाण्यमेवात्मनोऽसदपि बोध्यत इति, नाप्रामण्यस्य परिशेषसिद्धिः। अप्रामाण्यन्तु प्रतीतप्रामाण्यापवादरूपेण पश्चाद्बोध्यते।

यथाऽऽह—'तस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम्।
बाधकारणदुष्टत्वबोधाभ्यां तदपोद्यते'॥ इति॥

स्थितं–प्राप्तं प्रतिपन्नमित्यर्थः। सर्वत्रेति। न केवलं प्रमाणेषु, ज्ञानमात्रे इति यावत्।

तथा—'अप्रामाणमपि स्वार्थे प्रमाणमिव हि स्वतः'। इति।

ज्ञानमात्राधिकारेण विचारस्य प्रवृत्तिः, नतु प्रमाणज्ञानाधिकारेणेति निष्कर्षः।

न च प्रमाणज्ञानान्यधिकृत्य चिन्तेयं प्रमाणानां प्रामाण्यं, स्वतः, परतो वेति। किन्तर्हि? यानि तावत् 'स्थाणुर्वा पुरुषो वे'ति परस्परोपमर्दकानेककोटिसंस्पर्शिज्ञानेभ्यः, स्मृतिज्ञानेभ्यश्चातिरिक्तानि 'घटोऽयं पटोऽयमि'त्येवंरूपाणि ज्ञानानि, तानि सर्वाण्यधिकृत्य चिन्तेयम्[1]।

'सर्वविज्ञानविषयमिदं तावत्परीक्ष्यताम्।' ( श्लो॰ वा. ३३ ) इत्युपक्रमात्।

ननु यदि प्रामाण्यं स्वतः ? तर्हि यानि प्रमाणभूतज्ञानानि, तेषामेव विषयग्रहणसमये प्रामाण्यं गृह्यत इति वक्तव्यम्। यानि त्वप्रमाणभूतज्ञानानि, तेषु प्रामाण्याभावेन तद्ग्रहणासंभवात् तद्विपरीतमप्रामाण्यमेव परिशेषात् कारणदोषाद्यनुसंधानात् पूर्वं ज्ञानोत्पत्तिसमय एव गृह्यत इति वक्तव्यम्। ततश्चाप्रामाण्यमपि स्वतः प्राप्तमिति शङ्कते—नन्विति।

परिहरति–मैवमिति। यदि प्रमाणभूतेष्वपि ज्ञानेषु प्रामाण्यात् तद्ग्रहणं वदामः, यदि वा तेष्वेव प्रमाणज्ञानात् प्रामाण्यग्रहणं, तदा त्वप्रमाणज्ञानेषु तद्ग्रहणाभावात् परिशेषादप्रामाण्यं स्वतो गृह्येत। नत्वेवम्। किंतु ज्ञानमात्रं स्वविषयमात्रं गृह्णाति। तत् सर्वत्र विद्यमानम्, अविद्यमानं वा प्रामाण्यं स्वतो गृह्णात्येवेति नाप्रामाण्यपरिशेषः। ततश्च प्रामाण्यं स्वत एव पूर्वं गृहीतं पश्चात् कारणदोषादिना येषु ज्ञानेष्वपोद्याप्रामाण्यं गृह्यते, तदप्रमाणमिति निश्चीयते— इत्यप्रामाण्यं परत इत्यर्थः।

अस्मिन्नर्थे संमतिमाह–यथाहेति। औत्सर्गिकं–स्वभाविकं अनागन्तुकमित्यर्थः। अत एवायं विचारः [2]कारिकायां ज्ञानमात्रसाधारण्येन प्रवृत्त इत्याह–नचेति। संशयस्य तावदुत्पत्तिसमये एवातथात्वप्रतीतेः, स्मृतेस्त्वनुभवपारतन्त्र्येणार्थतथात्वातथात्वयोस्तदधीनत्वात् तत्परिवर्जनेन

टिप्पणी

१. 'सामान्यानुगताशक्तिः या काचन निरूपिता। तदन्वितो विशेषोऽपि तद्द्वारव्यपदेशभाक्॥' इति न्यायेनेति बोध्यम्। २. श्लोकवार्तिके।

यदि च प्रमाणान्येव विषयीकृत्य चिन्त्येत, ततो विषयस्योभयवादिसिद्धत्वात् यान्युभयोः प्रमाणतया प्रसिद्धानि, तेषां प्रामाण्यं स्वत इत्येतावत् सिद्धान्त्येत। ततश्च वेदस्योभयवादिसिद्धप्रामाण्याभावेन विचाराविषयत्वान्नास्य स्वतः प्रामाण्यं साधितं-स्यात्। तत्र वेदप्रामाण्यानुपयोगिनी चिन्ता काकदन्तपरीक्षावदकर्तव्या स्यात्। ज्ञानमात्रं त्वधिकृत्य स्वतः प्रामाण्ये, परतश्चाप्रामाण्ये साध्यमाने वेदस्यापि स्वतस्ता-वद्विषयतथात्वरूपं प्रामाण्यमवगतं स्यात्। कारणदोषज्ञानादेरभावान्निरपवादं स्थितं-भवतीति प्रयोजनवतीयं चिन्ता।

ननु नार्थतथात्वमात्रं प्रामाण्यम्। स्मृतेरपि तथात्वप्रसङ्गात्। सत्यम्। न-तावन्मात्रं प्रामाण्यम्। अस्मिंस्तु प्रकरणे तावन्मात्रमेव स्वतः, परतो वेति चिन्त्यते। प्रमाणशब्दो ह्यधिगततयाऽननुसन्धीयमानतथाभूतार्थनिश्चायकवाची। तस्य भावः-प्रामाण्यम्। कश्च तस्य भावः? प्रमाणान्तराधिगततयाऽननुसन्धीयमानत्वं, तथाभाव-श्चार्थस्य, ज्ञानस्य तन्निश्चयजनकतेति त्रितयं मिलितं प्रमाणबुद्धिशब्दयोर्भावकं प्रामाण्यम्।

तत्र यदेतदर्थस्यावगततयाऽननुसन्धीयमानत्वं, तद्योग्यानुपलब्धिगम्यत्वेन न ज्ञानस्वरूपाद् गम्यते। न हि घटज्ञानं घटस्यान्यतोऽनवगततां प्रतिपादयति।

---

निश्चयात्मकसर्वज्ञानविषयोऽयं विचार इत्यर्थः। प्रमाणज्ञानाधिकारेणैव विचारप्रवृत्तौ विचारस्यैव नैष्फल्यं प्रसज्यत इत्याह—यदीति। ज्ञानमात्राधिकारेणैव विचारप्रवृत्तौ साफल्यमित्याह—ज्ञानमात्रं त्विति।

शङ्कते—ननु नार्थतथात्वमात्रमिति। अबाधितानुभवपरतन्त्रायाः स्मृतेरपि प्रामाण्य-प्रसङ्गादित्यर्थः। अङ्गीकारेण परिहरति—सत्यमिति। स्मृतिव्यतिरेकेणैव शास्त्रे प्रामाण्याभ्यु-पगमान्न तावन्मात्रं प्रामाण्यप्रयोजकमित्यर्थः। तर्हि 'अर्थस्य च तथाभावः प्रामाण्यम्' इति प्रकरणोपक्रमे कथं प्रतिज्ञातम्? तत्राह—अस्मिंस्त्विति। वेदप्रामाण्योपयोगिन्यस्मिन् प्रकरणे तावन्मात्रोपपादनेनैव वेदप्रामाण्यसिद्धेस्तावन्मात्रमेव चिन्त्यत इत्यर्थः। तत्रैव चिन्तयितुकामः सामान्येन प्रमाणशब्दार्थं तावदाह—प्रमाणशब्दो हीति। अननुसंधीयमानश्चासौ तथाभूतार्थश्च। तस्य निश्चायकं यत् ज्ञानं, तद्वाचीत्यर्थः। त्रितयमिति। अर्थस्य प्रमाणान्तराधिगततयाऽननुसं-धानम्, अर्थस्य तथात्वं, ज्ञानस्य तन्निश्चायकत्वं च त्रितयमपि प्रामाण्यमित्यर्थः। भावकं-निमित्तमिति यावत्। एवं चोक्तेषु त्रिष्वप्यंशेषु योऽर्थतथात्वांशः, तत्रैव स्वतः परतो वेति विचारः। नान्यत्र। स एव वेदप्रामाण्योपयोगीति प्रतिपादयति—तत्रेत्यादिना। तत्र प्रथममननुसंधानांशे विचाराप्रवृत्तिमाह—तत्र यदेतदिति। अयमर्थो ज्ञानान्तराधिगतश्चेदधिगततया प्रतीयेत स्मृति-गोचरार्थवत् नच प्रतीयत इति योग्यानुपलब्धिगम्यमित्यर्थः। नन्वर्थतथात्ववत् ज्ञानस्वरूपगम्यं किमिति न स्यादित्यत्राह—न ज्ञानस्वरूपादिति। कुत इत्याशङ्क्य, तदुपपादयति—नहीति। तस्य घटग्रहणमात्रोपक्षीणत्वादननुसंधानांशे सामर्थ्यं नास्तीत्यर्थः।

तर्हि गुणज्ञानात् तदवगतिः स्यादिति, परतो भवत्वित्यत्राह—नापीति। तेषां दोषप्रति-बन्धोपक्षीणत्वादननुसंधानांशे सामर्थ्यं नास्तीत्यर्थः। तस्यापि ज्ञाततारूपस्य न तस्मात् ज्ञानाद-वगतिः। नापि गुणादिज्ञानादिति, न तत्रापीयं चिन्ता। तथा ज्ञानांशस्यापि स्वयंप्रकाशत्वात् न तत्रापि स्वतः परतो वेति चिन्तेति भावः। ततश्च 'नन्वतथाभूतम्' इत्यादिभाष्यग्रन्थेनार्थातथात्व-

नाऽपि गुणज्ञानादिभिस्तदवगतिः। तेन न तत्र स्वतः परतो वेति चिन्ता। यदेव तु 'नन्वतथाभूतम्' (शा. भा. १. १-२). इत्यनेनाऽयथार्थत्वलक्षणमप्रामाण्यमाशङ्कितं, तत्परिहारायाऽर्थतथात्वलक्षणमेव प्रामाण्यं स्वत इति साध्यते।

यस्तु 'निश्चयात्मकप्रामाण्योत्पादनम्' इति ग्रन्थः, सोऽप्यविरुद्धः। तथा हि यदर्थतथात्वनिश्चायकं, तदेव तद्विषयस्य निश्चयस्योत्पादकं भवति। यदेव हि ज्ञेयापेक्षया ज्ञापकं, तदेव ज्ञानापेक्षया जनकं भवति। निश्चयोऽपि च प्रमाणशब्दप्रवृत्तिनिमित्तत्वात्, प्रामाण्यमेव। तेनार्थतथात्वलक्षणं प्रामाण्यं गुणज्ञानान्निश्चीयत इति प्रतिपादयतः पूर्वपक्षिणो नासंगतो 'निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात्संवादगुणज्ञानकार्यत्वेन स्वध्यवसानम्' (न्या. र. पु ५१.) इति ग्रन्थः। यदि पुनरिदमेव साक्षादुच्यते निश्चयात्मकं प्रामाण्यं स्वतो जायत इति, तथा सत्यप्रामाण्यमपि परतो जायत इतिवक्तव्यम्। अन्यथाऽस्य प्रतिपक्षत्वमेव न स्यात्। प्रामाण्यं स्वतो जायतेऽप्रामाण्यं परतोऽवगम्यत इति। तस्मात् स्वतः परतश्च प्रामाण्यमप्रामाण्यं चावगम्यत इत्येव प्रकरणार्थः। एवं हि न्यायो ग्रन्थश्च समञ्जसो भवति।

## स्वमतेन पूर्वोत्तरपक्षवर्णनम्

तदयमत्र पूर्वोत्तरपक्षसंक्षेपः। घटादघटाच्च घटज्ञानदर्शनान्न तन्मात्रेण घटो निश्चेतुं शक्यते। तेनार्थक्रियादर्शनादेव तद्धेतुभूतघटनिश्चयपुरःसरं पूर्वस्य घटज्ञानस्य घटादुत्पत्तिर्निश्चेतव्या। अर्थक्रियाज्ञानन्त्वव्यभिचारात्स्वतः प्रमाणमर्थक्रियां निश्चाय-

---

लक्षणमप्रामाण्यमाशङ्कितम्। तत्प्रतिपक्षभूतं यदर्थतथात्वलक्षणं प्रामाण्यं, तत्रैवांशे स्वतः, परतो वेति चिन्तेत्याह—यदेव त्विति।

नन्वत्र प्रकरणेऽर्थतथात्वलक्षणमेव प्रामाण्यं तदेव स्वतो भातीत्यभिमतं चेत्? तर्हि पूर्वमभिहितो 'निश्चयात्मकप्रामाण्योत्पादनमि'त्यादिपूर्वपक्षग्रन्थविरोधः कथं परिहृतः स्यात्? इत्यत्राह—यस्त्विति। अविरोधमेव दर्शयति—तथा हीति। नन्वर्थतथात्वनिश्चायकस्य कारणगुणादेः कथं निश्चयजनकत्वमित्यत्राह—यदेवेति। ततः किं? तत्राह—निश्चयोऽपीति। तस्मान्न विरोध इत्याह—तेनेति। एतदुक्तं भवति—अत्र निश्चयशब्देन न विषयधर्मोऽभिधीयते, किंतु ज्ञानविशेषः। निश्चायकस्तु कारणगुणादिः। ततश्च कारणगुणादिभिरर्थतथात्वरूपप्रामाण्यनिश्चयज्ञानमुत्पद्यत इति वचनं युक्तमेवेति।

किमित्येवं व्याख्यायते स्वतःप्रामाण्यं नाम स्वतो जननमेव किं न स्यादित्याह—यदिपुनरिति। वक्तव्यमिति। राद्धन्तेऽपीति शेषः। अन्यथेति। परतो ज्ञायत इत्युक्ते स्वतो ज्ञायत इत्येव सिद्धान्तो वक्तव्यः, नान्यथेत्यर्थः। इत्थमेकदेशिमतं निराकृत्य, स्वमते तन्निर्णयं, ग्रन्थानुगुण्यं चाह—प्रामाण्यं स्वत इति ?।

स्वमतेन पूर्वपक्ष—राद्धान्तौ प्रतिजानाति—तदयमिति। तत्र पूर्वपक्षमाह—घटादिति। सत्यसत्यपि घटे घटज्ञानोदयान्न घटज्ञानं घटतथात्वनिश्चायकमित्यर्थः। ततश्च परतस्तन्निश्चयोऽङ्गीकार्य इत्याह—तेनेति। तज्ज्ञानानन्तरभाविनी तत्तदर्थसाध्या क्रिया—अर्थक्रिया। सा चार्थादेवोत्पत्तुमर्हतीति, कार्यभूतयाऽर्थक्रियया कारणभूतेऽर्थस्य तथात्वे निश्चिते, पश्चात् पूर्वजनितज्ञानस्य प्रामाण्यनिश्चय इत्यर्थः। नन्वर्थक्रियाज्ञानस्याप्यर्थक्रियान्तरज्ञानात् प्रामाण्यनिश्चयेऽनवस्था स्यादित्याशङ्क्य, स्वतः प्रामाण्याङ्गीकारान्नानवस्थेत्याह—अर्थक्रियाज्ञानन्त्विति। पूर्वज्ञानस्य

नन्ववस्तुत्वान्न दोषजन्यमप्रामाण्यं भवति। अतज्जन्यं च न ततोऽवधारयितुं शक्यम्। उच्यते। न तावन्निश्चयप्रागभावरूपमप्रामाण्यं दोषैर्गम्यत इति ब्रूमः। किन्त्वर्थान्यथात्वरूपम्। तद्धि शक्यं दोषज्ञानेन निश्चेतुम्। दोषनिमित्तकत्वादयथार्थत्वस्य। दुष्टेषु कारणेष्वयथार्थत्वदर्शनात्। वेदेऽपि स्वतस्तावत्प्रामाण्यं दोषाभावादनपोदितं स्थितम्।

## गुणाभावनिमित्तमप्रामाण्यमिति शंका

कथं पुनरवगम्यते दोषनिमित्तमयथार्थत्वं, नतु गुणाभावनिमित्तमिति ? सर्वत्र हि गुणविधुरेषु दुष्टेषु च कारणेष्वयथार्थत्वं ज्ञायते। तत्र कुतोऽयं विवेकः दोष एव निमित्तं, न गुणवैधुर्यमिति ? तस्माद्यद्यपि परत एवाप्रामाण्योपलक्षणं, तथापि गुणाभावादेवोपलक्षणसंभवात्, वेदे चाप्तप्रणीतत्वगुणायोगात्स्वरसप्राप्तप्रामाण्यस्यापि वेदस्य परत एव गुणाभावादप्रामाण्यमापद्यत इति।

## तन्निरासः

तदभिधीयते। दृष्टानुसारिणी हि कल्पना भवति। न दृष्टवैपरीत्येन। तेन वेदस्य स्वत एव प्राप्तं प्रामाण्यं यथा न विरुद्ध्यते, तथा चेत्कल्पयितुं शक्यते, ततो विरुद्धं न कल्पयितुं युक्तम्। तेन यद्यपि प्रसिद्धेष्वयथार्थज्ञानेषु गुणाभावो दोषाश्च दृष्टाः, तथापि वेदे गुणाभावेऽपि प्रामाण्यदर्शनात्, तन्मा बाधीति दोषनिमित्तमेवायथार्थत्वं शुक्तिरजतादिज्ञानानां कल्प्यते। अन्यथा हि ज्ञानत्वनिबन्धनमप्ययथार्थत्वं कल्प्येत। सर्वेष्वप्रमाणेषु ज्ञानत्वदर्शनात्। तत्र यथैव यथार्थेष्वपि प्रत्यक्षादिषु ज्ञानत्वदर्शनान्न

---

नन्वप्रामाण्यं दोषजन्यं चेन्न, तज्ज्ञानेन निश्चेतुं शक्यते। न तत् दोषजन्यम्। अतो दोषज्ञानस्य तन्निश्चायकत्वं न संभवतीत्यप्रामाण्यस्य परतस्त्वं न युज्यत इति, पूर्वोक्तमेव दूषणमाशङ्कते—नन्विति। परिहरति—उच्यत इति। अर्थान्यथात्वम्—अविद्यमानार्थप्रकाशकत्वम्। तच्च दोषान्वयव्यतिरेकानुविधायितयां दोषनिश्चयेन तत् निश्चीयत इत्यर्थः। स्वतः प्रामाण्यप्रतिपादनस्य प्रयोजनाह—वेदेऽपीति।

ननु स्यान्नाम स्वतः प्रामाण्यं, परत एवाप्रामाण्यञ्च। तथाऽप्यप्रामाण्यं कथं दोषैकनिमित्तम्। गुणाभावनिमित्तं किमिति न स्यात्। दोषस्येव गुणाभावस्यापि साहचर्यसंभवादिति शङ्कते—कथं पुनरिति। अस्तु गुणाभावनिमित्तमप्रामाण्यम्। ततः किं ? तत्राह—तस्मादिति। उपलक्षणं-निश्चयः। उपलक्षणसंभवादिति। अप्रामाण्यस्येति शेषः।

परिहरति—तदभिधीयत इति। न्यायानुसारेणाप्रामाण्यस्य दोषनिमित्तत्वं प्रतिपादयितुकामः प्रथमं तावत् न्यायमाह—दृष्टानुसारिणीति। दृष्टानुसारिणी—प्रमाणप्रतिपन्नार्थानुरोधिनी। अस्त्वेवं न्यायः। ततः किं ? तत्राह—तेन वेदस्येति। स्वतः प्राप्तमिति। बोधात्मकत्वेन स्वतः प्राप्तमित्यर्थः। ततोऽपि किं ? तत्राह—तेनेति। एतदुक्तं भवति—यद्यपि साहचर्यमुभयोरप्यविशिष्टं शुक्तिरजतादिज्ञाने, तथाप्यप्रामाण्यस्य गुणाभावप्रयुक्तत्वे संप्रतिपन्नवेदप्रामाण्यविप्लवप्रसङ्गात् दोषप्रयुक्तत्वमेषितव्यमेवेति।

ननु साहचर्याविशेषात् दृष्टविरोधेऽपि गुणाभावप्रयुक्तत्वं किमिति न स्यादित्याशङ्क्य, तदानीमतिप्रसङ्गमाह—अन्यथेति। ज्ञानत्वस्य साहचर्यं दर्शयति—सर्वेष्विति। तस्मादतिप्रसङ्ग-

तन्निमित्तमयथार्थत्वम्। एवं गुणाभावोऽपि यथार्थे वेदे दृष्टत्वान्नायथार्थत्वस्य निबन्धनम्। असिद्धं तस्य यथार्थत्वमिति चेत्? प्रत्यक्षादीनां वा कुतः सिद्धम्। स्वत इति चेत्? तद्वेदेऽपि समानमन्यत्र नास्तिक्याभिनिवेशात्। तस्मान्न तन्निबन्धनमप्रामाण्यम्।

## गुणस्य प्रामाण्याप्रयोजकत्वमुखेन प्रकरणार्थस्योपसंहारः

अपि च शुक्तिकारजतादिज्ञानेषु गुणाभावेऽपि शुक्लत्वभास्वरत्वादिरूपाणां तथाभूतानामेव दर्शनान्न गुणायत्तं यथार्थत्वम्। स्वकारणादेव यथार्थत्वं, दोषाच्चायथार्थत्वमिति। तथा सति शुक्तिकारजतादिज्ञानानि स्वकारणवशाद्दोषाच्च तथाभूतं शुक्लत्वाद्यतथाभूतं च रजतत्वादिकं गोचरयन्तीत्युपपन्नं भवति। तस्मात्स्वतः सिद्धं प्रामाण्यं सर्वज्ञानानाम्। तच्च वेदस्यानपोदितमिति सिद्धम्।

पार्थसारथिमिश्रेण स्वतः प्रामाण्यनिर्णयः।
व्याख्याविवादसंजातमोहव्यावृत्तये कृतः॥ ४॥

इति महामहोपाध्यायपार्थसारथिमिश्रेण प्रणीतायां न्यायरत्नमालायां
स्वतः प्रामाण्यनिर्णयो नाम द्वितीयं प्रकरणं समाप्तम्।



---

सद्भावात् यथा ज्ञानत्वमप्रयोजकं, मैवं गुणाभावोऽपीत्याह—तत्र यथैवेति। नास्तिकाशङ्कामनूद्य परिहरति—असिद्धमिति। स्वत इति चेदिति। परतः सिद्धौ पूर्वोक्तदूषणसद्भावादितिशेषः। निगमयति—तस्मादिति।

किंच गुणाभावस्याप्रामाण्यहेतुत्वे गुणस्य प्रामाण्यहेतुत्वं स्यात्। तच्च न युज्यत इति, न तदभावस्याप्रामाण्यप्रयोजकत्वमित्याशयेनाह—अपि चेति। तत्र प्रथमं याथार्थ्यस्य गुणप्रयुक्तत्वं निराकरोति–गुणाभावेऽपीति। तथाभूतानां–सत्यानाम्। अतः प्रामाण्यस्यानन्यप्रयुक्ततया स्वकारणप्रयुक्तत्वमेव परिशिष्यत इत्याह स्वकारणादेवेति। ततश्चाप्रामाण्यस्यापि गुणाभावप्रयुक्तत्वासंभवात् दोष एव तद्धेतुरङ्गीकार्य इत्याह—दोषात्त्विति। एवं चाङ्गीकारे शुक्तिरजतादिज्ञानानामंशे याथार्थ्यम्, अंशान्तरेत्वयाथार्थ्यं च युज्यत इत्याह—तथा सतीति। प्रयोजनं वदन् प्रकरणार्थमुपसंहरति—तस्मादिति।

ग्रन्थकर्ता 'विज्ञानस्य प्रमाणत्वं स्वतः' इति प्रतिज्ञातं प्रकरणं परिसमापयति—पार्थसारथिमिश्रेणेति। मोहनिवृत्तये–संशयनिवृत्तये।

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने
स्वतः प्रामाण्यनिरूपणं नाम द्वितीयं प्रकरणं समाप्तम्॥



# अथ विधिनिर्णयो नाम तृतीयं प्रकरणम्

## कर्तव्यार्थस्य प्रतिज्ञा

विधितत्त्वे विमन्यन्ते बहुधा वादिनो यतः ।
अतो वार्तिककारीयैः क्रियते तत्र निर्णयः ।। १ ।।

## गुरुमतस्यानुवादः

कः पुनरयं विधिः ? केचिदाहुः[1]–प्रमाणान्तरागोचरो लिङादिशब्दमात्रालम्बनः कार्यात्मा यागादिभावार्थगोचरः स्वर्गकामादिनियोज्यमात्मनि प्रेरयन्नियोगो विधिः-इति। कथं पुनरेवंविधे विधौ लिङादीनां व्युत्पत्तिः ?

अत्राहुः- लोके तावल्लिङादिशब्दश्रवणानन्तरं प्रयोज्यवृद्धं प्रवर्तमानमुपलभमानो व्युत्पित्सुः पार्श्वस्थो नूनमस्य कार्यावगतिः संजाता। कथमन्यथा स्वतन्त्रः प्रवर्तते । ईदृशी हि मे प्रवृत्तिः कार्यावगतिपूर्विकैव सर्वदा दृष्टा। अस्यापि मदविशेषात् तत्पूर्विकयैवानया प्रवृत्त्या भवितव्यम्। सा च कार्यावगतिर्लिङादिशब्दानन्तर्यात् तत्कारणिकेवेति, लिङादिशब्दानां कार्याभिधायित्वं निश्चिनोति। तत्र यद्यपि प्रवृत्त्यवगमयोरेकगोचरत्वात्, प्रवृत्तेश्च क्रियागोचरत्वात्कार्यावगतिरपि तद्गोचरैव लिङादिभिर्जनितेति, क्रियेव कार्यात्मिका लिङादिशब्दानामर्थः। न तु तदतिरेक्यपूर्वमिति-

---

## नायकरत्नम्

संप्रति विधिनिर्णयाख्यं प्रकरणं व्याख्यातुं प्रकरणारम्भप्रयोजनं दर्शयन् तदारम्भं प्रतिजानीते–विधीति। वार्तिककारीयैराचार्याभिमतैः। विधितत्त्वं विवेक्तुकामः प्रश्नमुपक्षिपति–कः पुनरिति। प्रथमं गुरुमतेन विविनक्ति–केचिदिति। प्रमाणान्तरागोचरः–प्रत्यक्षाद्यविषयः। अतएवापूर्वशब्दवाच्यः। तदगोचरत्वं च प्रत्यक्षसूत्रे प्रतिपादितम्। लिङादिमात्रालम्बनः–लिङ्–लोट–तव्यप्रत्ययवाच्यः। कार्यात्मा–स्वतःसाध्यस्वभावः। यागादिभावार्थगोचरः–प्रतीतिवेलायां यजेत जुहुयात् दद्यात् इत्यादिषु याग-दान-होमलक्षणधात्वर्थविषयकः। निष्पत्तिवेलायां तत्करणकः। अयमेव विधिः यदा नियोज्यं स्वसंपादनार्थं प्रेरयति, तदा नियोग इत्यभिधीयतइत्याह–स्वर्गेति। व्युत्पत्त्यधीनं हि शब्दानां वाचकत्वमिति, तं व्युत्पत्तिप्रकारं पृच्छति–कथं पुनरिति। व्युत्पत्तिः–वाच्यवाचकसंबन्धग्रहणम्।

उत्तरमाह–तत्राहुरिति। 'देवदत्त गामानय' इत्युत्तमवृद्धेन वाक्ये प्रयुक्ते मध्यमवृद्धः प्रवर्तते। तदानीं तटस्थो व्युत्पित्सुरेवं मन्यते–अस्य चेष्टा कार्यज्ञानपूर्विका स्वतन्त्रचेष्टात्वात् मदीयचेष्टावत्। तच्च ज्ञानं लिङादिजन्यं तदनन्तरभावित्वादित्यनुमानद्वयेन लिङादीनां कार्यवाचित्वं निश्चिनोतीति भावः। अन्यथा–कार्यज्ञानाभावे। व्याप्तिं दर्शयति–ईदृशी हीति। अस्यापि–प्रयोज्यवृद्धस्यापि। मदविशेषात्–मत्तुल्यत्वात्। कार्याभिधायित्वं निश्चिनोतीति। अभिधेयगोचरज्ञानजनकत्वमेव वाचकत्वम्। तन्निश्चिनोतीत्यर्थः।

---

१. 'यदपि दर्शनमि'ति विधिविवेके ४८.४९ पृ० मण्डनमिश्रैरुक्तमर्थं प्रदर्शयति–केचिदित्यादिना–

बुद्धिर्भवति। तथापि वेदे षष्ठाद्यसिद्धान्तरीत्या कार्यं प्रति नियोज्यत्वेन स्वर्गकामादीनामन्वय इति स्थितम्।

नियोज्यश्च स उच्यते, यः कार्यं ममेदं कार्यमिति बुध्यते। न चाकामसाधनं कामी कार्यतया बोद्धुमलम्। विनश्वरी च क्रिया। तेन नेयं कालान्तरीयफलदानेन कामिनं रमयतीति, नानया फलोपभोगार्थिनः कामिनो युक्तः संसर्गः। तेन तदन्वययोग्यं स्थास्नु कार्यं क्रियातिरिक्तं लिङादिशब्दाभिधेयं निश्चीयते। तच्च प्रमाणान्तरापूर्वतयाऽपूर्वमिति, स्वात्मनि पुरुषं नियुञ्जानं नियोग इति च ख्यायते। तस्मिंश्च क्रियातिरिक्ते कार्ये वाच्ये निश्चिते, लिङादीनां लोके क्रियायां प्रयोगः लाक्षणिको भवति, अनेकार्थत्वस्यान्याय्यत्वात्। एवञ्च नैमित्तिक-निषेधाधिकारयोरसत्यपि फलवत्त्वे, अपूर्वमेव वाक्यार्थो भविष्यति, तस्यैव विधिविषयत्वात्—इति ॥ १ ॥

## तस्य निरासः

तदिदं बालसंमोहनं, महेन्द्रजालोपमं वा सम्यङ्न्यायौषधसंस्कृतस्वान्तानां न संमोहाय कल्पते।

तथा हि न कार्यावगतिः कापि प्रवृत्तेः कारणं मता।
कर्तुरिष्टाभ्युपायत्वबोधात्सा सर्वदा यतः ॥ २ ॥

---

ननु यद्विषया प्रवृत्तिः, तद्विषयाऽवगतिः। प्रवृत्तिश्च क्रियाकार्यत्वगोचरेति, तद्गोचरज्ञानजनकत्वात् लिङादीनामपि तद्वाचकत्वमेव युक्तम्। नत्वपूर्ववाचकत्वमिति शङ्कामनुवदति—तत्रेति। प्रतिक्षिपति—तथापीति। षष्ठाध्यायस्याद्याधिकरणे स्वर्गकामपदस्य नियोज्यतयाऽन्वयः कथितः[1]। स च क्रियायाः कार्यत्वे न घटते। तस्याः क्षणभङ्गुरत्वात्। तदुत्तीर्णस्य तु कार्यत्वे घटत इति, लिङादीनां तद्वाचित्वं निर्णीयत इत्यर्थः। संसर्गः—अन्वयः।

नन्वस्तु नियोज्यान्वयबलात् लिङादीनां क्रियोत्तीर्णापूर्वकार्ये व्युत्पत्तिः। लोकेऽपि क्रियाकार्ये प्रयोगात् तदपि वाच्यं स्यादित्यत्राह—तस्मिंश्चेति। लाक्षणिक इति। अपूर्वकार्यस्य क्रियाकार्याविनाभावित्वादपूर्वकार्यस्य मुख्यत्वे, क्रियाकार्ये लक्षणया प्रयोगो युज्यते। क्रियाकार्यस्य मुख्यत्वे तु तस्यापूर्वकार्यव्यभिचारात् लक्षणानुपपत्तेरपूर्वस्यैव मुख्यत्वं, क्रियाकार्यस्य लाक्षणिकत्वं चाङ्गीकार्यमिति भावः।

अन्याय्यत्वादिति अक्षादिष्वनेकार्थत्वमगत्याऽङ्गीकृतमिति भावः। यतोऽपूर्वकार्यमेव लिङो मुख्योऽर्थः। अतो नैमित्तिक—निषेधाधिकारयोर्मुख्ये संभवति लक्षणाश्रयणायोगात् नियोज्यान्वयानुपपत्त्यभावेऽप्यपूर्वमेव लिङाद्यर्थो भविष्यतीत्याह—एवञ्चेति। असत्यपि फल इति फलाभावेन तत्कामिनियोज्यान्वयानुपपत्त्यभावेऽपीत्यर्थः। विधिविषयत्वात्—लिङादिवाच्यत्वात्।

गुरुमतं दूषयितुमुपक्रमते—तदिदमिति। न कार्यावगतिरिति। कार्यज्ञानस्य प्रवृत्तिहेतुत्वे खलु लिङादीनां तत्र व्युत्पत्तिर्घटते। तन्न कारणम्। इष्टसाधनत्वज्ञानमेव कारणमित्यर्थः। सा—प्रवृत्तिः। कार्यज्ञानस्य प्रवृत्तिकारणत्वं निराकरिष्यन् प्रथमं कार्यलक्षणं, तत्र

---

१. निबन्धनटीकायामिति शेषः।

यत्तावत्कार्यावगतिः प्रवृत्तिकारणमिति, तत्र किं तत्कार्यम्? किञ्च तत्र प्रमाणमिति वक्तव्यम्? कृतिसाध्यं प्रधानं च कार्यमित्युच्यते। तत्र कृतिसाध्यत्वं तावत्कृतौ सत्यां भावात्, असत्यां चाभावादन्वयव्यतिरेकाभ्यामवगम्यते। प्राधान्यं तु तदुद्देशेन कृतेः प्रवृत्तिः मानसप्रत्यक्षेणावगम्यते। कृतिर्हि पुरुषप्रयत्नः। स च मानसप्रत्यक्षवेद्यो यदुद्देशेन प्रवर्तते तद्विशिष्ट एव प्रत्यक्षेणावगम्यते। सर्वो हीदमुद्दिश्याहं प्रवर्त इति प्रवृत्तिवेलायामेव विशिष्टोद्देश्यसम्बन्धिनं प्रयत्नं प्रत्यक्षेण जानातीति प्रत्यक्षानुमानप्रमाणकं कार्यमिति चेत्?

किमिदानीं कृत्युद्देश्यत्वमात्रं। यद्येवं, ततो यदेव किञ्चिद्राग द्वेष-लोभादिभिरनर्थरूपमर्थतयोद्दिश्य पुरुषः प्रवर्तते, तत्सर्वं कार्यं प्राप्तम्। तत्र को दोषः? नैवंविधा कार्यावगतिः प्रवृत्तिकारणं भवितुमर्हति। सत्यामपि तस्यां प्रवृत्त्यदर्शनात्। यो हि मोहात्सर्पायाङ्गुलिदानमुद्दिश्य प्रवर्तमानो मध्ये तस्यानर्थत्वं जानाति, स तावत्ततो निवर्तते। तत्र कार्यता तावत्तदुद्देशप्रवृत्त्यैवाङ्गुलिदानस्य सञ्जाता। तन्मात्रलक्षणत्वात् कार्यतायाः। सा च पश्चादनर्थत्वावगमेऽपि न बाध्यते। न खलु जानन्नप्यनर्थत्वम् 'इदमुद्दिश्य न मे प्रवृत्तिः संजाता' इत्यध्यवस्यति। किन्तु 'अनर्थमेवोद्दिश्य मोहात्प्रवृत्तोऽस्मि' इत्यवगच्छति। तस्मात्प्रत्यक्षप्रमाणिका येयं कृत्युद्देश्यत्वमात्ररूपा कार्यता, न तदवगतिः प्रवृत्तिकारणमिति सिद्धम्।

---

प्रमाणं च पृच्छति—यत्तावत् कार्यावगतिरिति। प्रथमं लक्षणमाह—कृतिसाध्यमिति। कृतिसाध्यमित्येतावत्युक्ते आनुषङ्गिकसाध्यानामपि कार्यत्वं स्यादत उक्तम्—प्रधानमिति। कृतिप्रधानमित्युक्ते साधयितुमशक्यानामप्यर्थानां कृत्युद्देश्यत्वसंभवात् कार्यत्वं स्यात्, अत उक्तं कृतिसाध्यमिति। तत्र प्रथमं कृतिसाध्यतांशे प्रमाणमाह—तत्रेति। अन्यत्रैतादृशस्य कर्मणः कृत्यन्वयव्यतिरेकानुविधानदर्शनात् प्रकृतस्यापि कर्मणः कृतिसाध्यत्वं प्रवृत्तेः प्रागेवानुमानेनावगम्यते इत्यर्थः। प्राधान्यांशेऽपि प्रमाणमाह—प्राधान्यन्त्विति।

ननु कृतिरेव मानसप्रत्यक्षम्। कथं तदुद्देश्यं मानसप्रत्यक्षमित्याशङ्क्य, तत्संबन्धात् तदपि मानसप्रत्यक्षमित्युपपादयति—कृतिर्हीत्यादिना। तद्विशिष्टः—उद्देश्यविशिष्टः। कृत्युद्देश्यस्य प्रत्यक्षत्वमाबालगोपालसिद्धमित्याह—सर्वो हीति। प्रत्यक्षानुमानप्रमाणकमिति लौकिककार्याभिप्रायम्। तत्रैव प्रथमं लिङ्गाद्व्युत्पत्तेः। अलौकिककार्यस्य मानान्तरागोचरत्वात्। कृतिसाध्यं प्रधानमिति लक्षणं तु लौकिकवैदिकसाधारणम्। तत्र कार्यस्यानुमानप्रमाणको यः कृतिसाध्यत्वांशः, तस्याकार्येऽप्यनिष्टसाधनेऽतिव्याप्तिः स्पष्टतरेति तमंशमुपेक्ष्य, प्रत्यक्षप्रमाणकं कृत्युद्देश्यत्वांशमतिव्याप्त्या दूषयितुं पृच्छति—किमिदानीमिति। अतिव्याप्तिमाह—यद्येवमिति। लोभादीत्यादिशब्दात् मोहो गृह्यते। उद्दिश्येति भ्रान्त्येति शेषः।

ननु तादृशमपि कार्यमेव भवतु। ततश्च लक्ष्यकोटचनुप्रवेशात् नातिव्याप्तिरिति—शङ्कते—तत्र को दोष इति। यद्येतदपि कार्यं स्यात्, तर्हि तदवगतेः प्रवृत्तिहेतुत्वं स्यात्। नैवं दृश्यते। अतो न कार्यमिति न लक्ष्यान्तर्भूतमित्याह—नैवंविधेति। तदेवोपपादयति—यो हीति। मध्ये—उद्योगानन्तरं क्रियानिवृत्तेः पूर्वम्। नन्वनर्थत्वादेव नास्य कृत्युद्देश्यत्वमित्याशङ्क्य, वस्तुतोऽनर्थत्वेऽपि भ्रान्त्या तस्येष्टसाधनत्वावगमात् तदुद्देशेन कृतिप्रवृत्तेः कार्यत्वमपि संजातमित्याह—तत्र कार्यतेति।

## विशेष्यांशस्यनिरासः

अथ कृत्युद्देशार्हता कार्यता। सा केन प्रमाणेन प्रमीयते? न तावत्प्रत्यक्षेण। प्रवृत्त्यवस्थायामपि कर्मणः कार्यत्वसन्देहात्। भवति हि सन्देहादपि क्वचित्प्रवृत्तिः। तत्र यः कार्यत्वं संदिहान एव क्वचिद्व्यापारे प्रवृत्तः, स प्रवृत्तिवेलायामपि न कार्यतां प्राक्फललाभान्निश्चिनोति। वदन्ति हि 'न विद्मः किमिदं कार्यमकार्यं वा' 'सन्देहादेव प्रवर्तामहे' इति। मा भूत्प्रवृत्तिवेलायां प्रत्यक्षं कार्यत्वम्। फलवेलायां तु भविष्यतीति चेत्? कस्य पुनस्तदानीं कार्यत्वं प्रत्यक्षगम्यम्। न तावत्क्रियायाः। नष्टत्वात्। नापि फलस्य। तस्य सुखरूपतामात्रोपलम्भात्। न हि कार्यत्वं नाम किञ्चित्तत्राव-गम्यते। यो हि दैवनिर्मितमेघच्छायाजन्यं सुखमनुभवति। यश्च प्रयत्नजनितमात-पत्रच्छायाजन्यं, तयोरुभयोरपि प्रत्यक्षा सुखोपलब्धिस्तुल्यैव। न कृतिजन्ये सुखे कार्यत्वं नाम कश्चिदतिरेकः प्रत्यक्षमोक्ष्यते। भवतु वा सुखस्य प्रत्यक्षगम्या कार्यता, तत्साधनस्य व्यापारस्य न कदाचित् प्रत्यक्षेण कार्यताऽवगम्यते, नानुमानेन। न हि सुखस्य दृष्टं कार्यत्वं तत्साधनेऽनुमातुं शक्यम्।

---

ननु प्रथमं कार्यत्वमवगतमपि स्वमूलभूतेष्टसाधनत्वज्ञानबाधात् बाध्यते। तस्मिंश्च बाधिते तन्मूला प्रवृत्तिरपि निवर्तत इति, नातिव्याप्तिरित्याशङ्क्य, इष्टसाधनत्वावगमबाधेऽपि कार्यत्वं न बाध्यते, बाधकादर्शनात्। अतः पश्चादपि कार्यमेव तदित्याह—सा चेति। अतिव्याप्तिं निगमयति—तस्मादिति।

ननु कृत्युद्देश्यत्वयोग्यत्वं कार्यत्वम्। नच सर्पमुखाङ्गुलिदानादावतिव्याप्तिः। तेषां भ्रान्त्या कृत्युद्देश्यत्वेऽपि वस्तुतोऽनिष्टसाधनत्वेन तद्योग्यत्वाभावादिति शङ्कते—अथेति। एतादृशकार्यत्वस्याप्रामाणिकत्वादेतल्लक्षणमसंभवीत्याशयेन दूषयति—सा केनेति। यदवगम्य पुरुषः प्रवर्तते, तत् खलु कार्यम्। ततश्च प्रवृत्तेः पूर्ववेलायामेव तद्धेतुतया कार्यस्यावगतिरङ्गी-कर्तव्या। तस्य च प्रत्यक्षत्वे क्वचिदपि तस्य संदेहो न स्यात्। अस्ति च संदेहः क्वचित्। अतो न तत्प्रत्यक्षमित्याह—न तावदित्यादिना। प्रवृत्त्यवस्थायामपीति। तस्य प्रत्यक्षत्वे प्रवृत्तेः पूर्ववेलायामेव संदेहेन न भाव्यम्। तदुत्तरावस्थायामपि संदेहे सति तस्य प्रत्यक्षत्ववाचोयुक्तिर-त्यन्तानुपपन्नेति भावः।

ननु प्रवृत्तेः पूर्वं, तत्समकालं च कृत्युद्देशार्हत्वरूपकार्यत्वसंदेहेऽपि फलप्राप्तिवेलायां प्रत्यक्षेण तदवगमो भविष्यतीति शङ्कते—मा भूदिति। यद्यपि प्रवृत्तेः पूर्वभाव्येव कार्यत्वज्ञानं तत्प्रयोजकम्। न तु समकालभावि। नाप्युत्तरकालभावि। अत उत्तरकालप्रत्यक्षमपि पूर्वमन-वगतं प्रवृत्त्यनङ्गत्वादकारणमित्येव स्फुटं दूषणम्। तथापि वैभवात्तदानीमपि प्रत्यक्षत्वं नास्तीति दूषयति—कस्य पुनरिति। पश्चादपि किं क्रियायाः कार्यत्वं प्रत्यक्षं, फलस्य वेति विक-ल्प्याद्यं निराकरोति—न तावदिति। नष्टत्वादिति। फलापवर्गित्वात् क्रियायाः, प्रत्यक्षस्य च वर्तमानग्राहित्वादित्यर्थः। द्वितीयं दूषयति—नापीति। फलस्य साधनाधीनसिद्धित्वेऽपि केवलं तस्य सुखरूपत्वमेव प्रत्यक्षम्। न तु कार्यत्वमित्येतदुपपादयति—यो हीति। संप्रति सुखस्य कार्यत्वं, तस्य प्रत्यक्षत्वञ्चाङ्गीकृत्यापि न तज्ज्ञानस्य प्रवृत्तिनिमित्तत्वम्। तस्य प्रवृत्तेः पूर्वम-संभवादित्यभिप्रेत्य तत्साधनगतकार्यत्वनिश्चयस्तु दुर्लभः। तत्र प्रमाणाभावादिति मत्वा प्रथमं प्रत्यक्षाभावमाह—भवतु वेति। न कदाचित् प्रत्यक्षेणेति। अर्हतायाः प्रत्यक्षागोचरत्वादित्यर्थः।

## प्रकारान्तरेण कार्यलक्षणे शंका

स्यादेतत्। कृत्यर्हता नाम कार्यता। सा च यदाकारं वस्तु प्रतिपद्य तदुद्देशेन पुरुषस्य प्रवृत्त्यौत्सुक्यं जायते, तदाकारभागितैव। कः पुनरसावाकारः? समीहितरूपत्वं, तत्साधनत्वं वा। तादृशे ह्यर्थे स्वरसादेव पुरुषाणां प्रवृत्त्यौत्सुक्यं जायते। द्विविधं च समीहितं-सुखं, दुःखाभावश्च। तत्र सुखं प्रत्यक्षगम्यम्। दुःखाभावस्त्वनुपलब्धिगम्यः। तत्साधनता चान्वयव्यतिरेकगम्येति नाप्रामाणिकी कार्यतेति।

## एवमपि त्वदभिमतासिद्ध्या निरासः

युक्तमेतत्। किन्त्वेवं सति सुखदुःखपरिहारातिरिक्तेषु तत्साधनज्ञानमेव प्रवृत्तिकारणमङ्गीकृतं स्यात्। ततश्च गामानयेत्यत्र गवानयनस्य सुखदुःखप्राप्तिपरिहारत्वाभावात् प्रवृत्तिहेतुभूतां कार्यतामभिदधानो विधिशब्द समीहितसाधनताभिधायी स्यात्। तेन कार्यं गवानयनं कृत्यर्हम्। यथाविधे पुरुषाणां कृतिः प्रवर्तते, तथाविधमित्यर्थः। तथाविधता च न स्वयं समीहिततया सम्भवतीति, तत्साधनतैव पारिशेष्यात्कार्यवाचिना शब्देनाभिहिता भवति। तथा च वेदेऽप्यपूर्वस्य स्वयं सुखदुःखपरिहार-

---

अनुमानाभावमप्याह—नानुमानेनेति। शक्यमिति। अन्यगतकार्यत्वेनान्यस्य कार्यत्वानुमानेऽतिप्रसङ्ग इत्यर्थः। यद्यपि साध्यगतकार्यतया तत्साधने कार्यत्वानुमानेऽपि नातिप्रसङ्गः, तथापि प्रवृत्त्युत्तरवेलायामेव साध्यगतकार्यत्वावगमात् ततोऽपि पश्चात् साधनगतकार्यत्वं तेनानुमेयमिति, न प्रवृत्त्यङ्गभूतकार्यत्वानुमानं सुशकमिति तात्पर्यम्।

प्रकारान्तरेण कार्यत्वलक्षणमाशङ्कते—स्यादेतदिति। कृत्यर्हता—कृतिविषयीभावार्हता। अत्रापि कृतिविषयीभूतेऽङ्गुलिप्रदाने व्यभिचारपरिहारार्थमर्हतापदम्। ननु कृत्युद्देशार्हत्वादस्य न भेदं पश्यामः। अतस्तत्रोक्तानि दूषणान्यत्रापि समापतेयुरित्याशङ्क्य, तस्य लक्षणमाह—सा चेति। यदाकारं—यादृशाकारविशिष्टम्। प्रतिपद्य—ज्ञात्वा। प्रवृत्त्यौत्सुक्यं—प्रवृत्ताविच्छा। तदाकारभागिता—तादृशाकारयोगिता। नैतावताऽपि लक्षणयोर्भेदः कश्चित् प्रतिपादित इत्याशयेन तादृशमाकारं पृच्छति—कः पुनरिति। उत्तरमाह—समीहितेति। कृत्युद्देशार्हत्वं त्विदं कृत्युद्देशार्हमित्येवं प्रमाणेन प्रत्येयम्। तदप्रामाणिकमित्युक्तम्। इदं तु समीहिततत्साधनयोरन्यतरत्वमिति तस्माद्भेद इति भावः। औत्सुक्यं जायत इति। समीहिते साक्षादौत्सुक्यं, तत्साधने तु तत्सिद्ध्यर्थं जायत इत्यर्थः। इदं तु कार्यत्वं प्रामाणिकमिति, तज्ज्ञानात् प्रवृत्तिरुपपन्नेत्याह—तत्रेति। अनुपलब्धिगम्य इत्याचार्यमताभिप्रायेणोक्तम्। गुरुमते त्वभावप्रमाणानङ्गीकारात्।

युक्तियुक्त एवायं पक्षः। किं तु त्वदभिमतासिद्धिरित्याशयेन दूषयति—युक्तमेतदिति। युक्तं चेदेवमेव स्यादित्याशङ्क्य, तदभिमतासिद्धिमाह—किं त्विति। ततः किम्? तत्राह—ततश्चेति। ननु लिङादिशब्दो न समीहितसाधनाभिधायी, किंतु कृत्यर्हताभिधायीत्याशङ्क्य, कृत्यर्हत्वमेवात्र साधने पर्यवस्यतीत्याह—कार्यमिति। यथाविध इति। साक्षात्परंपरया वा इच्छाविषयभूत इत्यर्थः। नन्वेवं समीहितवाचित्वमेव लिङादीनां स्यात्। न तु तत्साधनवाचित्वमित्याशङ्क्याह—तथाविधता चेति। न स्वयमिति। धात्वर्थस्य क्लेशरूपत्वादित्यर्थः। तथा सति किं स्यात्? तत्राह—तथा चेति। प्रत्ययानां प्रकृत्यर्थगतविशेषाभिधायित्वात् धात्वर्थगतमेव साधनत्वं लिङ्वाच्यं स्यात्। नत्वपूर्वम्। तत्र व्युत्पत्त्यसंभवात्। यथाकथंचित् संभवेऽपि,

रूपत्वाभावात्तत्साधनतैव कृत्यर्हतेति, कार्यरूपमपूर्वमभिदधानो लिङ्समीहितसाधनतामेवाभिदध्यादिति, नैमित्तिक–निषेधाधिकारयोरपि फलसाधनरूपापूर्वाभिधानात्, तद्बलेनैवाश्रुतमपि फलं कल्पनीयं स्यात्।

## समीहित–तत्साधनयोरनुगतं कार्यत्वमिति प्रकारान्तरेण शंका–निरासौ

ननु न सुखत्वं कार्यत्वम्, तत्साधनेऽपि भावात्। न तत्साधनत्वम्। सुखेऽपि भावात्। तदुभयानुगतं कार्यत्वबुद्ध्यालम्बनं कार्यत्वं नाम प्रवृत्तिकारणमिति। मैवम्। न हि साधने कार्यत्वं नाम किञ्चित्प्रवृत्तिवेलायाम्, उत्तरकाले वा प्रत्यक्षेणावगम्यते इत्युक्तम्। अतो नास्त्युभयानुगतःकार्यत्वं नाम कश्चिदर्थविशेषः। कर्तव्यशब्दस्त्वयमेकोपाधिवशादुभयत्र प्रवर्तते। तद्द्वयमपि साध्यमानं स्वोद्देशेन पुरुषं प्रवर्तयतीत्यनेनैवोपाधिना कार्यशब्दप्रवृत्तिः। तस्मान्न कार्यतावगतिः क्रियायां प्रवृत्तिकारणम्, अपि तु समीहितसाधनत्वज्ञानम्।

## प्राभाकराभिमतकार्यस्यलिङादिशब्दवाच्यत्वासंभववर्णनम्

भवतु वा समीहितसाधनत्वोत्तीर्णं कार्यत्वम्। तत्तु क्रियाया एवाभिधातव्यम्। तत्रैव प्रवृत्तिदर्शनात्। सत्यम्। लोके क्रियेव कार्यतया शब्देन प्रतिपाद्यते।

---

तद्गतेष्टसाधनताया एव लिङ्वाच्यत्वात् नैमित्तिक–निषेधाधिकारयोरप्यपूर्वस्य फलसाधनत्वमङ्गीकर्तव्यं स्यात्। ततश्च तत्र विधिसिद्धिरेव प्रयोजनमिति भवत्सिद्धान्तविरोधः स्यादित्यर्थः।

इत्थं कृत्युद्देश्यत्वं, तदर्हत्वं च कार्यत्वं, प्रतिक्षिप्तम्। संप्रति समीहित–तत्साधनयोरविशेषेण कार्यमेतदिति प्रवर्तमानयोः प्रतीति–प्रयोगयोरवश्यमुभयानुगतेन केनाप्यालम्बनेन भाव्यम्। तदेव कार्यत्वम्। तज्ज्ञानं च प्रवृत्तिप्रयोजकम्। तदेव लिङ्वाच्यं स्यादिति पक्षमुपक्षिपति –नन्वित्यादिना। सुखमिति दुःखाभावस्याप्युपलक्षणम्। समीहित–तत्साधनत्वावगतिस्त्वेतादृशकार्यत्वस्य हेतुरिति भावः। समीहित–तत्साधनत्वातिरिक्तं कार्यत्वं पूर्वोक्तयुक्तिभिरेव निरस्तमिति, तयोरन्यतरदेव कार्यत्वमित्यङ्गीकर्तव्यमिति दूषयति—मैवमिति। सुखगतकार्यत्वं तु प्रवृत्त्यनुपयोगि। सुखे साक्षात् व्यापारासंभवात्। साधनगतकार्यत्वे तु प्रमाणाभावात् न तदवगतिः प्रवृत्तिकारणमिति पूर्वमेव प्रतिपादितमिति भावः।

ननु समीहित–तत्साधनत्वातिरिक्तस्य तदुभयानुगतस्य कार्यत्वरूपपदार्थस्याभावे त्वनुगतप्रतीतिप्रयोगौ कथं स्त इत्याशङ्क्यानुगतपदार्थाभावेऽप्येकोपाधिवशात् भविष्यत इत्याह—कर्तव्येति। उपाधिमेव दर्शयति—द्वयमपीति। निगमयति—तस्मादिति। क्रियायामिति। क्रियागतकार्यत्वे प्रामाणाभावस्य विशिष्योक्तत्वादित्यर्थः। किं तर्हि तत्र प्रवृत्तिहेतुः, कार्यशब्दाभिलप्यश्चेति तत्राह—अपि त्विति।

एवं समीहितसाधनत्वातिरिक्तं कार्यत्वं निराकृतम्। इदानीं तदतिरिक्तस्य लिङ्वाच्यभूतस्य कार्यस्याङ्गीकारेऽपि न भवदभिमतमपूर्वकार्यस्य लिङ्वाच्यत्वं सिध्यतीति दूषयितुमुपक्रमते–भवतु वेत्यादिना। क्रियाया एवेत्यवधारणादपूर्वं व्यावर्तयति। व्युत्पत्तिसमये क्रियागतकार्यत्वज्ञानादेव प्रवृत्तिदर्शनात्, तदेव लिङादिवाच्यं स्यादित्यर्थः। लोके लिङादीनां क्रियाकार्ये व्युत्पत्तावपि, वेदे स्थिरकार्ये व्युत्पत्तेरपूर्वस्य लिङ्वाच्यत्वं भविष्यतीति शङ्कते—सत्यमिति। नियोज्यान्वयानुपपत्त्या खलु स्थिरकार्ये व्युत्पत्तिः। सैव नास्ति। क्रियायामपि

वेदे तु फलकामिनियोज्यान्वयानुगुण्यात्स्थिरमेव कार्यं लिङ्ादिभिरभिधीयत इति चेत् ? मैवम्। क्रियायामपि कामिनः कार्यतावगमाविरोधात्। नासौ फलसाधनीभवितुं समर्था। भङ्गुरत्वादिति चेत् ? न। अपूर्वद्वारेणोपपत्तेः। नान्यद्वारेणान्यस्य साधनत्वं सम्भवति। अतिप्रसङ्गात्। अवान्तरव्यापारो वा शक्तिर्वा साधनतामुपपादयति। नापूर्वं तथा। शक्तिमति, व्यापारवति ऽतीते शक्तिव्यापारयोः स्थित्यनुपपत्तेरिति- चेत् ? किमिदानीं काष्ठादीनां पाकादिसाधनत्वं नास्ति। तत्रापि हि काष्ठेभ्यस्तैजसाः परमाणवः समुद्गताः स्थाल्युदरमनुप्रविशन्तस्तण्डुलान् विक्लेदयन्ति। न च तेषां द्रव्यरूपाणां काष्ठावान्तरव्यापारत्वं, तच्छक्तित्वं वा समस्तीति न तद्द्वारेण काष्ठादीनां साधनभावः स्यात्। मा भूदिति चेत् ? न। सर्वलोकप्रसिद्धिविरोधात्। काष्ठैः पचतीति निर्विवादप्रयोगदर्शनात्। तस्माद्यदेव येन समीहितफलोद्देशप्रवृत्तेन तदुपायभूतमन्तरा साध्यते, तदेव तस्यावान्तरव्यापारत्वेनाभिधीयते। तेन सम्भवत्येवापूर्वस्य कर्मावान्तरव्यापारत्वम्।

## एतादृशस्यावान्तरव्यापारानंगीकारेऽनिष्टापादनम्

यदि चैवं नेष्यते, ततोऽपूर्वं प्रत्यपि साधनत्वं कर्मणो न स्यात्। तदपि हि न

स्वर्गकामस्य मदीयमिदं कार्यमित्येवंविधनियोज्यत्वसंभवात्। अतो नापूर्वे व्युत्पत्तिः सिध्यतीति दूषयति—मैवमिति। काम्यासाधनत्वात् क्रियायास्तत्कामिनस्तत्र कार्यत्वावगमो नोपपद्यत इति शङ्कते—नासाविति। साक्षात्फलसाधनत्वाभावेऽप्यपूर्वद्वारेण फलसाधनत्वोपपत्तेः क्रियायाः कार्यत्वं युज्यत एवेति परिहरति—नेति। अपूर्वद्वारेण क्रियायाः फलसाधनत्वं नोपपद्यते। अपूर्वस्य क्रियाशक्तित्व—तदवान्तरव्यापारत्वयोरसंभवादिति शङ्कते—नान्यद्वारेणेति। अतिप्रसङ्गादिति। परम्परासम्बन्धस्य सर्वत्र सम्भवेन, सर्वं सर्वस्य साधनं स्यादिति भावः। साधनतामुपपादयतीति। वह्नेः स्वशक्तिद्वारा स्फोटकार्यसाधनत्वदर्शनात् कुठारस्योद्यमन-निपातनलक्षणावान्तरव्यापाद्वारा छिदासाधनत्वदर्शनादिति भावः। नापूर्वमिति। अनेवंविधत्वादित्यर्थः।

ननु कथमनेवंविधत्वम्। अपूर्वमपि क्रियायाः शक्तिर्वा, व्यापारो वा भविष्यतीत्याशङ्क्य साधनाश्रितस्यैव तच्छक्तित्वं, तद्व्यापारत्वं वा। अपूर्वं तु क्रियायां विनष्टायामपि तिष्ठतीति न तच्छक्तिः, तद्व्यापारो वेत्याशयेनाह—शक्तिमतीति। स्यादेतदेवम्। यदि साधनाश्रितस्यैव द्वारत्वनियमः स्यात्। स तु नास्ति नियमः। काष्ठादावतदाश्रितस्यापि द्वारत्वदर्शनात्। तस्मादपूर्वस्यापीदृशस्य द्वारत्वं युक्तमित्याशयेन परिहरति—किमिदानीमिति। तैजसपरमाणूनामपि द्वारत्वं माभूदित्याशङ्क्याह—माभूदिति। ज्वालाया अवान्तरव्यापारत्वं सर्वलोकप्रसिद्धमित्याह—सर्वेति। तस्मात् तदाश्रितस्य, अतदाश्रितस्य वा एतल्लक्षणलक्षितस्यैवावान्तरव्यापारत्वं द्वारत्वापरपर्यायमस्तीत्याश्रयणीयमित्याह—तस्मादिति। एवं चापूर्वस्यापि द्वारत्वं संभवतीति, क्रियाया एव कार्यत्वं युज्यत इति, तस्यैव वेदेऽपि लिङ्वाच्यत्वमिति निगमयति—तेन संभवतीति।

एतादृशस्यावान्तरव्यापारत्वानङ्गीकारेऽनिष्टान्तरमप्याह—यदि चैवमिति। आग्नेयादिषड्यागात्मकस्य दर्शपूर्णमासाख्यकर्मणः क्षणप्रध्वंसिनः फलं प्रति यथा, तथा परमापूर्वं प्रत्यपि करणत्वं त्वदभिमतं न सिध्येदित्यर्थः। कुतो न सिध्येत् ? तत्राह—तदपीति।

कर्मानन्तरं जायते। स्विष्टकृदाद्युत्तरतन्त्रानुष्ठानप्रतीक्षणात्। तत्रावश्यमुत्पत्त्यपूर्वाण्यवान्तरव्यापारत्वेनैषितव्यानि। उत्पत्त्यपूर्वाण्येव परमापूर्वस्य कारणानि। न तु यागः- इति चेत्? न। असिद्धत्वात्, अशब्दार्थत्वाच्च। अधिकारवाक्ये फलकामिनियोज्यान्वयानुगुण्यादपूर्वाभिधायित्वे स्थिते, पश्चादाग्नेयादिवाक्येष्वपूर्वाभिधानसिद्धिः। प्राक्च लोकावगतक्रियाभिधायित्वमेव तेषु सम्भवतीत्यप्रसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वसाधनत्वेनान्वयसम्भवः। न च यजतेरपूर्वाभिधायित्वम्। येनावान्तरापूर्वाणां प्रत्ययार्थपरमापूर्वं प्रति कारणत्वं स्यात्। तस्माद्यजिरेव करणम्।

किञ्च कार्यत्वमेवापूर्वस्य नोपपद्यते। कृतिसाध्यं हि कार्यमुच्यते। कृतिश्च पुरुषप्रयत्नः। न च प्रयत्नसाध्यताऽपूर्वस्य सम्भवति, चिरविनष्टे प्रयत्ने तदुत्पादात्। प्रयत्नेन हि यागः। ततोऽवान्तरापूर्वम्। ततः पश्चादधिकारापूर्वम्। तस्मात्कार्यत्वानुपपत्तेर्न कार्याभिधायिलिङ्वाच्यताऽपूर्वस्य संभवति। तत्रावश्यं प्रयत्नसाध्यत्वमपूर्वस्य यागावान्तरापूर्वद्वारमाश्रयितव्यम्। तद्वद्यागस्यापि फलसाधनत्वमपूर्वद्वारं किमिति नेष्यते।

---

कर्मानन्तरक्षणे तस्याजननमेवोपपादयति—स्विष्टकृदादीति। यदि दर्शपूर्णमासाख्ययागानन्तरमेव परमापूर्वं जन्येत, तर्हि स्विष्टकृदादीनां कर्मानिर्वर्तकानां परमापूर्वनिर्वृत्तावप्यनुपकारित्वेऽनुपकारित्वादङ्गत्वमेव हीयेत। अतस्तेषामङ्गत्वाय सर्वाङ्गानुष्ठानोत्तरकालमेव परमापूर्वं जन्यते- इति वक्तव्यमित्यर्थः। तस्मात् कर्मणः परमापूर्वसाधनत्वमङ्गीकुर्वाणेनातत्समवेतानामप्युत्पत्त्यपूर्वाणां द्वारत्वमङ्गीकार्यम्। तद्वत् परमापूर्वस्यापपि भविष्यतीत्याह—तत्रेति।

ननु यदि तत्र दर्शपूर्णमासाख्यं नश्वरं कर्म करणं चेत्? स्यादवान्तरव्यापारापेक्षम्। किंतु षड्यागजनितानि स्थिराण्युत्पत्त्यपूर्वाण्येव कारणमिति शङ्कते—उत्पत्त्यपूर्वाण्येवेति। दूषयति—नेति। प्रथममसिद्धिमुपपादयति—अधिकारवाक्य इति। अधिकारवाक्ये ह्यपूर्वे व्युत्पत्तिरिति, ततः पूर्वं क्रियाकार्यत्वमेवार्थः। अपूर्वव्युत्पत्तेश्च सविषयकरणस्यापूर्वस्य निर्वाहे सति पश्चान्निर्वाहो भवति। तत्र व्युत्पत्तौ निर्व्यूढायां पश्चाल्लिङ्शब्दस्यान्यत्राप्यपूर्वमर्थो भवति। एवं स्थिते सत्यधिकारापूर्वस्य करणान्वयवेलायामपूर्वव्युत्पत्तिनिर्वाहादग्नेयादिवाक्येषु लिङ्शब्देनापूर्वप्रतीतेरसिद्धत्वादुत्पत्त्यपूर्वाणां न परमापूर्वकारणतयाऽन्वयो युज्यत इत्यर्थः।

अशब्दार्थत्वमप्युपपादयति—न चेति। प्रत्ययोपात्तस्यापूर्वस्य प्रकृत्युपात्तस्तद्विषयभूतो यजिरेव संनिहिततया करणम्। न तु प्रकृतिवाच्यत्वमुत्पत्त्यपूर्वाणामित्यशब्दार्थत्वमित्यर्थः। एवं च यजेरुत्पत्त्यपूर्वमिव परमापूर्वमप्यवान्तरव्यापारः स्यादिति निगमयति—तस्मादिति।

यद्यवान्तरव्यापारद्वारा नश्वरस्यापि कर्मणः फलसाधनत्वं नेष्यते, तर्हि त्वत्सिद्धान्तकोशसारभूतमपूर्वस्यापि कार्यत्वं न सिध्येत्। तस्यापि साक्षात् कृतिसंबन्धाभावेन द्वारद्वारिकतैव कृतिसाध्यत्वस्य वक्तव्यत्वादिति प्रतिपादयितुमुपक्रमते—किंचेत्यादिना। ततः किं? तत्राह— तस्मादिति। यथा साक्षात् कृतिसंबन्धाभावेऽपि परम्परया तत्संबन्धादपूर्वस्य कृतिसाध्यत्वं, तद्वत् फलस्यापि परम्परया कर्मसाध्यत्वं, कर्मणोऽपि तत्साधनत्वं स्यादित्यर्थः।

मा वा भूत् फलसाधनं क्रिया। अपूर्वसाधनं तावद्भवत्येव। तावताऽपि कार्यतया तामवगन्तुमर्हत्येव पुरुषः। यस्मिन्नकृते समीहितं न प्राप्यते, कृते च प्राप्यते साक्षाद्वा, प्रणाड्या वा, तदेव कार्यतया बुद्ध्यते। न तु साक्षाद्भावविशेषस्तत्रोपयोगी। अवश्यं च कामिनः क्रियायामपि कार्यतावगतिरेषितव्या। कथमन्यथा स्वतन्त्रः प्रवर्तते। सत्यम। अस्त्येव तत्रापि कार्यतावगतिः। न तु शाब्दी। किन्तर्हि? आर्थी। कामानुगुणापूर्वसाधनत्वात्, तामपि कार्यतया कामी प्रतिपद्यत इति चेत्? विकल्पासहत्वात्। किं फलप्रसूता कामिनः कार्यतावगतिः क्रियायाम्, उतापूर्वप्रसूता। न तावदपूर्वप्रसूता। काम्येषु विधेरनुष्ठापकत्वानभ्युपगमात्। यदि हि विधिनिबन्धना कार्यतावगतिः क्रियायां स्यात्, ततो विध्याक्षिप्तानुष्ठानतया करणांशस्यापि विधेयत्वप्रसङ्गः। फलप्रसूतत्वमपि भवदुक्तया नीत्या न सिध्यति। न हि फलकामः पुरुषः क्षणिकं कर्म कार्यतयाऽवगन्तुमलम्। तस्य साक्षात्साधनत्वायोगात्। अपूर्वस्य चावान्तरव्यापारत्वाभावात्तद्द्वारेणाप्यसाधनत्वात्। साधनसाधने च साध्यार्थिनः कार्यावगमानुपपत्तेः। तस्मात् क्रियायाः कार्यत्वावगतिः न फलायत्ता। नापि विध्यायत्ता संभवतीत्यननुष्ठानमेव तस्याः प्रसज्ज्येत। तस्मादविधिप्रसूतं काम्यानुष्ठानं फलायत्तमिच्छताऽवश्यं क्रियायाः

---

इत्थं क्रियायाः सद्वारकं फलसाधनत्वमुपपाद्य, तद्गतमेव कार्यत्वं लिङादिवाच्यमित्युक्तम्। संप्रति क्रियाया अवान्तरव्यापारद्वारा फलसाधनत्वानङ्गीकारेऽप्यपूर्वसाधनत्वस्य भवताऽप्यङ्गीकारात् तत्प्रयुक्तमेव कार्यत्वं लिङादिवाच्यं स्यात्। नत्वपूर्वमिति प्रतिपादयति—माभूदिति। अपूर्वस्य वाच्यत्वे, कल्प्यत्वे चावयोर्विवादः। क्रियायास्तत्साधनत्वं तावदविवादम्। तावता क्रियायाः कार्यत्वं सिध्यत्येवेत्यर्थः। ननु यत् साक्षात् फलसाधनं, तदेव कार्यम्। अपूर्वञ्च तथा। न तु क्रिया। व्यवधानादित्यत्राह—यस्मिन्निति। समीहितसिद्ध्यनुगुणत्वमात्रं, कार्यत्वप्रयोजकमित्यर्थः। क्रियाया अपि फलसाधनत्वात्, अपूर्वसाधनत्वाद्वा कार्यत्वावगतिरङ्गीकार्यत्युक्तम्। इदानीं तदनङ्गीकारेऽनिष्टमाह—अवश्यं चेति। कथमन्यथेति। कार्यताबुद्ध्यधीनत्वात् प्रवृत्तेरित्यर्थः। ननु वेदे क्रियायाः कार्यत्वं नास्तीति न वदामः। किंतु तद्गतकार्यत्वस्य लिङ्वाच्यत्वं नास्तीति वदाम इति शङ्कते—सत्यमिति।

ननु तस्याशाब्दत्वे तत्प्रतीतेः किं निमित्तं, तत्राह—किं तर्हीति। परमापूर्वस्यावान्तरव्यापारत्वमङ्गीकृत्य तद्द्वारा कर्मणः फलसाधनत्वानङ्गीकारे तस्य कार्यत्वं न कथंचिदपि संभवतीति विकल्प्य दूषयति—न विकल्पासहत्वादिति। द्वितीयमादौ दूषयति—न तावदिति। काम्येष्विति। कामाधिकारे करणांशे रागतः प्रवृत्तिः, अङ्गेष्वेव वैधीति वदता भवता करणस्यापूर्वप्रयुक्तत्वानङ्गीकारादित्यर्थः। काम्येषु विध्यधीनकार्यत्वस्य तदनुष्ठातृत्वस्याप्यङ्गीकारेऽनिष्टमाह—यदि हीति। यस्य तु विधिः स्वसिद्ध्यर्थमनुष्ठानमाक्षिपति, तद्धि विधेयमिति, तस्य स्वविध्यनुष्ठाप्यत्वे विधेयत्वप्रसङ्गः। ततश्चाङ्गभूताग्नीषोमीययागवत् श्येनयागस्यापि विधेयत्वे 'न हिंस्यात्' इति निषेधाप्रवृत्तेरनर्थत्वं न स्यादिति, श्येनाग्नीषोमीयवैषम्यं भवतो न सिध्येदिति भावः। द्वितीयं दूषयति—फलप्रसूतत्वमपीति। नीत्येति। अपूर्वस्य कार्यत्वं यया युक्त्योपपादितं तयेत्यर्थः। तामेवाह—नहीत्यादिना। विकल्पद्वयेऽपि कार्यत्वानुपपत्तेः क्रियाया अननुष्ठानमेव प्रसज्यत इत्युपसंहरति—तस्मात् क्रियाया इति। एवमननुष्ठानप्रसङ्गपरिहारायास्मदुक्तनीत्यैव क्रियायाः फलप्रयुक्तं कार्यत्वमङ्गीकर्तव्यमिति, न नियोज्यान्वयानुपपत्तिरित्याह—

फलसाधनता वा, साधनसाधनेऽपि वा साध्यार्थिनः कार्यावगतिरेषितव्या। ततश्च शब्देनापि शक्यत एव फलकामस्य कार्यतया क्रिया प्रतिपादयितुमिति, नापूर्वाभिधानसिद्धिः। यच्चान्यद्वक्तव्यं 'तत्सर्वमङ्गनिर्णय एव वक्ष्यामः।

अन्यन्मतम्—समीहितसाधनत्वमेव भावनाया लिङादिभिरभिधीयते। तदवगतेरेव प्रवृत्तिकारणत्वेनात्मनि दृष्टत्वात्। नन्विच्छैव प्रवृत्तिकारणम्। सत्यम्। सा-तूत्पन्ना प्रवृत्तिकारणम्। नावगता। शब्दस्य च प्रमाणत्वादवगतिजननद्वारेण प्रवृत्तिकारणत्वमिति, नेच्छाभिधायित्वसम्भवः। इच्छा हि सुख-दुःखप्राप्तिपरिहारयोरन्यतरत्, तदुपायं वाऽधिकृत्य समुत्पद्यते। तेन लिङ्शब्दश्रवणानन्तरं प्रवर्तमानस्य प्रयोज्यवृद्धस्य प्रवृत्तिहेतुभूतेच्छासम्पादकत्वेन समीहितसाधनत्वावगतिरेव क्रियायां व्युत्पित्सुना कल्प्यते। तस्याश्च शब्दानन्तर्याच्छब्दस्य तदभिधायित्वं निर्णीयते।

ननु मदिरास्वादस्य समीहितसाधनत्वादनुष्ठानं स्यात्? न। प्रबलेन द्वेषेण निरुद्धत्वात्। यथैव हीच्छा प्रवृत्तेः कारणं, तथैव द्वेषोऽपि निवृत्तेः। द्वेषश्च दुःखसुख-

---

तस्मादिति। अपूर्वस्य द्वारत्वाङ्गीकारे क्रियायाः फलसाधनतया कार्यत्वम्। तदनङ्गीकारे तु तत्साधनसाधनतयेति, भावः। एवं च नियोज्यान्वयानुपपत्त्यभावेन क्रियाकार्यत्वमेव लिङ्वाच्यं स्यादिति नापूर्वाभिधानं सिध्यतीति निगमयति—ततश्चेति। अपूर्वस्य लिङ्वाच्यत्वनिराकरणमङ्गनिर्णये एकादशाद्ये सप्रपञ्चं कृतमित्याह—यच्चान्यदिति।

कृत्युद्देश्यत्वस्याकार्येऽप्यतिव्याप्तेः कृत्युद्देशार्हत्वस्याप्रामाणिकत्वात् कृत्यर्हत्वस्य चेष्टसाधनतानतिरेकात्, तदतिरिक्ते सत्यपि कार्यत्वे क्रियाया एव कार्यत्वसंभवेन तस्यैव लिङ्वाच्यात्वात् प्राभाकराभिमतमपूर्वाख्यं कार्यं निराकृतम्। संप्रति स्वाभिमतं विधितत्त्वं वक्तुकामो मतान्तरमुपक्षिपति-अन्यदिति। समीहितसाधनत्वमेव लिङ्वाच्यं विधितत्त्वम्। तच्च समानप्रत्ययोपादानेन धात्वर्थादपि भावनायाः संनिहितत्वात् तद्गतमेव भवतीत्यर्थः। कथमेतत् विधितत्त्वमित्याशङ्क्याह—तदवगतेरिति। आत्मनीति। समीहितसाधनत्वस्य प्रवर्तकत्वं सर्वेषां प्राणिनां स्वात्मसाक्षिकमित्यर्थः।

ननु 'जानाति, इच्छति, प्रयतते, ततः प्रवर्तते' इति प्रक्रियायाः इच्छैव साक्षत् प्रवर्तिका दृष्टा। न तु समीहितसाधनत्वज्ञानम्। अतस्तदेव लिङ्वाच्यं स्यादिति शङ्कते—नन्विति। सत्यमिच्छाऽपि प्रवर्तिका, समीहितसाधनत्वञ्च। तत्र इच्छा तूत्पन्ना प्रवर्तिका। इष्टसाधनत्वं त्ववगतम्। तत्र लिङः प्रमाणत्वेन ज्ञानजननद्वारा प्रवर्तकत्वाभ्युपगमात् यदवगतं प्रवर्तकं, तद्वाचकत्वमेव लिङ्प्रत्ययस्येति साधनत्वमेव तद्वाच्यं, नेच्छेति दूषयति सत्यमिति। इष्टसाधनत्वे लिङ्प्रत्ययस्य व्युत्पत्तिमुपपादयितुमुपक्रमते—इच्छा हीति। अस्त्वेवं, तत्र व्युत्पत्तिः कथम्? तत्राह—तेनेति। क्रियायामिति। क्रियाया दुःखरूपत्वेन साक्षात् भावनासमीहितत्वाभावेन तत्साधनत्वावगतिरेव परिशिष्यत इति भावः। अस्त्वेवम्। ततोऽपि किं? तत्राह—तस्याश्चेति।

इष्टसाधनत्वस्य प्रवर्तकत्वेऽनियमेन सर्वत्र प्रवृत्तिः स्यादित्यतिप्रसङ्गमाशङ्कते—नन्विति। असति प्रबलप्रतिबन्धके तत्प्रवर्तकम्। अतो नातिप्रसङ्ग इति परिहरति—न प्रबलेनेति। प्रबलविरोधमुपपादयति—यथैवेति। सुख-तत्साधनयोर्यथेच्छा स्वरसवाहिनी-प्रवर्तिका, एवं

---

१. एकादशाद्याधिकरणे इति शेषः।

प्राप्ति-परिहार-तदुपायानधिकृत्य प्रवर्तते। सुरापानं च महानर्थसाधनत्वेन निषेधेन प्रतिपादितं-द्वेषगोचरतया नानुष्ठातुमर्हति। यस्तु सन्निहितेनाऽल्पीयसाऽपि सुखेनाक्रान्तस्वान्तो महान्तमनर्थं नालोचयति, न वाऽऽद्रियते, स प्रबलेन रागेन प्रतिक्षिप्यमाणचित्तः प्रवर्तत एव सुरापाने।

तस्मात्समीहितसाधनत्वेन भावना विधिना सामान्येन बोधिता साकाङ्क्षा पदान्तरसमर्पितेन स्वर्गादिना निराकाङ्क्षीभवतीत्येतत्स्वर्गकामाधिकरणे (प मी ६-१ १) व्युत्पाद्यते। यत्र तु फलविशेषसमर्पकं पदान्तरं समानवाक्ये नास्ति, तत्र प्रकरणादिना फलं कल्प्यं भवतीति प्रकरणाधिकरणे (पू. मी. ३-३-४) व्युत्पाद्यते। प्रकरणादीनामप्यभावेऽर्थवादोत्थेन फलेन समन्वय इति रात्रिसत्राधिकरणे (पू मी. ४-३-६) स्थितम्। तस्याप्यभावेऽध्याहृतेन फलेनान्वय इति विश्वजिदधिकरणे (पू मी. ४-३-५) सिद्धम्। धात्वर्थस्तु सर्वत्र समानपदोपात्तोऽपि बलीयस्या विधिश्रुत्या साध्यांशात्प्रच्यावितः प्रत्यासत्त्या करणांशे निविशत इति भावार्थाधिकरणे (पू मी. २-१-१)। तथा चोक्तम्—'तथा धात्वर्थकर्मत्वे पदश्रुत्योपपादिते।

भावनाया विधिश्रुत्या पुरुषार्थस्य साध्यता॥' तं वा. पृ. ८४०. इति।
'श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।' श्लो. वा. २ १४. इति च।

तस्मादिष्टसाधनतैव विधिर्लिङाद्यभिधेयेति, तद्युक्ताया भावनायाः फलमेव भाव्यं, धात्वर्थस्तु करणमिति।

---

दुःखतत्साधनयोर्द्वेषोऽपि स्वरसवाही निवर्तकः। एवं चात्राल्पसुखसाधनत्वेऽपि महानर्थसाधनत्वेन प्रबलेन द्वेषेणेच्छोत्पत्तेः प्रतिबन्धान्न प्रवृत्तिर्भवतीत्यर्थः। अत एव प्रतिबन्धकद्वेषाभावे तत्रापि प्रवृत्तिर्भवतीत्याह—यस्त्विति। प्रबलेनेति। प्रतिबन्धकाभावेनेच्छैव प्रबला जातेत्यर्थः।

निगमयति—तस्मादिति। सामान्येनेति। स्वर्गपश्वादिसमीहितविशेषानादरेणेत्यर्थः। यतः समीहितसाधनत्वमेव विध्यर्थः। अतो भावनायाः समीहितमेव भाव्यमिति, तस्या भाव्याकाङ्क्षा स्वपदोपात्तमपि धात्वर्थमुल्लङ्घ्य पदान्तरोपात्तेन, वाक्यान्तरोपस्थितेन वा, अर्थवादपरिकल्पितेन, अध्याहृतेन वा फलेनैव परिपूर्यत इति स्वर्गकामाधिकरणादीनि सङ्गच्छन्ते इत्याह—सा पदान्तरेत्यादिना। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र पदान्तरोपात्तेन स्वर्गेण, 'समिधो यजति 'तनूनपातं यजति' इत्यादिषु समिदादिभावनानां स्ववाक्ये फलाश्रवणात् प्रकरणोपात्तेन प्रधानभावनाख्येन फलेन, 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यत्र प्रकरणेऽपि फलालाभात् कथंचित् श्रुतफलसिद्धावत्यन्ताश्रुताध्याहारायोगाच्च सत्रभावनाया आर्थवादिकेन प्रतिष्ठालक्षणेन फलेन, 'विश्वजिता यजेत' इत्यत्र तु कथंचिदपि फलालाभादध्याहृतेन फलेनाकाङ्क्षोपरमत इति भावः।

धात्वर्थस्य भावनाकरणत्वप्रतिपादकं भावार्थाधिकरणमप्यस्यैव विधित्वे सत्युपपद्यते—इत्याह—धात्वर्थस्त्विति। बलीयस्येति। एकपदोपादानादपि संनिहितत्वात् बलीयस्यैकप्रत्ययश्रुत्या प्रथमतः समीहितस्यैव भाव्यत्वावगमात् न धात्वर्थस्य भाव्यभावः संभवतीति, पारिशेष्यात् करणतयाऽन्वीयत इत्यर्थः। उक्तेऽर्थे आचार्यसंमतिमाह—यथोक्तमिति। कर्मत्वे—भाव्यत्वे। वेदात्—वेदैकदेशभूताल्लिङ्प्रत्ययादित्यर्थः। एतन्मतमुपसंहरति—तस्मादिति।

## आचार्यमतोपन्यासः

आचार्यस्य तु 'अभिधाभावनामाहुरन्यामेव लिङादयः'। तं वा. पु. ३७८–इति वदतोऽन्यादृशं विधितत्त्वमभिमतं लक्ष्यते। किं पुनस्तत्? उच्यते। इदं तावत् सिद्धं यथा समीहितसाधनत्वावगतिमन्तरेण चेतनस्य स्वतन्त्रा प्रवृत्तिर्न घटते–इति। ततश्च लिङ्शब्दश्रवणानन्तरं प्रवर्तमानस्य पुरुषस्य समीहितसाधनत्वावगतिः शब्दात्संजातेति कल्पनीयम्। तत्तु समीहितसाधनत्वं किमभिधानत एवोपात्तं? किं वाऽर्थान्तराभिधायिना विधिशब्देन तदनुपपत्त्या बोधनीयमिति चिन्तनीयम्।

तत्र नाभिधायकता युक्ता, संविद्विरोधात्। न हि यागानुरक्तो व्यापारः–इष्टार्थहेतुरित्यस्मात्, यजेतेत्यस्माच्च शब्दात्तुल्याऽवगतिः। सहप्रयोगाच्च। लोके हि समीहितसाधनतावचनः शब्दः, विधिशब्दश्च युगपत्प्रयुज्यमानौ दृष्टौ। 'माणवक सन्ध्यामुपासीनस्य तेऽभ्युदयो भविता। तस्मात्संध्यामुपास्व' इति। न च पर्याययोः सह प्रयोगो भवति। लोकप्रमाणकश्च शब्दार्थावगम इति, नेष्टसाधनताभिधायित्वं लिङादीनाम्। तस्माद्वरं कार्याभिधायित्वमेवाश्रयितुम्।

## शंका-निरासौ

नन्वेतदयुक्तम्। कार्यमिति यदि कृतिं प्रत्युद्देश्यमभिधीयते, ततस्तादृशी कार्यता सर्ववस्तूनामविशिष्टेति, न तदवगतिः प्रवृत्तिहेतुः। पारिशेष्यात् कृत्यर्हता कार्यता वक्तव्या।

---

इत्थं मतान्तरमुपन्यस्य, आचार्याभिमतं विधितत्त्वमस्मादन्यदेवेति दर्शयति–आचार्यस्येति। अन्यां–प्रयत्नरूपाया अर्थभावनाया विलक्षणरूपामभिधारूपां भावनां लिङादय आहुः–वदन्तीत्यर्थः। तद्विधितत्त्वं पृच्छति–किं पुनरिति। तत्र विधितत्त्वं विवेक्तुकामः समीहितसाधनत्वं दूषयिष्यन् संप्रतिपन्नमंशं तावदाह–इदं तावदिति। व्युत्पित्सोरिति शेषः। स्वतन्त्रा–अपराधीना। संप्रतिपन्नमंशमभिधाय, विप्रतिपन्नमंशमाह–तत्त्विति किमभिधाव्यापारेणैव तत्प्रतीयते, उताभिधेयानुपपत्त्याऽऽक्षेपात् प्रतीयत इति पश्चात् व्युत्पित्सुरेवं विचारयतीत्यर्थः। तत्र साक्षाद्वाच्यत्वपक्षं दूषयति–तत्रेति। संविद्विरोधात्–उभयोः सर्वसाक्षिकभिन्नार्थत्वप्रतीतिविरोधात्। विरोधमेव दर्शयति–न हीति। लिङादीनामिष्टसाधनतावाचित्वेऽर्थावगतिस्तुल्या स्यात्। तत्तु नास्तीत्यर्थः। यागानुरक्तो व्यापारः–यागकरणिका भावना। दूषणान्तरमाह–सहप्रयोगाच्चेति। तदुपपादयति–लोक इति। नत्वेवंविधदोषदर्शनात् लोके मास्त्विष्टसाधनतावाचित्वम्। वेदे तु तद्वाचित्वं स्यादित्यत्राह–लोकेति। 'य एव लौकिकास्त एव वैदिका' शा. भा. लोकवेदाधि पृ० २९२-२९३ इति न्यायेन लोके यथा व्युत्पत्तिः, तथैव वेदेऽप्यर्थप्रतिपत्तिरिति भावः। प्रथमपक्षदूषणं निगमयति–इतीति।

अनेन पूर्वोक्तं विधितत्त्वं दूषितं भवति। एवं च विधिप्रत्ययः वाच्यार्थानुपपत्त्या क्रियाया इष्टसाधनत्वमाक्षिपतीत्ययं पक्षः परिशेषितो भवति। तद्वाच्यं तु किमित्यपेक्षायामाचार्याभिमतं मतं प्रतिपादयिष्यन् मतान्तरमुपक्षिपति–तस्मादिति। क्रियायाः कार्यत्वमेव लिङाऽभिधीयते। तदनुपपत्त्या चेष्टसाधनत्वं कल्प्यते। क्रियायां कार्यत्वप्रतीतेरिष्टसाधनत्वमन्तरेणासंभवादित्येतन्मतमाश्रयितुं वरं युक्तमित्यर्थः।

ननु प्रागेवायं पक्ष इष्टसाधनत्वपक्षादविशिष्ट इति प्रतिपादित इति, तान्येव दूषणान्याशङ्कते—नन्विति। सर्ववस्तूनां-सर्पमुखेऽङ्गुलिदानादीनाम्। पारिशेष्यादिति। कृत्युद्देशा-

तदवगतिर्हि प्रवृत्तिहेतुः। कृत्यर्हता च न सुखदुःखप्राप्तिपरिहार-तदुपायव्यतिरेकिणी काचिदस्ति। तेनानयनादिक्रियाणां स्वरूपेण सुखदुःखप्राप्तिपरिहाररूपत्वाभावात् तदुपायत्वमेव कृत्यर्हतेति क्रियाविषयायाः कार्यावगतेः प्रवृत्तिहेतुभूतायाः समीहित-साधनत्वमेवावलम्बनम्।

तदुक्तम्—'कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः।' (वि. वि. पृ. ३०२ इति।)

'पुंसो नेष्टाभ्युपायत्वा[1]त्क्रियास्वन्यः प्रवर्तकः।' (वि वि पृ २४३ इति च।)

तेन लिङ्शब्दोऽपि कृत्यर्हतारूपकार्यमभिदधत् समीहितसाधनत्वमेवाभिद-ध्यादिति, न तन्मतादस्य विशेषः स्यात्।

उच्यते। अयमस्ति विशेषः। यत् समीहितसाधनता, न तत्स्वरूपेणाभिधीयते। किन्तु लिङ्शब्दः कृत्यर्हतारूपं सुखदुःखप्राप्तिपरिहार-तदुपायसाधारणमभिदधाति। तस्मिंस्त्वभिहिते क्रियायाः स्वयं सुखत्वाद्यभावात्पारिशेष्यात्तदुपायत्वं निश्चीयते। तथाच 'कर्तव्यतावचनो, भावनायां पुरुषं प्रवर्तयती'ति भूयान्भाष्यवार्तिकयोर्व्यवहारः-इति। इदमपि मतमभिधाभावनामाहुरित्याद्यननुगतम्। किञ्च कार्यशब्देनापि सह विधिशब्दः प्रयुज्यते। कार्यं ते सन्ध्योपासनम्, अतः तत्कुरुष्वेति। यद्यप्ययं प्रयोगः कर्तृ-कर्मगत संख्याभिधानभेदेनात्यन्तापर्यत्वर्थायत्वाद्युपपद्यते, तथापि न कार्यस्य लिङर्थता युक्ता। तथाहि-अकार्येऽप्यर्थेकार्यतामङ्गीकृत्य लिङादिप्रयोगो याच्ञायां दृश्यते। कश्चिद्धि कञ्चिदेवं याचते यद्यप्येतत्तव निषिद्धत्वादकार्यमेव। तथाऽपि मत्कृते कुरुष्वेति। कार्यार्थत्वे तु व्याघातः स्यात्। न ह्येवं प्रयुज्यते यद्यप्येतदकार्यं। तथापि कार्यमिति। एवं ब्रुवन् हास्यो भवति। तस्मात्कृत्यर्हता, विधिश्च भिन्नावर्थौ।

---

हेतुत्वस्याप्यप्रामाणिकत्वात् कृत्यर्हतैव कार्यता परिशिष्यत इत्यर्थः। कृत्यर्हताऽपि इष्टसाधनत्वे एव पर्यवस्यतीत्याह—कृत्यर्हता चेति। आलम्बनमिति। कार्यत्वप्रतीतेः समीहितसाधनत्वमेव विषय इत्यर्थः। इष्टसाधनत्वस्यैव कार्यत्व-प्रतीतिविषयत्वे संमतिमाह—तदुक्तमिति। इष्ट-साधनत्वस्यैव प्रवर्तकत्वे संमतिमाह पुंस इति। एवं च समीहितसाधनत्वस्यैव लिङ्वा-च्यत्वात् तन्मतोक्तदूषणान्यत्राप्यापतेयुरित्याशयेनाह—तेनेति।

कार्यत्व-समीहितसाधनत्वयोः सामान्यविशेषभावेन वा, कृत्यधीननिरूपणत्व-तदभावा-दिभिर्वा भेदोऽस्ति। ततश्च न कश्चित् दोष इति समाधत्ते—उच्यत इति। स्वरूपेणेति। इदं समीहितसाधनमित्यनेनाकारेणेत्यर्थः। इदं वार्तिककारव्यवहारस्याप्यनुगुणमित्याह-तथा चेति।

इदमपि नाचार्यस्याभिमतमित्याह—इदमपीति। न केवलं ग्रन्थाननुगुण्यमात्रम्। किंतु दूषणान्यत्र विद्यन्त इत्याह—किं चेति। अकार्येऽप्यर्थे लिङ्प्रत्ययप्रयोगात् कार्यत्वस्य लिङ्वाच्यत्वं न सिध्यतीति दूषणान्तरमाह—किंचेति। अकार्यतामिति। अकार्यत्वमङ्गी-कृत्यापीत्यर्थः। तादृशस्थलं दर्शयति—कश्चिदिति। अस्तु तत्रापि कार्यत्वमेवार्थः, तत्राह—कार्यार्थत्व इति। इदं यद्यपि कृत्ययोग्यं, तथापि कृतियोग्यमिति वचनं परस्परव्याहतम्। एवमत्र व्याहतिर्न दृश्यत इति न कार्यत्वं लिङर्थ इत्यर्थः। तस्मादन्यदेव विधितत्त्वमिति वक्तव्यमिति निगमयति—तस्मादिति।

---

१. इष्टाभ्युपायत्वादित्यत्र ल्यब्लोपे पञ्चमी। इष्टसाधनत्वं विहायेत्यर्थः कृतो न्याय-प्रकाशकृता पृ. १८० इति ध्येयम्।

किं पुनरिदमभिधाभावनेत्युक्तम् । सर्वशब्दानामेवार्थप्रतीत्युन्नेयोऽभिधाभिधानो व्यापारः समस्ति । लिङादीनां त्वसौ व्यापारः पुरुषप्रवृत्तिभवनफलत्वाद् भावनेति, प्रवृत्तिसाधनत्वान् प्रवर्तनेति च गीयते ।

[1]कश्चिदाह न शब्दस्य व्यापारः सम्भवति गुणत्वात् । द्रव्यत्वेऽपि विभुत्वादिति । तदयुक्तम् । गुणस्याप्यरुणादेर्द्रव्यपरिच्छेदादिव्यापारदर्शनात् । विभूनां चात्मादीनां ज्ञानयत्नादिव्यापारसंभवात् । स्पन्दसमवायस्तु न संभवति । न चासावस्माभिः शब्दस्येष्यते । कस्तस्य व्यापारः ? स्वज्ञानमेव, तज्जनितो वा संस्कारः । तद्योगी हि शब्दोऽर्थप्रतीतिं जनयति ।

तथा चोक्तम्—'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्' शा. भा पृ ३७ इति ।

[2]'पूर्ववर्णजनितसंस्कारसहितोऽन्त्यवर्णो वाचकः' शा. भा पृ. ४६ इति च । यदेव हि यमागन्तुकं धर्मं प्राप्य कार्याय पर्याप्तं भवति, स एवागन्तुकधर्मस्तस्य व्यापारः इत्युच्यते । तेन पुरुषप्रवृत्तिहेतुस्वव्यापार एव लिङर्थः ।

ननु न ज्ञान-संस्कारयोः शब्दव्यापारत्वमुपपन्नम् । ज्ञानं प्रति हि कर्मीभूतः शब्दः ।

---

तर्हि आचार्याभिमतमभिधाभावनात्मकं विधितत्त्वं किमिति पृच्छति—किं पुनरिति । उत्तरमाह— सर्वेति । सर्वशब्दानामप्यभिधासंभवे किं प्रमाणमित्यत्राह—अर्थेति । उन्नेयः—अनुमेयः । अयं भावः—तत्तच्छब्दप्रयोगानन्तरं तत्तदर्थविषया प्रतीतिस्तावज्जायते । तत्र शब्दः करणम्, प्रतीतिः फलम् । तत्र फलेन करणगतो यो व्यापार उन्नीयते, सैवाभिधा ।

अस्त्वेवं प्रकृते किं ? तत्राह—लिङादीनामिति । अयं व्यापारः अन्यत्रार्थप्रतीतिमात्रोपयोगात् केवलमभिधेति गीयते । लिङादिगतश्च प्रवृत्तिभवनफलकतयाऽभिधा भावनेति च गीयते । इदमेव तु लिङ्वाच्यं विधितत्त्वमित्यर्थः । प्रवृत्तिभवनं—प्रवृत्त्युत्पत्तिः ।

शब्दस्य गुणत्वपक्षे, द्रव्यत्वपक्षे च व्यापारवत्त्वं न युक्तमित्याक्षिपति—न शब्दस्येति । न शब्दो व्यापारवान् गुणत्वात् । रूपवत् । विभुत्वाद्व्योमवदिति प्रयोगः । अत्रार्थप्रतीत्युपयुक्तः करणाश्रितोऽतिशयो वा निषिध्यते, स्पन्दसमवायो वेति विकल्प्य आद्ये अनैकान्तिकता, द्वितीये सिद्धसाधनमिति दूषयति—तदयुक्तमिति । अस्तु कश्चिच्छब्दस्यापि व्यापारः । तस्य स्वरूपं कीदृशमिति पृच्छति—कस्तस्येति । उत्तरमाह—स्वज्ञानमिति । उभयत्रापि संमतिमाह—तथा चोक्तमिति । असंनिकृष्टे—इन्द्रियासंबद्धे । ननु ज्ञान-संस्कारयोरात्मधर्मत्वेन शब्दावान्तरव्यापारत्वं कथमित्याशङ्क्य तदुपपादयति—यदेवेति । फलोत्पत्त्यनुकूलः करणसाध्यो व्यापारोऽवान्तरव्यापार इत्यर्थः । निगमयति—तेनेति ।

नन्वभिधा नाम—शब्दोऽर्थमभिधत्ते, शब्देनार्थोऽभिधीयते इति शब्दकर्तृकः, तत्करणको वाऽवान्तरव्यापारः । ज्ञानं तु शब्दं जानामीति शब्दकर्मको व्यापारः । तेन तस्याभिधात्वमयुक्तम् । तथात्वे धातुवाच्यव्यापाराणां सकर्मकत्वाकर्मकत्वव्यवस्था, कारकनियमश्च न स्यादिति शङ्कते—नन्विति ।

---

१ शालिकानाथेन ७२४ पृ० वाक्यार्थमातृकायामुक्तमर्थं निरसितुमनुवदति—कश्चिदित्यादिना ।

२. अस्य भाष्यस्य प्राभाकरीयव्याख्यानं, तन्निरासश्च भूमिकायां द्रष्टव्यः ।

कर्तृत्वं करणत्वं वा तस्याभिधानं प्रत्युपपादनीयम्। स कथमेकस्मिन्नेव व्यापारे कर्मत्वं, कर्तृत्वकरणत्वयोरन्यतरच्च प्रतिपद्येत।

परशुवदिति ब्रूमः। परशुर्ह्युद्यमननिपातनयोः कर्मापि सन् तरुद्वैधीभावलक्षणफलावच्छेदलब्धच्छिनत्तिपदाभिधानयोस्तयोरेव करणं भवति। सर्वमेव हि करणं कर्तृव्यापारगोचरम्। तथा ज्ञानस्य शब्दविषयस्याप्यर्थप्रतिपत्तिलक्षणफलावच्छेदलब्धाभिधाभिधानस्यार्थ एव कर्म। शब्दस्तु फलान्तरार्थप्रवृत्तव्यापारव्याप्यतया तस्यामवस्थायां करणम्, स्वातन्त्र्यविवक्षायां च कर्तृत्वमनवद्यम्।

अनेनैव न्यायेनार्थकर्मकस्याप्यभिधाव्यापारस्य पुरुषप्रवृत्तिभवनफलावच्छेदलब्धशब्दभावनाभिधानस्य पुरुषप्रवृत्तिफलावच्छेदलब्धप्रवर्तनाभिधानस्य च प्रवृत्तिकर्मकत्वं, पुरुषकर्मकत्वञ्च व्याख्यातम्। तेनैक एव व्यापारो यदा जानातिना विषयप्रकाशनफलावच्छिन्नोऽभिधीयते, तदा विषयीभूतः शब्द एव तत्फलभाक् कर्म भवति—शब्दं जानातीति। यदा तु स एवार्थप्रतिपत्तिफलावच्छिन्नोऽभिदधातिनाऽभिधीयते, तदा प्रतिपत्तिरूपफलभागर्थः कर्म भवति—अर्थमभिदधाति शब्द इति।

यदा तु स एव पुरुषप्रवृत्तिभवनावच्छिन्नो भावयतिनाऽभिधीयते, तदा भवनफलभाक् प्रवृत्तिः कर्म भवति—प्रवृत्तिं भावयति शब्देनेति। यदा तु पुरुषप्रवृत्तिफलावच्छिन्नव्यापाराभिधायिना प्रवर्तयतिनाऽभिधीयते, तदा प्रवृत्तिफलभाक् पुरुषः कर्म भवति पुरुषं प्रवर्तयतीति। एवं संस्कारेऽप्यभिधाव्यापारे यथासम्भवं योज्यम्।

न हि व्यापारस्वरूपापेक्षः कर्मभावः। तथा सति हि चलत्यभिहिताऽपि क्रिया गच्छत्यभिहितेन सकर्मिका स्यात्। तथा प्रयत्नोऽपि करोतिभावयतिभ्यामिव यतति-

---

दृष्टान्तावष्टम्भेन परिहरति—परशुवदिति। अयं भावः—यद्यपि जानातीत्यादिधातुवाच्यो ज्ञानरूपो व्यापारस्तावदेक एव। तथापि तत्प्रतिसंबन्धिपदार्थोपरक्तवेषेण तत्तद्धातुवाच्यतया व्युत्पन्नः सन् सकर्मकाकर्मकविभागं, तत्तत्कारकव्यवस्थां च प्रतिपद्यते। यथा एकमेव ज्ञानं जानाति-प्रतिभातिभ्यामभिहितमकर्मकं सकर्मकं च भवति 'घटं जानाति घटः प्रतिभाती'ति। यथा वा ऊर्ध्वाधोदेशसंयोगलक्षणफलावच्छिन्नाभिधायिभ्यामुद्यच्छति-नियच्छतिभ्यामभिधीयमानयोरुद्यमननिपातनयोः परशुः कर्मापि सन् द्वैधीभावलक्षणफलावच्छिन्नतया छिनत्तिपदाभिधेययोरेव करणं भवति। परार्थप्रवृत्तकर्तृव्यापारविषयत्वात्। यथा 'परशुना छिनत्ती'ति। तद्वत् ज्ञानं प्रत्येव शब्दस्य कर्मत्वं करणत्वं च युज्यत इति। स्वातन्त्र्यविवक्षायामिति।

'स्वव्यापारेषु कर्तृत्वं सर्वेषामुपजायते' इति न्यायेन तं. वा. ३८२ करणस्यापि प्रातिस्विकव्यापारं प्रति स्वातन्त्र्यविवक्षायां कर्तृत्वं भवतीत्यर्थः।

इत्थमभिधाव्यापारत्ववेषापन्ने ज्ञाने कारकव्यवस्थामुपपाद्य, तस्मिन्नेव ज्ञाने लिङादिप्रत्ययगोचरे पुरुषप्रवृत्त्यानुकूलवेषापन्ने शब्दभावनाख्ये, तदनन्तरं पुरुषप्रवृत्तिविषयत्ववेषापन्ने प्रवर्तनाशब्दवाच्ये च कारकव्यवस्थामाह—अनेनेति। प्रवृत्तिकर्मकत्वमिति। क्रियाफलशालिकर्मेति कर्मलक्षणोपेतत्वादित्यर्थः। एवञ्च जानात्यभिधाति—भावयति—प्रवर्तयतिधातूनां तत्तत्फलावच्छिन्नक्रियामात्रे व्युत्पत्तेः, एकस्यापि व्यापारस्य तत्तत्फलावच्छेदे सति तत्तद्धातुवाच्यत्वं, तत्तत्फलशालिनः कर्मत्वञ्च सिद्धमित्याह—तेनैक एवेति।

प्रतिपादितं प्रमेयमन्यत्राप्यतिदिशति—एवमिति।

नाऽप्यभिहितः सकर्मकः स्यात्। तथा छेत्तृव्यापारोऽप्युद्यच्छति-नियच्छतिभ्यामिव छिनत्तिनाऽप्यभिहितः परशुकर्मकः स्यात्। ताभ्यामेव वाऽभिहितः छिनत्त्याभिहित इव वृक्षकर्मकः स्यात्।

तस्मादेक एव व्यापारः फलभेदेन बहुधा निरूप्यमाणस्तं तं कर्मभेदं भजते। यदा फलानपेक्षेण स्वरूपेण निरूप्यते प्रयतते चलतीत्यादिभिः, तदाऽकर्मको भवति। यदा तु फलाधीननिरूपणीयेन रूपेण निरूप्यते, तदा सकर्मकः। तत्र येन धातुना यत्फलाधीननिरूपणीयेन रूपेण क्रियाऽभिधीयते, तद्धातूक्तायां क्रियायां तत्फलभाग्वस्तु कर्म भवति।

'यत्तु केनचिदात्मनो ज्ञानकर्मतां निराकुर्वता परसमवेतक्रियाफलभागित्वं कर्मलक्षणमुक्तं, तदतिव्यापकम्। पूर्वोक्तेष्वपि परश्वादिषु छिदादिकर्मत्वप्रसङ्गाद-व्यापकं च। 'देवदत्तः पावमानीभिरात्मानं पुनाती'त्यादिषु स्वसमवायिक्रियाफल-भागिनोपि देवदत्तस्य पुनातिकर्मत्वात्। तथा वेदेपि 'पुनात्येवाग्निं, आत्मानम्' पुनीते' इति प्रयोगो दृष्टः। तस्मात्पूर्वोक्तमेव कर्मलक्षणम्। न चैवं गतौ गन्तुः कर्मत्वप्रसङ्गः। गच्छतिर्हि गन्तव्यप्राप्त्यधीननिरूपणीयेनैव रूपेण क्रियामभिदधातीति ग्रामादेरेव तत्कर्मत्वं, न गन्तुः। एवञ्च ज्ञेयावभासफलाधीननिरूपणीयेनैव रूपेण जानाति संविदित्यादिभिरभिहितायां ज्ञानक्रियायामात्मनोऽप्यहंवित्तौ भासमानत्वात्कर्मत्वं समर्थितम्।

---

ननु तत्तदर्थानुरक्तवेषमन्तरेण केवलव्यापारस्वरूपापेक्षया कारकव्यवस्था, सकर्मकाकर्मकव्यवस्था च किं न स्यादित्याशंक्य, तत्र दोषमाह—नहीति। कर्मभाव इत्युपलक्षणम्। अयं व्यापारस्सकर्मक एव, इदमेव कर्म, इदमेव करणमित्यादिनियमोनास्तीत्यर्थः। फलितां कारकव्यवस्थां निगमयति - तस्मादिति। सकर्मकाकर्मकव्यवस्थामुपसंहरति—यदा फलेति। फलानपेक्षेण—प्रतिसंबन्धिफलानपेक्षेण। उक्तव्यवस्थासिद्ध्यर्थं कर्मलक्षणमाह—तत्र येनेति। क्रियाफलभाक् तु कर्मेत्युक्ते छिनत्तिपदाभिहितयोरुद्यमन-निपातनयोः परशुः कर्म स्यात्। अतः उक्तं येन धातुनेति।

केचित्तु येन धातुनेत्यादिविशेषणमनादृत्यैव क्रियाफलभाग्वस्तु कर्मेत्युक्ते ज्ञानकियाकर्तुरात्मनोऽपि कर्मत्वं स्यात्। सर्वज्ञानानां त्रिपुटीप्रत्यक्षत्वेन घटस्येवात्मनोऽपि वित्तौ भासमानतया व्यवहारार्हत्वलक्षणफलशालित्वात्। ततस्तन्निवृत्तये परसमवेतेति पदं प्रक्षिप्य लक्षणमभिदधति। तल्लक्षणमव्याप्त्यतिव्याप्तिभ्यां दूषयति—यत्तु केनचिदिति। परश्वादिष्विति। 'परशुना वृक्षं छिनत्ती'त्यत्र कर्तृव्यापारो यथा वृक्षे द्वैधीभावलक्षणं फलं जनयति, तथा परशावपि तत्तद्देशसंयोगादिकमिति करणेऽतिव्याप्तिरित्यर्थः। क्रियाफलभागिनोऽपीति। देवदत्तस्य शुद्धिलक्षणातिशयजननादित्यर्थः। नन्विदमपि लक्षणमतिव्यापकम्। 'देवदत्तो ग्रामं गच्छती'त्यत्र प्राप्तिलक्षणफलस्योभयत्रापि संभवादित्याशङ्क्य परिहरति—नचेति। उभयत्र संभवेऽपि गच्छतिधातोर्ग्रामगतफलप्रतिसंबन्धितयैव गमनक्रियायां व्युत्पन्नत्वेन, येन धातुनेत्याद्युक्तलक्षणस्य न गन्तर्यतिव्याप्तिरित्यर्थः। एवं च 'मामहं जानामी'त्यत्रात्मनः स्वसमवेतक्रियाफलशालित्वेन

---

१. शालिकनाथोक्तमर्थंनिरसितुं तन्मतमुपन्यस्यति—यत्तु केनेचिदिति।

## शंका

आह—अस्त्वभिधाव्यापारः, न तस्य पुरुषप्रवर्तकत्वम्, लिङाद्यभिधेयत्वञ्च संभवति। नहि प्रेक्षापूर्वकारी कश्चिदभिधामात्रावगमात् प्रवर्तते, समीहितसाधनत्वावगमाधीनत्वात् प्रवृत्तेः। न चासावर्थप्रतिपत्तिलक्षणफलोन्नेया, शब्दान्त राभिधावदभिधेयाऽपि भवितुमर्हति।

## तन्निरासः

उच्यते—सत्यं फलसाधनत्वं प्रवर्तकत्वं, तत्तु न शब्दस्याभिधेयमित्युक्तम्। अतो व्युत्पित्सुर्बालकः प्रयोज्यवृद्धं प्रवर्तमानमुपलभ्य प्रवृत्तिहेतुभूतामिष्टसाधनतावगतिं शब्दजनितामध्यवसाय पूर्वोक्तेन न्यायेन साक्षाच्छब्दस्य जनकत्वासंभवात्, येनाऽभिहितेन फलसाधनत्वं कल्पयितुं शक्यते, तदभिधायी लिङ्शब्द इति निश्चिनोति। ततस्तद्व्यापारस्यार्थप्रतिपत्त्यैव कल्पितस्य प्रवर्तनारूपेणाऽभिधानं लिङादिभिः कल्प्यते। प्रवृत्तिफलता च प्रवर्तनारूपता। न चैवंरूपता अर्थप्रतिपत्त्यैव कल्पयितुं शक्येत्यनन्यलभ्यत्वात्, अभिधान्तरविलक्षणां लिङ्शक्तिं कल्पयति। एवंविधविध्यवरुद्धा भावना-

---

भवतः कर्मत्वं न सिद्ध्येदित्यव्याप्तिः। अस्माकं तु सिध्यतीत्याह—एवं चेति। समर्थितमिति। अस्माभिरिति शेषः।

अस्त्वेवं ज्ञानस्यैवाभिधात्वादिकम्। न तु तस्य लिङ्वाच्यत्वमुपपद्यते। तदवगमस्य प्रवर्तकत्वाभावात्। प्रवर्तकाभिधायित्वाच्च लिङादीनामिति शङ्कते—आहेति। तर्हि कस्यावगमात् प्रवर्तते इत्यत्राह—समीहितेति। अभिधाया लिङ्वाच्यत्वेऽनुपपत्त्यन्तरमाह—नचासाविति। अनन्यलभ्यः खलु शब्दार्थः। ततश्च यथा प्रकृतिभागगताया अभिधाया अर्थप्रतीत्यनुमेयत्वम्, एवं लिङ्प्रत्ययगताया अप्यभिधाया अर्थप्रतीतिलिङ्गावगत्वेनान्यलभ्यत्वात् न तत्र लिङ्शब्दशक्तिः कल्पयितुं युज्यते इत्यर्थः। सत्यं फलसाधनत्वमेव प्रवर्तकम्। तत्तु पूर्वोक्तन्यायेन न साक्षादभिधेयम्। किंतु तदुपापदकमर्थान्तरमेव। तच्चाभिधाव्यापार एव भवतीत्याशयेन परिहरति—उच्यत इति।

अस्तु तस्यानभिधेयत्वम्। अभिधाया लिङ्वाच्यत्वं कथमित्याशङ्क्य तत्र व्युत्पत्तिक्रममाह—अतो व्युत्पित्सुरिति। निश्चिनोतीति। तस्य कार्यत्वानुपपत्तेः स एवाभिधाव्यापारो भवतीति शेषः। अभिधाव्यापारस्यान्यलभ्यत्वात् वाच्यत्वं न संभवतीत्येतद्दूषणं परिहरति—तेनेति। प्रवर्तनावेषस्य वा कथमनन्यलभ्यत्वमित्यत्राह—प्रवृत्तीति। अभिधान्तर वलक्षणामिति। एकया लिङादिगतया अभिधया त्वर्थभावनाऽभिधीयते। सैवार्थभावनाभिधैवाऽपरयाऽभिधया प्रवर्तनारूपेणाभिधीयत इत्यर्थः। अत एवाभिधाव्यापारस्य वाच्यत्वे एकस्यैव व्यापारस्य वाच्यत्वं, वाचकत्वं च स्यादित्यात्माश्रयदोषोऽपि परिहृतः। वाच्य—वाचकभूताभिधयोर्भेदात्।

ननु भवेदस्य लिङाद्यभिधेयत्वं, यद्य तदवगमात क्रियायाः समीहितसाधनत्वं कल्पयितुं शक्येत। तत्तु कथमित्याशङ्क्य तदुपपादयति—एवंविधेति। अयं प्रवर्तनाव्यापारः प्रथमं समानप्रत्ययोपादानादर्थभावनया संगच्छते, तस्या अपुरुषार्थभाव्यकत्वे त्वेतादृशविध्यन्वयानुपपत्तेर्विधिरेव स्वान्वयनिर्वाहार्थं तां पुरुषार्थभाव्यिकां कल्पयति। एवं च तस्याः समानपदोपात्तो

पुरुषार्थसाधनतया निश्चीयते। नह्यपुरुषार्थफलस्य व्यापारस्य प्रवर्तनारूपविध्यन्वयसंभवः, प्रेक्षापूर्वकारिणां निष्फले प्रवर्तयितुमशक्यत्वात्। तदेवमभिधाव्यापारमेव प्रवर्तनारूपेणाऽभिदधाना लिङादयस्तद्बलादेव फलसाधनत्वं बोधयन्ति।

## स्वर्गकामादिशब्दानां पुरुषपरत्वेन न फलसमर्पकत्वमिति शंका

नन्वस्मिन् पक्षे प्रवर्तनारूपस्य विधेः प्रवर्त्यापेक्षत्वात् प्रवर्त्यसमर्पकत्वेनैव स्वर्गकामादिशब्दाससंबध्येरन्, न फलसमर्पकतया।

## तत्र केषाञ्चित् समाधानम्

तथा नामेति केचित्। न चैवमफलताप्रसक्तिः, प्रवर्त्यानुपपत्त्यैव काम्यमानस्य फलत्वकल्पनात्। भाष्य-वार्तिकयोः फलपरत्वमेव स्वर्गकामादिशब्दानां लक्ष्यते। युक्तञ्चैतत्। तथाहि—यद्यस्मिन् पक्षे न कार्यात्मकविधिपक्षवत् कर्तृ-नियोज्ययोरभेदापत्तिः। विधेयक्रियाविषयत्वं कर्तृत्वम्, विधिविषयत्वं नियोज्यत्वमिति विषय-

---

धात्वर्थः स्वतः साध्यरूपोऽपि भाव्यकोटौ न निविशते, अपुरुषार्थत्वात्। किंतु स्वर्गकामपदोपात्तः पुरुषार्थ एव भाव्यो भवतीत्यर्थः। तदेवोपपादयति—न हीति।

व्यापारस्य—अर्थभावनायाः। धात्वर्थस्य तु भावनादाद्वारा विधिसंबन्धात् पश्चात् पुरुषार्थत्वं भवतीति भावः। एवं च समीहितसाधनत्वस्य साक्षादवाच्यत्वात्, कार्यत्वस्य तदुपपादनसमर्थस्यापि पूर्वोक्तदोषेण वाच्यत्वायोगात् प्रवर्तनारूपशब्दव्यापारस्य वाच्यत्वे समीहितसाधनत्वस्यापि परिकल्प्यत्वात् दोषाभावादनन्यलभ्यत्वाच्च तस्यैव वाच्यत्वं सिद्धमिति निगमयति—तदेवमिति।

ननु स्वर्गकामपदस्य कृतिप्रवृत्तपुरुषपरत्वानुपपत्त्या फलपरत्वे हि विध्यवरुद्धा भावना-पुरुषार्थभावना स्यात्। न चैवं सिध्यति। प्रवर्तनाया एव विधित्वाच्च, तस्याः साक्षात् प्रवर्त्यपुरुषापेक्षित्वेन तत्समर्पकत्वेनान्वयसम्भवादिति शङ्कते—नन्विति। अयमपि पक्षः कैश्चिदङ्गीकृतः—इत्याह—तथा नामेति। नन्वस्मिन् पक्षे स्वर्गकामपदस्य पुरुषपरत्वेन फलसमर्पकत्वाभावात् भावनायाः समीहितभाव्यकत्वसिद्धिः कथमित्याशङ्क्यं प्रवर्त्यत्वानुपपत्त्यैव फलसामान्ये कल्पिते, प्रवर्त्यविशेषणस्वर्गादिपदं फलविशेषसमर्पणपरं भवतीत्याह—न चैवमिति। फलस्य कल्पनादिति। फलतया कल्पनानित्यर्थः।

अस्मिन् पक्षे प्रेरणात्मकविध्याकाङ्क्षावशात् पुरुषपरमेव स्वर्गकामादिपदम्। फलं त्वनुपपत्तिलभ्यमिति स्थितम्। अयं पक्षो भाष्य—वार्तिकविरुद्धः। तयोस्तत्र तत्र फलपरमेव स्वर्गकामादिपदम्। पुरुषस्तु विशेष्यतया प्रतीतोऽपि प्रथमं न विवक्षित इत्येवं प्रतिपादनादित्याह—भाष्येति। न केवलमयं पक्षो भाष्यवार्तिकविरुद्धः। न्यायविरुद्धश्च। फलपरत्वमेव तु न्यायोपेतमपीत्याह—युक्तञ्चैतदिति।

ननु प्राभाकराभिमते नियोगविधिपक्षे स्वर्गकामपदस्य नियोगं प्रति नियोज्यतयाऽन्वयात् क्रियां प्रति कर्तृतयाऽन्वयादुभयान्वयो वाच्य इति गौरवात् स्यान्नयायविरोधः। अस्मिंस्तु पक्षे क्रियां प्रति कर्तृरूपप्रवर्त्यपुरुषमात्रपरत्वेनागौरवात् कथं न्यायविरोध इत्याशङ्क्य, सत्यमेवमेव। तथापि शब्दमन्तरेणैव पुरुषस्य विध्याक्षेपावगतत्वात् शास्त्रस्य चाप्राप्तार्थपरत्वात् न पुरुषपरत्वं कामपदस्येति प्रतिपादयति—यद्यपीत्यादिना। कर्तृनियोज्ययोरभेदापत्तिः—

१०

भेदात्। तथापि न तत्परत्वं स्वर्गकामादिशब्दानां युक्तम्। अप्राप्तार्थपरं हि शास्त्रम्। इह विधिवशादेतावदवसितम् अस्ति कश्चिन्नियोज्यः। स चासौ योऽस्य विध्यन्वितस्य व्यापारस्य शेषी समर्थश्चाऽनुष्ठातुम्। न ह्यस्वार्थव्यापारे कश्चित् प्रवर्तयितुं शक्यते। नाप्यसमर्थः। स एव च शेषी। यदभिलषितसाधनोऽयं व्यापारः इत्येतावति कामशब्दमन्तरेणैवागमेऽपि, फलविशेषमात्रेचानवगते तत्परत्वमेव कामशब्दानां युक्तम्। तदेवं विधिशब्देनैव प्रवर्तनारूपविधिमभिदधताऽर्थात् विधेयस्य कर्तव्यता फलसाधनता चाऽवबोध्यत-इत्यभिप्रायेण, 'कर्तव्यतावचनः प्रत्ययः'।

'श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते' इत्यादिश्च व्यवहारः--इति।

ननु स्वव्यापारेऽभिधीयमाने स्वरूपाभिधानप्रसङ्गः। न ह्यनभिधाय विशेषणं विशिष्टमभिधातुं शक्यम्। मैवं वाचः।

उक्तं हि—'विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्।
अभिधानाभिधाने तु न केनचिदिहाश्रिते॥' तं. वा. पृ ९१५ इति।

---

कर्तृनियोज्यरूपान्वयभेदोपपत्तिः। नियोज्यः—प्रवर्त्यः। एवं विधिसामर्थ्यात् पुरुषस्य प्राप्तिमभिधाय, फलपरत्वेऽपि यद्यपि फलसामान्यस्य विधिवशादेव लाभः। तथापि तद्विशेषस्यानवगततया तत्परत्वेन सार्थकत्वमित्युपपादयितुं फलमपि सामान्यतः प्राप्तमित्याह–स चासाविति। स–प्रवर्त्यः। असौ वक्ष्यमाणो भवतीत्यर्थः। व्यापारस्य–भावनायाः। शेषी—तत्फलभाक्। तदेव व्यतिरेकमुखेनोपपादयति–नहीति। प्रेरयितुं विधिनेति शेषः। शेषिशब्दार्थमाह–स एवेति। विशेषमात्र इति। मात्रचा सामान्यस्य प्राप्तिरस्त्येवेति दर्शयति। प्रथमपक्षे स्वर्गकामपदं प्रथमं पुरुषपरम्। पश्चादनुपपत्त्या फलविशेषपरमपि भवति। स्वमते तु प्रथमं फलपरम्। पश्चात् भावनाक्षिप्तकर्तृपरम्। गुरुमते तु पुरुषपरमेव। फलं तु केवलं तद्विशेषणमिति विवेकः।

ननु भाष्यवार्तिकयोस्तत्र तत्र कार्यत्वस्य' श्रेयःसाधनत्वस्य च लिङ्वाच्यत्वाभिधानात् कथं प्रवर्तनाया लिङ्वाच्यत्वमित्याशङ्क्य साक्षादवाच्यत्वेऽपि तयोरर्थात्प्रतीयमानतया लिङ्वाच्यत्वव्यवहार उपपद्यत इत्याह–तदेवमिति। विधेयस्य–भावनायाः, तद्द्वारा भावार्थस्य च। लिङादिव्यापार एवाभिधा। सैव प्रवर्तना लिङादिवाच्येति च स्थितम्।

इदानीं तत्रात्माश्रयदोषमाशङ्कते–नन्विति। स्वरूपाभिधानप्रसङ्गः,–लिङादिप्रत्ययस्वरूपस्यापि वाच्यत्वप्रसङ्गः। ततश्च लिङ्प्रत्ययस्यैव वाच्यत्वं, वाचकत्वं च स्यादित्यात्माश्रयदोष इत्यर्थः। तदेव प्रतिपादयति–नहीति। अयं भावः–यत्र तु लिङादिप्रत्ययस्य प्रयोगः, तत्र तेन लिङ्प्रत्ययेन स्वविशेषितव्यापारोऽभिधीयते, व्यापारमात्रं वा ? द्वितीये तु सकलशब्दगतस्य व्यापारमात्रस्यैव वाच्यत्वं स्यात्। लिङादिगतस्यैव वाच्यत्वमिति विशेषो न सिध्येत्। ननु व्यापारमात्रेऽप्यभिधीयमाने कस्यायं व्यापार इत्याकाङ्क्षायां लिङ्प्रत्ययस्य सन्निहिततया तद्गततयैव पर्यवस्यतीति चेत् ? मैवम्। शब्दोपात्तयोर्हि आकाङ्क्षावशादन्योन्यान्वयः संभवति। न तु शब्दोपात्तस्य व्यापारस्याशब्दोपात्तेन लिङ्प्रत्ययेनानाकाङ्क्षितेन सन्निहितेनाप्यन्वयो युज्यते। तथात्वे सत्यतिप्रसङ्गात्। अतो लिङ्प्रत्ययविशेषित एव व्यापारोऽभिधेय इति, विशेषणभूतस्य लिङ्प्रत्ययस्यापि लिङ्वाच्यत्वप्रसङ्ग इति। आचार्यैरेवायं दोषः परिहृत इत्याह–मैवमिति। विशिष्टग्रहणमिति। विशिष्टज्ञानं विशेषण-विशेष्य-तत्संबन्धग्राहकमिति विशेषणा-

## सिद्धान्तपक्षोपन्यासः

तुल्यं चैतदिष्टसाधनताविधित्वपक्षेऽपि। तत्रापि तु नेष्टसाधनतामात्रं विधिः। अपि तु कर्तुरिष्टसाधनता। नचाख्यातं कर्त्रभिधायि। तत्रावश्यं भावनाक्षेपावगतकर्तृविशेषितेष्टसाधनताऽभिधीयत इत्याश्रयणीयम्। तथाऽस्मिन् पक्षे प्रत्यक्षावगतलिङ्शब्दस्वरूपविशिष्टाभिधाव्यापाराभिधानाददोषः—इति।

न्यायविदां त्विष्टसाधनत्वमेवाभिमतम्। न च संविद्विरोधः। स्वरूपेणाभिधानाभावात्। प्रवर्तनारूपेण तु शब्दोऽभिधत्ते। प्रवृत्तिहेतुश्च धर्मः प्रवर्तना। सा चापौरुषेये वेदे प्रैषादीनामसंभवात्पारिशेष्यात्कर्तुरिष्टाभ्युपायतैव निश्चीयते। तेनाभिधाव्यापारवत्प्रवर्तनारूपेणेष्टसाधनतां शब्दोऽभिधत्ते, न स्वरूपेणेति।

## तत्रोपष्टम्भकतया मण्डनाचार्यवचनोपन्यासः

इदमेव हि भगवतो मण्डनमिश्रस्यापि—

'पुंसो नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्॥' वि. वि. पृ. २४३,

---

गोचरं विशिष्टज्ञानमेव यद्यपि नेष्टं—न भवतीत्यर्थः। अभिधानाभिधाने—लिङ्प्रत्ययेनाभिधाव्यापारस्याभिधाने। तथापि न कश्चिद्दोष इति शेषः।

कथं न दोष इत्यत्राह—न केनचिदिति। यतः इह—लिङ्प्रत्ययस्थले। केनचित् इष्टसाधनत्वं विध्यर्थ इति वदता मया चागृहीतविशेषणं विशिष्टज्ञानं न भवतीति नाश्रितम्। विशेषणाविषयमपि विशिष्टज्ञानं भवतीत्युभाभ्यामप्याश्रितमित्यर्थः।

उभाभ्यामप्याश्रितत्वमेवोपपादयति—तुल्यं चेति। विशिष्टग्राहिणा प्रमाणेन विशेषणाग्रहणेऽपि प्रमाणान्तरेण विशेषणग्रहणे क्वचित् किञ्चित् विशिष्टज्ञानं दृश्यते। यथा 'सुरभि चन्दनं, अघटं भूतलम्।' यथा वा भावनाक्षेपरूपार्थापत्त्यवगते कर्तरि तद्विशिष्टेष्टसाधनताज्ञानं लिङ्प्रत्ययात्। अतो लिङ्प्रत्ययानभिधानेऽपि प्रत्यक्षावगततद्विशेषिताभिधाव्यापारस्याभिधेयत्वं संभवतीति नात्माश्रयः। नापि सर्वशब्दगताभिधामात्रस्याभिधानप्रसङ्ग इति न कश्चिद्दोष इति भावः। कर्त्रभिधायीति। आख्यातस्य कर्त्रभिधायित्वं कर्त्रधिकरणे (पू. मी. ३–४–४) निराकृतमिति भावः।

समीहितसाधनत्वं, कार्यत्वं वा लिङ्व्यापारो वा लिङर्थ इत्युक्तम्। तत्र स्वाभिमतं पक्षमाह—न्यायविदामिति। भावनागतं तद्द्वारा धात्वर्थगतं वेष्टसाधनत्वं लिङर्थ इत्यर्थः। तत्र पूर्वोक्तं दूषणमुद्धरति—न चेति। स्वरूपेण इष्टसाधनमिदमित्यनेन वेषेण। तर्हि केन रूपेणाभिधानं, तत्राह—प्रवर्तनेति। ननु प्रवर्तनारूपस्य वाच्यत्वे कथमिष्टसाधनताया विधित्वमित्याशङ्क्य प्रवर्तनामिष्टसाधनतायां पर्यवसाययति—प्रवृत्तिहेतुश्चेति। प्रैषादीत्यादिशब्देनाध्येषणमभ्यनुज्ञानं च गृह्यते। ज्यायसा हीनस्य नियोगः प्रेषणम्। समेन समस्याध्येषणम्। हीनेनोत्तमस्याभ्यनुज्ञानम्। फलितमाह—तेनेति। यथा त्वन्मतेऽभिधाव्यापारस्य प्रवर्तनारूपेणाभिधानादन्यलभ्यत्वादिदोषपरिहारः, तथाऽस्मन्मतेऽपि समीहितसाधनताया एव प्रवर्तनारूपेणाभिधानात् न संविद्विरोधादिदोषप्रसङ्ग इत्यर्थः।

एवंकारञ्च प्रवर्तनेति प्रवर्तनाप्रत्ययः कर्तव्यतावचनः।' (वि. वि. पृ. २४३) इत्यादि वदतोऽभिमतम्। एवञ्चानेकार्थत्वं कल्पितं न भवति। इतरथा हि प्रेषणमध्येषणमभ्यनुज्ञानमिष्टसाधनत्वञ्चेति बहवोऽर्थाः शब्दस्य कल्प्येरन्। प्रवर्तनासामान्यवाचित्वे तु लाघवं स्यात्।

तत्रापि तु राग-द्वेष-मोहादीनां प्रवृत्तिहेतूनामवाच्यत्वात्, एवं वक्तव्यं-योऽवगम्यमानतया प्रवृत्तिहेतुस्तदभिधायी लिङ्शब्द इति। न च कार्यमेव न्यायः-समकनीयोभिः प्रतिपाद्यमानं प्रैपादिव्यपदेशभाक् सर्वानुगतं शब्दार्थ इति साम्प्रतम्। अकार्यत्वाभ्युपगमेनैव याच्ञायां लिङ्प्रयोगादित्युक्तम्। तस्मात्प्रवर्तनासामान्यं शब्दार्थः।

एवञ्च—'विशेषा एव शब्दार्था दृष्टरूपान्वयेऽपि हि।
न च प्रवर्तनाबोध इष्टशक्तेर्विनाऽर्थवान्॥' वि. वि. पृ. ४४४

इत्यत्र श्लोके पूर्वार्धेन परमतमुपन्यस्य, उत्तरार्धेन स्वमतमुपन्यस्तवानिति व्याख्यातव्यम्। प्रवर्तनासामान्यमभिदधता लिङ्शब्देन निर्विशेषस्य सामान्यबोधस्यानर्थक्यापत्तेः, अपौरुषेये च वेदे पुरुषधर्माणां प्रैपादीनां विशेपाणामसम्भवात्पारिशेष्यादिष्टसाधनतैव बोध्यत इति।

## स्वोक्तार्थपरतया, वार्तिकस्य त्रेधा व्याख्यानं

'अभिधाभावनामाहुः' तं. वा पृ. ३७८ इत्यस्यापि वार्तिकस्यायमेवार्थः। अभिधीयत इत्यभिधा-प्रवर्तना। सैव च पुरुषप्रवृत्तिं भावयतीति भावनामाहुरिति।

---

इदमेव विधितत्त्वमभियुक्तसंमतमपीत्याह-इदमेवेति। इष्टाभ्युपायत्वादन्यो धर्मः दुःखरूपासु क्रियासु प्रवर्तको नास्ति। किं तु तदेव प्रवर्तकम्। तमेव धर्मं लिङ्वाच्यां प्रवर्तनां वदन्तीत्यर्थः। यतः प्रेरणासामान्यमेव विध्यर्थः। इष्टसाधनत्वं तु परिशेषलभ्यम्। अत एवानेकार्थत्वदोषोऽपि न प्रसज्यत इत्याह—एवमिति। इष्टसाधनत्वविशेषस्यैव लिङ्वाच्यत्वे गौरवं, सामान्यस्य वाच्यत्वे तु लाघवमित्याह-इतरथेति।

ननु प्रवृत्तिहेतवो धर्माः प्रवर्तनाः। ते च रागद्वेषादयः प्रेषणाध्येषणसमीहितसाधनत्वादयश्च। तत्र प्रवर्तनासामान्यस्याभिधानेन समीहितसाधनत्वादीनामिव रागद्वेषादीनामपि वाच्यत्वं स्यादित्यत्राह—तत्रापीति। लिङ्प्रत्ययस्य प्रमाणत्वात् ज्ञानद्वारेणैव तस्य प्रवर्तकत्वं वाच्यम्। न वाय्वादिवत् स्वरूपेण। अतः प्रैषादिगतमेव प्रवर्तनासामान्यं वाच्यमित्यर्थः।

ननु प्रवर्तनारूपमिव कार्यरूपमपि सामान्यं प्रैषादिष्वनुगतम्। अतस्तदेव लिङ्वाच्यं स्यादित्याशङ्क्य, तत्र पूर्वमेव दूषणमुक्तमित्याह-न चेति। अयमपि पक्षो ग्रन्थकर्तुः संमत एव। दूषणस्य फल्गुत्वादुत्तरत्र स्वेनैवास्य मतस्याङ्गीकाराच्च। निगमयति-तस्मादिति।

नन्वाचार्याः प्रवर्तनाविशेषं शब्दार्थमुक्तवन्तः। भवांस्तु सामान्यम्। तत्कथमित्याशङ्क्य तस्यापि तात्पर्यमाह—एवञ्चेति। दृष्टस्य प्रमाणावगतस्य सामान्यरूपस्य प्रवृत्तिहेतुत्वादिकस्यान्वयेऽपि सति समीहितसाधनत्वरूपविशेष एव शब्दार्थः। तज्ज्ञानस्यैव प्रवृत्तावुपयोगात्। सामान्यज्ञानस्य तु तत्रानुपयोगादिति प्रथमार्धस्य तात्पर्यम्। इदं परमतम्। उत्तरार्धं तु स्वमतप्रतिपादनपरतया स्वयमेव व्याचष्टे—प्रवर्तनेति। विशेषस्य शब्दार्थत्वे गौरवादिदोषात् सामान्यस्यापि विशेषपर्यवसानद्वारा प्रवृत्त्युपयोगाच्च सामान्यस्यैव शब्दार्थत्वमित्यर्थः।

अथवा अभिधायाः–शब्दस्य भावना–अभिधाभावना। सैव च प्रवर्तना। परसमवेताऽपि शब्देन पुरुषं प्रवर्तयता तत्सिद्धयेऽभिधीयमाना शब्दव्यापारत्वेनोच्यते। तामाहुरिति। अथ वा इष्टसाधनताभिधानमभिधा। सैव च भूतिकर्तृत्वं प्रतिपद्यमानायाः पुरुषप्रवृत्तेः प्रयोजकस्य शब्दस्य व्यापारो भावना। तामाहुः। कुर्वन्ति। ओदनपाकं पचतीति-वद्व्याख्येयम्।

तदेवं शब्दकर्तृकं प्रवर्तनारूपेष्टसाधनत्वाभिधानमेव शब्दभावनेति गीयते। तस्याः पुरुषप्रवृत्त्यर्थं प्रवृत्तेः। पुरुषप्रवृत्तिर्हि स्वर्गादिस्थानीया भाव्यम्। समीहित-साधनताविज्ञानन्तु परार्थप्रवृत्तशब्दव्यापारजन्यतया यागादिवत्करणम्। प्राशस्त्य-ज्ञानन्त्वितिकर्तव्यतेति विवेक्तव्यम्। प्रवर्तनेति समीहितसाधनतैवोच्यते। तदुद्देशेन हि कृतिः प्रवर्तत इति दर्शितम्।

---

ननु 'अभिधाभावनामाहुः' इति वदतः आचार्यस्याभिधाव्यापार एव लिङर्थ इति मतमिति प्रतीयत इत्याशङ्क्य, तदपि प्रतिपादितप्रमेयानुगुणतया व्याचष्टे–अभिधाभावनामिति। समीहितसाधनत्वगतप्रवर्तनैवाभिधानयोग्यतयाऽभिधाशब्देनोच्यते। तां लिङादयो वदन्तीत्यर्थः। अभिधेयस्याभिधानशब्देनाभिधानं तु क्लिष्टमिति मत्वा प्रकारान्तरेण व्याचष्टे–अथवेति। ननु शब्दव्यापारस्यैव प्रवर्तनात्वं भवतो न संमतम्। प्रेषणाध्येषणादिगतायाः प्रवर्तनायास्तु कथं शब्दव्यापारत्वमित्यत्राह–परसमवेतापीति। तत्फलोपकारकत्वेन तदभिधे-यत्वात् तद्गताया अपि तस्यास्तद्व्यापारत्वमुपचर्यत इत्यर्थः। अन्यसमवेतस्यान्यव्यापारत्व-कल्पनमपि क्लिष्टमेवेत्यतोऽपि प्रकारान्तरेण व्याख्यायते–अथवेति। लिङ्प्रत्ययस्य यः स्वार्थः, तदभिधानमभिधा। सैव भावना। तां लिङादयः कुर्वन्तीत्यर्थः। कथमभिधानस्य भावनात्व मित्यत्राह—भूतिकर्तृत्वमिति। भूतिः–उत्पत्तिव्यापारः उत्पादनापरनामधेयः। करोत्यर्थो भावनेत्यर्थः।

नन्वाहुरित्यस्य कथं कुर्वन्तीत्यर्थ इत्याशङ्क्य प्रयोगं दर्शयति—ओदनपाकमिति। यथा 'पाकं पचती'त्युक्ते पाकं करोतीत्यर्थो भवति, तथाऽभिधामाहुरित्युक्तेऽभिधां कुर्वन्तीत्यर्थो भवतीत्यर्थः। पूर्वव्याख्यानद्वयेऽर्थभावनागता प्रवर्तनारूपेष्टसाधनतैव लिङ्वाच्या शब्दभावने-त्युच्यते। अस्मिस्तु पक्ष एतादृशेष्टसाधनताभिधानं शब्दव्यापारो लिङाद्यनभिधेय एव शब्द-भावनेति प्रवर्तनारूपविधितत्त्वादन्यैव शब्दभावनेत्युक्तं भवति।

अमुमेव पक्षमाश्रित्य शब्दभावनास्वरूपं, तस्यार्थभावनावदाकाङ्क्षात्रयसंभवादंशत्र-यान्वयं च प्रतिपादयति–तदेवमिति। पुरुषप्रवृत्त्यर्थमिति। पुरुषप्रवृत्त्यर्थं लिङादिशब्दप्रयोगात् तेन यदर्थाभिधानं, तस्यापि प्रवृत्तिरेव फलमित्यर्थ। यागादिवदिति। यथाऽर्थभावनायाः स्वर्गार्थं प्रवृत्ताया मध्ये यागादिकमनिष्पाद्य तन्निष्पादनायोगात् परार्थप्रवृत्तस्य व्यापारस्य व्याप्यत्वरूपकरणलक्षणसंभवेन यागादिः करणं, तद्वत् प्रवृत्त्यर्थं प्रवृत्तायाः शब्दभावनाया भाव्य-रूपप्रवृत्तेः समीहितसाधनत्वमनवगमय्य तद्धेतुत्वायोगात् तज्ज्ञानं तस्याः करणमित्यर्थः। प्राशस्त्यज्ञानं त्विति। अर्थवादादिभिरिदं प्रशस्तं कर्मेत्यवगते, तत्रोत्कटा प्रवृत्तिर्जायत इति, प्राशस्त्यज्ञानं तस्याः फलोपकार्यङ्गमित्यर्थः।

'एव कारश्च प्रवर्तनावचनः प्रत्ययः' इत्यादिग्रन्थस्याविरोधः। न च सह प्रयोगविरोधः। प्रवृत्तिनिमित्तभेदात्। इष्टसाधनशब्दो हि तत्साधनतामेव साक्षादभिधत्ते। लिङादयस्तु प्रवर्तनारूपेण, कृत्यर्हतारूपेण वेति नास्ति पर्यायता।

तदिदं कर्तव्यतारूपं, प्रवर्तनारूपं वा समीहितसाधनत्वमेव लिङादिभिरभिधीयते—इत्येतावदेव रमणीयम्। स्वव्यापाराभिधानं दुरुपपादम्।

ग्रन्थानुगुण्यमपि नातीव दृश्यते। तथा हि—निषेधशास्त्रेषु प्रतिषेधस्य-वर्जनस्य नञाऽभिधेयस्य लिङादिभिर्विधिः, विधेर्वा प्रतिषेध इति वचनव्यक्तिद्वयमङ्गीकृत्य 'ब्राह्मणं न हन्यादि'त्यत्र पुंस्त्वाविवक्षां प्रतिपादयता प्रतिषेधविधावविवक्षामुपपाद्य, विधिप्रतिषेधेऽप्यविवक्षामुपपादयतोक्तं "विध्यर्थमपि निषेध्यार्थप्राप्त्यर्थमनूदितं हननं प्रतिषिध्य चरितार्थो नञ् न लिङ्गमपरं शक्नोति प्रतिषेद्धुम्' तं. वा. पृ. २१२-२१३ इति।

यदि हि स्वव्यापारो विध्यर्थः स्यात्, न तस्यानुवादोऽवकल्पते। न हि द्वेषादिनिमित्तायां हननादिप्रवृत्तौ लिङ्व्यापारः प्रवर्तकः प्राप्तः, 'यो न हन्यादि'त्यादिषु-

---

ननु यदि प्रवर्तनैव विध्यर्थः, तर्हि प्रवर्तना—कर्तव्यतयोरुभयोरपि शास्त्रे तत्र तत्र लिङ्वाच्यत्वव्यवहारः कथमित्याशङ्क्याह—प्रवर्तनेति। इष्टसाधनतायाः प्रवर्तकत्ववत् कृत्युद्देश्यत्वस्यापि संभवात् प्रवर्तनात्वं, कार्यत्वमिति वेषद्वयमपि संभवति। ततश्च येन केनापि वेषेणेष्टसाधनतैवाभिधीयत इति, नातिवैषम्यमिति न विरोध इति भावः। उक्तं दोषान्तरमपि परिहरति—न चेति। प्रवृत्तिनिमित्तं वाच्यम्। तद्भेदमेवोपपादयति—इष्टसाधनेति।

उक्तेषु चतुर्ष्वपि पक्षेषु चरम एव श्रेयानित्याह—तदिदमिति। प्रथमद्वितीयपक्षवत् तृतीयपक्षोऽपि न्यायासह इत्याह—स्वव्यापारेति। अस्मिन् पक्षे आत्माश्रयादिपरिहारो दृश्यत-इति भावः। नन्वस्य पक्षस्य 'अभिधाभावनामाहुरि'त्याचार्यग्रन्थानुगुण्यमपि विद्यत इत्याशङ्क्य—एतद्वाक्यस्य स्वारस्येऽपि, ग्रन्थान्तरानुगुण्यं नास्तीत्याह—ग्रन्थेति। 'ब्राह्मणं न हन्यादि'त्यत्र ब्राह्मणगतं पुंस्त्वं विवक्षितम्, उताविवक्षितमिति विचार्य, श्रुतत्वात्, अविवक्षाकारणाभावाच्च विवक्षितमित्याशङ्क्य, कथमत्र वचनव्यक्तिः। किं यो ब्राह्मणः, तस्याहननं कुर्यादिति नञर्थस्य निषेधस्य विधिः, उत यत् ब्राह्मणहननं कुर्यादिति तन्नेति विधेः प्रतिषेध इति विकल्प्य, प्रथमे तूद्देश्यविशेषणत्वात् लिङ्गमविवक्षितमित्युपपाद्य, द्वितीयेऽप्यविवक्षामुपपादयता आचार्येण विध्यर्थमित्यादिग्रन्थः पठितः। तद्विरोधोऽस्य पक्षस्येत्यर्थः।

निषेध्यार्थप्राप्त्यर्थमिति। निषेध्यरूपार्थस्य ब्राह्मणहननस्य प्राप्त्यर्थं-प्राप्तिप्रयोजकं प्राप्तिहेतुभूतमिति यावत्। तादृशं विध्यर्थमप्यनूद्य प्रतिषिध्य परिपूर्णो निषेधो न लिङ्गं प्रतिषेद्धुं समर्थ इत्यर्थः। अयं भावः—नह्येकेन निषेधेन च बहवोऽर्था निषेद्धुं शक्यन्ते, गौरवप्रसङ्गात्। ततश्च ब्राह्मणहननस्य विधिप्राप्ततया तत्प्रापकं विध्यर्थंश्चानूद्य प्रतिषेधतो निषेधस्य न लिङ्गरूपार्थान्तरनिषेधकत्वं युज्यत इति। आनुगुण्याभावमेव दर्शयति—यदि हीति। हनने हि रागद्वेषादिभिः स्वयमेव प्रवर्तते, न तु विधिवाक्यात्। अतो लिङ्व्यापारस्यातत्प्रवर्तकतया प्राप्त्यभावात् तदनुवादो न घटत इत्यर्थः।

---

१. विध्यर्थमित्यादितन्त्रवार्तिकसन्दर्भो जिज्ञासूनामुपकाराय निवेशितः ८० पृष्ठे द्रष्टव्यः।

लिङ्गाऽनूद्य नञा प्रतिषिद्ध्यते। ननु कर्तव्यताऽप्यनभिधेया। कथमनूद्यते। अननूदिता वा कथं निषिद्ध्यते। ननु भवन्मते समीहितसाधनता च हननस्य विद्यत-एवेति कथं निषिध्यते ? उच्यते। प्रवर्तना हि विध्यर्थः, कर्तव्यता च। महान्तमनर्थं जनयत्सु हननादिषु यदपि स्वल्पसुखसाधनत्वं, न तेन प्रवर्तना, कर्तव्यता वा। न हि तादृशे प्रेक्षापूर्वकारिणां कृतिः प्रवर्तते। ये तु महान्तमनर्थं न जानन्ति, ते स्वल्पसुख-साधनत्वादेव भ्रान्त्या कर्तव्यतां, प्रवर्तनां वा मन्यन्ते। सा शक्यतेऽनुवदितुं, निषेद्धुं वा। मया भ्रान्त्या भूतहननस्य या कर्तव्यता, प्रवर्तना वाऽवगता, सा नास्तीति। तस्मादनवद्यम्-इति।

न्यायागमानुसारेण श्रीमद्यज्ञात्मसूनुना।
पार्थसारथिमिश्रेण कृतोऽयं विधिनिर्णयः॥ ३॥

इति महामहोपाध्याय-यज्ञात्मसूरिसूनु-पार्थसारथिमिश्रेण विरचितायां न्यायरत्नमालायां विधिनिर्णयो नाम तृतीयं प्रकरणं समाप्तम्।



---

ननु भवतोऽपि न ग्रन्थानुगुण्यमस्ति। तथाहि—किं तन्निषिध्यते हननस्य कर्तव्यत्वं वा, समीहितसाधनत्वं वा। नाद्यः। भवन्मते कार्यत्वस्य लिङर्यत्वाभावेन विधिप्रत्ययेन तदनुवादा-योगात्। अननूदितस्य निषेधायोगादिति शङ्कते—नन्विति। द्वितीये तु प्रत्यक्षसुखसाधन-त्वेनेष्टसाधनत्वात् न तन्निषेधोऽपि शक्य इत्याह—समीहितेति। प्रवर्तनैव विध्यर्थः, न तु कार्यत्वमिति नास्माभिरभिहितम्। किं तु प्रवर्तना वा कार्यता वा विध्यर्थ इत्युक्तम्। ततश्च हनने समीहितसाधनत्वस्य निषेद्धुमशक्यत्वेऽपि तद्धेतुकयोः प्रवर्तना—कार्यत्वयोः महानर्थसाधनत्वात् निषेधः शक्य इति विध्यर्थनिषेधोऽस्मन्मते शक्य एवेति परिहरति—उच्यत इति।

कथं तदुभयं हनने नास्तीत्याशङ्क्याह—नहीति। अनर्थसाधनमुद्दिश्य कृतेरप्रवृत्तेः कृतिप्रवृत्तिहेतुत्वं, कृत्युद्देशत्वञ्च न संभवतीत्यर्थः। ननु यद्युभयमपि नास्ति, तर्हि प्राप्त्यभावादेव सुतरां तत्रानूद्य निषेधो नोपपद्यते इत्याशङ्क्य, भ्रान्त्यवगतयोस्तयोर्निषेध इत्याह—ये त्विति। तस्मात् चतुर्थ एव पक्षः श्रेयानिति निगमयति—तस्मादिति। प्रकरणार्थमुपसंहरति—न्यायागमेति। आगमः-ग्रन्थः।

इति श्रीधर्मपुरीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने विधिनिर्णयव्याख्यानं समाप्तम्।



## टिप्पणी

१. कश्चिदित्यादिना शालिकनाथेन पञ्चिकाप्रकरणे वाक्यार्थमातृकाया द्वितीयपरिच्छेदे ४२१ पृष्ठेऽभिहितस्यार्थस्य निरासायाऽनूदितः। तत्रत्योऽयं ग्रन्थसन्दर्भः 'अध्ययनविधेश्चाक्षर-संस्काररूपाध्ययनविधायकत्वाभ्युपगमात्'। तथा चाहुः—

'द्रव्यादीनां पुनः कस्मिन् स्वाध्यायोऽन्तर्गतो भवेत्।
त्रेधाऽपि प्रतिभात्यस्मिन् संस्कारत्वस्य निर्णयः॥'
'संस्कार्यंगणनायाञ्च युक्तैनाक्षरसंस्क्रिया।
स्वाध्यायो हि स्फुटं कर्म साक्षात् संस्क्रियतेहि सः'॥

इति। संस्कारविधिश्च न संस्कार्यं विनियुंक्ते। प्रमाणान्तरावसितोपयोगस्य शेषित्वात्। संस्कारपर्यवसायी संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयेत्'। प्र. पं. पृ. ४२१ इति।

२. सदाचारप्रामाण्याधिकरणस्थोऽयं वार्तिकग्रन्थो। तथा हि–'प्रतिषेधविधिपरो हि विधायकः शुद्धविधिप्रतिषेधासंभवात् ब्राह्मणजातिमात्रविशिष्टवधप्रतिषेधं विधाय निवृत्त-व्यापारो यदि लिंगमपरं ब्राह्मणे वधे प्रतिषेधं वा विदध्यात्, ततः प्रत्ययावृत्तिलक्षणो वाक्यभेदप्रसंगः।

येषान्तु विधि–प्रतिषेधौ नामात्यभिन्नौ वेदवाक्यार्थौ, तेषां प्रत्ययसंबन्धानुगृहीतशक्तिः अभावमात्राभिधानादग्रिकलब्धव्यापारो नञ्विध्यर्थमपि द्वेषाद्यर्थप्राप्तपूर्वोक्तन्यायविवक्षित-ब्राह्मणविशिष्टहननाविशिष्टस्याऽनूदितं प्रतिषिध्य चरितार्थो न लिंगमपरं ब्राह्मणवधविधिषु शक्नोत्यनावर्तमानः प्रतिषेद्धुमिति, श्रूयमाणमपि लिंगं प्रतिषेधं प्रत्यनुपयुज्यमानत्वाद-विवक्षितं भवति।

एषा हि वचनव्यक्तिः–यत् क्रोधादिवशेन 'ब्राह्मणं हन्यात्, ब्राह्मणो वा हन्तव्यः, तन्न–इति। विध्येकत्वपक्षे पुनरीदृशी वाक्ययोजना–यत् ब्राह्मणहननं, तन्न कुर्यादिति। यो वा ब्राह्मणः, तं न हन्यादिति ब्राह्मणविशिष्टहननं प्रतिषेधविधिः, शुद्धोद्दिष्टब्राह्मणविषय-वधप्रतिषेधविधिर्वा–इति।

सर्वथा ब्राह्मणोद्देशान्नेह मुच्यामहे वयम्।
न चोद्दिष्टस्य शक्येते लिंग–संख्ये विवक्षितुम्॥
नोपादेयत्वमेवैकं कारणत्वेन सम्मतम्।
विशेषणविवक्षायाः कारणं हि महत् विधिः॥
अनूद्यमानस्सर्वो हि यथाप्राप्तमनूद्यते।
तत्रानाकांक्षितं नाऽन्यत् विधेयेभ्यो विधीयते॥

ततश्च (ब्राह्मणो न हन्तव्यः, ब्राह्मणो न सुरां पिबेदि) त्युभयत्राऽप्यविवक्षितलिंग-संख्यत्वं सिद्धम्–तं. वा. पृ. २१२-२१३ इति।



## अथ 'व्याप्तिवादो नाम चतुर्थं प्रकरणम्

### प्रकरणप्रतिपाद्यार्थस्य प्रतिज्ञा

यत्र विप्रतिपद्यन्ते सम्बन्धे लिङ्ग-लिङ्गिनोः।
स्वरूपतः प्रमाणाच्च तत्र निर्णय उच्यते ॥ १ ॥

स्वरूपतस्तावत्कार्यकारणभाव-संयोग-समवायैकार्थसमवाय-विरोधान् लैङ्गिक-शब्दनिर्दिष्टाननुमानकारणत्वेन काणादाः सङ्गिरन्ते -'अस्येदं कारणं, कार्यं, संबन्धि, एकार्थसमवायि, विरोधि चेति लैङ्गिकम्' वै. द. ९-२-१ इति। अविनाभावं साधनस्य-साध्य-तदभावाभ्यामन्वय-व्यतिरेकस्वरूपं तत्स्वभाव-तदुत्पत्तिनिबन्धनं शाक्या मन्यन्ते। साध्येन साधनस्य व्याप्तिमन्ये। नियमरूपं मीमांसकाः।

प्रमाणतोऽपि विप्रतिपत्तिः। तत्स्वभाव-तदुत्पत्ती शाक्याः प्रमाणमाहुः। मानस-प्रत्यक्षमन्ये। ऐन्द्रियकमेवान्ये। तदपि प्राथमिकमेवेति केचित्। अपरे तु भूयोदर्शन-सहायं चरमं प्रत्यक्षं नियमप्रमाणं मन्यन्ते। अर्थापत्तिमन्ये। भूयांस्येव तद्दर्शनानि व्यभिचारादर्शनसहायानीत्याचार्याः।

तत्र वैशेषिकपरिगृहीतकार्यकारणभावादिमात्राभ्युपगमे कृत्तिकारोहिण्युदयादीनां गम्यगमकभावो न स्यात्, कार्यकारणभावाद्यभावात्। न च संबन्धिग्रहणेन सर्व-संग्रहः। तस्य संयोग-समवायमात्रपरत्वात्। सर्वपरत्वे च कार्यकारणभावादीनामपि ततः एव सिद्धेः, पृथगभिधानानर्थक्यम्। अपि चैवं वह्नेरपि धूमानुमानं स्यात्। कारण-त्वात्। वृक्षत्वेन च शिंशपात्वस्य। एकार्थसमवायात्। अथानियतत्वान्नायं प्रसङ्गः, तर्हि नियम एवानुमानाङ्गं। न कार्यकारणभावादि।

शाक्यपक्षेऽपि स्वभाव-कार्ययोरेवान्वयलाभेन हेतुत्वान्न कृत्तिकोदयादचिरोदि-तरोहिणीप्रतिपत्तिः सिद्ध्येत्। रसाच्च रूपानुमानम्। प्रवृत्तिसामर्थ्यरूपोपादान-सहकारिरसोपादानं रसादनुमीयते। प्रवृत्तिसामर्थ्याच्च रूपोपादानादुपादेयरूपा-नुमानमिति चेत्? न। अकार्यत्वात्। यद्यपि कार्यात्कारणं सहकारिसहितमनुमीयते। कारणात्तु प्रवृत्तिसामर्थ्यादपि न कार्यं शक्यमनुमातुम्। अकार्यत्वादतत्स्वभावत्वाच्च। अथ कारणमप्यनुमापकं, वह्नेरपि धूमानुमानप्रसङ्ग इत्युक्तम्। अपि चान्वयो-नामाऽनुगतिः। न च धूममूर्ध्वं गच्छन्तं भूमिष्ठो वह्निरनुगच्छति। शङ्कुच्छायां वा रविर्दिविष्ठो भूमिष्ठाम्। एतेन व्याप्तिः प्रत्युक्ता। न हि—

भूमिप्रतिष्ठितो वह्निर्धूमाग्रं व्योम्न्यवस्थितम्।
व्याप्नोति नियमस्तस्मात् संबन्धो लिङ्गलिङ्गिनोः ॥ २ ॥

---

१. अस्य प्रकरणस्य नायकरत्नव्याख्यानं नोपलब्धम्। न्यायरत्नाकरे—शास्त्रदीपिकायाः तर्कचरणे च प्रकरणार्थो ग्रन्थकृता विविच्य प्रादर्शीति, अलमक्षरक्षरणेनेति।

## स्वमतेन नियमशब्दार्थकथनं

यथोक्तम्–'नियमो नाम सम्बन्धः स्वमतेनोच्यतेऽधुना।' बृहट्टीका इति।

'यो यथा नियतो येन यादृशेन यथाविधः।
स तथा तादृशस्यैव तादृशोऽन्यत्र बोधकः॥' ३॥

यो भावो येन यादृशेन यावद्देशकालवर्तिना यथा—येन प्रकारेण संयोग-समवायैकार्थसमवाय-कार्यकारणभावादिना केनापि संबन्धेन साक्षात्परम्परया वा नियतत्वेन दृष्टान्तधर्मिष्ववधारितः, स तादृशो धर्म्यन्तरेषूपलभ्यमानस्तत्र तादृशं तद्देश-तत्कालवर्तिनं तथाविधसम्बन्धसम्बन्धिनमनुमापयति। तद्यथा–धूमो नभोवृत्तिरूर्ध्वं गच्छन्नातिदूरवर्तिना वह्निना नियतस्तथैव तं गमयति। नदीपूरस्त्वधुनातनोऽधोदेशगतश्चातिदूरवर्तिनीं वृत्तां वृष्टिम्। उदयस्तु चन्द्रगतः समुद्रगतां तत्कालां वृद्धिम्। तस्यैव नभोमध्यस्थितिस्तामेव वृद्धिं पञ्चदशनाडिकातिक्रान्ताम्। तादृश्यैव तया तस्या नियतत्वात्। एवमन्यत्राप्यूहनीयम्। नियम एव वार्तिके व्याप्तिशब्देनोच्यते॥

'संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना।
व्याप्यस्य गमकत्वञ्च व्यापकं गम्यमिष्यते॥' श्लो. वा. अनु. श्लो. ४ इत्यादिषु।

## धर्मकीर्तिना प्रमाणवार्तिकेऽभिहितस्य नियमे कारणद्वयस्यानुवाद–निरासौ

केन पुनः प्रमाणेनायं नियमोऽवगम्यते? कार्यकारणभावाद्वा स्वभावाद्वेति–केचित्। तदयुक्तम्। अकार्यकारणातदाकारात्मनां कृत्तिकारोहिण्युदयादीनां नियमाभावप्रसङ्गात्। अपि च पौर्वापर्यनियम एव कार्यकारणभावः। कथं च नियम एव नियमे प्रमाणम्, आत्माश्रयदोषापत्तेः। अपि च कार्यस्वभावयोरेव किं प्रमाणम्? प्रत्यक्षेण तावत्साहित्यमात्रं गम्यते। न तत्कार्यता, तत्स्वभावता वा। 'शतशोऽग्नौ धूमदर्शनात्, अनग्नौ चादर्शनात् तत्कार्यता धूमस्यावसीयत इति चेत्? न। स खलु यत्र दृश्यते, तत्र तस्यास्तिता। यत्र न दृश्यते, तत्र नास्तित्वं गम्यते। कार्यता तु कुतः? तस्मात्कार्यकारणभावस्यैवाप्रमाणकत्वात्, न तन्निबन्धनं नियमावधारणमवकल्पते।

तत्स्वभावता चाप्रामाणिक्येव। शिंशपा हि वृक्षात्मिका क्वचिद्दृष्टाऽपि न तत्स्वाभाव्येन नियन्तुं शक्यते। तन्मात्रानुबन्धित्वात्तत्स्वभावतायाः। न च शिंशपामात्रानुबन्धि वृक्षत्वमिति किञ्चित्प्रमाणमस्ति! सत्यपि सहोपलम्भे वृक्षत्वस्य व्यभिचारसंभवात्। न शिंशपात्वस्य क्वचिद्व्यभिचारो दृष्ट इति चेत्? तथाऽपि देशान्तरे कालान्तरे वा व्यभिचारसंभवात्सन्देहानिवृत्तिः। तन्न स्वभावतो नियमसिद्धिः।

## नियमस्य मानसप्रत्यक्षगम्यत्वनिरासः

केचित्तु मानसप्रत्यक्षविषयं नियममाचक्षते। तदयुक्तम्। मनसो बहिरस्वातन्त्र्यात्। भूयोदर्शनसहायं बहिः प्रवर्त्स्यतीति चेत्? न। तस्य देहाबहिर्भावात्। न खल्वक्षजत्वमात्रं प्रत्यक्षलक्षणम्। अनुमानादेरपि लिङ्गादिसहितमनोक्षजन्यतया प्रत्यक्षता मा भूत्। इन्द्रियार्थसंप्रयोगजं च प्रत्यक्षम्। चतुर्विधश्च संप्रयोगः–संयोगाद्-

द्रव्यग्रहणम्। संयुक्तसमवायात् गुण-कर्म-सामान्यानाम्। संयुक्तसमवेतसमवायात्- गुणत्वादीनाम्। तत्समवायात्तु गुणत्वादिगतसत्ताग्रहणम्। न चायं चतुर्विधोऽपि बाह्येन सह मनसः संभवति संप्रयोगः, तस्य देहादबहिर्भावात्।

येऽपि विभु मनः संगिरन्ते, तेषां यद्यपि मनो द्रव्यमाकाशवत् व्यापकं, तथाऽपि- (ते) कर्णच्छिद्रपरिच्छिन्नस्येव गगनस्य देहावच्छिन्नस्यैवेन्द्रियभावमातिष्ठन्ते मनसः। अतोऽसंभवी बाह्येन संप्रयोगः। अन्यथाऽनुमानादीनामपि मनःसंयुक्तार्थविषयत्वात् प्रत्यक्षत्वप्रसङ्गः।

ननु यदि चतुर्विध एव संप्रयोगः, कथं तर्हि शब्दग्रहणम्? न हि श्रोत्रस्याकाश-दिगहंकाराणामन्यतमात्मकस्य शब्दस्य च निष्क्रियतया तयोः संभवति संयोगः। तस्य कर्मजत्वात्। उच्यते। संयोग एवानयोः सन्निकर्षः। न चायं कर्मजन्यः। संयोगजसंयोगे व्यभिचारात्। नापि संयोगजन्यः। कर्मजे व्यभिचारात्। तदुभयानुगतं नैरन्तर्यमेव द्रव्यगतमस्य कारणम्। तच्च विभ्वोरपि संभवति।

भवतु व संयोगजसंयोगस्याप्रमाणकत्वाज्जनिमतः संयोगस्य कर्मजत्वम्। अव्यभिचारात्। तन्तुगत एव हि तुरीसंयोगस्तन्तौ पटभावमापन्ने पटगतोऽपि भवति। न तु संयोगान्तरबुद्धिस्तत्रास्ति, अप्रमाणकत्वात्। तद्यजः संयोगो विभ्वोर्भविष्यति, अनुमानात्। विभुनी द्रव्ये मिथःसंयुक्ते द्रव्यत्वे सति निरन्तरत्वात् घटाकाशवदिति। यदि तु नैरन्तर्यमेव संयोगः, तथाऽपि विभ्वोरपि अविहतः संयोगः। ननु द्रव्यधर्मः संयोगः। स कथं गुणभूतस्य शब्दस्य स्यात्? नायं गुणः, द्रव्याश्रयत्वे प्रमाणाभावात्। ननु न कार्यमनाश्रितं संभवति। सत्यम्। न तु शब्दस्य कार्यत्वम्, नित्यत्वात्।

## शालिकनाथोक्तस्यार्थस्यानुवाद-निरासौ

कश्चित्त्वेकेन्द्रियग्राह्यतया रूपादिवच्छब्दं गुणमिच्छति। तस्यापि वायावनैकान्तिकत्वम्। स्पर्शविरहे सतीति विशेषणेऽपि गोत्व-रूपत्वादिसामान्येषु व्यभिचारः। तेषां नेत्रैकगोचराणामपि गुणत्वाभावात्। अपि च यत् शब्दाश्रयत्वेनाभिमतं व्योम, तत् प्रत्यक्षमप्रत्यक्षं वा स्यात्। प्रत्यक्षत्वे तेनैव लोचनैकगोचरेण द्रव्यभूतेन हेतोर्व्यभिचारः। अप्रत्यक्षत्वे सति तस्य सप्रतिसाधनत्वम्। न ह्यप्रत्यक्षगुणत्वं प्रत्यक्षस्य शब्दस्य संभवति। शक्यत एव हि प्रयोक्तुम्-शब्दो न गुणः प्रत्यक्षद्रव्यगुणत्वरहितत्वे सति प्रत्यक्षत्वात् घटवदिति। तस्माद्युक्तमस्य द्रव्यत्वे संयोगात् ग्रहणमिति, चतुर्विध एव सन्निकर्ष इति। बाह्येन मनसः सन्निकर्षाभावात् न मानसप्रत्यक्षविषयत्वं नियमस्य धूमादिवर्तिनः संभवति। तत्र प्रमाणान्तरमिदं भूयोदर्शनसहायमनोजन्यं लिङ्गादिसहितमनोजन्यानुमानादिवत्प्रसज्येत। तच्चानिष्टं प्रमाणषट्काभिधायिनाम्।

## शालिकनाथोक्तस्यार्थस्यानुवादः

कश्चित्तु बहिरिन्द्रियविषयमेव नियममिच्छति। स हि मन्यते-वह्निधूमयोः सम्बन्धो देशकालानवच्छिन्न एव प्रत्यक्षेणावगम्यत इति। ननु सन्निहितदेशकालविषयत्वात्प्रत्यक्षस्य तदवच्छिन्न एव संयोगः। नैवम्। इदन्ता हि सन्निहितदेशकालावच्छेदः।

स च द्रव्ययोरेवावगम्यते, न संयोगस्य। संयुक्ताविमाविति हि प्रतीतिः। न पुनरयमनयोः संयोग इति। तस्माद्देशकालाभ्यां संयोगेन च द्रव्यमेवावच्छिद्यते, न तु संयोगस्य देशकालाववच्छेदकौ। तेनानवच्छिन्नः संबन्धो धूममात्रानुबन्धीति निश्चीयते। ततश्च धूमसत्त्वे देशकालान्तरादौ प्रमाणमपेक्ष्यते। न त्वग्निसंयोगः। तस्य पूर्वमेवावगतत्वात्। अग्नेस्तु धूमसंयुक्तस्यापि दृष्टस्य क्वचिद्व्यभिचारदर्शनादार्द्रेन्धनाद्युपाधिकृतोऽस्य धूमसंयोगः, न स्वाभाविकः। धूमस्य तु तादृशोपाध्यदर्शनात् स्वाभाविकमग्निसंबन्धित्वं नियतं भवति। न हि स्वाभाविकं व्यभिचरतीति।

## तन्निराकरणम्

अत्र वदामः। संविदेवात्र तावत्परिपन्थिनी। सा हि देश-कालाभ्यां संयोगमेवावच्छिन्दन्ती जायते। संयुक्तावेतौ वह्निधूमौ, संयुज्येते, संयोक्ष्येते इति संयोगस्यैव भावार्थस्य कालत्रयावच्छेदात्। सोऽयं गुरुमुक्तएव बाणो भवन्तं प्रहरति। कारकव्यापारो हि कालत्रयावच्छेद्यः, न कारकमिति। न चावश्यमिदंशब्देनैव कालो निर्देष्टव्यः। लडादिभिः सुतरां निर्देशसिद्धेः। यदि च स्वतन्त्रस्यैव द्रव्यस्य कालसंयोगः, न परतन्त्राणां गुणकर्मणां, ततो लडादीनां कालविशेषे स्मृतानां निर्विषयत्वं स्यात्। ते हि क्रियाया एव कालावच्छेदमुपदर्शयन्ति, न द्रव्यस्य। सा चेदनवच्छेद्या, कस्यैते कालसम्बन्धमभिदधीरन्।

मा भूद्वा देशकालाभ्यामवच्छेदावगमः संयोगस्य। तथाऽपि स्वाभाविकत्वमप्रमाणमेव। न ह्यवच्छेदानवगममात्रेणैव तदभावावधारणं सिद्ध्यति, सतोऽप्यनवगतिसंभवात्। अनिश्चिते चावच्छेदाभावे न स्वाभाविकत्वं सिद्ध्यति। सिद्धौ वा वर्तमानकालताऽपि स्वाभाविकी धूमस्य स्यात्। यथा ह्यग्निसंयोगो द्रव्यविशेषणम्। एवं कालोऽपि। ततश्चाग्निसंयोगवत्स्वाभाविकमेतत्कालसम्बन्धित्वमित्यापद्येत। तत्र यथाऽग्निसंयोगरहितस्य नावस्थानम्, एवं तत्कालसम्बन्धितामपहाय धूमस्य स्थित्यभावात् प्रत्यक्षेणैव कालान्तरसम्बन्धव्युदासात्क्षणिकता भावस्यापादितेति जितं सौगतैः।

अथानवच्छिन्नोऽपि कालसम्बन्धो न स्वाभाविकः, तथाऽग्निसंयोगोऽपि स्यात्। अथ स्वाभाविकमपि कालसम्बन्धमपहाय धूमस्तिष्ठेत्, अग्निसंयोगमप्यपहाय सम्भवत्यवस्थानमिति, न नियमावधारणम्। ननु प्रत्यभिज्ञायां कालान्तरसम्बन्धावगमात् पूर्वकालप्रहाणेनापि सिद्ध्यति धूमस्यावस्थानम्। अग्निसंयोगन्त्वपहाय न कदाचिद्धूमो दृश्यत इति, कथमसौ तमन्तरेण स्यात्। किमिदानीं प्रत्यक्षगृहीतैव क्षणिकता पश्चात्प्रत्यभिज्ञया बाध्यते। न ह्येवमभ्युपगमो भवताम्।

अपि चैवमस्तु नाम प्रत्यक्षावगतकालान्तरसम्बन्धस्य पूर्वावगतक्षणिकत्वबाधः। अनुमानेन तु कथमग्नेः प्रत्यक्षावगतक्षणिकभावस्य तद्भावेन कालान्तरसम्बन्धोऽवगम्यते। अपि चैवं प्रत्यक्षावगततत्कालसम्बन्धनियमविरुद्धस्यात्यन्तानवगतस्य कालान्तरसम्बन्धस्यानुमानेन ग्रहणे गृहीतग्राहित्वमनुमानस्य दूरापास्तं स्यात्।

अपि चानवच्छिन्नस्यापि कालसम्बन्धस्य व्यभिचारदर्शनादग्निसंयोगोऽपि व्यभिचरेन्न वेति सन्दिहाना न सहस्रेणापि पुरुषायुषैस्तदन्तं प्रतिलभेरन्।

यद्यपि दृश्यमानेषु देशकालादिषु प्रयत्नेनान्विष्टो व्यभिचारो न दृष्टः, तथाऽपि कचित्कदाचित्संभवति व्यभिचार इति शङ्कां को नाम निवारयेत्। न च प्रत्यक्षं तन्निवारणे शक्तम्, तस्य सन्निहितदेशकालमात्रव्यापारात्। नानुमानम्। तस्य नियमाव धारणाधीनत्वात्। तदधीने तु नियमे परस्पराश्रयदोषापत्तेः। स्वाभाविकत्वादव्यभिचारः-इति चेत्? स्वाभाविकत्वे एव प्रमाणाभावात्। अनौपाधिकत्वमेव स्वाभाविकत्वम्। न चोपाध्यनवगतिमात्रेण तदभावसिद्धिरित्युक्तम्।

अपि च स्वाभाविकं न व्यभिचरतीत्यत्र किं प्रमाणम्? न तावत्प्रत्यक्षं, नानुमानं, नाप्यन्यत्किञ्चित्। यथा दृष्टस्यानौपाधिकस्यापि कालसंबन्धस्य व्यभिचारः, तथाऽग्निसम्बन्धस्यापि स्यात्। अपि चान्ययोरेवाग्निधूमयोर्दृष्टान्तधर्मिणि सम्बन्धोऽवगतः। अन्यश्चायं पर्वतवर्ती धूमः। तस्याग्निसम्बन्धोऽनवगत इति कथं लिङ्गं स्यात्? अथ सामान्यं लिङ्गम्। तस्य संबन्धानवगमात्। देशकालाभ्यां सम्बन्धेन जात्या च सर्वैर्द्रव्यमेव विशेष्यते। न तु सम्बन्धस्य जातेश्च परस्परान्वयः। जातेरपि संयोगवत् द्रव्यविशेषणत्वात्। अथ द्रव्यद्वारेणास्ति जात्योरपि सम्बन्धः। तथाऽप्यार्द्रेन्धनाद्युपाधिरिवाग्नेर्धूमसम्बन्धस्तदभावे कालान्तरे तद्द्रव्याभावे तद्द्वारकः सम्बन्धोऽपि न स्यात्। द्रव्यान्तरद्वारस्तु कालान्तरसम्बन्धः प्रागनवगत इति कथमनुमानाङ्गम्? न च विशेषपरिहारेण सामान्ययोः सकृद्दर्शनेन शक्यावगमः सम्बन्धः।

किञ्च देशकालाभ्यामपि द्रव्यद्वारेण संयोगस्याप्यवच्छेद इति, नानवच्छिन्नत्वम्। यथा च जात्योर्द्रव्यद्वारकः सम्बन्धः स्वाभाविको भवति, एवमग्निसम्बन्धस्य तत्कालावच्छेदो द्रव्यद्वारकोऽस्तीति, सोऽपि स्वाभाविकः स्यादिति तत्कालप्रहाणेन न कालान्तरे सम्बन्धस्तिष्ठेदिति, असम्बन्ध एव कालान्तरेऽग्निधूमयोर्भवदुक्तया नीत्या निश्चेतव्यः स्यात्। न तु कालान्तरेऽग्निसम्बन्धशङ्काऽपि धूमस्य स्यादित्यलमतिनिर्बन्धेन[1]।

अपरं मतम्-शतशोऽग्नौ धूमदर्शनात्, अनग्नौ चादर्शनान्नियतोऽयमग्निनेति प्रतीतिस्तावदुपजायते तिरश्चामपि। न चेयमप्रमाणम्। सर्वदा सर्वेषां संवादित्वेन जायमानत्वात्। अतः प्रमाणमेवेदम्। तच्च षड्विधान्तर्भूतम्। तत्र नेदमनुमानं-सम्भवति, तस्य नियमावधारणाधीनत्वात्। न च शाब्दम्, अशब्दजन्यत्वात्। नोपमानम्, असादृश्यविषयत्वात्। नार्थापत्तिः, नियममन्तरेणानवकल्पमानस्य कस्यचिददर्शनात्। अभावस्तु भावरूपे नियमे दूरापास्त एव। नन्वयं विपक्षव्यावृत्तिरूपोऽभाव एव। न व्यावृत्तिमात्रं नियमः। शशविषाणादेः सर्वविपक्षव्यावृत्तस्य सर्वार्थनियमप्रसङ्गात्। व्यावृत्तिरपि सर्वविपक्षेभ्यो दुर्लभैव दृश्यादर्शनाभावात्। पारिशेष्यात्प्रत्यक्षमेवेदम्। न च प्रथमदर्शनेऽनवगमादप्रत्यक्षम्, रत्नतत्त्वस्येव भूयः-परिचयसचिवप्रत्यक्षविषयत्वोपपत्तेः।

## शंका

ननु वर्तमानविषयं प्रत्यक्षम्। तत्कथमनेन देशकालान्तरसंबन्धात्मा नियमः शक्यावगमः? उच्यते। न कालान्तरादिसम्बन्धो नियमः। किन्तु स्वरूपं धूमादीनाम्। तच्च वर्तमानमिति, युक्तं प्रत्यक्षग्राह्यत्वम्। न हि नियमं ग्रहीतुं देशान्तरादिसम्बन्धो-

---

१ अत्र वदाम इत्यारभ्य आलमतिनिर्बन्धेनेत्यन्तः प्रकरणपञ्चिकायाः खण्डनरूप इत्यवधेयम्।

ग्रहीतव्यः। कुड्यादीनामिव स्थिरं रूपम्। न हि तेषां कालान्तरसंबन्धोऽप्रत्यक्ष इति, तद्रूपमप्रत्यक्षं भवति। तथा सति नेदं रजतमिति पूर्वज्ञानबाधकत्वमुत्तरस्य न स्यात्, विषयभेदात्। पूर्वकाले हि रजतज्ञानेन रजतं प्रसञ्जितम्। उत्तरकाले च तदभाव इति विषयभेदात् कथं बाधकत्वम्? अतः स्थिरमेव रजतरूपं गृहीतमिति वक्तव्यम्।
आह च --'रजतं गृह्यमाणं हि चिरस्थायीति गम्यते।' बृहट्टीका। इति।

तद्वन्नियमरूपं गृह्यत इति, युक्तं प्रत्यक्षत्वम्॥ कीदृशं पुनरिदं रूपं धूमादीनाम्? नियतोऽयमग्निनेति नियमः। यदा यत्र धूमः, तदा तत्राग्निरित्यर्थः। तस्मादुपपन्नं प्रत्यक्षविषयो नियम इति।

## तन्निरासः

तत्रेदं वक्तव्यम्। किं प्रत्यक्षं सर्वं विद्यमानोपलम्भनम्, आहोस्विदविद्यमानोपलम्भनं प्रत्यक्षं नाम संभवति। सत्संप्रयोगजनितत्वेन विद्यमानोपलम्भनत्वस्य स्थितत्वात्। तथा च नियमविषयत्वासम्भवः। तस्य सर्वदेशकालव्याप्तिरूपत्वात्। अयमेव हि धूमस्याग्निना नियमः-यदखिलधूमदेशकालव्यापित्वमग्नेः।
यथोक्तम्-'यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत्।
स व्याप्यो व्यापकस्तस्य समो वाऽप्यधिकोऽपि वा॥' श्लो.वा अनु ५. इति।

यत्तु धूमस्वरूपं नियम इत्युक्तम्। अस्त्वेतत्। स्वरूपमपि तदग्निसम्बन्धाव्यभिचारात्मकमेव। कश्चासावव्यभिचारः? नान्यदतो यावद्धूमदेशकालमग्निसम्बन्धसद्भावात्। तथा च तस्मिन् प्रत्यक्षीक्रियमाणे देशान्तरादिसंबन्धः प्रत्यक्ष आपद्येत। तत्सम्बन्धातिरिक्तन्तु पाण्डुरत्वादिवद्धूमगतं नियमाभिधानमपरोक्षं रूपमीक्षत इति संविद्विरुद्धम्। यदि चेदं रूपान्तरं पाण्डुरत्वादिवत्संबन्धातिरिक्तं स्यात्, तस्मिन् प्रत्यक्षगृहीतेऽपि सर्वधूमदेशकालव्यापित्वमग्नेर्गृहीतं न स्यात्। न ह्यन्यस्मिन् गृहीते अन्यद्गृहीतं भवति, अतिप्रसङ्गात्। अगृहीते च देशकालाव्यभिचारे कथमनुमानोदयः? किञ्चेदं रूपान्तरमपि प्रत्यक्षेण गृह्यमाणं सन्निहितदेशकालावच्छिन्नमेव गृह्यत इति, न कालान्तरेषु नियमः सिध्येत्।

## दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यवर्णनम्

यदपि दर्शितं कुड्यादीनामिव स्थिरं रूपमिति। तदपि निरूपणीयम्। किं-तत्र स्थायित्वमेव गृह्यत इत्यभिप्रायः? किं वा यद्वस्तुतः स्थास्नु रूपं, तद्गृह्यते, किं वा स्थितियोग्यता? न तावत्पूर्वः कल्पः। स्थायिता ह्यनेककालावस्थानम्। सा कथं प्रत्यक्षेणैव गृह्यते। तस्य वर्तमानविषयत्वात्। यदि चेदं प्रत्यक्षेणैव गृह्यते, ततः स्थायिताप्रसिद्धये प्रत्यभिज्ञादरो निरर्थकः स्यात्। द्वितीये तु कल्पे कुड्यरूपमेव तत्। नान्यत्। एवमिहापि यद्वस्तुतो नियतधूमस्वरूपमेव तत्प्रत्यक्षमित्येतावत् सिद्ध्येत्। न च तावता किंचित्प्रयोजनमस्ति। योग्यता तु सर्वभावानामर्थापत्तिगम्येति, प्रत्यक्षगम्यतानुपपत्तिः। यस्तु घटकुड्यादिषु दृष्टमात्रेषु स्थायित्वावगमो लौकिकानां, स तादृशां स्थायित्वस्य पूर्वमेवानुगमादानुमानिकः। स्पष्टं चास्यानुमानिकत्वम्, उक्तरूपत्वात्। तथा हि ईदृशीयमवगतिः-यदि शस्त्रादिना नेतच्छिद्यते, ततः कियन्तश्चित्कालं स्थास्यतीति। एवं रजतादिष्वप्यानुमानिकमेव तद्रूपस्य स्थायित्वम्। अनेनैवाभिप्रायेणोक्तम्—'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते'। बृहट्टीका। इति।

एतदेव बाधकस्यापि तत्त्वम्। अनुमानेन ह्येतदवगतं रजतस्य सतो नाकस्माद्तद्भावः संभवतीति। अतद्रूपस्य वा तद्रूपतेत्युभयोरपि कालयोरेकरूपमेवेदमिति स्थिते, पूर्वमेवावगतं रजतरूपमुत्तरकालं व्याप्नोति। उत्तरकालावगतश्चातद्भावः तत्पूर्वकालम्। तेन समानविषयतया पूर्वावगतस्य रजतरूपस्य भवत्युत्तरकालभुवा नेदं रजतमित्यनेन बाधः। यत्र त्वनुमानेनैकरूपत्वं न कालद्वयेऽपि वस्तुनोऽवगतं, तत्र न भवत्येव बाधः। यथा बदरफले श्यामप्रत्ययस्य पाककालभुवा रक्तप्रत्ययेन। प्रत्यक्षेण तु स्थायित्वावगमे तत्रापि बाधः स्यात्। तस्मान्न प्रत्यक्षेण स्थायित्वं स्वध्यवसानम्। एवं नियमोऽपि। सर्वदेशकालव्याप्तिरूपत्वान्न।

## स्वाभाविकसंबन्धस्य प्रत्यक्षत्वासंभवेन नियमत्वनिरासः

ननु स्वाभाविकत्वं संबन्धस्य नियमः, न तु कालान्तरसम्बन्धः। तच्च वर्तमानमेवेति, युक्तं यत्प्रत्यक्षेण गृह्यते। किं पुनरिदं स्वाभाविकत्वम्। न तावत्सदातनत्वम्, कादाचित्कस्य तदयोगात्। अथ स्वरूपनिमित्तत्वम्। अग्नेरपि धूमसंबन्धे स्वरूपं निमित्तमिति, तस्यापि धूमसंबन्धो नियतः स्यात्। नन्वार्द्रेन्धनादिकृतोऽस्य धूमसम्बन्धः, न स्वरूपनिमित्तः। सत्यमार्द्रेन्धनादि निमित्तम्। स्वरूपमपि निमित्तमेव। न ह्यसति संबन्धिस्वरूपे, सम्बन्धो भवति। स्वरूपधर्मत्वमिति चेत्? स एव दोषः। अग्निस्वरूपस्यापि धर्म एव संयोगः।

अथ स्वरूपैकनिमित्तकः सम्बन्धः स्वाभाविकः। स्वरूपमेव निमित्तम्। निमित्तान्तोवह्नेस्तु धूमसंबन्धे स्वरूपातिरिक्तोऽप्यार्द्रेन्धनादिरस्त्येव हेतुः। धूमस्य वह्निसम्बन्धे न रमस्तीति मतम्। एवन्तर्हि न प्रत्यक्षगम्यं स्वाभाविकत्वम्। न हि तेन निमित्तान्तराभावः शक्यते प्रत्येतुम्, भावविषयत्वात्प्रत्यक्षस्य। दृश्यादर्शनात्तु निमित्तान्तराभावः प्रतीयत इति, प्रत्यक्षगम्यत्वानुपपत्तिः।

अपि च धूमस्याग्निसम्बन्धे न स्वरूपमेव निमित्तम्। अग्न्यादीनामपि निमित्तत्वात्। तस्मात्स्वरूपाव्यभिचार एव स्वाभाविकत्वम्। अव्यभिचारश्च सकलतद्देशकालव्याप्तिरिति प्रत्यक्षगम्यत्वानुपपत्तिः, तस्य वर्तमानविषयत्वात्। अपि च स्वाभाविकताऽपि वर्तमानस्यैव संन्निहितस्य संबन्धस्य निश्चेतुं शक्यते। नातीतानागतव्यवहितविप्रकृष्टानां संबन्धानाम्। सन्ति हि बह्वयो वह्निधूमसम्बन्धस्य व्यक्तयः। कथं तासां सर्वासां धूमस्वरूपमेव निमित्तमिति संप्रयुक्तविषयेण प्रत्यक्षेण गम्यते। अथ सम्बन्धसामान्यस्य तन्निमित्तत्वम्। न। तस्य नित्यत्वेन निमित्ताभावात्। इदञ्च सकृद्दर्शनगम्यनियमपक्षेऽपि तुल्यमेव दूषणम्। तत्रापि हि संप्रयुक्तस्यैव संयोगस्य धूमनिमित्तताऽवगम्यते, नातीतादीनाम्। स च कालान्तरे नष्ट इति प्रत्यक्षावगतस्य संयोगस्य रूपनिमित्तस्य न कालान्तरेऽनुमानम्। तस्मान्न कथञ्चित् प्रत्यक्षविषयत्वं नियमस्येति स्थितम्।

अपरे त्वर्थापत्तिगम्यं नियमं मन्यन्ते। यदेतच्छतशोऽग्नौ धूमदर्शनम्, अनग्नौ च कचिदप्यदर्शनमिदमसति धूमस्याग्निना नियमेऽनुपपन्नम्। अनियतो हि कदाचित्कचिदप्यग्निं विनोपलभ्येतेति। तदप्यनुपपन्नम्। अदर्शनं तावदभावादेवोपपन्नम्। न तु तावता सर्वत्रानग्नौ नास्तीति शक्यमवध्यवसातुम्, प्रमाणाभावात्। दर्शन-

मात्रमपि तव भावादेवोपपन्नम्। न तु तावन्मात्रेण सर्वत्राग्नावस्त्येव धूम इति स्वध्यवसानम्। तस्माद्वक्तव्यं नियमे प्रमाणम्?

## स्वपक्षस्योपपादनम्

उच्यते। किमत्र वक्तव्यम्?

यतः—स्वयं वार्तिककारेण प्रमाणमृजु दर्शितम्।
भूयोदर्शनगम्या हि व्याप्तिरित्यभिधानतः॥ ४॥

अनृजवो हि पूर्वमार्गो महान्तं क्लेशमाश्रित्यानुभवानारूढा वैयात्यमात्रेणागतिकगतिन्यायेनाश्रिताः। नियतो धूमोऽयं नूनमग्निनेत्यूहरूपस्य ज्ञानस्य संविद्विरुद्धप्रत्यक्षत्वाश्रयणात्। अस्ति चायमृजुमार्गो भूयोदर्शनगम्यो नियम इति। किं पुनरिदं भूयोदर्शनं नाम? प्रमाणं नैकं किंचिन्नियम्य वक्तुं शक्यते। किन्तु येनैव प्रत्यक्षादीनामन्यतमेन प्रमाणेन लिङ्गस्य भूयःसाहित्यं लिङ्गिना गम्यते। तदेव विपक्षादर्शनप्रमाणसहायं नियमप्रमाणं भवतीति।

## शंका

ननु भूयोभिर्दर्शनैस्तत्र तत्र साहित्यं गम्यते, न तु सर्वत्र। दर्शनानां सर्वेषां स्वविषयपर्यवसानात्। अनन्तप्रत्यक्षगम्यो हि सर्वत्र सहभावः। स जीववद्भिर्दुर्लभः। विपक्षादर्शनादपि प्रत्यासन्नेष्वेव विपक्षेषु परमभावो गम्यते। सर्वविपक्षव्यावृत्तिस्तु दुर्लभैव। दृश्यादर्शनाभावात्। अदर्शनमात्रेण चाभावासिद्धेः। तत्कथं नियमस्य सर्वदेशकालव्याप्तिरूपस्य भूयोदर्शनगम्यत्वम्?

एतच्च स्वयमेवाचार्येण शङ्कितम्।

यदाह—'अन्वयो हि प्रतिव्यक्त्यं व्यापकस्य न दृश्यते।
अनन्तेन हि लभ्येत स प्रत्यक्षादिजन्मना॥' बृहट्टीका। इति।

तथा—'नाभावेन विपक्षाद्धि हेतुभावः प्रतीयते।' बृहट्टीका। इति च।

सर्वविपक्षाभावो न लभ्यत इत्यर्थः। अत्र च समर्थनमुक्तम्—

'तत्रास्यादृष्टिमात्रेण गमकः सहचारिणः।' इति।

तत्रेति-विपक्ष इत्यर्थः। एतदुक्तं भवति-मा नाम सर्वविपक्षाभावो लिङ्गस्य सैत्सीत्। अदर्शनन्तु विपक्षेषु लिङ्गस्यास्त्येव। तावता च सहचारी दृष्टो धूमादिः सहचारिणोऽग्न्यादेर्गमको भवति।

यत्तु सहचारित्वमपि सर्वत्र दुर्लभं द्रष्टुमित्युक्तं। तत्राप्युत्तरमुक्तम्—

'दुर्लभं सहचारित्वं सर्वत्रेति यदुच्यते।
'द्रष्टुं न नाम सर्वत्र द्वित्रयोर्दृश्यते ध्रुवम्।' बृहट्टीका। इति।
'साहित्ये मितदेशत्वात्प्रसिद्धे वह्निधूमयोः।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्पते॥' श्लो. वा. अर्था. श्लो. ४२ इति॥

## नियमस्य भूयोदर्शनगम्यत्वकथनं

अयमर्थः—मा नाम सर्वत्र सहचारित्वं दर्शि। द्वित्रयोस्तु प्रदेशयोरीषत्करं दर्शनम्। तावता चासति व्यभिचारदर्शने भवत्यनुमानम्। यदि हि सकलदेशकाल-व्याप्तिरूपो नियमोऽनुमानाङ्गमस्माभिरुपगम्येत, ततः स्यादुपालम्भः। न त्वेवमस्माभि-रुच्यते। किन्तु यत्र यत्र धूमादिकं दृष्टं, तत्र तत्र सर्वत्र नियमेनाग्न्यादिसाहित्यम्, अनग्नौ चादर्शनमित्येतावदेवानुमानोदये कारणम्। एतावदेव हि लौकिकानां धूमोऽग्निं गमयति। न तु सकलसपक्षविपक्षान्वयव्यतिरेकावगतिमपेक्षते। येन दुर्लभं प्रमाणं स्यात्। तेन न सकलदेशकालापेक्षया नियमाभिधानम्। अपि तर्हि दृश्यमानेषु देशकालेषु यो लिङ्गस्य लिङ्गिसाहित्यनियमः, स एव नियम इत्युच्यते। तस्मात्तन्मात्र-मेवानुमानाङ्गम्। तच्च भूयोभिरेव दर्शनैः सुगममिति, नाप्रमाणं लिङ्गिसाहित्यनियमः।

यथाऽऽह—'सहत्वदृष्टिमात्रेण गमकः सहचारिणः।' बृहट्टीका। इति।

कियद्भिः पुनःसाहित्यदर्शनैरनुमानम ? को नामैतत्संचष्टे। यावद्भिर्दृश्यते, तावद्भिरेव। न तु संख्याय वक्तुं शक्यते। येऽपि भूयोदर्शनसहायप्रत्यक्षगम्यं नियममाहुः, येऽपि सकृद्दर्शनेऽपि गृहीते नियमे उपाध्याशङ्कानिराकरणार्थमर्थयन्ते भूयोदर्शनं, तेऽपि नैवं संचक्षते। तथा वयमपीति न कश्चिद्विशेषः।

## ज्ञातसंबन्धपदेनैकदेशस्य ग्रहणं नतु प्रमातुरित्यर्थवर्णनम्

किमिदानीं सकलधूमदेशकालव्यापित्वमग्नेर्नावगन्तव्यमनुमित्सता ? सत्यं नावगन्तव्यम्। नन्वेवं सामान्यतोऽप्यज्ञातसम्बन्धः पक्षैकदेशी कथमिव ज्ञातसम्बन्ध-पदेनाभिधीयते। नानेन पक्षैकदेशिनोऽभिधानम्। अपि तु दृष्टान्तैकदेशिनः।

तदयं भाष्यार्थः—अन्यस्मिन्नेव महानसाद्येकदेशिनि धूमाग्न्येकदेशाभ्यां ज्ञातसम्बन्धे सति तदेकदेशं धूममन्यत्र पर्वतादौ तस्मिन्नेव वा महानसे कालान्तरे दृष्ट्वाऽग्निरनुमीयते। लोके तथा दर्शनात्। तथा च ज्ञातसम्बन्धपदेन ज्ञातुर्निर्देश इत्युक्त्वा, अथ वा न प्रमातुः। किन्तु प्रमेयस्य कस्यचिन्निर्देशः। न ज्ञातुरित्यर्थः।

कस्य प्रमेयस्यैकदेशिन इत्यपेक्षायां दृष्टान्तैकदेशिन इत्युक्तम्।

यथाहुः—'एकदेश्येकदेशाभ्यां कश्चिच्चेज्ज्ञातसंगतिः।
तत्तुल्योऽन्यः स वा ताभ्यां विभागेनानुमीयते॥' बृहट्टीका। इति।

स वा ताभ्यामिति कालान्तराभिप्रायम्। एवञ्च वदन् ज्ञातसम्बन्धपदेनैक-देश्यन्यपदार्थपक्षे दृष्टान्तैकदेशिनोऽभिधानमित्याह।

भवतु नामैवं यथादृष्टप्रदेशेषु साहित्यनियमादेवानुमानम्।

## शंका—समाधानाभ्यामानुमानिकत्वव्यवस्थापनम्

यस्त्वयं यत्र यत्र धूमः, तत्र तत्राग्निरिति भूयोदर्शनतोऽवगमः, स कथम् ? न ह्यसौ नास्ति। न चाप्रमाणम्, सर्वदा सर्वेषां दृढत्वेन जायमानत्वात्। तदयं कस्मिं-श्चित्प्रमाणेऽन्तर्भवतीति वक्तव्यम् ?

उच्यते—आनुमानिकोऽयमवगमः। ज्ञातसम्बन्धस्योपजायमानत्वात्, परोक्षरूपत्वाच्च। नैन्द्रियकः, साक्षात्कारित्वाभावात्, संविद्विरोधाच्च धूमस्य हि बहुषु देशकालेष्वग्निना साहित्यमुपलब्धवतो भवत्यनुमानम्—अन्येऽप्यतीतानागतविप्रकृष्टाः सर्व एव धूमवन्तोऽग्निमन्तो धूमवत्त्वात् परिदृष्टमहानसादिवत्, इति। तेन यथालोकं प्रमाणसामग्र्यनुसरणाद्धर्म्यन्तरगतसाहित्यनियमादेव धर्म्यन्तरेऽनुमानमित्यनवद्यम्।

आह च—'तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी।
देशे यावति काले वा व्याप्यता प्राङ्निरूपिता॥
तस्य तावति तादृक् स्यात् दृष्टधर्म्यन्तरे पुनः।
व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः॥' श्लो.वा.अनु.श्लो १० ११इति।

यादृशतादृशशब्दाभ्यां दृष्टान्तपरिदृष्टरूपान्न्यूनरूपस्य न लिङ्गत्वं, नापि लिङ्गित्वमिति दर्शितम्। न हि विना धूमत्वं पाण्डुरत्वमात्रेण कपोतादिभ्योऽग्निमनुमिमते लौकिकाः। नाप्युष्णवह्निनियतस्तृणविकारो हिमे दृष्टः प्रत्यक्षावगतशैत्यविरोधादौष्ण्यबाधे सति अनुष्णमेव वह्निमनुमापयति। यथालोकं च प्रमाणगतिः परोक्षकैरनुसरणीया, न तद्विरोधेन।

### अप्रयोजकानामाभासत्ववर्णनम्

तदनेन सर्वेषामप्रयोजकहेतूनामाभासत्वं दर्शितम्। दृष्टान्तपरिदृष्टरूपान्न्यूनरूपो हेतुरप्रयोजक इत्युच्यते। पक्षसपक्षसम्बन्धभेदमात्रन्तु सोढव्यम्। सर्वानुमानेषु तथा दर्शनात्। तदतिरिक्तन्तु रूपमविकलमेवाङ्गीकर्तव्यम्। तेन निषिद्धत्वसहितस्य हिंसात्वस्याधर्मत्वेन साहित्यमुपलब्धं ब्राह्मणहननादिष्विति, विनाऽपि निषिद्धत्वेन हिंसात्वमात्रान्नाग्नीषोमीयहिंसायामधर्मत्वमनुमातुं शक्यम्। निषिद्धत्वस्य तु विनाऽपि हिंसात्वेन गुर्वङ्गनागमनादावधर्मत्वसाहित्यं दृष्टमिति, तदनुमापकम्। यथाऽध्ययनादिकार्यवतः शिष्यस्यासकृदुपाध्यायसाहित्यमवगतमिति, न शिष्यमात्रेणाध्यापकानुमानं। तथा देवदत्ततनयानां श्यामत्वसाहित्यं गर्भपरिणामसमयोपभुक्ताशितपीतादिविशेषनिमित्तमिति, तदभावे देवदत्ततनयत्वमात्रेण न तत्तनयान्तरस्य श्यामत्वानुमानम्।

### ईश्वरसाधकस्य वैशेषिकाद्युक्तानुमानस्य निरासः

'एतेन संनिवेशविशिष्टतया तनु-तरु-महीधरादीनां घटादिवदुपलब्धिमत्कर्तृकत्वानुमानं प्रत्युक्तम्। तथा हि येषु हस्तादिव्यापारविशेषेण संनिवेशाः शक्यन्ते रचयितुं, तेषामेव घट-पट-गृहादीनामुपलब्धिमत्कर्तृकत्वम्। तदभावे पारिणामिकानामङ्गदेहादीनां सन्निवेशविशेषमात्रेण कथं तदनुमानं पाण्डुरमात्रादिव वह्न्यनुमानम्? तथा शरीरेन्द्रियादियुक्तबुद्धिमत्कर्तृत्वेन साहित्यं संनिवेशविशिष्टानामुपलब्धम्। तच्च दृश्यादर्शनाद्दूर्वाङ्कुरादिषु निषिद्धम्। तस्मिन्निषिद्धे बुद्धिमन्मात्रं शरीरादिरहितं नानुमातुं शक्यम्। तृणादिविकारादिव हिमेऽनुष्णवह्न्यनुमानम्।

---

१. मण्डनाचार्यैः—'सन्निवेशादिमत्त्वं बुद्धिमद्धेतु यद्यपि।
प्रसिद्धेस्सन्निवेशादेरेककारणता कुतः।'
इति कारिकयोक्तमर्थं मनसि निधाय तन्निरस्यति एतेनेत्यादिना।

न चैवं सर्वानुमानोच्छेदप्रसङ्गः। सर्वविशेषपरिहारेण धूमत्वसामान्यस्य वह्नित्वसामान्येन साहित्यमवगतम्। पर्वते च तदविकलमेव दृष्टमिति, युक्तं तत्र तदनुमानम्। सामान्य-मेवानुमीयते। न विशेषः। अनुगत्यभावात्। अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ प्रत्यक्षेणवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमिति, न सिद्धसाध्यता। सामान्यस्यापि चास्त्येव संयुक्तसमवायसम्बन्धः–पर्वतेनेति, युक्तं तत्र तस्यानुमानम्। ननु देशविशेषादपि पदार्थस्वरूपमन्यथा भवति। क्वचिद्धि वृश्चिकदंशादपि मरणं भवति, क्वचिन्न। तथा धूमस्यापि देशान्तरे–अग्निव्यभिचारशङ्का भवेत्। सत्यमेषा भवति। सा तु तद्देशादागतेभ्यः श्रुत्वा शक्यते निरसितुमिति, सर्वमवदातम्।

तेन यस्य यादृशस्य सामान्यस्य विशेषस्य वा येन यादृशेन सामान्येन विशेषेण वा यथादृष्टेषु देशकालेषु साहित्यं येन केनापि सम्बन्धेन नियतमुपलब्धं, तदेव तादृशमेव देशान्तरकालान्तरादौ दृष्टं तस्य तादृशस्य साहित्यनियमादेव बाधकं भवति। दृष्टप्रदेशेषु भूयोभिरेव दर्शनैर्व्यभिचारादर्शनमात्रसहायैः साहित्यनियमः शक्यावगम इति-सिद्धं नियमरूप एव लिङ्गस्य लिङ्गिना संबन्धः, स च भूयोदर्शनप्रमाणकः–इति।

पार्थसारथिमिश्रेण वार्तिकोक्तानुसारतः।
यथाप्रतीति निर्णीतो नियमः सप्रमाणकः॥ ५॥

इति श्रीयज्ञात्मसूरिसूनुमहामहोपाध्याय पार्थसारथिमिश्रेण विरचितायां
न्यायरत्नमालायां व्याप्तिवादो नाम चतुर्थं प्रकरणं समाप्तम्।



## वाक्यार्थनिर्णयो नाम पञ्चमं प्रकरणं

### प्रकरणार्थप्रतिज्ञा

वाक्यार्थसंविदो मूलं बहुधा वादिनो विदुः।
तत्र वार्तिककारीयैर्न्यायमर्गः प्रदर्श्यते ॥ १ ॥

तत्र केचित्तावदविभागमेव वाक्यं व्यञ्जकध्वनिभेदात्तेन तेन वर्ण-पद-विपर्यासात्मनाऽवगम्यमानं तस्य तस्य वाक्यार्थस्य प्रतिपादकमिति मन्यन्ते।

अन्ये त्वेवंविधमेव ज्ञानं वाक्यम्, तदनन्तरञ्चानेकजाति-गुण-द्रव्य-क्रियासंसर्गावभासं जायमानं विज्ञानमेव वाक्यार्थः। कार्यकारणभाव एव च वाक्य-वाक्यार्थयोः-सम्बन्ध इति प्रतिजानते। उभयस्मिन्नपि पक्षे काल्पनिकपद-पदार्थसम्बन्धव्युत्पत्तिरभ्युपायः।

अपरे तु पदवद्वाक्यमपि 'पूर्वपूर्ववर्णसंस्कारसचिवोऽन्त्यो वर्णो वाचकः' इत्यादिना

---

संप्रत्यभिहितान्वयनिर्णयाख्यं प्रकरणमारभते—वाक्यार्थसंविद इति। वार्तिककारीयैर्न्यायैः-आचार्याभिमतयुक्तिभिः। व्युत्पन्नस्य पुरुषस्य तावत् लोके वाक्यादर्थप्रतीतिर्जायत एवेति सार्वजनीनमेतत्।

तत्र तावत् वैयाकरणाभिमतं तन्मूलमाह—केचित्तावदिति। क्रमिकैराशुतरविनाशिभिः वर्णैः प्रत्येकं, यौगपद्येन च वाक्यार्थप्रतीतेरसंभवात् तत्तद्वर्णाभिव्यङ्ग्यमखण्डं स्फोटाख्यं शब्दतत्त्वं तन्मूलमेषितव्यमिति। अविभागम्—अखण्डम्। व्यञ्जकध्वनिभेदात्—व्यञ्जकवर्णभेदात्। वर्णपदविपर्यासात्मनाऽवगम्यमानं—वर्णविपर्यासे सति पदं पदान्तरात्मना, पदविपर्यासे सति वाक्यं वाक्यान्तरात्मना अभिव्यज्यमानम्। विपर्यासो नाम तत्स्थाने वर्णान्तर-पदान्तरसंनिवेशः। तस्य तस्य-नानारूपस्य।

संप्रति बौद्धैकदेशिविज्ञानवादिनोऽभिमतं तन्मूलमाह—अन्ये त्विति। ते हि मन्यन्ते—विज्ञानमेकमेव तत्त्वम्। तदुपरागात् प्रतीयमानं वाचकं शब्दजातं, वाच्यं द्रव्यक्रियात्मकमर्थजातञ्च विज्ञानादभिन्नं विज्ञानात्मकमेव। अतो वाक्यमपि ज्ञानं, वाक्यार्थोऽपि ज्ञानमिति। एवंविधं—शब्दगोचरम्। तदनन्तरं—शब्दगोचरवाक्यात्मकज्ञानानन्तरम्। एतदुक्तं भवति—शब्दात्मकं ज्ञानं—वाक्यम्। अर्थात्मकं ज्ञानं वाक्यार्थ इति। तस्मिन् मते वाक्य—वाक्यार्थरूपयोः पूर्वोक्तज्ञानयोः न मतान्तरवत् प्रतिपाद्यप्रतिपादकभावसंबन्धोऽभिमतः। किंत्वन्य इत्याह—कार्यकारणभावश्चेति। अगृहीतसंबन्धस्य वाक्यार्थप्रतीत्यभावात् व्युत्पत्तिराश्रयणीया। सा च पक्षद्वयेऽपि वाक्यस्याखण्डत्वेन पदभेदाभावात् कथमित्यत आह—उभयस्मिन्निति। तत्त्वतो वाक्यस्याविभागत्वेन पदभेदाभावेऽपि व्यञ्जकवर्णादिभेदात् विभक्ततया परिकल्पितानां पदानां पदार्थेषु व्युत्पत्तिरुपपद्यते। ·ैव वाक्यात् वाक्यार्थप्रतीतावुपायतयाऽऽश्रीयत इत्यर्थः।

संप्रति नैयायिक-वैशेषिकाभिमतं तन्मूलमाह—अपरे त्विति। इत्थं हि तन्मतस्थितिः—वर्णानां प्रत्येकं पदार्थवाचकत्वेऽतिप्रसङ्गात्, आशुतरविनाशित्वेन समुदायग्रहणासंभवात् पूर्वपूर्व-

मार्गेण सावयवमेव प्रतिलब्धावयवभूतपदजनितपदार्थसंविदुपायसहायं वाक्यार्थस्य वाचकं सङ्गिरन्ते।

पदान्येव पदार्थान्तरान्वितं स्वार्थमभिदधतीति टीकाकारपादाः।

पदैरभिहिताः पदार्था एव वाक्यार्थं प्रतिपादयन्तीत्याचार्याः।

तत्र ज्ञानात्मकवाक्य-वाक्यार्थवादस्तावत्स्वात्मनि क्रियाविरोधाद्बहिरवभासाच्च-शून्यवाद एव निरस्तः। पदपदार्थव्यतिरेकाव्यतिरेकादिविकल्पस्याऽप्यनेकान्तवादाश्रयणेन-परिहारः। वाक्यं हि नामैकविशिष्टार्थप्रतिपादनपराणि पदान्येव। वाक्यार्थोऽपि पदार्थ एव पदार्थान्तरव्यतिषक्तात्मेति यद्यपि नात्यन्ताभेदो वा शक्यतेऽभिधातुम्। तथाऽप्यवान्तरस्थित्युपपत्तेर्न बहिर्भूतौ तौ शक्येते अपह्नोतुम्। निर्भागवाक्यवादोऽपि भागावगमादेवापास्तः। पदवदिति चेत्? न। असिद्धत्वात्।

## स्फोटवादस्योपन्यास–निरासौ

स्यादेतत्। यथैव हि वर्णात्मकभागावगमे सत्यप्येकपदावभासात्, अर्थप्रतिपत्तेश्च वर्णेभ्योऽनुपपत्तेर्भागावगमस्य मिथ्यात्वान्निरवयवमेव पदं पदार्थस्य वाचकमाश्रितम्।

---

वर्णानुभवजनितसंस्कारसचिवोऽन्त्यवर्णः पदार्थस्य वाचकः। तथैव पूर्वपूर्वपदार्थानुभवजन्य-संस्कारसचिवमन्त्यपदं वाक्यार्थस्य वाचकम्। तत्र नियतक्रमा वर्णा एव पदम्। तादृशानि पदान्येव वाक्यं इत्यादिना मार्गेण पदवद्वाक्यमपि वाचकमित्यन्वयः। सावयवमेव। पदान्येव-वाक्यावयवा। स्फोटपक्षवदखण्डं न भवतीत्यर्थः। तत्रापि पदार्थप्रतीतिः वाक्यार्थप्रतीतेरङ्ग-मित्याह—प्रतिलब्धेति। प्रतिलब्धो-ज्ञातः संबन्धो येषां, तानि तथोक्तानि। तान्येव वाक्यापेक्षया अवयवभूतानि पदानि, तेभ्यो जनिता पदार्थसंवित्। तदुपायकं वाक्यम्।

संप्रति स्वरूनिहितं गुरुमतं, स्वमतञ्च आह—पदान्येवेति। तत्र बौद्धमतनिरासस्ताव-दाचार्यैरेव कृत इत्याह—तत्रेति। स्वात्मनि क्रियाविरोधादिति। वाक्य-वाक्यार्थयोर्ज्ञानात्मकत्वे तयोरेव ज्ञानविषयत्वादेकस्यैव विषयत्वं, विषयित्वं च विरुद्धम्। ज्ञानभिन्नत्वे चास्मत्पक्ष-परिशेष इति भावः। दूषणान्तरमप्याह—बहिरवभासाच्चेति। ज्ञानमान्तरतया प्रतिभासते। अर्थास्तु तद्विपरीततया बहिः। अतो ज्ञानार्थयोः तादात्म्यमयुक्तमिति भावः। ननु पदात् वाक्यं-भिन्नमभिन्नं वा। पदार्थोऽपि वाक्यार्थात् भिन्नोऽभिन्नो वा। यदि भिन्नस्तदाऽखण्डवाक्यवाद-परिशेषः। यद्यभिन्नं, तदा वाक्यं पदमित्यादिभेदानुपपत्तिरिति राद्धान्ते दूषणमित्याशङ्क्य परिहरति—पदपदार्थेति। अनेकान्तवादाश्रयणेन—अनियमाश्रयणेन। भेदाभेदाश्रयणेनेत्यर्थः।

नन्वनयोरत्यन्तभेदः, अत्यन्ताभेदो वा स्यात्। कथं भेदाभेदावित्याशङ्क्य प्रतीतिबलात् तथैवाश्रयणं युक्तमित्याह—वाक्यं हीति। एवं च पद-पदार्थाभ्यां वाक्य-वाक्यार्थयोर्भिन्नतया प्रतीतिसिद्धत्वेन दुरपह्नवत्वात् सर्वैरपि वादिभिस्तावदवश्यं तौ निरूपणीयावित्याह—यद्यपीति। समुदितानां पदानामेव वाक्यत्वात्, समुदितानां पदार्थानामेव च वाक्यार्थत्वात् न पदपदार्थेभ्यो वाक्यवाक्यार्थयोर्भेदो युज्यते। एकैकपदस्यावाक्यत्वादेकैकपदार्थस्य चावाक्यार्थत्वात् नाभेदोऽपि युज्यत इत्यर्थः। अवान्तरस्थित्युपपत्तेः—भेदाभेदमध्यमावस्थितिरूपतृतीयप्रकारोपपत्तेरित्यर्थः। बहिर्भूतौ—पृथग्भूतौ। बहिर्भावश्च—पदादसहायस्वभावाद्वाक्यस्य समूहीभावः। तदर्थाच्चा-व्यतिषङ्गात्मकात् वाक्यार्थस्य व्यतिषक्तता।

तथा वाक्यमपि। तत्रापि ह्येकमिदं वाक्यमिति परामर्शोऽस्तीति, स एव नानात्वं प्रतिक्षिपति। नानात्वैकत्वयोर्विरोधात्। वाक्यार्थप्रतिपत्तिश्चानन्योपाया वाक्यमेव निर्भागं कल्पयतीति।

तन्नैवम्। दृष्टान्तासिद्धेः। न हि नो वर्णातिरेकेणानवयवः पदात्मा विद्यते। यस्त्वेकपदमिति परामर्शः, स बहूनामप्येकार्थप्रतिपत्तिनिमित्तः। भवति हि बहूनामप्येककार्यनिबन्धनमेकत्वं। यथा सेनेति। यथा वा राजसूय इति। अत एवार्थैकत्वमजानतां नास्त्येकपदावमर्शः। प्रत्यक्षेण तु पदस्वरूपमेकमनौपाधिकं संहितापाठमात्रेण व्युत्पन्नानामितरेषाञ्चानुपहतेन्द्रियाणमविशेषेण प्रकाशेत। तन्न तावदेकपदावभासाद्वर्णातिरिक्तपदसिद्धिः। प्रत्युतासत्त्वमेव तस्य योग्यानुपलब्ध्या निश्चीयते।

## स्वमतस्योपन्यासः

न चार्थप्रतिपत्त्याऽपि पदमन्यत्प्रसिद्ध्यति।
वर्णानन्तरजाता हि सा तत्कारणिकेव नः ॥ २ ॥

यदा वर्णा एवाक्षधीगोचरा नान्यदिति स्थितं, तदा वर्णानन्तरजायमानाऽर्थप्रतिपत्तिः तन्निमित्तैव विज्ञायते। तत्त्वान्तरस्य तु प्रत्यक्षानुपलम्भनिरस्तसद्भावस्य दूरापास्तमेव वाचकत्वं नान्यथानुपपत्त्याऽपि कल्पयितुं शक्यते। तेन वर्णानामेवैकवक्त्रुच्चारणापादितनैरन्तर्याणां स्वरविशेषभाजां संहतानामानुपूर्वीविशेषशालिनामनन्तरमर्थावगमदर्शनात् तादृशानामेवार्थाभिधायकत्वं निश्चीयते।

---

संप्रति वैयाकरणाभिमतं स्फोटतत्त्वं प्रतीतिविरोधेन दूषयति—निर्भागेति। शङ्कते—पदवदिति। परिहरति—नेति। शङ्कां विवृणोति—स्यादेतदिति। वर्णात्मकभागावगमे-नानावर्णात्मकभेदप्रतीतौ। अर्थप्रतीतेश्च वर्णेभ्योऽनुपपत्तेरिति। एकैकस्माद्वर्णात्पदार्थप्रतीतावतिप्रसङ्गात्समुदायस्य चासंभवादिति भावः। भागावगमस्य मिथ्यात्वादिति। एकं पदमित्यैक्यप्रतीतेः भेदप्रतीतिर्मिथ्येत्यर्थः। नानात्वं—सभागत्वम्। प्रतिक्षिपतीत्यर्थः। अनन्योपायेति। न ह्येकैकस्मात् पदाद्वाक्यार्थावगतिः। अतिप्रसङ्गात्। नापि समुदायात्। तस्य युगपत् ग्रहणासंभवादिति भावः।

एककार्यनिमित्तकमिति। 'घटः पटः' इत्यादिषु द्वयोरपि वर्णयोरेकार्थोपाधिवशादेकपदत्वमिति भावः। सेनेति। देशैक्यादेकत्वम्। राजसूय इति। पश्विष्टिसोमात्मकोऽनेककरणसङ्घातो हि राजसूयः। स हि फलैक्यादेकत्वमुपगच्छतीति भावः। व्यतिरेकमुखेनोपाधित्वमेव द्रढयति—अत एवेति। प्रतिकूलतर्कप्रयोगेणापि पदस्फोटस्य प्रत्यक्षत्वं निरस्यति—प्रत्यक्षेणेति। यदि स्फोटाख्यं तत्त्वं प्रत्यक्षं, तर्हि शब्दप्रयोगानन्तरं व्युत्पन्नाव्युत्पन्नसाधारण्येन प्रतीयेत। न चैवम्। तस्मात्तदसम्भव इति भावः। निगमयति—तन्न तावदिति।

इत्थं स्फोटाख्यतत्त्वे प्रत्यक्षाभावमभिधाय, संप्रति न केवलं तत्र प्रमाणाभावः। योग्यानुपलब्धिस्तदभावे प्रमाणमित्याह—प्रत्युतेति। इदानीमर्थापत्तेस्तत्र प्रामाण्यं निरस्यति—न चेति श्लोकेन। ततश्च वर्णानामेव वाचकत्वमित्याह—तेनेति। नैरन्तर्याणाम्—अविलम्बोच्चारितानाम्। स्वरविशेषभाजां—उदात्तादिभिः स्वरैः काकुस्वरैरप्यर्थविशेषावगमादिति भावः। संहतानां—संस्कारद्वारा समूहीभूतानाम्, एकस्मृत्यारूढानां वा। आनुपूर्वीविशेषशालिनां—

## शाब्दिकमतोपन्यासः

कथं पुनः क्रमवर्तिनां साहित्यम् ? अवान्तरव्यापारवशादिति ब्रूमः। पूर्वपूर्वो हि वर्ण उपलभ्यमानः संस्कारापरनामधेयमवान्तरव्यापारं जनयति। तत्सहितश्चान्त्यो वर्णोऽर्थप्रतिपत्तिं जनयति। एवन्तर्हि संस्कारा बहवः कल्पनीयाः स्युः। तद्वरमेकमेव शब्द-तत्त्वं कल्पितम्। नेत्याह। न खलु प्रत्यक्षानुपलम्भनिरस्तसत्त्वस्य तस्य सद्भावस्त्वयाऽभ्युपेयः। संस्कारस्तु दृष्टोपपत्तये कल्प्यमानो नातीव लज्जामावहति। अनेकमपि दृष्टापपादकं कल्पनीयम्। दृष्टविरुद्धं तु न किञ्चिदपि।

यद्वा नात्राक्लृप्तसंस्कारान्तरपरिकल्पना। क्लृप्ता एव स्मृतिहेतवः संस्काराः। त एव चैतेऽपि। यदनुभवभावितास्ते तत्रैव स्मृतिं जनयन्ति, न त्वर्थान्तरप्रतिपत्तिमिति चेत् ? केन वा तेषां स्मृतिभ्योऽन्यत्र व्यापारोऽभ्युपेयते। तामेव तु स्मृतिं जनयन्तोऽर्थ-प्रतिपत्तावप्युपायीभवन्ति। स्मृतानामेव वर्णानां वाचकत्वात्।

## शाब्दिकानां मतेन युक्तिप्रदर्शनम्

नन्वनुभववत्स्मृतयोऽपि वर्णेषु क्रमेण जायमाना न सम्भवन्त्युपायीभवितुमर्थ-प्रतिपत्तौ। अथ क्रमेणानुभूतानामपि युगपदेव स्मरणं, ततो व्युत्क्रमेणाप्युच्चारिताः–

---

नियतक्रमाणां 'जारा राजा वनं नवमि'त्यादौ क्रमविशेपस्याप्यङ्गत्वावगमादिति भावः। तत्सहितश्चान्त्यो वर्ण इति। संस्कारद्वारकं साहित्यमिति भाव.। तत्र वर्णसाहित्याय प्रतिवर्णं कल्प्यमानाः संस्काराः स्मृतिहेतुभावनाख्यसंस्कारविलक्षणा विवक्षिताः।

शङ्कते—एवं तर्हीति। विलक्षणबहुसंस्कारकल्पनादेकमेव शब्दतत्त्वं सुकल्पमिति भावः। अत्र यद्यपि शब्दतत्त्वं परस्य प्रत्यक्षसिद्धं, तथापि तत्र विप्रतिपत्तौ सत्यां कल्प्यपक्षेऽपि बहुकल्पनादेककल्पनं युक्तमिति हृदयम्।

परिहरति—नेत्याहेति। पूर्वोक्तरीत्या शब्दतत्त्वस्य प्रत्यक्षानुपलम्भनिरस्तत्वाद् न–तत् सुकल्पम्। संस्काराणां तु प्रत्यक्षागोचरत्वात् तत्कल्पने प्रत्यक्षविरोधाभावात् शब्द-तत्त्वकल्पनात् तत्कल्पनं न लज्जावहमिति भावः। दृष्टविरोधाभावादनेककल्पनमपि न लज्जावहमित्याह - अनेकमपीति।

ननु शब्दतत्त्वकल्पने प्रत्यक्षविरोधः। संस्कारकल्पने तु बहुकल्पना। तथापि संस्कारेषु पक्षपातो भवतो निर्निबन्धन इत्याशङ्क्य पक्षान्तरमाह—यद्वेति। स्मृतिहेतवः संस्काराः क्लृप्ताः–संप्रतिपन्नाः। एतेऽपि त एव। न तद्विलक्षणा इत्यर्थः।

ननु तेषां संस्काराणामनुभूतार्थगोचरस्मृतिजनकत्वमेव। न तु वाच्यार्थप्रतीत्युपयोगि-त्वमिति शङ्कते—यदनुभवेति। यतः प्रथमं श्रवणपथमवतीर्णाः पश्चात् स्मृत्यारूढा एव–शब्दा वाचकाः। अतः स्मृतिजनकत्वेनैव तेषामर्थप्रतीत्युपयोगित्वमिष्टमेवेति परिहरति—नैव तेषामिति।

ननु संस्काराणां स्मृतिजननद्वाराऽर्थप्रतीत्युपयोगोऽभिहितः। न स घटत इति शब्द-तत्त्ववादी शङ्कते—नन्वनुभववदित्यादिना शब्दतत्त्वविद् प्रतिपन्ना इत्यन्तेन। तत्र क्रमेण स्मृतानां वाक्यार्थप्रतीत्युपयोगः, युगपद्वेति विकल्प्य, आद्यमनुभवप्रतिवन्द्या दूषयति–नन्विति। यथा क्रमेणानुभूतानां न वाचकत्वं, तथा क्रमेण स्मृतानामपीत्यर्थः। द्वितीयमाशङ्क्य–

वाचकाः स्युः। तत्रापि स्मृतिहेतुसंस्कारजननात्। स्मरणस्य च सर्वेषु युगपदुत्पत्तेः। अथ तूच्चारणक्रमोऽप्यङ्गभिष्यते, तथा सति सैवादृष्टकल्पना। संस्कारोऽपि हि स्मृतिहेतुः क्रमान्तरेऽपि जायत एव। तन्निमित्तञ्च स्मरणम्। तत्र किमपरं क्रमविशेषेण नः कार्यमन्यत्रादृष्टकल्पनात्। न चादृष्टमपि कल्पयितुं शक्यते। अन्तरेणाप्युच्चारणं, तत्क्रमं च स्मृत्यारुढाभ्यां जरा-राजशब्दाभ्यां नामाख्यातरूपाभ्यामर्थविशेषावगमात्। यदि वर्णा एव पदं, ततो राज-जराशब्दयोर्वर्णभेदाभावादनुच्चारितावस्थायां च्चोच्चारणतज्जन्यानुभवक्रमयोरविद्यमानत्वात्, स्मरणस्य चैकस्यैव युगपदनेकवर्णगोचरस्योत्पद्यमानस्याक्रमत्वात्कुतः पदभेदावसायः? कुतस्तराञ्चार्थभेदावगमः? न च वर्णाः स्वरूपेण विभुत्व-नित्यत्वाभ्यां विभ्रमन्तो देशकालोपाधिकं क्रममपि। यद्भेदात्पदभेदः स्यात्। तदन्यदेव पदतत्त्वं यद्विलक्षणपदावभासो गोचरयतीति शब्दतत्त्वविदः प्रतिपन्नाः।

अत्रोच्यते—व्यञ्जकध्वनिधर्मस्य व्यङ्ग्येष्वारोपितस्य च।
क्रमस्यार्थाभिधाङ्गत्वं दैर्घ्यादेरिव सम्मतम्॥ ३॥

---

निरस्यति—अथ क्रमेणेति। युगपत् स्मरणं नामोच्चारितवर्णानां क्रमानादरेण स्मरणम्। ततो जराशब्दोच्चारणे राजशब्दार्थप्रतीतिः स्यात्। तथा वनशब्दोच्चारणे नवशब्दार्थप्रतीतिः स्यादिति भावः। कुतः? तत्राह—तत्रापीति।

ननु व्युत्क्रमोच्चारितानां जरादिशब्दानां न राजादिवाचकत्वम्। उच्चारणक्रमस्याप्यङ्गत्वादित्याशङ्क्य, तस्य स्मृतियौगपद्येऽनुपयोगात् तदानीं न दृष्टाङ्गत्वं स्यादित्याह—अथ त्विति। अदृष्टकल्पना—अदृष्टाङ्गकल्पना। सैवेति। शब्दतत्त्ववादिनि मयि त्वया या प्रमाणविरुद्धा कल्पनाऽऽपादिता, तादृश्येवेत्यर्थः। अदृष्टकल्पनामेवाह—संस्कारो हीति। क्रमान्तरेऽपि—व्युत्क्रमोच्चारणेऽपि। तन्निमित्तं—संस्कारमात्रनिमित्तम्। अस्तु व्युत्क्रमेणोच्चारणेनापि संस्कारोत्पत्तिः। तन्निमित्तं च युगपत् स्मरणं स्यात्। अथापि तत्र दृष्टद्वारोच्चारणक्रमोपयोगः स्यादित्याह—किमपरमिति। उच्चारणक्रमस्य क्रमरहितयुगपत्स्मरणस्य च न दृष्टद्वारकमुपयोगं पश्यामः। लौकिकेषु कार्यकारणस्थलेष्वदृष्टद्वारोपयोगस्त्वकिंचित्कर इति, तत्कल्पने कल्पनागौरवमिति भावः। क्वचिदसत्यप्युच्चारणे तत्क्रमे च केवलं स्मृत्यारूढवर्णैरर्थप्रतीतिदर्शनादुच्चारणक्रमस्यादृष्टाङ्गत्वमप्यव्युत्पन्नमित्याह—नचेति। नाम—प्रातिपदिकम्। राजशब्दो मध्यमपुरुषैकवचनमाख्यातम्।

किं च केवलवर्णानामेव पदत्वे तदतिरिक्तशब्दतत्त्वाभावेऽनिष्टान्तरमप्याह—यदीति। जकार-रेफयोरनुच्चारणवस्थापन्नयोः युगपत् स्मृत्यारूढयोरुच्चारणक्रम-स्मृतिक्रमप्रयुक्तभेदाभावात् पदभेदः, तद्भेदप्रयुक्तोऽर्थभेदश्च न स्यात्। अतो वर्णातिरिक्तं पदं नियतक्रमवर्णाभिव्यङ्ग्यं शब्दतत्त्वमेषितव्यमित्यर्थः।

किं च भाट्टमते वर्णेषु क्रम एव न संभवति। तद्भेदप्रयुक्तार्थभेदस्तु दूर इत्याह—नचेति। विभुत्वात् देशक्रमाभावः। नित्यत्वात् कालक्रमाभावः। विभ्रमन्तः—तत्र तत्र संचरन्तः, प्रतिभासयन्तो वा। शङ्कां निगमयति—तदन्यदिति। विलक्षणश्चावभासनं—नानावर्णविलक्षणतया प्रतिभासनम्।

वर्णास्तावत् द्रव्यम्। न गुणः। ते च व्यापका नित्याश्च। ध्वनिस्तु तद्व्यञ्जकः-प्रतिवर्णविलक्षणः। तत्क्रमस्तावत् दीर्घत्वादिवत् वर्णेष्वारोपितः। तादृशक्रमविशिष्टा वर्णाः-पदम्।

यत्तावत्—क्रमस्मरणेऽयुगपदनुभववत् सम्भूयकारित्वासम्भव इति मतं, तदस्तु। युगपदेव तु सर्वेषु संभूय स्मरणम्। तदर्थान्तरेष्विव घटपटादिषु क्रमादनुभूतेष्वपि भवति। यत्त्वेवं व्युत्क्रमेऽप्यर्थावगतिः स्यादिति। तदयुक्तम्। क्रमस्याप्यङ्गत्वात्। यद्यपि स्मरणस्यापि युगपज्जन्मनः क्रमो नास्ति। वर्णेषु विभुषु नित्येषु वस्तुगत्या क्रमो नास्ति। तथाऽपि व्यञ्जकानां ध्वनीनां क्रमवर्तित्वात्तैर्वर्णेष्वभिव्यज्यमानेषु तदीयक्रमो व्यङ्ग्येषु वर्णेषु दीर्घत्वादिवदादर्शाल्पत्व-महत्त्वे इव मुखे समारोपितः प्रतीयते। ततश्च स्मरणमपि पश्चाज्जायमानं विशिष्टानुपूर्वीसमालिङ्गितशरीरानेव वर्णान् गोचरयतीति, क्रमभेदात्पदभेदः। एवमनुच्चरितावस्थायामपि स्मृत्यारूढेनैव क्रमविशेषेण जरा-राजशब्दयोर्भिन्नपदत्वसिद्धिः। तेन ध्वनिधर्माणामेव दीर्घोदात्तक्रमादीनां वर्णेषु समारोपितानां स्मृत्यारूढानामर्थाभिधानाङ्गत्वमिति, न किञ्चिदनुपपन्नम्।

आह च—'तद्वशेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः।
एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थिताः॥
वर्णा अनुपतन्तः स्युरर्थभेदावबोधकाः।' श्लो वा. :-३०८-३०१। इति।

तत्सिद्धं न वर्णातिरिक्तमनवयवं पदमस्तीति। भागावगमादेव वाक्यमपि नानवयवं सिद्ध्यति।

कथं तर्हि वाक्यार्थावगतिः? पदार्थवदिति ब्रूमः। यथा वर्णेभ्य एव संहितेभ्यः पदार्थोऽवगम्यते, तथा तेभ्य एव वाक्यार्थोऽपि। तत्प्रतीत्येककार्यकरणाच्च बहवोऽपि वर्णा एवैकं वाक्यमित्युच्यते।

---

तत्क्रमभेदात् पदभेदः। तद्भेदात् वाक्यभेदः। तद्भेदाच्चार्थभेदसिद्धिः। क्रमेणानुभूतानामपि वर्णानां तेनैव क्रमेण युगपत् स्मरणं युक्तमित्याशयेन परिहरति—अत्रोच्यत इति। अयुगपदनुभववदिति पदच्छेदः। दीर्घत्वादिवदित्यादिशब्दात प्लुतग्रहणम्। महत्वाल्पत्वे वेति—वाशब्द इवार्थे। विशिष्टानुपूर्वीसमालिङ्गितेति। क्रमानुभूतेष्वपि पदार्थेषु तेनैव क्रमेण विशिष्टानां युगपत् स्मरणं युक्तम्। 'पञ्च प्रयाजा मयाऽनुष्ठिताः, गोदावर्यां महानद्यां शतवारं समाप्लुतम्, शतं पिपीलिकानां मया हतमि'त्यादिषु तथा दर्शनादिति भावः।

उच्चारणक्रमस्य क्वचित् व्यभिचार उक्तः। तं परिहरति—एवमिति। तात्कालिकोच्चारणक्रमाभावेऽपि पूर्वोच्चारणक्रमविशेषसंभवात् तत्क्रमेण स्मरणं युक्तमिति भावः। फलितं—दर्शयति—तेनेति। अत्राचार्यसंमतिमाह—आह चेति। तद्वशेन—ध्वनिगतक्रमवशेन। अनुपतन्तः—अनुरुन्धानाः। पदस्फोटनिरासमुपसंहरति—तत्सिद्धमिति।

वाक्यस्फोटं निराकरोति—भागावगमादिति। प्रत्यक्षविरुद्धमनुपलब्धिबाधितं चेत्युक्तमित्यर्थः। अस्तु नियतक्रमेभ्यो वर्णेभ्यः पदरूपेभ्यः पदार्थभेदावगतिः। पदार्थसंसर्गरूपवाक्यार्थस्तु—तदतिरिक्तः। तदवगतिः कथमित्याक्षिपति—कथं तर्हीति। नैयायिकैकदेशिमतेनोत्तरमाह—पदार्थवदिति। पदार्थेभ्य एव वाक्यार्थावगतिरिति स्वमतमुत्तरत्र व्यक्तीभविष्यति। वर्णानामेव पदैक्यव्यवहारवत् वाक्यैक्यमप्यर्थैक्योपाधिकमित्याह—तत्प्रतीत्येति।

आह—'अपेक्षते न वा वाक्यं स्वार्थसंगतिसंविदम्।
परस्मिन् सर्वसंवित्तिः पूर्वस्मिन्न तु कस्य चित्॥' बृहट्टीका। इति।

यदि तावदगृहीतसंबन्धमेव वाक्यं वाक्यार्थमभिदध्यात्, ततः सर्वेषामपि वाक्यश्राविणां वाक्यार्थसंवित्तिः स्यात्। न चाव्युत्पन्नपद-पदार्थसङ्गतीनां जायते। अथ तु पदवद्वाक्यमपि स्वार्थेन सम्बन्धसंविदमपेक्षते, ततोऽपूर्ववाक्यश्रवणे न कस्यचिदपि वाक्यार्थावगतिः स्यात्। अथ पद-पदार्थव्युत्पत्तिरङ्गं वाक्याद्वाक्यार्थप्रतीतावपीत्युच्यते।

तदयुक्तम्। यदि हि वाक्यान्त्यवर्णः पूर्वपूर्ववर्णजनितसंस्कारसहितः, स्मृत्यारूढा वा वर्णाः पदार्थेभ्योऽर्थान्तरमभिदधति, तर्हि पदपदार्थसङ्गतिसंवित्तत्र कमिवोपकारं कुर्यात्। पदार्थज्ञानमिति चेत्? न। तेनाप्युपकारादर्शनात्। न हि वाक्याद्वाक्यार्थप्रतीतौ पदजनितपदार्थज्ञानेन कश्चिदुपकारः। कोऽपि नाम कल्प्यत इति चेत्? तर्ह्यदृष्टकल्पनैव दोषः। किं चाल्पैरेव पदैरावापोद्वापभेदेन बहूनि वाक्यानीह रच्यन्ते। तत्र सर्वेषामेव शक्तिं कल्पयतो महान् क्लेशः। न च वाक्यार्थप्रतिपत्तेरनुपपत्तिः, यतः—इमां वेदनामनुभवेम। लोकसिद्धार्थाभिधायिभिः पदैरेव तदुपपत्तेः।

## टीकाकारमतोपन्यासः

कथं पुनस्तैरपूर्ववाक्यार्थावगतिः? तत्र टीकाकारस्तावदाह—

---

संप्रति वर्णसमुदायरूपवाक्यादर्थप्रतिपत्तिरयुक्तेत्येतन्मतमाक्षिपति—आहेति। तर्कस्य विपर्यये पर्यवसानमाह—नचाव्युत्पन्नेति। अपूर्ववाक्यश्रवणेनेति। अश्रुतवाक्यश्राविणः पुंसः तदर्थे तस्य वाक्यस्याव्युत्पन्नत्वादर्थप्रतीतिर्न स्यादित्यर्थः। वाक्यस्य पृथक् सङ्गतिग्रहणाभावेऽपि पदपदार्थसंगतेरेव तदुपकारकत्वाश्रयणे न कश्चित् दोष इति शङ्कते—अथ पद-पदार्थेति। पद-पदार्थसमूहस्यैव वाक्यत्वे, तदर्थत्वे च पद-पदार्थव्युत्पत्तिरङ्गं स्यान्नाम। समुदाय-समुदायिनोरत्यन्तभेदाभावात्। वर्णानामेव वाक्यत्वे तदर्थस्य पदार्थातिरेकेऽनुपकारकत्वात् व्युत्पत्तिरनङ्गमेवेति परिहरति—तदयुक्तमिति।

ननु नानुपकारकत्वम्। उपकारसम्भवादिति शङ्कते—पदार्थेति। न तस्योपकारकत्वं कार्यानुगुण्याभावादिति परिहरति—न तेनेति। तदेवाह—नहीति। उपकारः—कार्यानुगुण्यम्। वाक्यार्थप्रतीत्यन्यथानुपपत्त्या पदार्थज्ञानजनितं यत् किञ्चिदानुगुण्यं कल्प्यत इति शङ्कते—कोपि नामेति। दूषयति—तर्हीति। वर्णानामेव वाक्यत्वे, तेषामेव वाक्यार्थबोधकत्वे पदपदार्थव्युत्पत्तेर्दृष्टोपकारकत्वाभावाददृष्टाङ्गोपकारकल्पना स्यात्। तच्चायुक्तम्। लौकिककार्यकारणस्थलेषु तत्कल्पनानुपपत्तेरित्यर्थः। वाक्य-वाक्यार्थयोरेव पृथक् संगतिग्रहणाङ्गीकारपक्षे दूषणान्तरमाह—किंचेति। नियतक्रमवर्णानामेव वाक्यत्वे 'गामानय, गां बधान, गां मुञ्च, अश्वमानय, अश्वं बधान, अश्वं मुञ्चे'त्यादिष्वल्पैरेव तु पदैर्बहुवाक्यविरचनात् वाक्यस्यैव वाचकत्वाङ्गीकारेऽनेकवाक्यबाहुल्यात् वाचकशक्तयो बह्व्यः कल्पनीयाः स्युरित्यर्थः।

ननु त्वदुक्तरीत्या वर्णेभ्यो वाक्यार्थप्रतीत्यनुपपत्तौ लोके तर्हि वाक्यार्थप्रतीतिरेव न स्यादित्येकदेशिनोऽभिप्रायमाशङ्क्य वाक्यार्थप्रतीतेरन्यतः सिद्धत्वादिति परिहरति—न चेति। यतोऽनुपपत्तेरिमं क्लेशनुभवेमेत्यर्थः। अन्यतः सिद्धिमेवाह—लोकप्रसिद्धेति। कथं तैस्तत्सिद्धिरिति पृच्छति—कथं पुनरिति।

'पदार्थानेव वाक्यार्थं मिथः संगतिशालिनः।
आचक्षतेऽभिधीयन्ते पदैस्ते च तथाविधाः ॥' इति।

पदार्था एव तावत्परस्परान्विता वाक्यार्थ इत्युच्यन्ते। ते च तथाभूता एव स्वपदैरभिधीयन्ते। तेन पदमेव वाक्यार्थस्य प्रमाणमिति। न चार्थस्वरूपमेव पदाभिधेयं, नान्वितमिति वाच्यम्।

पदानन्तरजाता हि संविदन्वितगोचरा।
अन्वितार्थाभिधायित्वं पदानामुपकल्पयेत् ॥ ४ ॥

विशिष्टार्थविषयव्यवहारदर्शनेन हि व्यवहरमाणस्य विशिष्टविषयैव व्युत्पित्सुना संविदनुमीयते। सा च पदश्रवणानन्तरं जायमाना तत्कारणिकेव निश्चीयते। यद्यपि च पदसंघातश्रवणानन्तरं विशिष्टज्ञानं जायते, तथाऽपि

न संघातात्मना वाक्यं वाक्यार्थस्याभिधायकम्।
अन्वयव्यतिरेकाभ्यां भागशस्तत्तु वाचकम् ॥ ५ ॥

'गामानय, अश्वमानये'त्यादौ गवादिपदावापे गवादिपदार्थावापात्, तदुद्वापे चोद्वापाद्वाक्यभागानामेव वाक्यार्थभागवाचकत्वावगमात् न संघातस्य वाचकत्वं, वाच्यत्वं वा सम्भवति। व्यभिचारात्, संबन्धग्रहणासंभवाच्च। आनन्त्याद्वाक्य-वाक्यार्थानां न संगत्यवगमः संभवति। भवत्पक्षे वा कथमनन्तानामेकपदाभिधेयत्वम्। अन्विताभिधायि हि पदम्। अन्यच्च गवाऽन्वितादानयनादश्वान्वितमानयनम्। तत्कथमत्र संबन्धग्रहणम्, अव्यभिचारो वा।

---

इत्थमेकदेशिनं निरस्य प्रथमं गुरुमतमवतारयति—तत्रेति। पदान्येव वाक्यं, पदार्था एव—वाक्यार्थ इति हि तन्मतम्। सङ्गतिशालिनः—अन्वयशालिनः। अभिधीयन्त इति। यतः अन्वितेषु व्युत्पत्तेरन्विता अर्थाः पदैरभिधीयन्तेऽन्वितार्थपराणि पदान्येव वाक्यमिति—टीकाकारमतानुर्तिन आचक्षत इत्यर्थः।

उत्तरश्लोकसङ्गतिमाह—न चेति। व्युत्पत्त्यधीना हि शब्दार्थावगतिः। तत्रान्वितार्थे व्युत्पत्तेरन्वितमेव वाच्यमित्यर्थः। श्लोकं व्याचष्टे—विशिष्टार्थेति। वाक्यजनितेन ज्ञानेन व्यवहरमाणस्य मध्यमवृद्धस्य। विशिष्टविषयैव—विशिष्टवाक्यार्थविषयैव। संविदुन्नीयते। तदनन्तरं विशिष्ट एव वाचकत्वशक्तिर्निश्चीयत इत्यर्थः। यद्यपि पदसङ्घातेति। पदसङ्घातस्यैव वाक्यत्वात वाक्यमेव वाक्यार्थवाचकं युक्तमिति भावः। न सङ्घातात्मनेति। सङ्घातस्य वाक्यार्थाभिधायकत्वे दोषसम्भवात् प्रथमवगतमन्वितवाचकत्वमावापोद्वापाभ्यां वाक्यार्थैकदेशान् प्रति वाक्यैकदेशानां पदानामवसीयत इत्यर्थः।

ननु सङ्घातात्मकमेव वाक्यं तदर्थवाचकं च किमिति न स्यात्, तत्राह—व्यभिचारादिति। एकस्मिन् वाक्ये पदान्तरप्रक्षेपे सति तद्वाक्यस्य पूर्ववाक्यार्थातिपातोऽपि व्यभिचारः। तथा—वाक्य-तदर्थयोः संगतिग्रहणासंभवाच्च न वाचकत्वमित्यर्थः। संबन्धग्रहणासंभवमेवाह—आनन्त्यादिति। आनन्त्यं च पदान्तरावापनिमित्तम्। त्वत्पक्षेऽप्येतद्दूषणद्वयं समानमिति शङ्कते—भवत्पक्ष इति। अनन्तानां वाक्यार्थानाम्। तदेवोपपादयति—अन्विताभिधायीत्यादिना।

तदुच्यते—संनिध्यपेक्षायोग्यत्वैरुपलक्षणलाभतः।
आनन्त्येऽप्यन्वितानां स्यात्सम्बन्धग्रहणं मम ॥ ६ ॥

आकाङ्क्षितं सन्निहितं योग्यञ्च यदर्थान्तरं, तेनान्वितं स्वार्थमभिदधति पदानीति, एकेनैवोपलक्षणेनानन्तानामपि वाच्यत्वं सुज्ञानमेव। अव्यभिचार एवान्यादृशे प्रयोग-प्रतिपत्त्योरसम्भवात्। सङ्गतस्यापि तह्यनेनैव प्रकारेण सम्बन्धग्रहणं सम्भवति। येषां पदानां यदन्विताभिधायित्वं भवतेष्यते, तत्पदसंघातस्तदर्थसंघातस्याभिधायक इति, शक्यते एव सङ्गतिरस्माभिरवगन्तुमिति, न कश्चिद्विशेषः।

सत्यमेतत्। शक्तिकल्पनागौरवात्तु नैतदुपपद्यत इत्युक्तम्। अन्विताभिधानमपि तह्यनुपपन्नं गौरवादेव। स्वरूपमात्रमेव तु लाघवात्पदानामभिधेयं वरमाश्रितम्। तन्न। अन्वितप्रतिपत्तेर्निर्मूलत्वप्रसङ्गात्। न हि तस्या मूलान्तरमुपलभ्यते। स्वरूपेणैव पदैर-भिहिताः पदार्थाः परस्परव्यतिषक्तमात्मानं प्रतिपादयन्तीति चेत्? न। अदर्शनात्।

प्रमाणान्तरविज्ञातैः पदार्थैर्न हि दृश्यते।
वाक्यार्थवेदनं शब्दप्रतीतेः कारणन्त्वथ ॥ ७ ॥
शक्तित्रयं प्रकल्प्यं स्यात्पदानामर्थगोचरा।
अर्थानामन्विते शक्तिस्तदाधायकता पदे ॥ ८ ॥

न हि प्रमाणान्तरावगतानां पदार्थानां प्रतिलब्धाकाङ्क्षादित्रयसहायानामपि-व्यतिषङ्गप्रतिपादकत्वं दृश्यते। न हि देवदत्तमुपलभ्य कोऽस्य पितेत्यपेक्षमाणः सन्निहितमपि यज्ञदत्तं योग्यमपि सहसैवाध्यवस्यति पितरम्। अथान्यत्राविदितमपि शब्दप्रतीतानामेवार्थानामन्वितप्रतिपत्तिकारणत्वं कल्प्यत इति ते मतम्।

---

परिहरति—उच्यत इति। एकेनोपलक्षणेनेति। अश्वाद्यवान्तरार्थविवक्षायां हि गोपदस्यानन्तार्थत्वम्। आकाङ्क्षायोग्यतासन्निधिमत्वरूपसामान्याकारविवक्षायां तु नानेकार्थतेति भावः। कथमव्यभिचारः? तत्राह—अन्यादृश इति। एतादृशोपलक्षणरहितस्थले। यद्यप्याकाङ्क्षितत्वं, संनिहितत्वं, योग्यत्वमिति त्रीण्युपलक्षणानि। तथाप्येकोपलक्षणेनेति-वचनमितरोपलक्षणराहित्यपरम्। यद्वा त्रिभिस्त्रिभिरुपलक्षणैरुपलक्षितत्वमेकमेवानेकेषामपि पदार्थानाम्।

साम्यमाशङ्कते—सङ्गतस्यापीति। तत्पदसंघातस्तदर्थसंघातस्येति। आकाङ्क्षित-संनिहितयोग्यपदान्तरसहितं गोपदं तादृशार्थान्तरव्यतिषक्ते स्वार्थे व्युत्पन्नं तादृशमर्थं वक्तुं च-शक्तमित्यर्थः। परिहरति—सत्यमिति। शक्तिकल्पनागौरवात्त्विति। किञ्चाल्पैरेव पदैरावा-पोद्धापभेदेनेत्युक्तमित्यर्थः। किञ्चास्मत्पक्षे एकैकमेव गवादिपदं वाचकम्। तस्य व्युत्पत्तिः सुशका। इदमिति निर्धारयितुं शक्यत्वात्। त्वत्पक्षे तु कं प्रति संघातः, कस्य चेदमिति निर्धारयितुमशक्यत्वात् वाक्यार्थे व्युत्पत्तिः दुःशकेत्यर्थः। ननु गौरवं त्वत्पक्षेऽपि समानम्। अतः पदानां पदार्थमात्रवाचकत्वं युक्तमिति शङ्कते—अन्विताभिधायित्वमपीति। परिहरति—तन्नेति। वाक्यं नान्वितप्रतिपादकम्। पदानामपि तदप्रतिपादकत्वेत्वन्वितप्रतीतिरमूला स्यादित्यर्थः। आचार्याभिमतमूलमाशङ्कते—स्वरूपेणैवेति।

प्रमाणान्तरप्रतिपन्नानामपि पदार्थानां वाक्यार्थप्रतिपादकत्वम्, उत पदप्रतिपन्नानामेवेति विकल्प्य, पक्षद्वयमपि क्रमेण दूषयति—अदर्शनादित्यादिना श्लोकद्वयेन। तत्र प्रथमं—

एवन्तर्हि शक्तित्रयमदृष्टं कल्पितं स्यात्–पदानां तावत्पदार्थाभिधानशक्तिः, अर्थानाञ्चान्वितप्रतिपादनशक्तिः, पदानाञ्च पुनस्तच्छक्त्याधायकत्वशक्तिः–इति, कल्पनागौरवाद्वरमेकैव पदानामन्वितगोचरा शक्तिरभ्युपगता। ननु त्वयाऽन्वितगोचरं शक्तिद्वयं कल्पयितव्यम्। तत्कथमेका शक्तिरित्युच्यते? सत्यमेतत्। तथाऽपि शक्तित्रयकल्पनाल्लाघवमस्त्येव। किञ्च न पृथगन्वये शक्तिः कल्पनीया। एकैव तु शक्तिरन्वितपर्यन्ता कल्पयिष्यते। अतः कल्पनालाघवादन्विताभिधायित्वमेव वरम्।

यद्यपि कथञ्चिच्छक्तिकल्पना समाना भवेत्, तथाऽपि प्रथमावगतानामभ्युपेततात्पर्याणाञ्च पदानामेवान्विताभिधायकत्वं युक्तमेवाङ्गीकर्तुम्। एवञ्च शाब्दत्वमपि वाक्यार्थस्य समञ्जसं भविष्यति। इतरथा क्लिष्टं स्यात्।

ननु सामान्यं पदार्थः, तच्च नान्तरेण विशेषमात्मानं लभत इति, तद्विशेषमाक्षिपति। विशेष एव च वाक्यार्थ इत्युच्यते। पदार्थस्वरूपं हि सर्वावस्थानां सामान्यम्। अन्वितता चास्यावस्थाविशेष इति, पदार्थ एव वाक्यार्थे प्रमाणमिति। नैतद्युक्तम्। यद्यपि सामान्यं विशेषमाक्षिपति, तथाऽप्यस्ति कश्चिद्विशेष इत्येतावन्मात्रमाक्षिप्येत। नियतैकविशेषविषयाक्षेपस्तु दुर्लभ एव, प्रमाणाभावात्। तेन 'गामानये'ति गवैवान्वितमानयनं न प्रतीयते। मत्पक्षे त्वाकाङ्क्षाद्युपलक्षणशालिनैवार्थान्तरेणान्वितं पदस्याभिधेयमिति युक्तम्, यद्गवान्वितमानयनं प्रतीयते। गौर्हि स्वपदेन सन्निहितः, नार्थान्तरमिति नियतावगतिसिद्धिः।

---

दूषयति–नहीति। द्वितीयं शङ्कते–अथान्यत्रेति। कल्पनागौरवेण दूषयति–एवं तर्हीति। अदृष्टम्–अतीन्द्रियं–कार्योन्नेयमिति यावत्। गौरवमेव दर्शयति–पदानां तावदिति। शक्तित्रयाङ्गीकारादेकैव शक्तिरङ्गीकार्येत्यर्थः।

ननु तत्रापि कल्प्यं शक्तिद्वयं, कथमेकैवेत्याक्षिपति–नन्विति। तथापि शक्तित्रयकल्पनात् लाघवमस्त्येवेति परिहरति–सत्यमेतदिति। किञ्च शक्तिद्वयकल्पनमपि नास्तीत्याह–किंचेति। अन्वितपर्यन्तेति। अन्वयगोचरैव शक्तिः। साऽन्वितपर्यन्ता भविष्यति। अन्वयमन्तरेणान्वितस्याभिधातुमशक्यत्वात्। ततश्चाक्षेपलभ्यान्वये न पृथक्शक्तिकल्पनम्। यथा जातिमात्रगोचरा शक्तिर्जातिर्व्यक्तिमन्तरेणाभिधातुमशक्यतया तत्पर्यन्तेत्यर्थः। कथञ्चित् शक्तिकल्पनासाम्येऽप्यन्विताभिधानपक्षे गुणमाह–यद्यपीति। प्रथमावगतानां–प्रथमप्रतिपन्नानाम्। अभ्युपेततात्पर्याणाम्–अर्थप्रतिपादनाभिप्रायेण प्रयुक्तानाम्। पदानामेवान्वितशक्तिर्युक्तेत्यर्थः। एवं च शाब्दत्वप्रसिद्धिरपि युक्ता स्यादित्याह–शाब्दत्वमपीति। शाब्दत्वं–शब्दार्थत्वम्। इतरथा पदप्रतिपाद्यत्वाभावे शाब्दत्वं क्लिष्टं स्यात्–स्वारसिकं न स्यादित्यर्थः।

ननु शाब्दत्वं वाक्यार्थस्य न घटते। यतः पदार्था एव तदाक्षेपकतया तत्र प्रमाणं–स्युरित्यभिहितान्वयवादी शङ्कते—नन्विति। सामान्यं–सर्वकारकान्वययोग्यम्। अस्तु विशेषाक्षेपकता सामान्यस्य। ततः किं? तत्राह–विशेष एव हीति। उक्तं विवृणोति–पदार्थस्वरूपं–हीति। परिहरति—नैतदिति। गोपदप्रतिपादितस्य पदार्थसामान्यस्य यत्किंचिद्विशेषाक्षेप एव शक्तिः। नतु नियतविशेषाक्षेपे। पदान्तरोपस्थापितविशेषाक्षेपे तु शाब्दत्वप्रसङ्ग इति भावः। अन्विताभिधानपक्षे तु संनिधेरुपलक्षणत्वात् तस्य च शब्दाधीनत्वात् नायं दोष इत्याह–मत्पक्षे त्विति। गौर्हि स्वपदेनेति। एवमानयतिरपि स्वपदेनेति द्रष्टव्यम्। संप्रति शब्दोप-

न च सन्निध्यपेक्षत्वे भवेदन्योन्यसंश्रयः।
न केवलाभिधानेन स्मृत्याऽपि हि भवेदसौ ॥ ९ ॥

न चैवं वाच्यं यदि संनिहितेनार्थान्तरेणान्वितं स्वार्थमभिधत्ते, ततो गामानयेत्यत्र गोशब्देन तावत्स्वार्थो नाभिधातव्यः, यावदानयतिना न स्वःर्थोऽभिहितः। तेनापि हि स्वार्थे गोशब्देनानभिहिते न स्वार्थोऽभिधेयः स्यादिति व्यक्तमेवेतरेतराश्रयत्वमिति। न ह्यवश्यमभिधानसन्निहितेनैवार्थेनान्वितं शब्देनाभिधेयं, यतोऽयं-दोषः-स्यात्। सन्निधिमात्रस्य तदुपलक्षणत्वात्। सन्निधेश्चान्तरेणाप्यभिधानं स्मृत्याऽपि संभवात्। सर्वाणि हि पदानि प्राक्प्रतियोगिसन्निधेर्निमित्तभूतमर्थस्वरूपं स्मारयन्ति। ततो न्यायावधारितवचनव्यक्तीनि वाक्यार्थमभिदधतीति न कश्चिद्दोषः।

नन्वसन्निहितेनापि नियोज्येनान्विताभिधानं विश्वजिदादौ दृष्टम्। न। तत्राप्यध्याहारेण सन्निधिलाभात्। न ह्यवश्यं शाब्द एव सन्निधिस्तदुपलक्षणम्। द्वारं द्वारमित्यादावशाब्दैरपि संवरणादिभिरन्विताभिधानस्य लोके दृष्टत्वात्।

एवं तर्हि प्रत्यक्षेणाश्वे सन्निहिते गौरानीयतामित्यत्रानयतिर्गवाश्वयोरुभयोरपि शब्दप्रत्यक्षाभ्यां सन्निहितत्वान्न गवैव केवलमन्वितमानयनमभिदध्यात्। सन्निध्यपेक्षायोग्यत्वानामुभयत्राविशेषात्। नैष दोषः। गवान्वयेनैवानयतेराकाङ्क्षोपरमात्। अश्वान्वये प्रमाणाभावात्। कथमुभयोः सन्निधाने सति गवैव नैराकाङ्क्ष्य, नाश्वेन ?

---

स्थितेनान्विताभिधानेऽन्योन्याश्रयदोषं परिहरति—न चेत्यादिना। सर्वाणि हि पदानीति। प्रथमं पदजातं व्युत्पत्तिसमये सहानुभूतमनन्वितमर्थं स्मारयति। पश्चात् योग्यतादिविमर्शे सति स्मृत्यारूढानि तान्येव पदानि परस्परान्वितं स्वार्थमभिदधति। तदुक्तं प्रकरण शालिकायां—

'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥' वा. मा पृ. ४०१। इति।

अतो नेतरेतराश्रयदोष इत्यर्थः। प्राक् प्रतियोगि संनिधेर्निमित्तभूतमर्थस्वरूपमिति। प्राक्—व्युत्पत्तिसमये प्रतियोगिनोऽर्थस्य संनिधेः—सन्निधानात् निमित्तभूतं शब्दप्रवृत्तिनिमित्तं—वाच्यभूतमिति यावत्। तदेवार्थस्वरूपं स्मारयन्ति पदानि। सहानुभूतयोरन्यतरदर्शनेऽन्यतर-स्मरणं लोके दृष्टमिति भावः।

यद्वा प्रतियोगिभूतस्यान्वयार्हस्यार्थान्तरस्य संनिधेः प्राग्वाच्यभूतमर्थस्वरूपं स्मारयन्ति। स्मरणेन च प्रतियोगिसंनिधौ तदुत्तरकालन्त्वभिदधतीत्यर्थः।

ननु 'विश्वजिता यजेते'त्यत्रासंनिहितेनापि स्वर्गकामपदेनान्विताभिधानं भवतामिष्टम्। तत्कथं शब्दसंनिहितेनैवान्विताभिधानमिति शङ्कते—नन्विति। परिहरति—नेति। अध्याहारेण—बुद्धिसंनिधानेन। अन्विताभिधाने न केवलं शाब्द एव संनिधिः। किन्तु बौद्धोऽपीति भावः। तदेवाह—नहीति। अशाब्दैः-शब्दानुपस्थितैः। संवरणादिभिरिति। संव्रियतां विव्रियतामित्यादिभिरित्यर्थः।

शाब्दस्य संनिधेर्नियमेनानपेक्षितत्वेऽतिप्रसङ्गमाशङ्कते—एवं तर्हीति। नातिप्रसङ्गः, नियामकसद्भावादिति परिहरति-नैष दोष इति। प्रमाणाभावादिति। पुनराकाङ्क्षामुत्थाप्यान्वये प्रमाणं नास्तीत्यर्थः। शङ्कते-कथमिति। संनिधाने सतीति। नहि शाब्द एव-संनिधिः प्रयोजकः, प्रमाणान्तरसंनिधेरपि भवतोऽभिमतत्वादिति भावः।

नन्वेवं सति विपर्ययः कस्मान्न भवति ? अश्वेन नैराकाङ्क्ष्यान्न गवाऽन्वयः सम्भवतीति। न सम्भवति विपर्ययः। अश्वान्वये गोपदस्याकाङ्क्षानुपरमात्।

ननु तस्यापि प्रत्यक्षाद्यवगताभिः स्थित्यादिभिरेव क्रियाभिराकाङ्क्षा विरमेत्। तेन प्रमाणान्तरेण स्थितावश्वे च सन्निहिते गौरानीयतामित्युक्ते गौस्तिष्ठति, अनीयतामश्व इति वाक्यद्वयं प्रतीयेत। तन्न। एकवाक्यत्वावगमात्। यावन्ति हि पदानि संहृत्य प्रयुज्यन्ते, तावतां सति सम्भवे संहृत्यैकविशिष्टार्थप्रतिपत्तिपरत्वं लोके दृष्टम्। तच्च श्रुतयोरेवान्वये निर्वहति। अन्यथा बाध्येत। किञ्चैकेनैवान्वयेनोभयोराकाङ्क्षोपरमसम्भवेऽनेकान्वयकल्पनमयुक्तम्। गौरवात्। तस्मात्पदान्येवान्विताभिधायीनि[1] वाक्यार्थस्य प्रमाणमिति।

## अभिहितान्वयवादस्य प्रतिपादनम्

अत्राभिधीयते नैतन्मतमप्युपपत्तिमत्।
अदृष्टकल्पनैतस्मिन् मते हि स्याद्गरीयसी॥ १०॥
दृष्टबाधप्रसङ्गश्च तस्मादभिहितान्वयः।
दृष्टानुगुण्यं तत्र स्यात्कल्पना च लघीयसी॥ ११॥

---

पुनः शङ्कते—नन्वेवमिति। शङ्काद्वयं युगपदेव परिहरति—न संभवतीति। पुनरपि शङ्कते—नन्विति। पुनरपि परिहरति—तन्नेति। यावन्ति हि पदानीति। समभिव्याहृतपदानां संभूयकारित्वव्युत्पत्तेरिति भावः। युक्त्यन्तरमप्याह—किं चेति। गुरुमतमुपसंहरति—तस्मादिति।

---

### टिप्पणी

१. अन्विताभिधानमित्यस्ययमर्थः—एकस्य पदस्य विभक्त्यन्तस्यार्थेनाऽन्वितोऽन्यपदार्थः पदेनाऽनुभाव्यते। न तु विभक्त्यन्तपदार्थमात्रं घटमित्यादौ घटत्वकर्मत्वरूपोर्थः प्रकृति-प्रत्याभ्यामभिधीयते तादृशाभिधायकत्वरूपशक्तिसंवन्धमादाय घटादिपदस्य स्वार्थस्मारकत्वम्। अन्वितघटत्वानुभावकत्वमेव घटत्वेन घटपदस्य संवन्धः। अन्वितकर्मत्वानुभावकत्वमेव कर्मत्वस्य द्वितीयाविभक्तौ संबन्धः। अन्वितार्थप्रतिपादकैरेवपदैः अन्वयस्याप्याभिधानम्।

अन्विताभिधानवादिनां मतम् तथाहि—'गामानय शुक्लां दण्डेन' इति प्रयोजकवृद्ध शब्दश्रवणसमानन्तरं श्रोतुर्मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनकर्तव्यताऽनेन शब्दादवगतेति, भूतार्थसंसृष्टे कार्ये शब्दसमुदायस्य सामर्थ्यमवबुद्धयते। पुनश्च 'गां बधान अश्वमानय' इति प्रयोगान्तरेषु गोशब्दस्यान्वये कार्यसंसृष्टगवाकृतेरन्वयात्, तदुद्धारे च कार्यसंसृष्टगवाकृतेरुद्धारात् कार्यसंसृष्टायां गवि पदसामर्थ्यं कल्प्यते। आनयन—तत्संसर्गव्यभिचारेऽपि कार्यसंसर्गाव्यभिचारात्। एवञ्च प्रथमावगतसंसर्गबुद्धिहेत्वनपवादात् शब्दानां मध्ये पदार्थ—तच्छक्तिव्यवधान-कल्पनागौरवपरिहारात् पदानामेव संसर्गप्रतिपादनसामर्थ्यकल्पना। लाघवाच्च। तस्मात् कार्यसंसृष्टस्वार्थेष्वेव शब्दसामर्थ्यमिति।

अभिहितान्वय इत्यस्यायमर्थः—विभक्त्यन्तपदाभ्यां स्वार्थानुभवौ जन्येते। तादृशानुभव-विषयत्वमेव पदार्थस्याभिहितत्वम्। तदुत्तरतादृशानुभवाभ्यामेव विभक्त्यन्तपदार्थयोस्सं-सर्गानुभवः, न तु पदेन। तथा च पदाभिहितयोरर्थयोरन्वयधीः। न तु विभक्त्यन्तपदार्थयोर्मध्ये एकपदार्थान्वितस्यापरपदार्थस्य पदजन्यानुभवः। तथा च काऽभिहितान्वयपक्षे विभक्त्यन्त-प्रत्येकपदजन्यानुभवस्य वाक्यार्थ धी हेतुत्वम्।

अन्विताभिधायित्वे हि पदानामवश्यमेव विशेषणभूतोऽप्यन्वयोऽभिधातव्यः। अन्यथाऽन्वितप्रतीतेरुत्पत्त्ययोगात्। ततश्चान्वयान्वितविषयशक्तिद्वयकल्पनाददृष्ट-कल्पना गुरुतरा स्यात्। ननूक्तं न पृथगन्वये शक्तिः कल्प्यते। एकैव हि साऽन्वित पर्यन्ता कल्प्यत इति।

तदयुक्तम्—शक्त्यैकया कथं हि स्यादुभयोरभिधेयता।
एक एव विशिष्टोऽर्थः सत्यमन्यद्विशेषणम्॥ १२॥

यद्यपि हि विशिष्टरूपोऽर्थ एक एव। तथाऽपि विशिष्टाद्विशेषणमन्यदेव। तस्मिन्नगृहीते, न तद्विशिष्टं विशेष्यं ग्रहीतुं शक्यते। न च तस्य प्रमाणान्तरं ग्राहक-मस्तीति, शब्देनैव तदभिधानपुरःसरं विशिष्टमभिधातव्यमिति शक्तिद्वयकल्पनात् गौरवं स्यात्। तस्मात्स्वरूपमात्रमभिधातव्यमिति युक्तम्।

न चैवं वाक्यार्थप्रत्ययस्यानुपपत्तिः।

यतः—स्यात्स्वरूपाभिधानेऽपि धीर्विशिष्टार्थगोचरा।
विशेषधीर्हि सामान्यादनायासेन सिद्ध्यति॥ १३॥

---

सिद्धान्तमाह—अत्राभिधीयत इत्यादिना श्लोकद्वयेन। अभिधातव्यः—अभिधाव्यापार-विषयः। तस्मिंश्चागृहीते न तद्विशिष्टमिति। 'नागृहीविशेषणा विशेष्ये बुद्धिः' इति न्यायादि-त्यर्थः। अत्र विशेषणांशप्रत्यायकं प्रमाणान्तरं नास्ति। शब्देनैव तदवगतौ शक्तिद्वयकल्पनात् गौरवम्। अतः पदार्थस्वरूप एवाभिधाशक्तिर्युक्तेति निगमयति—न च तस्येति।

ननु पदानां पदार्थस्वरूपमात्राभिधायकत्वे तन्मते तर्हि अन्वितप्रतीतेर्मूलाभावात् वाक्यार्थप्रतीतिर्निष्प्रमाणिका स्यादित्याशङ्क्याभिहितान्वयवादी तामुपपादयति—न चैवमित्यादि-श्लोकेन। तत एव—पदार्थस्वरूपादेव।

---

अतएव मीमांसामहाभाष्ये 'प्रातिपदिकादुच्चारन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो-विशेपक इत्याह' पृ. ९९ अत्र विशेषकः व्यावर्तक इत्यर्थः। उपलक्षणविधया व्यावर्तकत्व-लाभार्थमितिशब्दो बोध्यः। एवञ्च प्रातिपदिकार्थोपलक्षितो योऽन्वयः, तद्विशिष्टवाचिकेत्यर्थः। अतएव यास्कमुनिना 'प्रकृति-प्रत्ययौ प्रत्ययार्थं सहब्रूतं' इत्युक्तम्। घटत्व-कर्मत्वाद्यंशे प्रकृतिप्रत्यययोरनुवादकत्वादन्वयांशे पर्यवसितं सहवाचकत्वमिति।

## अभिहितान्वयवादस्य संग्रहः

श्रीमान् मीमांसावार्तिककारोऽभिहितान्वयवादं वर्णयाञ्चकार। तथाहि—पदेभ्यः प्रतिपन्नानां पदार्थानां परस्परसंसृष्टार्थाववोधनं मभिहितान्वयवाद इत्यभिधीयते। तत्र श्रोतुः प्रवृत्त्या विशिष्टसंसर्गज्ञानं शब्दकार्यत्वेनाऽनुमाय शब्दसमुदायस्याऽर्थसमुदाये सामर्थ्यं प्रतिपद्यते। तत्र 'गामानय, गां वधान' इत्यादिप्रयोगविशेषेषु आवापोद्वापाभ्यामानयनतत् संसर्गव्यभिचारेऽपि गोमात्रान्वयात्। प्रतिपद्यते। नानयनतत्संसर्गयोः, व्यभिचारात्। एवं सर्वेषां पदानां पदार्थस्वरूपमात्रेषु सामर्थ्यप्रतिपत्तेः किन्निबन्धनसंसर्गबोध इति वीक्षायां, अनन्यथासिद्धान्वय-व्यतिरेकाभ्यां शब्दावगतपदार्थनिबन्धन इति कल्प्यते। ततः पदेभ्यः पदार्थाः, आकांक्षा—योग्यतासत्तिसहितेभ्यो पदार्थेभ्यस्संसर्ग लक्षणया बोध इत्यभिहितान्वयवादिनां मतम्।

सर्वावस्थानां सामान्यात्मनि पदार्थस्वरूपे पदेनाभिहिते तत एवान्वितरूपावस्थाविशेषप्रतीतिसिद्धेर्न तावदभिधाशक्तिरुपकल्पयितुं शक्यते। यच्चैवं सति 'गौरानीयतामि'त्यत्र कारकेण क्रियया च क्रिया-कारकमात्राक्षेपान्न नियमेन गौरानयनेन, अनयनं च गवाऽन्वयं लभेतेत्युक्तम्।

तत्रोच्यते - तुल्योऽभिधानपक्षेऽपि स दोषः शब्दगोचरः।
यत्तु तत्रैकवाक्यत्वं पदार्थेष्वपि तत्समम ॥ १४ ॥

योऽप्याभिधानिकमन्वयमिच्छति, तस्यापि तुल्योऽयं दोषः। प्रमाणान्तरेण क्रियान्तरे स्थित्यादिके, कारकान्तरे चाश्वादिके सन्निहिते सति 'गौरानीयतामि'त्येतत्-पदद्वयमुच्चारितं सन्निध्यपेक्षायोग्यत्वानामविशेषात् स्थित्यन्वितां गाम्, आनयनञ्चाश्वान्वितमभिदध्यान्न नियमेन गवानयनान्वयसिद्धिरिति ?

तत्र यदुत्तरं-तथा सत्येकवाक्यत्वं बाध्येतेति। तत् पदार्थेष्वपि समानम्। यद्यपि गोपदार्थेन क्रियामात्रान्वयः आक्षिप्यते। तत आनयेत्यर्थेनापि कारकमात्रान्वयः, तथाऽपि तत्प्रतिपादकयोः पदयोरेकविशिष्टार्थप्रतीतिलक्षणैकवाक्यत्वावगमात् तन्माबाधीति, श्रुतयोरेव परस्परनियमः।

यत एव चायं नियमः पदान्तरसमभिव्याहाररूपाद्वाक्यादेव सिध्यति, न पदार्थसामर्थ्यमात्रात्। अत एव शब्दस्य प्रमाणान्तरत्वम्। अन्यथाऽनुमानं स्यात्। तेन पदार्थसामर्थ्यादनियमेनानेकवाक्यार्थपरिप्लवे सत्यपि, असत्यामपि वाक्यार्थविशेषव्याप्तौ परस्परसमभिव्याहारादेव विशिष्टवाक्यार्थावगतिसिद्धिः।

आह च—'तत्रानैकान्तिकानेकवाक्यार्थोपप्लवे सति।
अन्योऽन्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः॥
अतोऽन्वयातिरेकाभ्यामनुमा नेयमिष्यते।
एकार्थैकान्तिकत्वं तदन्यथैवात्र लभ्यते॥' श्लो. वा. श्लो ९२८-९२१। इति।

यदनुमाने व्याप्तेः फलमेकार्थनिर्णयलक्षणं, तदत्रान्यत एव पदान्तरसमभिव्याहारलक्षणाद्वाक्यात्सिध्यतीत्यर्थः।

---

इदानीमभिहितान्वयवादी पूर्वपक्षिणा स्वपक्षेऽभिहितं दूषणमुद्धर्तुमनुवदति—यच्चैवमिति। साम्येन तत् परिहरति—तत्रोच्यते। तुल्योऽभिधानपक्षेऽपीत्यादिश्लोकेन। शब्दगोचरः—पदगोचरः। साम्यमेव दर्शयति—यद्यपीति। श्रुतयोरेव परस्परं नियम इति। सामान्याक्षेपस्तु पदार्थसामर्थ्यलभ्यः, विशेषनियमस्तु एकवाक्यताधीन इत्यर्थः। यतो विशेषनियमस्त्वेकवाक्यतालभ्यः। अत एवास्य पृथक्प्रमाणत्वमित्याह—यत एव चेति। एकवाक्यत्वस्य वाक्यार्थप्रतीत्युपयोगाभावेऽनुमानमात्रमेव परिशिष्यत इत्याह—अन्यथेति। फलितं दर्शयति—तेनेति। परिप्लवे सतीति। पदार्थसामान्यस्य सर्वान्वयार्हत्वादित्यर्थः। असत्यामिति। पदार्थसामान्यस्य संसर्गविशेषव्याप्तावविद्यमानायामित्यर्थः।

एकवाक्यताया विशिष्टवाक्यार्थावगतिनियमनिमित्तत्वे संमतिमाह—आह चेति। अनियतानेकवाक्यार्थप्रतीत्युपप्लवे सतीत्यर्थः। अन्योन्यात्मव्यवच्छेदात् समभिव्याहृताभ्यामन्योन्याभ्यामर्थान्तरव्यवच्छेदात्। अन्वय-व्यतिरेकाभ्यां। श्लोकतात्पर्यमाह—यदनुमान इति।

## उभयोस्साम्य–वैषम्यवर्णनम्

तेनैतदुक्तं भवति–उभयोरपि वादिनोरनेकसाधारणान्वितप्रतिपादकत्वशक्तिरेकवाक्यतया मिथो नियम्यते इत्येतावदवश्यं कल्पनीयम्। तत्र प्रमाणान्तरेण क्रियान्तरे सन्निहिते पदान्तरेण चानयने गोपदमाकाङ्क्षाद्यविशेषादुभयान्वितगोप्रतिपादनसमर्थमप्यानयत्येकवाक्यतया तदन्वितमेव स्वार्थमभिधत्त इति कल्प्यम्। मम तु गोपदार्थः स्वभावादेव येन केनचिदन्वितं स्वमात्मानं प्रतिपादयितुं समर्थः पदान्तरैकवाक्यतया तदर्थान्वितमेवात्मानं प्रतिपादयतीति कल्प्यमित्येतावदावयोस्तुल्यत्वम्। पदस्य तु भवान् विशिष्टे शक्तिं कल्पयति। वयन्तु स्वरूपमात्रे इति महान् विशेषः।

## एकवाक्यताया अन्वयविशेषनियामकत्वमावश्यकमिति वर्णनम्

अपेक्षाभावाददोष इति चेत्? न। सत्यामप्यस्य दर्शनात्।

स्यादेतत्। न वयं साधारणी पदशक्तिरेकवाक्यतया नियम्यत इति कल्पयामः। कथन्तर्हि? अथान्तरेणान्विताभिधानं न भवति। अपेक्षाभावात्। सा ह्यन्विताभिधानोपलक्षणम्। न च प्रमाणान्तरप्रतीतयोः क्रियाकारकयोरपेक्षा विद्यते। श्रुतयोस्त्वपेक्षा। सा च परस्परसंबन्धादपि निवर्तत इति, नार्थान्तरान्वयप्रसङ्गः–इति।

तन्नैवम्। सत्यामप्यपेक्षायामन्वयादर्शनात्। भवति हि कदाचिदियमवस्था–यदैकस्मिन् देशे ह्रेषादिशब्देनाश्वमनुमाय तस्य क्रियाविशेषं जिज्ञासते-किमश्वो गच्छति, तिष्ठति वेति। प्रदेशान्तरे च पदनिक्षेपशब्देन गतिमनुमाय, कारकविशेषं जिज्ञासते–किमत्र गौः, अश्वो वा गच्छतीति। तस्यामवस्थायां गौस्तिष्ठतीति पदद्वयं कश्चिदुच्चारयति। तत्र यद्येकवाक्यत्वं नियामकं नेष्यते, ततो ह्रेषादिशब्दानुमितस्याश्वस्य क्रियाविशेषापेक्षत्वात्तिष्ठतीति पदावगतायाः क्रियायाः कारकविशेषापेक्षत्वात्परस्परान्वयः स्यात्–तिष्ठत्यश्व इति। तथा पदनिक्षेपशब्दानुमितस्य गमनस्य कारकापेक्षत्वाद्गोपदावगतायाश्च गोः क्रियापेक्षत्वादन्योन्यान्वयः स्यात् गौर्गच्छतीति। न नियमेन गौस्तिष्ठतीत्यन्वयः–सिध्येत्, सन्निध्यपेक्षायोग्यत्वानामविशेषात्। न चैवं दृश्यते। न च पदसामर्थ्यमेव पदान्तरस्मारितान्वितस्वार्थविषयावबोधनाय व्यवस्थापकमिति वक्तव्यम्। अशाब्दै-

---

नन्वेवमावयोः साम्यमेव। न तु त्वन्मते विशेष इत्याशङ्क्य, प्रतिपादितं साम्यमनुवदन् विशेषं दर्शयति–तेनैतदुक्तमित्यादिना महान् विशेष इत्यन्तेन। ननु पदार्थस्यापि वाक्यार्थप्रतिपादनशक्तिकल्पनान्न साम्यमिति चेत्? न। शक्तिमन्तरेणान्वयसामर्थ्याक्षेपात्। नन्वेकवाक्यतायाः नियामकत्वे हि भवेदावयोः साम्यम्। न हि तन्नियामकम्, नियामकत्वाभावेऽतिप्रसङ्गश्च नास्ति। आकाङ्क्षाराहित्यादश्रुतेनान्वयाभावादिति शङ्कते–अपेक्षाभावादिति। श्रुतेनैवान्विताभिधानमिति नियममनङ्गीकुर्वतस्तवाकाङ्क्षाया अन्विताभिधानोपलक्षणत्वाङ्गीकारेऽप्येकवाक्यतायाः–नियामकत्वाभावेऽतिप्रसङ्गस्तदवस्थ एव। अत आवयोः साम्यमेवेति परिहरति–न सत्यामपीति। शङ्कोत्तरे विवृणोति–स्यादेतदित्यादिना। कल्पयाम इति। येन वैषम्यं न स्यादिति शेषः। अपेक्षाभावात्–आकाङ्क्षाभावात्। ननु गोपदं स्वसामर्थ्यात्तिष्ठतिपदोपस्थितेनैवार्थेनान्वितं स्यात्। ननु मानान्तरोपस्थितेनेत्याशङ्क्य, त्वन्मतविरोधन्न तद्युक्तमित्याह–न च पदेति। इष्टत्वादिति। विश्वजिदादाविति शेषः।

रप्यन्विताभिधानस्येष्टत्वात्। तस्मान्न पदसामर्थ्यान्नियमसिद्धिः। अत एकवाक्यतैव शरणमर्थनीया नियतैकान्वयबोधनाय पदैरप्यन्विताभिधायिभिः। सा च पदार्थैरपि स्वभावसिद्धान्वयबोधनसामर्थ्यैस्तन्नियमायापेक्ष्यत इति कृतमन्विताभिधानपरिकल्पनव्यसनेन।

## शाब्दिकैरप्येकवाक्यताया अन्वयनियामकत्वमादृतमिति युक्त्यन्तरवर्णनम्

किञ्च धवखदिरावित्यादिषु 'सिद्धन्तु युगपदधिकरणवचने द्वन्द्ववचनात्' का. वा सं. १३८५ इत्यभ्युपगमाद्वाचकत्वानभ्युपगमाच्चावश्यं खदिरार्थो द्विवचनान्वयायार्थान्तरसद्वितीयमात्मानं लक्षयति। नाभिधत्ते। येन केनापि सद्वितीयस्य तदन्वयोपपत्तौ किमिति धवसद्वितीयमेवात्मानं लक्षयति। तदेकवाक्यत्वादिति चेत् ?- तर्हि तदेव सर्वत्र पदार्थानामन्यान्वितात्मलक्षणायां कारणं भवतीति न कदाचिदक्लृप्तकल्पनम्।

यद्यपि तुल्यैव शक्तिकल्पना स्यात्, तथाऽपि पदार्था एव वाक्यार्थे प्रमाणं युक्तमङ्गीकर्तुम्। न पदानि। आनन्तर्य-व्यवधानाभ्याम्। अन्विताभिधानवादेऽपि हि पदैः पदार्थेष्ववगतेषु पश्चाद्वाक्यार्थज्ञानं जायते। अन्यथा सन्निधेर्दुर्लभत्वात्। ते तु तैरभिहिताः, स्मारिता वेत्यन्यदेतत्। सर्वथा तावत्पदग्रहणानन्तरं पदार्थेषु प्रतीतेषु वाक्यार्थावगतिरित्यविवादम्। ततश्चानन्तरभूतपदार्थातिक्रमेण व्यवहितानि पदानि न कथञ्चित् वाक्यार्थं प्रतिपादयन्तीति, युक्तं पदार्थावगतिः वाक्यार्थावगतेः कारणं भवतीति कल्पयितुम्। न च पुनः पदानुसन्धानमस्तीति किञ्चन प्रमाणमस्ति।

---

वैयाकरणैरपि पदान्तरसमभिव्याहारस्यान्वयनियामकत्वमङ्गीकृतमित्याह- किञ्चेति। इत्थं हि तदनुशासनम्-'सिद्धन्तुयुगपदधिकरणवचने द्वन्द्ववचनादि' का. वा. १३८५ ति इति द्वन्द्वसमासः प्रतिशब्दं युगपदर्थद्वयप्रतिपादकः। तस्योदाहरणम्—धवखदिराविति। धवौ च खदिरौ चेति विग्रहः। तत्र धवशब्दः स्वार्थमभिधत्ते। समासवृत्त्या तु सद्वितीयं स्वात्मानं लक्षयति। एवं—खदिरशब्दोऽपि। तत्र केन सद्वितीयत्वमित्यपेक्षायामेकवाक्यताबलात् खदिरेणेति वक्तव्यम्। तद्वदत्रापीत्यर्थः। वाचकत्वानभ्युपगमादिति। तदभ्युपगमे हि केवलधवशब्दस्यैवोभयवाचकत्वात् एकवाक्यतायाः—नियामकत्वं न स्यादित्यर्थः।

शक्तिकल्पनासाम्यमङ्गीकृत्यापि दृष्टानुगुण्यात् अभिहितान्वय एव ज्यायानित्याह—यद्यपीति। आनन्तर्य-व्यवधानभ्यामिति। वाक्यार्थापेक्षया पदार्थानामानन्तर्यं, पदानान्तु व्यवधानमित्यर्थः। त्वन्मतेप्येतदावश्यकमित्याह-अन्विताभिधानवादेऽपीति। एवमनङ्गीकारे दोषमाह—अन्यथेति। पदार्थस्वरूपावगत्यभावे पदान्तरोपस्थितेन पदार्थेनान्विताभिधानं त्वदभिमतं—न स्यादित्यर्थः। ननु त्वन्मते पदाभिहिताः पदार्थाः वाक्यार्थनिदानम्। अस्मन्मते तु पदस्मारिताः पदार्थाः। अतो वैषम्यमित्याशङ्क्य, अप्रयोजकमेतदित्याह—ते तु तैरभिहिता इति। न च पुनः पदानुसंधानमिति। वाक्यार्थप्रतीतेः पूर्वक्षण इति शेषः।

---

१. पञ्चिकाप्रकरणे पृ० ३९२—३९४ अन्वयविशेषनियामकत्वमेकवाक्यताया न संभवतीत्युक्त्वार्थस्यैवाऽत्र निरासः क्रियते ग्रन्थकृतेत्यवधेयं विज्ञैः।

## अविवादस्थलान्तरप्रदर्शनेन दृष्टानुगुण्यवर्णनम्

किञ्च दीर्घतमेषु वाक्येष्वशक्यमेवानुसन्धानम्। असत्यपि च तस्मिन् पदार्थानुसन्धानमात्रेण वाक्यार्थः प्रतीयत इति सर्वजनीनमेतत्। तेन दृष्टानुगुण्यादपि पदार्थनिमित्तक एव वाक्यार्थो, न पदनिमित्तः। दृष्टबाधप्रसङ्गात्।

तदाह—'पदार्थानाञ्च सामर्थ्यं गम्यमानमपह्नुतम्।
आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति॥' श्लो॰ वा॰ पृ. ८७८ इति॥

एतेन—यत् पदानामेवान्विते सामर्थ्यमित्यत्र कारणमुक्तं 'प्राथम्यादिति' तद्विपर्ययसाधनमिति वेदितव्यम्।

यत्तु तात्पर्यात्पदानामेव साक्षादन्वितप्रतिपादकत्वं युक्तमित्युक्तं, तत् काष्ठानामप्यनपेक्षितज्वालानां पाकसाधनत्वम्, आग्नेयादीनाञ्चातन्त्रितावान्तरव्यापाराणां परमकार्यसाधनत्वमापादयेत्। अथ तत्राग्नेयादिस्वरूपेषु तिरोहितेषु जायमानं परमापूर्वं न तैः साक्षाज्जनयितुं शक्यते। तात्पर्यञ्चावान्तरव्यापारद्वारेणापि साधयतामविरुद्धमित्युच्यते, तदत्रापि समानम्। अत्रापि हि तिरोहितेष्वेव पदेषु पदार्थानुसन्धानानन्तरमवगम्यमानस्य वाक्यार्थस्य पदार्था एव साक्षात्साधनम्। पदानि तु तद्द्वारेणैव साधनं, न साक्षात्—इति।

नन्वेवमभिधायकत्वं पदानां न स्यात्। पदार्थस्वरूपावगतेः स्मरणादविशिष्टत्वात् स्मारकत्वमेवास्तु। नाभिधायकत्वम्। भवत्वेवमिति केचित्।

तथा च—'भावनावचनस्तावत्तां स्मारयति लोकवत्।' श्लो. वा. पृ ५१४
पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते॥' श्लो. वा. शब्द १०७
'तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः।
तस्मात्तत्स्मरणेष्वेव सङ्गतेषु प्रमाणता॥' बृहट्टीका। इत्याहुः।

## अन्येषां मतम्

अन्ये त्वाहुः—प्रत्यासत्तिमित्तं स्मारकत्वम्। न च पदपदार्थयोः संयोगसमवायादिलक्षणा प्रत्यासत्तिरस्ति, यतः स्मारकत्वं स्यात्। वाचकत्ववदिति चेत्? न। तस्य स्वाभाविकत्वात्।

---

इदानीमविवादस्थलान्तरप्रदर्शनेनापि पदार्थप्रतीतेरेव वाक्यार्थप्रतीत्यानुगुण्यं द्रढयति—किंचेति। किञ्च त्वदुक्तयुक्तिरपि त्वद्विपरीतेत्याह—एतेनेति। ननु पदानामेव बोधकस्वभावत्वात् साक्षाद्वाक्यार्थबोधकत्वं युक्तमिति तदुक्तम्। तदतिप्रसङ्गेन दूषयति—यत्त्विति। अतन्त्रितम्—अनपेक्षितम्। अवान्तरव्यापार एव कार्यम्। अतिप्रसङ्गमाशङ्कते—अथ तत्रेति। तात्पर्यञ्च [ लिङ्विधितात्पर्यञ्च ]। अवान्तरव्यापारद्वारेण—अवान्तरापूर्वद्वारेण। प्रकृतेऽपि तथेत्याह—तदत्रापीति।

ननु पदार्थप्रतीतेरेव वाक्यार्थप्रमाणत्वे, पदानां वाचकत्वं न स्यात्। तेषां स्मारकत्वेनापि पदार्थप्रतीत्युपपत्तेरिति शङ्कते—नन्वेवमिति। बाढमित्येव केषांचित् परिहार इत्याह—भवत्वेवमिति। तत्र तत्र तथैवाचार्यस्य व्यवहार इत्याह—तथाचेति। भावनायां व्युत्पन्नतया तत्प्रतिपादको लिङादिप्रत्ययो भावनावचनः।

स्यादेतत्। यथा सम्बन्धान्तराभावेऽपि वाचकत्वम्। एवं स्मारकत्वमपि भविष्यति। तन्नैवम्। स्वाभाविकत्वाद्वाचकत्वस्य। प्रत्यायकत्वं हि वाचकत्वम्। तच्च स्वभावशक्त्याऽप्युपपन्नं चक्षुरादीनामिव रूपादिषु। ननु तत्रापि संयोग-संयुक्तसमवाय-तत्समवायलक्षणः सम्बन्धो विद्यत एव। सत्यम् स तु रसादिसाधारणः। शक्तिरेव त्वसाधारणं प्रत्यायकत्वे निमित्तम्। तद्वच्छब्दस्यापि स्वाभाविक्यैव शक्त्या प्रतिपादकत्वं भविष्यति। स्मारकत्वं तु संस्कारोद्बोधेन। न च सम्बन्ध्यर्थान्तरादर्शनेनासावुद्बोधयितुं शक्यते। क्वचिदप्यदर्शनात्।

## शंका

ननु प्रत्यायकत्वमप्यसम्बन्धिनो नैव दृष्टम्। स्वाभाविकशक्तिशालिनामपि चक्षुरादीनां सम्बध्यैव प्रत्यायकत्वात्। अन्यथा दविष्ठानामपि ग्रहणप्रसङ्गात्। शब्दस्य तु न कश्चिदर्थेन सम्बन्धोऽस्ति। तत्कथमस्य प्रत्यायकत्वम्? अथान्यत्रादृष्टमपि तदिहैव कल्प्यते। तर्हि स्मारकत्वमेव किमिति न कल्प्यते। वक्तव्यो वा विशेषः।

## तन्निरासः

स उच्यते। सर्वथा तावदन्यत्रासम्बधिनोऽदृष्टमपि स्मारकत्वं, प्रत्यायकत्वं वा कल्प्यम्। तत्र प्रत्यायकत्वकल्पनमेव न्यायः। शब्दानन्तरमर्थप्रत्ययदर्शनात्, तस्यैव तत्र कारणत्वं कल्पयितुं युक्तम्। न तु शब्दात्संस्कारोद्बोधः, तश्चार्थप्रतीतिरिति युक्तम्। प्रणाल्यां प्रमाणाभावात्। तस्मादभिधायकमेव पदं, न स्मारकमिति।

गृहीतग्राहित्वात्स्मरणमेव पदजनितं विज्ञानमिति चेत्? तदसत्। अन्यलक्षणत्वात्। न गृहीतग्राहित्वं लक्षणं स्मरणस्य। किन्तु संस्कारमात्रजन्यत्वम्। प्रत्युत्पन्नकारणजनितं तु यद्गृहीतग्राहि ज्ञानं, तदनुवाद इत्युच्यते। न स्मृतिरिति।

---

अपरे तु स्मारकत्वे नैकन्यायविरोधात् वाचकत्वमेवेच्छन्ति। तदाह—अन्ये त्विति। प्रत्यासत्तिनिमित्तमिति। अन्यथाऽतिप्रसङ्गः स्यादिति भावः। संबन्धो विद्यत एवेति। अतस्तस्य कारणत्वं युक्तमिति भावः। रसादिसाधारण इति। सत्यपि संबन्धे चक्षुषा रसाज्ञानान्न संनिधिमात्रान्ननिमित्तमिति भावः। चक्षुरादीनां संबध्य प्रतिपादकत्वादिति। रसादिप्रतिपादनेत्वयोग्यत्वादिति भावः। अन्यत्र—शब्दव्यतिरिक्तस्थले। इह—शब्दे। प्रणाड्यां—परम्परायाम्। निगमयति—तस्मादिति।

ननु संबन्धग्रहणसमये योऽर्थो गृहीतः, स एव पश्चादपि प्रतिपाद्यत इति गृहीतग्राहकत्वात् स्मारकत्वमेव तेषाम्, नतु वाचकत्वमिति शङ्कते—गृहीतग्राहीत्यादि। परिहरति—न गृहीतेति। संस्कारमात्रेति। मात्रचा प्रत्यभिज्ञाव्यावृत्तिः। ननु शाब्दज्ञान—स्मरणयोर्गृहीतग्राहित्वमविशिष्टम्। अथापि स्मरणान्न वैलक्षण्यं कुतस्तत्राह—प्रत्युत्पन्नेति। प्रत्युत्पन्नकारणजनितं—तदानीमुत्पन्नकारणजनितम्। संस्कारस्य तु तदानीमुत्पत्तिनियमाभावात्, तज्जन्यं ज्ञानं स्मृतिः। अयं तु सर्वोऽपि शब्दप्रत्ययोऽनुवाद इति व्यवह्रियत इत्यर्थः। अत एवाचार्याणां शाब्द एव प्रत्यये-

## वार्तिकस्याशयवर्णनम्

कथंतर्हि वार्तिकघटना ? सत्यम्। घटत एव। अनुवादस्यापि गृहीतग्राहितया स्मरणादविशिष्टत्वात्—

'भावनावचनस्तावत्तां स्मारयति लोकवत्'

इत्यादिष्वौपचारिकः स्मरणव्यवहारः।

तथा च—'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते ॥'

इत्याह। न तु स्मारकमिति दर्शयति। तेनार्थस्वरूपमात्रेऽपि वाच्येऽभिधायकत्वं-पदस्य युक्तमिति।

'प्राथम्यं कारणं यत्तु तद्विपर्ययसाधनम्।
ये तात्पर्याभिधातृत्वे तेऽप्यनेकान्तिकीकृते ॥ १५ ॥' इति संग्रह श्लोकः।

## दृष्टबाधप्रसंगेनान्विताभिधानवादस्य दूषणम्

किञ्च यद्यभिधानत एवान्वितप्रतीतिः, कथन्तर्हि 'गङ्गायां घोषः' इत्यादिषु लाक्षणिकस्य तीरादेर्घोषाद्यन्वितस्य प्रतिपत्तिः। न हि तत्स्वरूपमपि गङ्गाशब्दस्याभिधेयं प्रागेवान्वितम्। अथोच्येत गङ्गाशब्देन निमित्तभूतेऽर्थस्वरूपे स्मारिते सति तेन यत्सं-बन्धात् स्मारितं तीरस्वरूपं, तेनान्वितं स्वार्थं घोषशब्दोऽभिधत्ते। गङ्गाशब्दस्तु तीरस्मरणमात्रोपयोगीति।

यत्र तर्हि सर्वपदानामेव लाक्षणिकार्थत्वं, न कस्यचिदपि मुख्योऽर्थो विद्यते, तत्र कथमन्वितप्रतिपात्तिः ?

अस्ति वा तादृशं वाक्यं सत्यं यत्र न विद्यते।
कार्यं तदन्वितं वापि यथा गच्छति भूमिपः ॥ १६ ॥

सर्वेषामेव पदानां कार्यं, तदन्वितं वाऽभिधेयम्। लिङादीनां कार्यम्, अन्येषां तु तदन्वितम्। यस्तु लोके कुतूहलप्रश्नप्रतिवचनरूपः सिद्धार्थविषयः शब्दप्रयोगः-कार्यशून्यो दृश्यते। यथा कोऽयं गच्छति ? भूमिपो गच्छतीत्यादिः। कवीनां वाऽर्थवि-शेषवर्णनारूपः।

---

स्मरणव्यवहारोऽप्यौपचारिक इत्याह—अनुवादस्यापीति। उपचारबीजं गृहीतग्राहित्वम्। उपसंहरति—तेनेति। प्रतिपादितं प्रमेयजातं श्लोकमुखेन संगृह्णाति—प्राथम्यमिति।

इतः परमन्वितप्रतीतेः पदार्थनिमित्तकत्वाभावे पदमात्रनिमित्तकत्वे च दृष्टबाधप्रसङ्गेन दूषयितुमुपक्रमते—किंचेत्यादिना। अभिधानत एव—अभिधाव्यापारेण। घोषाद्यन्वितप्रतीतिरिति। गङ्गाशब्देनेति शेषः। अन्वितप्रतीतेश्च शब्दमूलत्वं भवतोऽभिमतमिति भावः। लाक्षणिकस्य पदस्य नान्वितबोधकत्वं, किंतु पदार्थस्वरूपस्मारकत्वमेव। पदान्तरस्य त्वेतदन्वित-परत्वमित्युत्तरमाशङ्कते—अथोच्येतेति। निमित्तभूते—वाच्यभूते।

ननु भवेन्नामात्र कथंचिदन्वितप्रतीतिः। सर्वपदलक्षणास्थले कथमिति पृच्छति—यत्र तर्हीति। तादृशं स्थलं प्रश्नोत्तरमुखेन दर्शयति—अस्ति वेति श्लोकेन। तदन्वितं चाभिधेयमिति।

यथा—'नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः।
रामाः कौशेयसंवीताः प्रनृत्यन्तीव सारसाः ॥' शा. भा पृ. ९५ । इति ।

इत्यादिः, स लाक्षणिक इति हि भवतां समयः। तत्रापि चान्वितसंविदस्त्येव। न चासौ पदैरुदेतुमर्हति। तेषामतदभिधायकत्वात्। न हि भूमिपशब्दस्य कार्यान्वितस्वार्थाभिधायित्वादाकाङ्क्षादित्रयशालिनाऽपि गच्छत्यर्थेनान्वितः स्वार्थोऽभिधेयः। तथा गच्छतेरपि तदन्वितोऽनभिधेय एवेति, न पदनिमित्तान्वयप्रतीतिर्भवेत्। तेनावश्यं पदस्मारितनिमित्तभूतार्थस्वरूपाभ्यामेवाकाङ्क्षायोग्यत्वैकवाक्यत्वसनाथाभ्यामियमन्वितसंविदुदयमासादयतीत्यकामेनाप्यनुज्ञातव्यम्। ततश्च सर्वत्रैव तथाऽस्तु, किमन्विताभिधानकल्पनया।

## सिद्धार्थेष्वनुमानेन वाक्यार्थज्ञानमिति शंका

अथ तत्रानुमानेन संविदन्वितगोचरा।
जायते न पदैर्नापि पदार्थैरिति मन्यसे ॥ १७ ॥

यथा सिद्धार्थेषु न पदनिमित्ता वाक्यार्थसंवित्, तथा पदार्थनिमित्ताऽपि न भवति। किन्त्वनुमाननिमित्ता। आप्तवाक्यरचना हि पौरुषेयी विशिष्टार्थविवक्षापूर्विकातामनुमापयति। सा च स्वकारणभूतं विशिष्टज्ञानम्। तेन च स्वविषयभूतार्थानुमानसिद्धौ न सर्वपदार्थानामन्वितप्रतिपादनसामर्थ्यमुपकल्पयितुं शक्यते—इति।

## तन्निरासः

यद्येवम्—यत्रापि कार्यसंवित्तिस्तत्राप्येवं प्रसज्यते।
पदानामपि सामर्थ्यमन्वितेऽतो न सिध्यति ॥ १८ ॥

गामानयेत्यादिष्वपि त्वदुक्तयैवानुमानपरम्परया विशिष्टकार्यावगतिसिद्धेर्न पदानामप्यन्विताभिधायित्वं सुकल्पम्।

---

तत्रैव सर्वेषां शब्दानां व्युत्पत्तेरित्यर्थः। स लाक्षणिक इति। सर्वेषां पदानां कार्यपरत्वादन्यत्र सिद्धार्थे लक्षणेत्यर्थः। तस्मात् सिद्धार्थस्थले पदार्थनिमित्तैवान्वितप्रीतितिरेषितव्या। तथैव सर्वत्र स्यादित्याह—तेनावश्यमिति।

ननु वेदे सिद्धार्थपरं वाक्यं नास्ति। लोकेऽपि सिद्धार्थपराद्वाक्यात् तदर्थप्रतीतिरनुमानादेव, न पदार्थज्ञानादिति शङ्कते—अथेति श्लोकेन। सिद्धार्थेषु पदानामबोधकत्वं परेषां संप्रतिपन्नमिति, पदैरित्येतद्दृष्टान्तपरतया व्याचष्टे यथा सिद्धार्थेष्विति। अनुमाननिमित्ततामुपपादयति—आप्तवाक्यरचना हीति। पौरुषेयी वाक्यरचना विशिष्टार्थविवक्षापूर्विका। वाक्यरचनात्वात्। मदीयवाक्यरचनावत्। तथा विवक्षा च ज्ञानपूर्विका। विवक्षात्वात्। मदीयविवक्षावत्। तथा तच्च ज्ञानमर्थवत्। आप्तस्य विवक्षानिमित्तज्ञानत्वात्। इत्येवमनुमानपरम्परया वाक्यार्थप्रतीतिः। न पदार्थनिमित्तेत्यर्थः। लौकिककार्यपरवाक्यप्रतिबन्द्या परिहरति—यत्रापीति श्लोकेन। कार्यवगतिसिद्धेरिति। कार्यान्वितवाक्यार्थावगतिसंभवादित्यर्थः।

## शंका

अथोच्येत—यदर्थविषयं वाक्यं तेनासावनुमीयते ।
नान्यस्तेनान्विते सिध्येत्पदानां शक्तिनिर्णयः ॥ १९ ॥

विशिष्टार्थविषयव्यवहारदर्शनेन हि व्यवहरमाणस्य तद्विषयमेव विज्ञानमुत्पन्नमित्यवश्यमङ्गीकर्तव्यम्, इतरथा अतिप्रसङ्गः । न च तत् वाक्यमात्रात्सिध्यति, किन्तु विशिष्टवाक्यावगमात् । तस्य चार्थविशेषाभिधायित्वमेव विशेषः । विशिष्टवाक्यार्थप्रतिपादकेन हि वाक्येन तद्विषयविवक्षां वक्तुरनुमाय, ततो विशिष्टार्थविषयविज्ञानानुमानद्वारमर्थविशेषमनुमाय प्रयोज्यवृद्धो विशिष्टार्थव्यवहाराय घटते । नान्यथा । तेनावश्यं विशिष्टार्थप्रतिपादकत्वं वाक्यस्याभ्युपगन्तव्यम् । तच्चान्वयव्यतिरेकाभ्यामवयवशब्द एवेति । सिद्धं पदानामन्विताभिधायित्वमिति ।

## तन्निरासः

यद्येवम्—सिद्धार्थेभ्योऽपि वाक्येभ्यो विशिष्टार्थावबोधनात् ।
पदानाञ्चासमर्थत्वात्पदार्थानां निमित्तता ॥ २० ॥

सिद्धार्थेभ्योऽपि हि वाक्येभ्यः 'पार्थिवो गच्छती'त्यादिभ्यो राजगमनादिरूपविशिष्टार्थविषयमेव विज्ञानमुपजायते । तच्च वक्तुर्विशिष्टज्ञानानुमानात् । विशिष्टवाक्यरचनया च तादृशज्ञानानुमानम् । वाक्यस्य च विशेषस्तदर्थप्रतिपादकतया स्यात् । नान्यथा । तेन विशिष्टार्थप्रतिपादकत्वं वाक्यस्याभ्युपगन्तव्यम् । तत्र च पदानां—

---

ननूत्तमवृद्धेन वाक्ये प्रयुक्ते मध्यमवृद्धस्तावत् प्रथमं विशिष्टार्थपरेण तेन वाक्येन तमर्थमवबुध्य, पश्चात् कुतश्चित् कारणादनाप्तत्वशङ्कायां तमेव वाक्यार्थमनुमानपरम्परयाऽपि निश्चिनोति । तेन पदानां वाचकत्वशक्तिपुरःसरमेवानुमानात् कार्यपरपदानामन्वितपरपदत्वमङ्गीकर्तव्यमिति, प्रतिबन्दीमोचनमाशङ्कते—अथोच्येतेत्यादिना—श्लोकेन । असौ—वाक्यार्थः । नान्यः—अवाच्यभूतोऽन्योऽर्थः । विशिष्टार्थविषयवाक्यदर्शनेन—वाक्यश्रवणेन । व्यवहरमाणस्य—प्रवर्तमानस्य मध्यमवृद्धस्य । तद्विषयमेव—विशिष्टवाक्यार्थविषयमेव । उत्पन्नमिति । प्रथममिति शेषः । वाक्यमात्रात्—विशिष्टार्थतात्पर्यशून्यात् । अस्तु वाक्यस्य विशिष्टार्थपरत्वम् । तच्छ्राविणो मध्यमवृद्धस्य च तद्गोचरं ज्ञानमुत्पद्यताम् । पश्चादनुमानप्रवृत्तिः कुतः ? अन्वितपरत्वं च कथमित्याशङ्क्याह—विशिष्टवाक्यार्थेनेति । वक्तुरनुमायेति । अनाप्तत्वशङ्कायां सत्यां पश्चादनुमायेत्यर्थः । ततः—विवक्षानुमानानन्तरम् । अस्तु वाक्यस्य विशिष्टार्थपरत्वम् । तावता पदानामन्विताभिधायित्वं कुतः ? तत्राह—तच्चेति । अन्वयव्यतिरेकाभ्याम्—अवापोद्वापाभ्याम्—भागशः भानमित्यर्थः ।

तर्हि त्वदुक्तयैव रीत्याऽस्मन्मतसिद्धिः स्यादित्याह—यद्येवमित्यादिश्लोकेन । विज्ञानमुपजायत इति । पदानां वाचकत्वसिद्धया प्रथमं वाक्यश्रोतुरिति शेषः । तदनन्तरं त्वदुक्तयैव रीत्या तदेव ज्ञानं कुतश्चित् कारणादनाप्तत्वशङ्कायामनुमानेन स्थिरीक्रियत इत्याह—तच्चेति । अनुमानं, तु न वाक्यमात्रात् । किंतु विशिष्टवाक्यादित्याह—विशिष्टवाक्येति । स च विशेषो वाचकत्वशक्त्येत्याह—वाक्यस्य चेति । ततः किं ? तत्राह—तेनेति ।

अभ्युपगन्तव्यमिति । अस्मन्मते तु विशिष्टार्थपरत्वमविवादमेव । त्वयाप्येतदङ्गीकार्यम् । अनुभवसिद्धत्वात् । तच्च पदार्थेभ्य इत्यत्रैव तव विवाद इत्यर्थः । अस्त्वेवम् । एतावता-

कार्यान्वितस्वार्थाभिधायिनामताद्दशे सामर्थ्याभावात् पदार्थद्वारेणैव विशिष्टार्थप्रतिपादकत्वमभ्युपेतव्यम्।

## प्रकारान्तरेण पदार्थस्यानिमित्तत्वशंका

यद्युच्येत नावश्यमन्वितप्रतिपादकेनैव वाक्येन तद्विषयविज्ञानानुमानम्। अर्थविशेषस्मारकपदसंघातविंशषादेव विशिष्टानुमानलाभात्। तथा हि ईद्दशी व्याप्तिसंवित्–यो येषां पदार्थानामितरेतरान्वययोग्यानां प्रतिपादकानि पदान्याप्तः समुच्चारयति, तस्य तेषामन्वये ज्ञानमस्तीति। एवञ्चान्तरेणापि पदार्थानामन्वितप्रतिपादकत्वं पदविशेषरचनयैव ज्ञानानुमानद्वारेण सिद्धार्थेषु वाक्येषु विशिष्टवाक्यार्थानुमानसम्भवात् न पदार्थनिमित्तत्वं वाक्यार्थस्य सिध्यतीति।

एवन्तर्हि—कार्यार्थेभ्योऽपि वाक्येभ्य एवमेव प्रसिध्यति।
वाक्यार्थवेदनं तेन न सिध्येदन्वितार्थता॥ २१॥

गामानयेत्यादिवाक्येष्वपि पदानां पदार्थस्वरूपाभिधायकत्वमात्रेणापि विशिष्टज्ञानानुमानपुरस्सरं विशिष्टवाक्यार्थानुमानसम्भवान्नान्विताभिधायित्वं सिद्ध्येत्। विनाऽप्यन्विताभिधायित्वं स्वरूपाभिधायकत्वमात्रेणापि येषां पदार्थस्वरूपाणामन्वययोग्यानामभिधायकानि पदानि येनाप्तेनोच्चारितानि, स तदन्वयविदितीदृश्यैव व्याप्त्या—

---

त्वदभिमतसिद्धिः कुतः? तत्राह–तत्रेति। अतादृशेऽन्विते–सिद्धेऽर्थे। पदार्थद्वारेणैवेति। पदानांस्वस्वार्थवाचकत्वं, पदार्थानां तु संसर्गबोधकत्वमित्यभ्युपगन्तव्यम्। अतोऽभिहितान्वयसिद्धिरित्यर्थः॥ २०॥

ननु यदि सिद्धार्थेषु वाक्येषु च पदानां वाचकत्वमङ्गीक्रियेत, तदा त्वदुक्तया रीत्या त्वदभिमतसिद्धिः स्यात्। किंतु पदानां केवलं स्वस्वार्थस्मारकत्वमेव। ततः परमन्वितप्रतीतिः केवलानुमानादेव सिद्धयतीति शङ्कते–यद्युच्येतेति। विशिष्टानुमानसंभवात्–विशिष्टवाक्यार्थानुमानसंभवात्। अनुमानप्रकारमेवाह–तथा हीति। 'पार्थिवो गच्छती'ति वाक्यप्रयोक्ता पदार्थसंसर्गज्ञानवान्, आप्तत्वे सति प्रयोक्तृत्वात्–इत्यनुमानेन पदार्थसंसर्गज्ञानानुमानं सिध्यतीत्यर्थः।

अस्त्वेवम्। एतावता अभिहितान्वयनिरासः कुत इत्यत्राह–एवमन्तरेणापीति। पदानां–पदार्थप्रतिपादकत्वं पदार्थानामन्वितप्रतिपादकत्वमन्तरेणापीत्यर्थः। पदार्थनिमित्तत्वं वाक्यार्थस्येति। पदैः स्वस्वार्थेषु स्मारितेषु केवलानुमानेनैव तत्संसर्गज्ञानानुमानम्। अतः पदार्थानिमित्तत्वान्नाभिहितान्वयसिद्धिरिति भाव।

तर्हि अनेनैव न्यायेन कार्यपरेऽपि वाक्ये पदानां स्वस्वार्थमात्राभिधायकत्वं, संसर्गबोधस्तु केवलमनुमानात्। अतोऽन्वितपरत्वं पदानां न सिध्यतीति दूषयति–एवं तर्हीति। न्यायसाम्यमेव दर्शयन् श्लोकं व्याचष्टे–गामानयेत्यादीति। तर्हि संबन्धबोधः कुत इत्याशङ्क्य, त्वदुक्तरीत्याऽनुमानादेवेत्याह–विनाऽपीति। अनुमानप्रवृत्तिस्तु पूर्ववत् द्रष्टव्या।

किंच कार्यपरेषु लौकिकवाक्येषु वक्तृसमवेतस्य वाक्यार्थसंसर्गज्ञानस्यानुमानगम्यत्वेऽन्वितवाचकस्य शब्दस्य स्वरूपवाचित्वमपि त्वदभिमतं न सिध्यति। सर्वस्यापि वाक्यस्य वक्तृज्ञानेनैव व्याप्तिग्रहणात्। वेदे च तदसंभवात् तत्प्रामाण्यं न सिध्यतीति प्रतिपादयितुमुपक्रमते—किंचस्वरूपेत्यादिना॥ २१॥

विशिष्टज्ञानानुमानसम्भवात्। किञ्च स्वरूपमात्रमपि नाभिधेयम्। पदविशेषस्यैव वाचकत्ववद्विशिष्टार्थविषयेणैव विज्ञानेन व्याप्तिग्रहणसम्भवात्। यथा हि वाचकत्वं प्रतिपदमर्थविशेषं प्रति गृह्यते–गोपदं सास्नादिमतो वाचकम्। अश्वपदं वाजिवाचकमिति। तथा तत्तदन्वितार्थविषयविज्ञानव्याप्तिस्तस्य तस्य पदस्य ग्रहीतुं शक्यते। आप्तस्य-गोपदरचना आकाङ्क्षित-संनिहित-योग्यार्थान्तरान्वितसास्नादिमद्विज्ञानपूर्विकेति।

ततश्च पदानाम्—अर्थस्वरूपवाचित्वमपि नैव प्रसिध्यति।
प्रागेवान्वितवाचित्वमतो वेदाप्रमाणाता॥ २२॥

न ह्यपौरुषेयस्य वक्तृज्ञानानुमानद्वारं वाक्यार्थप्रतिपादकत्वं वेदवाक्यस्य-सम्भवतीत्यप्रामाण्यं स्यात्।

स्यादेतत्। शब्दश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धस्य चेष्टामुपलभ्य विशिष्टार्थविषया प्रतीतिस्तस्य कल्प्यते। सा च शब्दानन्तर्यात्तत्कारणिकैवेति, शब्दस्य तद्वाचकताशक्तिः कल्प्यते। पश्चात्तु कस्यचिदयथार्थपदरचनामुपलभ्य, कथं व्यभिचारिणो वाक्यात्प्रयोज्यवृद्धस्यार्थनिश्चयः संजात इति विचिकित्स्यैवमवधारयति–नूनमनेनैवायं–वक्तैवमवधारितः नायमनन्विताार्थानि पदानि प्रयुङ्क्ते, तेन नूनमेतेनैषामन्वयो ज्ञात इति ज्ञानानुमानपुरःसरमर्थं निश्चितवानिति कल्पयति। पूर्वावगतन्तु वाचकत्वं न मिथ्या मन्यते। तस्मादस्ति वाचकत्वमिति।

---

नाभिधेयमिति। स्वरूपस्याप्यनुमानेनैव प्रतीतेः, तत्र शब्दशक्तिकल्पनमयुक्तमित्यर्थः। फलितं दर्शयति–अर्थेति श्लोकेन।

नन्वित्थं तावदस्मन्मतस्थितिः। वृद्धव्यवहारेऽपि हि सर्वपदानां वाचकत्वशक्तिग्रहः। तथाहि—प्रथमं तावत् गामानयेत्युत्तमवृद्धेन वाक्ये प्रयुक्ते, पश्चान्मध्यमवृद्धः प्रवर्तते। पार्श्वस्थो व्युत्पित्सुस्तावदेवं निश्चिनोति—अस्य प्रवृत्तिः ज्ञानपूर्विका प्रवृत्तित्वात् मदीयप्रवृत्तिवत्–इति। तच्च ज्ञानं शब्दजन्यम्, शब्दानन्तरभावित्वादिति। ततश्च शब्दानां प्रवृत्तिविषयवाक्यार्थज्ञान-जनकत्वं वाचकत्वशक्त्यैव, नान्यथेति वाचकत्वशक्तिं वाक्यस्य सामान्यतो निश्चिनोति। पश्चादावापोद्वापाभ्यां वाक्यावयवानां पदानामन्विते शक्तिं निश्चिनोति। इत्थं व्युत्पन्नेषु पदेषु कदाचित् कस्यचिदयथार्थां वाक्यरचनामुपलभ्य, सर्वत्र व्यभिचारशङ्कया वाचकशक्तिप्रतिबन्धे–सति, लौकिकवाक्येष्वित्थमनुमिनोति—अस्य वाक्यरचना वाक्यार्थज्ञानपूर्विका आप्तवाक्य-रचनात्वात्–इति। तथा तच्च ज्ञानम् अर्थाव्यभिचारि आप्तज्ञानत्वादिति। इत्थं पूर्वं शब्दशक्तिप्रतिपन्नं पश्चात् कुतश्चित् कारणादनुमितं तमेव वाक्यार्थं पश्चात्तदेव वाक्यमनुवदति। ततश्च शब्दानां वाचकत्वशक्तिः स्वाभाविकी पश्चादनुमानेऽपि न हीयते। अतोऽर्थस्वरूपवाचकत्व-मस्त्येव। स्वतो वाचकत्वात् प्रामाण्यं च स्वरसत एव सिध्यतीत्याशयेन शङ्कते—स्यादेत-दित्यादिना। तस्य–मध्यमवृद्धस्य। कल्प्यते। व्युत्पित्सुनेति शेषः। विचिकित्स्य-विचार्य। अवधारयतीति। व्युत्पित्सुः पुरुष इति शेषः। अनेन-मध्यमवृद्धेन। अयं वक्ता-उत्तमवृद्धः। निश्चितवानिति कल्पयतीति। प्रथमं वाक्यप्रतिपन्नमप्यर्थं पश्चात् कुतश्चित् कारणात् व्यभिचार-शङ्कायां आप्तत्वनिश्चयपूर्वकमनुमानरूपादेव वाक्यात् मध्यमवृद्धो निश्चितवानिति व्युत्पित्सुः कल्पयतीत्यर्थः।

## तन्निरासः

नैतत्सारम्—न हि कार्यादतज्जन्याच्छक्तिः शब्दस्य कल्प्यते।
स्यात्तु तज्जन्यताभ्रान्तेर्भ्रान्तिः सा च निवर्त्स्यति ॥ २३ ॥

न हि प्रयोज्यवृद्धस्य शब्दानन्तरभाविनी प्रतिपत्तिः शब्दजन्या। यत्तस्य शक्तिं कल्पयेत्। शब्दानुमितवक्तृज्ञानलिङ्गजन्यत्वात्। न चान्यतो निष्पन्नं कार्यमन्यस्य शक्तिं कल्पयति, अतिप्रसङ्गात्। यद्यपि च तस्यामवस्थायामन्यजन्यत्वानवधारणाच्छब्दानन्तर्याच्छब्दजन्यत्वं भ्रान्त्याऽवगम्य, शब्दस्य शक्तिर्भ्रान्त्याऽवगम्यते, तथाऽपि पश्चादतज्जन्यत्वमवगत्य तज्जन्यत्वभ्रान्तौ निवृत्तायां, तन्निमित्ता शक्तिभ्रान्तिरपि निवर्तिष्यत एवेति, धूमायमानहिमजनितधूमध्वजविज्ञानवत्। तद्धि स्वरूपेणाबाधितमपि लिङ्गबाधादेव निवर्तते। तथा शब्दस्यापि वाचकत्वकल्पना कार्यस्यातज्जन्यावधारणात् निवर्तितुमर्हति।

नन्वनुमितमप्यर्थं पश्चादनुवदद्वाक्यं वाचकं शक्तं स्यात्। तन्न। अनुवादकत्वे प्रमाणाभावात्। न ह्यनुवादकत्वमन्तरेण किञ्चिदनुपपन्नं, यतस्तत्कल्प्येत। शक्तत्वादनुवादकत्वमिति चेत्? तदितरेतराश्रयं-शक्तेरनुवादः, ततश्च शक्तिरिति। तस्मान्न वाचकत्व सिध्यति।

यदि परमर्थविशेषविषयज्ञानानुमानसिद्ध्यर्थं पुनर्वाचकत्वमवस्थाप्येत, तद्यान्तरेणापि वाचकत्वं शब्दविशेषस्य ज्ञानविशेषेणैव व्याप्तिग्रहणसम्भवादनुपपन्नम्।

---

तत्र तावत् प्रथमप्रतीता शब्दानां वाचकत्वशक्तिर्भ्रान्तैव। तत्कल्प्या वाक्यार्थप्रतीतिरपि व्यभिचारशङ्काकलङ्कितत्वात् मिथ्या। त्वन्मते हि केवलमनुमानाज्जायते। अतः पदानां वाचकत्वं दुर्घटम्। वेदप्रामाण्यं तु दूर इति दूषयति—नैतत्सारमिति श्लोकेन। भ्रान्तेरिति—पञ्चमी। भ्रान्तिनिमित्ता तज्जन्यतेत्यर्थः। न हि प्रयोज्यवृद्धस्येति। शब्दानन्तरभाविनी प्रयोज्यवृद्धस्य वाक्यार्थविषया प्रतीतिर्यदि व्युत्पित्सुना केवलवाक्यजन्येति निश्चिता स्यात्, तदा वाक्यस्य तत्र शक्तिं कल्पयेत। नत्वेवम्। किंत्वनुमानरूपादेव वाक्यात्। अतः सा न—शब्दस्य शक्तिकल्पिकेत्यर्थः। अतिप्रसङ्गादिति। वृक्षशब्दजन्या प्रतीतिः प्लक्षशब्दस्य शक्तिं कल्पयेदित्यर्थः। तस्यामवस्थायाम्—अनुमानप्रवृत्तेः पूर्वावस्थायाम्। भ्रान्तिकारणजन्यप्रतीतेः भ्रान्तत्वे दृष्टान्तमाह—धूमायमानेति।

ननु पूर्वं वाचकत्वशक्त्या प्रतिपन्नः, पश्चात् व्यभिचारशङ्कया शक्तिप्रतिबन्धे सत्यनुमितः पुनरपि शक्त्युद्बोधे सति तेन वाक्येनानूद्यते। अतो वाचकत्वमङ्गीकर्तव्यमिति शङ्कते—अनुमितमिति। दूषयति—तन्नेति। पूर्वं शक्तिनिमित्ता प्रतीतिः स्वाभाविकी चेत्? पश्चादप्यनुवादः—स्यात्। सा तु भ्रान्तेत्युक्तम्। अतः प्रमाणं नास्तीत्यर्थः। नन्वर्थप्रतीत्यन्यथानुपपत्त्या अनुवादकत्वं कल्प्यत इत्यत्राह—नहीति। अर्थप्रतीतिरानुमानिकीति भावः।

ननु वाचकत्वाभावेऽनुमानप्रवृत्तिरेव न स्यात्। न हि वाक्यात् यत्किंचित् ज्ञानमनुमीयते, अतिप्रसङ्गात्। किंतु वाक्यार्थज्ञानम्। अतोऽनुमानप्रवृत्त्यर्थं वाचकत्वमङ्गीक्रियतामित्यत्राह—यदि परमिति। ज्ञानविशेषेणैवेति। धूमस्य वह्निनेव गोपदस्य सास्नादिमद्व्यक्ति-

तस्माल्लोकवचसामनुमानत्वेन प्रामाण्याङ्गीकरणे पदानां वाचकत्वायोगादप्रतिपादकत्वेनाप्रामाण्यं वेदस्य स्यादिति, तत्प्रामाण्यसिद्ध्यर्थं लोकेऽपि शब्दानां शब्दतयैव प्रामाण्यमभ्युपगन्तव्यम् ।

ननु मा भूत्तस्य प्रामाण्यम् । न तु तावता प्रमाणमन्तरेण वाचकत्वं कल्प्येत । न हि किञ्चित्प्रमाणमस्ति, यतः शब्दस्य वाचकत्वं कल्प्येत । तदभावेऽपि यथोक्तेन न्यायेनानुमानत एव लोके शब्दानन्तरमर्थावगमसम्भवात् ।

स्यादेतदेवं यद्याप्तवाक्यश्रवणादेवार्थबुद्धेर्जन्म स्यात् ।

## अन्विताभिधानदूषणं, स्वमते तदभाव इत्युपपादनम्

जन्म तुल्यन्तु बुद्धीनामाप्तानाप्तगिरां श्रुतौ ।
न चानाप्तोक्तिजाता धीर्लिङ्गादुत्पत्तुमर्हति ॥ २४ ॥
शब्दशक्तिरतः कल्प्या तदुत्पत्तिप्रसिद्धये ।
ये त्वनाप्तोक्तितो बुद्धेरनुत्पत्तिं प्रचक्षते ॥ २५ ॥
लिङ्गत्वं चाप्तवाक्यस्य तेषामेव तु दूषणम् ।
एतावानेव भेदः स्यादाप्तानाप्तगिरां मम ॥ २६ ॥
यत्तानाप्तोक्तिजातायाः प्रामाण्यं स्थाप्यते धियः ।
वक्तृदोषेण दुष्टत्वादाप्तोक्तेर्या तु जायते ॥ २७ ॥
प्रामाण्यं स्थाप्यते तस्या वक्तृधीहेतुसम्भवात् ।
बुद्धिजन्मोभयत्रापि विद्यतेऽतो न दूषणम् ॥ २८ ॥

अन्यमनस्कानामस्तिमितान्तरात्मनां वक्तुर्धीविशेषं तस्य चाप्तानाप्तत्वमनाकलयतामेव यतः कुतश्चिदुच्चरन्ति प्रदेशात् पदानि सहसैव संविदमन्वितार्थगोचरामुत्पादयन्तीति सर्वजनीनमेतत् । न च तत्रानुमानं सम्भवतीति, शब्दानामेव वाचकत्वशक्तिरवश्यं कल्पनीया । तेन नास्माकं किञ्चिद्दूषणम् ।

---

ज्ञानेनेत्यर्थः । प्रतिपादितमर्थं निगमयन् स्वपक्षसिद्धिं परिशेषयति—तस्मादिति । अतो वेदप्रामाण्यसिद्ध्यर्थं लौकिकवचसामनुमानवैषम्यन्तरेण स्वतो वाचकत्वमङ्गीकर्तव्यमित्यर्थः ।

ननु वेदप्रामाण्यसिद्ध्यर्थं वाचकत्वमङ्गीकर्तुं न शक्यते । तत्प्रामाण्यस्य वाचकत्वं प्रत्यनुपयोगात् । अतः तत्प्रामाण्यमस्तु वा, मा वा । वाचकत्वे तु प्रमाणान्तरं वक्तव्यम् । तच्च नास्ति । अर्थप्रतीतेस्तु त्वदुक्तया रीत्या केवलमनुमानतया संभवात् । अतोऽनुमानत्वे वाचकत्वं निराकुर्वतस्तवापि मतेऽनुमानतयैवार्थप्रतीतिसंभवात् वाचकत्वं न संभवतीति प्राभाकरः शङ्कते—नन्विति । लिङ्गरूपादेवाप्तवाक्यादर्थप्रतीतिमभिदधतस्तवैव मते वाचकत्वासिद्धिः । आप्तानाप्तसाधारण्येनार्थप्रतीतिमभिदधतो मम मते तु लिङ्गाभावेऽप्यर्थप्रतीतेर्वाचकत्वशक्तिरस्त्येवेति भाट्टः परिहरति—स्यादेतदेवेति । श्रुतौ—श्रवणे सतीत्यर्थः । उत्पत्तुमर्हतीति । विप्रलम्भकवाक्यस्यार्थधीमूलत्वाभावादित्यर्थः । अनुत्पत्तिं प्रचक्षत इति । अनाप्तवाक्यानामाप्तवाक्यभेदाग्रहात् प्रत्यायकत्वव्यवहारमात्रम् । न तु प्रत्यायकत्वमिति त्वन्मतस्थितेरित्यर्थः ।

ननूभयविधस्यापि वाक्यस्य वाचकत्वे त्वन्मते आप्तानाप्तवैषम्यं कुत्रोपयुज्यत इत्यत्राह—एतावानिति । श्लोकान् व्याचष्टे—अन्यमनस्कानामिति । अन्यमनस्कानामित्यादिविशेषणो-

ये तु सर्वजनसिद्धमप्येतदपह्नुत्य, अनुमानमेव लौकिकवचसां सङ्गिरन्ते, तेषामेव वेदाप्रामाण्यमापद्यते। न ह्यतदुत्पन्नाद्वाक्यार्थविज्ञानाच्छब्दस्याभिधायकत्वं कल्पयितुं शक्यते। प्रागेवान्विताभिधायित्वम्। असिद्धत्वादन्वितप्रतीतेः। न हि शब्दश्रवणानन्तरं प्रयोज्यवृद्धस्यान्वितसंविदुदये किञ्चन प्रमाणमस्ति, यदन्वितार्थविषयता शब्दस्य सिध्येत्।

प्रमाणमनुमानञ्चेन्न तद्धेतोरदर्शनात्।
अथ प्रवृत्तिर्लिङ्गं चेत्तन्नानैकान्तिका हि सा॥ २९॥

स्यादेतत्—अनुमानेन प्रयोज्यवृद्धस्यान्वितप्रतीतिरवगम्यते इति। तन्न। अनुमानस्य लिङ्गादर्शनात्। ननु प्रवृत्तिरेव लिङ्गम्। सा हि विशिष्टावगतिपूर्विकातामनुमापयतीति। तन्न। अनैकान्तिकत्वात्प्रवृत्तेः। सा हि भवन्मते शुक्तिकायामिव रजतार्थिनो विवेकाग्रहणादपि सिद्ध्यति। तेन 'गामानये'त्यत्र गोप्रातिपदिकेन, द्वितीयया, धातुना, विधिप्रत्ययेन च चतुर्ष्वप्यर्थेषु स्वरूपमात्रेणाभिहितेष्वगृहीतेऽप्यन्वये, तदनन्वयाग्रहादेव प्रवृत्तिसिद्धेर्नान्वितप्रतीतिः कल्पयितुं शक्यते। यो हि रजतमिदमिति पुरःस्थितवस्तुगोचरां संविदमुदीयमानां साक्षात्कुर्वाणोऽपि क्लृप्तकारणानुपलब्ध्याऽपह्नुत्य, अन्यत्रादृष्टमपि भेदाग्रहणस्य प्रवृत्तिहेतुत्वमदृष्टकल्पनाविशेषेऽपि दोषसहितेन्द्रियादेरयथार्थज्ञानजनकत्वमवगत्यनुसार्यप्यकल्पयित्वा कल्पयति, स कथं क्लृप्तप्रवृत्तिहेतुभावभेदाग्रहणादपि सिध्यन्त्या प्रवृत्त्याऽनैकान्तिक्याऽन्वितसंविदं परस्यानुमाय, तत्कारणत्वेन चान्यत्राक्लृप्तमपि शब्दस्य सामर्थ्यं कल्पयन्न लज्जते।

---

पादानं व्याप्त्यनुसंधानं नास्तीति प्रदर्शयितुम्। वाक्यश्रवणसमनन्तरभाविनीं विशिष्टां मध्यमवृद्धस्य चेष्टामुपलभ्यान्वितप्रतीतिस्तन्मूलतया कल्प्यते। संप्रति त्वन्मते सैव न घटत इति वक्तुमुपक्रमते—असिद्धत्वादिति। श्लोकं व्याचष्टे—स्यादेतदिति। अनैकान्तिकत्वादिति। या या विशिष्टार्थगोचरा प्रवृत्तिः, सा सा विशिष्टज्ञानपूर्विकेति व्याप्तिर्नास्तीत्यर्थः। व्यभिचारस्थलमाह—सा हीति। 'इदं रजतमि'त्यत्र शुक्तिग्रहण-रजतस्मरणरूपं ज्ञानद्वयम्। न तु विशिष्टमेकं ज्ञानमस्ति। प्रवृत्तिस्तु ग्रहणस्मरणयोर्भेदाग्रहणनिबन्धनेति त्वन्मतमिति भावः। स्वरूपमात्रेणाभिहितेषु-स्वरूपमात्रेण प्रतीतेषु। अन्वयाग्रहणात् चतुर्णामर्थानामिति शेषः। अनन्वयाग्रहणमपि भेदाग्रहणप्रभेद एव।

ननु गामानयेत्यत्र प्रवृत्तिमूलान्वयप्रतीतिरस्त्येव। तत्कथमनन्वयाग्रहणनिबन्धना प्रवृत्तिरित्यत्राह—यो हीति। पुरःस्थितवस्तुगोचरां—शुक्तिगोचराम्। क्लृप्तकारणानुपलब्ध्या—क्लृप्तकारणम्—इन्द्रियार्थसंनिकर्षः, तदनुपलब्ध्या। न हि चक्षुः रजतसंयुक्तं, किं तु शुक्तियोगि। अतो रजतज्ञानं नेन्द्रियजन्यं, किन्तु स्मरणरूपमिति भावः। अपह्नुत्य—शुक्तिगोचरं न भवतीत्यपलप्य। अन्यत्र—अभ्रान्तस्थले। प्रवृत्तिहेतुत्वमित्यस्य कल्पयतीत्यनेनान्वयः। अदृष्टकल्पनाविशेषेऽपीति। भेदाग्रहणस्य प्रवृत्तिहेतुत्वमन्यत्रादृष्टं, तत्कल्पनाङ्गीकारेऽपीत्यर्थः। अवगत्यनुसारि—अनुभवानुसारि। अकल्पयित्वा—अनङ्गीकृत्य। स कथं क्लृप्तप्रवृत्तिहेतुभावेति। शुक्तिकारजतस्थले भेदाग्रहस्य प्रवृत्तिहेतुत्वं त्वन्मते क्लृप्तमित्यर्थः। अनैकान्तिक्या—व्यभिचारिण्या। तत्कारणत्वेन—अन्वितसंवित्कारणत्वेन। अन्यत्राक्लृप्तमपीति। मध्यमवृद्धप्रवृत्ति-

## अविसंवादेन शंका तस्य व्यभिचारेण परिहारश्च

यद्युच्येत भेदाग्रहणनिबन्धनस्य व्यवहारस्य विसंवादो भवति। यथा तस्यैव शुक्तिकायां रजतव्यवहारस्य। न च गामानयेत्यादिषु विसंवादः समस्ति। तस्मान्नाग्रहणनिबन्धन इति। तदयुक्तम्। अग्रहणनिबन्धनस्यापि ज्वालैकत्वव्यवहारस्य, उष्णजलव्यवहारस्य–चाविसंवाददर्शनात्।

तथापि—विधूमपावकाद्देशादूर्ध्वं बाष्पं विलोकयन्।
अग्निसत्ताभिमानेन प्रवृत्तो न विहन्यते॥ ३०॥

इदमपरमुदाहरणम्। यदैकस्मिन् देशे विधूमोऽग्निरवस्थितः। तस्य चोपरि बाष्पोद्गमो भवति। तं च कश्चिद्धूमं मत्वाऽस्याधस्तादग्निरस्तीत्यभिमन्यमानोऽग्न्यर्थी तदाजिहीर्षया यतमानोऽग्निप्रतिलम्भान्न विसंवादमृच्छति, तदा तत्राग्रहणनिबन्धनस्यापि व्यवहारस्याविसंवाददर्शनादनैकान्तिको व्यवहाराविसंवादो नान्वितज्ञानोत्पत्तिपरिकल्पनायां प्रमाणं भवितुमर्हति। तदपरिकल्पनाच्च नान्वितार्थत्वं शब्दस्य सिद्ध्यतीत्यप्रामाण्यं वेदस्य वाक्यार्थं प्रति स्यात्।

## अन्विताभिधानवादस्य निरासे हेतुद्वयम्

तदेवमन्वितज्ञानस्यासिद्धत्वात्, सिद्धत्वेऽपि तस्य शब्दशक्तिमन्तरेणैव वक्तृज्ञानानुमानद्वारेणात्मलाभसम्भवात्, वाक्यजन्यत्वेऽपि सिद्धार्थपरेष्विव वाक्येषु पदावगतपदार्थसामर्थ्यप्रभावितत्वसम्भवाद्भवन्मते तावदप्रमाणकं पदानामन्विताभिधायित्वमिति सिद्धम्।

## अभिहितान्वयवादे उक्तदोषाभाववर्णनम्

अस्मन्मते तु यद्यप्यग्रहणाधीनव्यवहारासंभवादनुमानत्वेन प्रामाण्यानङ्गीकारात् सिद्धार्थेष्वपि वाक्येषु शब्दानां श्रुतिवृत्तत्वादित्यादिभिर्हेतुभिरन्विताभिधायित्वं निराकर्तुं न शक्यते, तथाऽपि दृष्टबाधात् कल्पनागौरवाच्च निरासः।

---

स्थले हि वाक्यप्रयोगस्यान्वितसंविन्मूलत्वं कल्प्यते। अन्यत्र कुत्रापि न क्लृप्तमिति भावः। सामर्थ्य-शब्दसामर्थ्यम्।

ननु गामानयेत्यत्र प्रवृत्तिर्न भेदाग्रहनिबन्धना। अविसंवादित्वादिति शङ्कते–यद्युच्येतेति। अनैकान्तिकत्वेन दूषयति–तदयुक्तमिति। सैवेयं ज्वाला, उष्णं जलमि'ति प्रवर्तमानो न–विसंवाद्यत इत्यर्थः। तथापि भेदाग्रहनिबन्धनेति त्वन्मतमर्यादा।

यादृच्छिकसंवादस्थलोदाहरणान्तरपरं श्लोकं पठति–विधूमेति। अप्रामाण्यं वेदस्य वाक्यार्थं प्रति स्यादिति। अन्वितार्थं प्रति स्यादित्यर्थः।

इदं त्वदङ्गीकृतयुक्तिकलापविरोधादन्विताभिधानं त्वन्मत एव विरुद्धम्। अस्मन्मते तु कथंचित् संभवति। तथापि प्रवलयुक्त्यन्तरविरोधादनुपपन्नमिति दूषयति–तदेवमिति। दृष्टबाधादिति। दृष्टबाधोऽत्र दीर्घतरवाक्ये शब्दाननुसंधानेऽप्यर्थानुसंधानमात्रात् वाक्यार्थप्रतीतिदर्शनाद्विरोधः।

## शक्तिकल्पनाविषये गौरवप्रदर्शनम्

कथं पुनः कल्पनागौरवम् ? एतावती शक्तिर्भवतोऽन्विताभिधानमङ्गीकुर्वतः कल्पनीया पदानाम्-आकाङ्क्षितं योग्यं एकवाक्यभूतपदप्रतीतञ्च यदर्थान्तरं, तेनान्वितं स्वार्थमभिदधति पदानीति। न चैवमध्याहृतः संवरणादिभिर्द्वारादेरनन्वयप्रसङ्गः। तत्रापि भवन्मते संव्रियतामित्यादिकस्य पदस्यैवैकवाक्यभूतस्याध्याहारात् तत्प्रतिपादितैः संवरणादिभिरन्वयसंभवात्। एतावती च पदार्थानामपि कल्पनीयैवेति न शब्दशक्तिकल्पनागौरवमस्माकमिति चेत् ?

उच्यते—क्लृप्तमन्वितसामर्थ्यं पदार्थानां स्वभावतः।
एकवाक्यतया तत्र कल्प्यं नियममात्रकम् ॥ ३१ ॥
अक्लृप्तमेव सामर्थ्यं पदानामन्वितेऽर्थवत्।
कल्प्यं स्वरूपक्लृप्तिश्च गुर्वी नियमकल्पनात् ॥ ३२ ॥

पदानां तावदर्थस्वरूपे शक्तिकल्पनमुभयोरपि पक्षयोरविशिष्टम्। अभिहितान्वयपक्षे पदार्थानामन्वितप्रतिपादकत्वसामर्थ्यं क्लृप्तमेव। नियममात्रमेकवाक्यतया कल्पयितव्यम्। तच्च लघीयः। तव तु पदानान्त्वत्यन्ताक्लृप्तमेवान्वितप्रत्यायकत्वं कल्प्यम्। तच्च गरीयः। दृष्टानुगुण्यं च प्रागेव समर्थितम्।

यत्तु सन्निध्यपेक्षायोग्यत्वानामविशेषेऽपि प्रमाणान्तरावगतानामर्थानां नियतान्वयनिमित्तत्वं न दृष्टं। शब्दावगतानाञ्च तत्कल्पने शक्तित्रयकल्पनमित्युक्तं, तत् सन्निधिमात्रस्याङ्गतानङ्गीकारात्परिहृतम्। स्वाभिधायकपदैकवाक्यभूतपदान्तराधीनो हि सन्निधिः पदार्थानां नियतैकान्वितबोधनेऽङ्गम्। न चासौ प्रमाणान्तरावगतेष्वस्तीति, न तत्र

---

ननु कथं शक्तिकल्पनागौरवम्। मतद्वयेऽपि शक्तिकल्पनासाम्यादिति प्राभाकरः—आक्षिपति कथं पुनरित्यादिना। भवतोऽन्विताभिधानमङ्गीकुर्वत इति। यद्यप्यन्विताभिधानमस्मन्मताविरुद्धं, तथाप्यस्मन्मतदूषणाभिनिवेशादनभिमतमपि बलादङ्गीकुर्वतो भाट्टस्येति शेषः। ननु पदप्रतिपादितेनान्विताभिधाने द्वारमित्यादावेकतरपदप्रयोगे कथं त्वन्मतेऽन्विताभिधानमित्याशङ्क्य, तत्राप्यध्याहृतपदप्रतिपादितेनान्विताभिधानं घटत इति परिहरति—न चैवमिति।

भवन्मत इत्यनेन भाट्टमतेऽध्याहृतपदप्रतिपादितेनान्विताभिधानम्। गुरुमते तु बुद्धिसंनिहितेनेति सूचितम्।

परिहरति—उच्यत इति। क्लृप्तमिति। पदार्थानामेव परस्परान्वयार्हत्वात् तत्र सामर्थ्यं क्लृप्तमिति भावः। नियमकल्पनादिति। अक्लृप्तकल्पनात् क्लृप्तस्यैव नियमकल्पनं लघीय इत्यर्थः। एकवाक्यतया इति। एकवाक्यताया नियामकत्वमधस्तादुक्तम्। अक्लृप्तमिति। स्वरूपाभिधानसामर्थ्यमुभयवादिसंप्रतिपन्नम्। अन्वितेत्वसंप्रतिपन्नमित्यर्थः।

श्लोकौ व्याचष्टे—पदानां तावदिति। पदार्थस्वरूपे शक्तिकल्पनमिति। अन्विताभिधानेऽपि स्वरूपाभिधानस्यावर्जनीयत्वादित्यर्थः। पूर्वपक्षोत्थं दूषणमनूद्य परिहरति—यत्त्विति। तर्हि कीदृशः संनिधिरपेक्षितः स्तत्राह—स्वाभिधायकेति। स्वाभिधायकेन पदेन एकवाक्यभूतं—यत् पदान्तरं तदधीनः। प्रयुक्तं वा यत् पदान्तरं, तदुपस्थापितः संनिधिरङ्गमित्यर्थः। 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र रात्रिभोजनमेवानुपपत्तिशान्तये कल्प्यते। न तु रात्रौ

नियतैकवाक्यार्थावगतिः। यत एव चैकवाक्यभूतपदान्तराधीन एव सन्निधिः पदार्थानामन्वितबोधनेऽङ्गं, न सन्निधिमात्रम्। अत एवापरिपूर्णेषु विश्वजिदादिवाक्येष्वाकाङ्क्षितस्यार्थस्य शाब्दसन्निध्यर्थं शब्दस्यैव कल्पनाच्छ्रुतार्थापत्तेः शब्दगोचरत्वसिद्धिः। तथा चातिदिष्टेषु मन्त्रादिषु प्राकृतेऽग्न्यादिपदेऽर्थलोपान्निवृत्ते, निर्वापादिषु सूर्यादिपदाध्याहारादूहसिद्धिः। अन्यथाऽसौ न स्यादित्यास्तां तावत्।

यद्यपि पदानां, पदार्थानां चोभयेषामपि सामर्थ्यमपूर्वमेव कल्पयितव्यं, तथाऽपि पदार्थानामेव कल्पयितुं युक्तं, न पदानाम्। तथा हि- यत्र तावदेकं पदम्, एकश्च पदार्थः, तत्रान्विताभिधानपक्षे पदस्य द्वे शक्ती कल्प्ये। अभिहितान्वयपक्षेऽपि पदस्यैका, पदार्थस्य चैकेति द्वे एवेति तुल्यम्। यत्राप्येकशब्दस्यानेकेऽर्थाः वाच्याः। यथाऽक्षशब्दस्य विदेवनादित्रयम्। तत्राप्यन्विताभिधायित्वे प्रत्यर्थं शब्दस्य शक्तिद्वयकल्पनात् षट् शक्तयः। अभिहितान्वयेऽपि शब्दस्य प्रत्यर्थमेकैकशक्तिकल्पनात्तिस्रः, पदार्थानाञ्च त्रयाणां तिस्र इति षडेवेति तुल्यमेव।

यत्र तु बहवः शब्दा एकस्यार्थस्य वाचकाः। यथा-पाणि-कर-हस्तशब्दाः, तत्रान्विताभिधानपक्षे प्रतिशब्दं शक्तिद्वयकल्पनात् षट् शक्तयः स्युः। अभिहितान्वयपक्षे तु त्रयाणां शब्दानामर्थस्य चैकैकशक्तिकल्पनाच्चतस्र इति लाघवम्।[१]

---

भुङ्क्ते इति वाक्यमिति प्राभाकराः। तत्रापि वाक्यमेव कल्प्यम्। शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यत इति न्यायादिति भाट्टाः। तत्र यतः शब्दोपस्थापितस्यैवान्वयाङ्गत्वम्। अतः श्रुतार्थापत्तेः शब्दगोचरत्वमपि सुस्थमित्याह—यत इति। शब्दस्यैव कल्पनादिति। विश्वजिदधिकरणे स्वर्गकामपदमेवाधिकारिसमर्पकं कल्पितमित्यर्थः। अतएवास्मन्मते शब्दविकाररूपः—ऊहोऽपि युक्त इत्याह—तथा चेति।

'अग्नये त्वा जुष्टं निर्वपामी'ति प्रकृतावाम्नातो मन्त्रः। स सौर्ययागेऽप्यतिदिष्टः। तत्र मन्त्रप्रकाश्याग्न्यभावादग्निपदे निवृत्ते, सूर्यादिपदाध्याहारात् ऊहसिद्धिरुपपन्नेत्यर्थः। अन्यथा—अशब्दोपस्थितस्यान्वयार्हत्वे। प्रासङ्गिकं निगमयति—आस्तामिति।

इदानीं पक्षद्वयेऽप्येकार्थेष्वनेकार्थेषु च पदेषु शक्तिकल्पनासाम्येऽपि पर्यायपदप्रयोगेषु स्वमते शक्तिकल्पनावैषम्यं दर्शयितुमुपक्रमते—यद्यपीत्यादिना। सामर्थ्यं—शक्तिः। अपूर्वम्—अप्रत्यक्षम्। पर्यायेषु वैषम्यं पश्चात् दर्शयितुकामः प्रथममन्यत्र साम्यमाह—तथा हीति। द्वे शक्ती इति; अन्विते, अन्वये चेत्यर्थः। विदेवनादित्रयमिति। विदेवन—विभीतकेन्द्रियाणि—अक्षशब्दार्थाः। प्रत्यर्थमिति। अक्षैर्दीव्यति अक्षमारोहति, अक्षैः पश्यतीत्यादिष्वर्थेष्वित्यर्थः।

इत्थमन्यत्र साम्यमभिधाय, पर्यायेषु वैषम्यमाह—यत्र तु बहव इति। प्रतिशब्दं शक्तिद्वयकल्पनात् षट् शक्तयः स्युरिति। 'पाणिना भुङ्क्ते, करेण प्रहरति, हस्तेनादत्ते' इत्यत्र त्रयाणां शब्दानामन्विते, अन्वये च शक्तिकल्पने षट् शक्तयः स्युरित्यर्थः। चतस्र इति

---

## टिप्पणी

१ अत्रेदं बोध्यम्—ग्रन्थकृताऽन्विताभिधानवादे, अभिहितान्वयवादे च शक्तिकल्पनामधिकृत्य गौरव—लाघवविवेचनावसरे समानार्थकपदत्रयस्थलेऽन्वितार्थभिधानवदिमते षट्शक्तयः कल्प्याः, अभिहितान्वयवादे शक्तिचतुष्टयमित्युक्तम्। वस्तुतस्तु मतद्वयेऽपि उक्तस्थले शक्तिद्वयमेव कल्प्यते। तृणारणिमणिष्विव वह्नि शक्तेः इति।

एवं चतुःपञ्चषडादिषु शक्त्युपचयो दर्शयितव्यः। चतुर्षु शक्तित्रयाधिक्यं, पञ्चसु चतुष्काधिक्यं, षट्सु पञ्चकाधिक्यमित्यूहनीयम्। शक्तिकल्पनातुल्यत्वेऽपि चानन्तर्यात्पदार्थानामेव वाक्यार्थनिमित्तत्वं युक्तं, न पदानामित्युक्तम्। तस्मादभिहितान्वय एव ज्यायान्।

## अभिहितान्वयवादे सूत्र-भाष्यानुगुण्यम्

तथा च सूत्रकारः 'अर्थस्य तन्निमित्तत्वात्' मी. द. १.१.२५ इति व्यक्तमेव पदार्थनिमित्तत्वं वाक्यार्थस्य दर्शयति। भाष्यकारोऽपि हि 'पदानि हि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि। अथेदानीं पदार्था अवगताः सन्तो वाक्यार्थमवगमयन्ति' शा. भा. पृ. ९६ इत्याह।

## शालिकनाथकृतव्याख्यानस्यानुवादः

'यत्वस्य व्याख्यानं क्रियते 'व्यतिपक्ताभिधायि पदम्। न व्यतिषङ्गाभिधायि। व्यतिषक्ततोऽवगतेर्व्यतिषङ्गस्य' बृ टी. पृ. ३८६ इति। तस्य तावदयमर्थः—'यथैवाकृत्या शब्देनाभिधीयमानया सह प्रतीयमाना व्यक्तिः शब्दजप्रतीतिगोचराऽप्याकृतिगम्ये-

---

लाघवमिति। शब्दत्रैविध्यादेकस्मिन्नेवार्थे शक्तित्रैविध्यम्। अर्थस्य चैकत्वात् तस्य नानार्थव्यतिषङ्गेऽप्येकैव शक्तिरिति लाघवमित्यर्थः।

एवमेकार्थवाचकेषु चतुःपञ्चादिपर्यायेष्वयं न्यायो द्रष्टव्य इत्याह—एवं चतुरिति। चतुर्षु शक्तित्रयाधिक्यमिति। अन्विताभिधानपक्षे शब्दचातुर्विध्यात् प्रत्येकं शक्तिद्वयकल्पनाच्चाष्टौ शक्तयः। अभिहितान्वयपक्षे तु शब्दचातुर्विध्याच्चतस्रः। अर्थैक्यादेकेति पञ्च—शक्तय इति शक्तित्रयाधिक्यम्। कथंचित् साम्याङ्गीकारेऽपि पू [1]प्रतिपादितदूषणमधिकमित्याह—शक्तिकल्पनेति। निगमयति—तस्मादिति।

स्वमते सूत्रभाष्यानुगुण्यमप्याह—तथा चेति। अर्थस्य—वाक्यार्थस्य। तन्निमित्तत्वात्—पदार्थनिमित्तत्वात्।

संप्रति भाष्यव्याख्यानपरां गुरुटीकामनुवदति दूषयितुम्—यत्त्वस्येति। व्यतिषक्ताभिधायी—अन्विताभिधायी। टीकायां—पञ्चिकायां दृष्टान्तपूर्वकं प्रपञ्चिता। तामाह—तस्य तावदिति। यथैवाकृतेरित्यस्य तथैवान्विताभिधायिनेत्यनेन प्रतिसंबन्धिनान्वयः। शब्दजन्यप्रतीतिगोचरापि—आकृतिवच्छब्दप्रतिपाद्यापीत्यर्थः। आकृतिगम्यत्वं कुतः? तत्राह—आकृतिप्रत्यय इति। ननु जातिरेव शब्दवाच्या स्यात्। व्यक्तिस्तु पश्चाज्जात्या प्रतीयताम्।

---

१. मूलस्य स्पष्टप्रतिपत्तये टीका—पञ्चिके अधस्तादुद्ध्रियते—'तस्मात् व्यतिषक्तार्थाभिधानं व्यतिषक्तेनाऽवगतेर्व्यतिषंगस्य। तस्मात् व्यतिषक्ताभिधानमेवेदं पदं। व्यतिषक्तो हि व्यतिषंगमप्रतिपद्यमानेन न शक्यते प्रतिपत्तुम्। यथाव्यक्तिमाकृतिरिति, बृहती.। 'व्यतिक्ततोऽव्यतिषंगावगतेर्नव्यतिषंगाभिधानं पदम्' ऋवि. पं. पृ. ३८६ इति।

त्युच्यते। तत्र आकृतिप्रत्ययो हि व्यक्तिप्रत्ययस्य निमित्तमिति। न हि तत्राकृतिमात्रं शब्देनावगम्यते, तथा व्यक्तिरपीति युक्तम्। केवलाया जातेः प्रत्येतुमशक्यत्वात्। स्वभावः खल्वसावाकृतेर्यदसौ नान्तरेण व्यक्तिं प्रतीतिमारोढुं क्षमते। रूपं हि साव्यक्तेः। न च रूपिशून्या रूपे बुद्धिरस्ति। यदि स्यात्, रूपितैव न स्यात्। तस्मात्सह व्यक्त्यैव जातिः प्रतीयते।

अथ चाकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते। तत्कस्य हेतोः[१] शब्दो हि स्वशक्त्या जातिमेवाभिधत्ते। तस्यास्तु व्यक्तिमन्तरेण प्रत्याययितुमशक्यत्वात्—व्यक्तिमपि प्रत्याययति। तेन स्वाभाविकं शब्दस्याकृतिप्रत्यायकत्वम्। तन्निमित्तं तु व्यक्तिप्रत्यायकत्वमिति, आकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते। न तु शब्देन प्रथममवगताऽऽकृतिः पश्चाद्व्यक्तिमवबोधयतीति।

तथाऽन्विताभिधायिना शब्देनान्वयमन्तरेणान्वितस्य बोधयितुमशक्यत्वा-दन्वयोऽवबोध्यमानः पदार्थनिमित्तक इत्युच्यते। भाष्ये च पदार्थशब्देनान्वित इत्युच्यते। वाक्यार्थशब्देनान्वयः। पदार्था वाक्यार्थमवबोधयन्ति इति। अन्विता अन्वयमवबोधयन्तीत्यर्थः। अन्वितप्रतिपादकत्वनिमित्तमन्वयप्रतिपादकत्वमिति यावत्' इति।

---

तथा पदार्थ एव पदप्रतिपाद्यः। वाक्यार्थस्तु पदार्थगम्यः स्यादित्यत्राह—नहीति। तत्र—तयोर्मध्ये। कुतो न युक्तमित्याशङ्क्य, किं शब्दप्रतीता आकृतिर्व्यक्तौ प्रमाणम्, अप्रतीता वेति विकल्प्य, द्वितीयविकल्पस्तावदसंभवपराहत इति मत्वा, प्रथमविकल्पे दोषमाह—केवलाया इति। प्रत्येतुं—शब्देन प्रतिपादयितुम्। कुतोऽशक्यत्वं तत्राह—स्वभाव इति। स्वभावमेवोपपादयति—रूपं हीति। न हि निराश्रया शुक्लप्रतीतिः दृष्टेति भावः। ततश्च जातिव्यक्त्योः निमित्त—नैमित्तिकभावः—प्रत्याय्य—प्रत्यायकभावः औपचारिक इत्याह—तस्मादिति।

उक्तमेवार्थं पुनः प्रश्नोत्तरमुखेन प्रथयति—तत् कस्य हेतोरिति। अभिधत्ते—अभिधाव्यापारेण प्रतिपादयति प्रत्याययति बोधयति। अयं भावः—उभयोः शाब्दत्वे सत्यपि जातिरेवाभिधेया, व्यक्तिस्त्वाक्षेपगम्या। 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् न तत्र शब्दव्यापार इति। दृष्टान्तसाम्यं दार्ष्टान्तिके दर्शयति। तथाऽन्विताभिधायिनेति। अत्रेत्थं दृष्टान्तदार्ष्टान्तिकभावोऽवगन्तव्यः—जातिवाचिनः शब्दाः जातिं, व्यक्तिं च युगपदभिदधते। अत उभयोरपि शाब्दत्वम्। शाब्दत्वे सत्यपि जातेरेवाभिधेयत्वं, व्यक्तेस्तु आक्षेपगम्यत्वम्। अथापि यथा जातिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमिति व्यवह्रियते, एवं सर्वेषां शब्दानामन्विते व्युत्पत्तेः युगपदन्वितान्वययोः शाब्दत्वम्। शाब्दत्वे सत्यप्यन्वितस्याभिधेयत्वम्, अन्वयस्याक्षेपगम्यत्वम्।

अथाप्यन्वितपदार्थप्रत्ययोऽन्वये निमित्तमिति भाष्यमपि स्वोक्तार्थपरमित्याह—भाष्ये चेति। अभिहितान्वयस्य युक्तियुक्तत्वोपपादनेनान्विताभिधानस्य तदभावादेवं व्याख्यानयुक्तमिति—

## तन्निरासः

[1]सेयं क्लिष्टेन मार्गेण ग्रन्थव्याख्या न शोभते।
पदार्थानां हि वाक्यार्थे स्पष्टोक्ताऽत्र निमित्तता ॥ ३३ ॥
यद्यन्विताभिधायित्वं पदानां युक्तिभिर्दृढम्।
क्लिष्टेनापि प्रकारेण ग्रन्थव्याख्या ततो भवेत् ॥ ३४ ॥
पदैरभिहिताः स्वार्था वाक्यार्थस्यावबोधकाः।
प्रसाधिता यदा युक्त्या तदा नैषोपपद्यते ॥ ३५ ॥
अन्वितप्रतिपत्तेश्च निमित्तं पूर्वपक्षिणा।
आक्षिप्तं तेन तन्मूलं भाष्येणानेन कथ्यते ॥ ३६ ॥

---

दूषयति—सेयमिति। दृष्टा—प्रत्यक्षानुगुणा। इदं व्याख्यानं पूर्वापरविरुद्धं चेत्याह—अन्वितेति। अतोऽन्वितप्रतिपत्तेः पदार्था मूलमिति प्रतिपादनपरमिदं भाष्यमुपपन्नमित्यर्थः।

---

### टिप्पणी

१. 'शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमि'ति भाष्येण शास्त्रलक्षणमभ्यधायि। अत्रा-सन्निकृष्टेत्यनेन प्रमाकरणत्वं विवक्षितम्। शब्दप्रमालक्षणे शाब्दत्वं, अनुमानलक्षणेऽनुमितित्वं निविष्टमिति परं विशेष.। तथा च येन रूपेण वाक्यबोध्यता, तेन रूपेण पूर्वप्रमितत्वं, तद्विपरीतरूपेण प्रमितत्वञ्च जिहांसितं। एवञ्च मानान्तरेणाप्रमितमबाधितञ्च यत्, तद्विषय-वाक्यत्वं शास्त्रत्वमिति पर्यवस्यति। अत्रेदमवधेयं-अभिहितान्वयवादस्य भाष्यवार्तिकादिसम्मतत्वेन मण्डनमिश्र-वाचस्पतिमिश्रादिभिस्समर्थितत्वेन चोपादेयता। लक्षणे असन्निकृष्टेऽर्थे ज्ञानमिति-भाष्ये ज्ञानपदं ज्ञानहेतुपरम्। सप्तम्यन्तयोर्वैय्यधिकरण्यं बोध्यं, न तु सामानाधिरण्यं। असन्निकृष्टे वाक्यार्थे ज्ञापकं यत् शब्दज्ञानजन्यमर्थज्ञानाम्, तत् शब्दप्रमाणमित्यर्थः। प्रत्ययान्त-पदार्थज्ञानं शब्दजन्यं वाक्यार्थज्ञानेकारणमित्यभिहितान्वयवादोऽभियुक्तैर्विविच्योपवर्णितः।

श्लोकवार्तिकस्य व्याख्याता सुचरितमिश्रस्तु शास्त्रलक्षणपरं भाष्यं व्याचष्टेस्म। 'यदेव शाब्दशक्तिविमर्शोत्थं विज्ञानमसन्निकृष्ठार्थगोचरं तच्छास्त्रम्। अतएव पदार्थ-ज्ञानमात्रं शाब्दं। न तदसन्निकृष्टार्थगोचरम्' का. पृ. १०१-१०२ इति।

तथा हि—शब्दज्ञानप्रमाणं बोध्यम्, नत्वर्थज्ञानं शब्दज्ञानजन्यं शब्दप्रमाणमिति। तन्न सम्यक्। शब्दज्ञानं वाक्यार्थधीजनकमित्यन्विताभिधानवादस्य तद्भूताधिकरणीयभाष्ये तद्दूषितत्वात्, तत्रान्विताभिधानवादपरतया भाष्यव्याख्यानस्यानौचित्यात्। अतएव वाक्याधिकरणभाष्ये-'नन्वर्थापत्तिरस्ति यत् पदार्थव्यतिरिक्तमर्थमवगच्छायः। न च शक्तिमन्तरेणावकल्पत इत्याशंक्य-तन्न। अर्थस्य तन्निमित्तत्वात्। भवेदर्थापत्तिः यद्यसत्यामपि शक्तौ नान्यन्निमित्तमवगम्येत, अवगम्यते तु निमित्तं। किम्? पदार्थाः' शा. भा. पृ. ९६ 'इत्यादिनाभिहितान्वयवादस्य समर्थितत्वात्। तस्मात् पदार्थप्रत्ययत एव वाक्यार्थः, नाऽस्य पदसमुदायेन संबन्धः इति शब्दमण्यादौ गंगेशोपाध्यायैरुक्तम्। एतत्सर्वं ग्रन्थकृतामूल एव सम्यगुपर्वणितमिति विज्ञातव्यं विबुधैरिति। ग्रन्थकृता वैदिकावैदिकभेदेन सर्वसंग्राहकलक्षणपरतयाव्या भाष्यं व्याख्यातं। तत् भूमिकातोऽवगन्तव्यमिति।

अभ्युपेत्यान्विते मूलं यदि स्यात्पूर्वपक्षिणा ।
आक्षिप्तमन्वये मूलं समाधीयेत तत्ततः ॥ ३७ ॥
न त्वेतदस्ति तेनेदं व्याख्यानं नोपपद्यते ।
यत्तु व्यक्तिवदित्युक्तं तद्युक्तं न शब्दतः ॥ ३८ ॥
व्यक्तिप्रतीतिरस्माकं जातिरेव तु शब्दतः ।
प्रथमावगता पश्चाद्व्यक्तिं यां काञ्चिदाक्षिपेत् ॥ ३९ ॥

'जात्यभिधायी हि शब्दः तामेव बोधयति, न व्यक्तिम् । तत्रासमर्थत्वात् । असमर्थाच्च कार्योत्पत्तावतिप्रसङ्गात् । जात्यवगतेरप्यसमर्थादेवोत्पत्तिसंभवात् ।

अथ व्यक्तावपि शब्दस्य सामर्थ्यमस्तीत्युच्यते ? तर्हि साऽप्यभिधेया स्यात् । यदि तु यत्र स्वाभाविकी शक्तिः, तदभिधेयम् । जातिश्च तथा । तदभिधायकत्वनिमित्ता-च व्यक्तौ शक्तिरस्ति । ततो नासावभिधेयेत्युच्यते । तद्युक्तं प्रमाणाभावात् । यदि तस्यार्थद्वयेऽपि शक्तिद्वयं शब्दस्य कल्पितं । ततः केन प्रमाणेनायमवान्तरविभागोऽव-गम्यते स्वाभाविक्याकृतौ शक्तिः, व्यक्तौ तु तन्निबन्धनेति ।

---

अत्र भवता अन्वयमूलपरतया भाष्यं व्याख्यातम् । तदनुपपन्नम् । अन्वयमूलस्याना-क्षिप्तत्वादित्याह—अभ्युपेत्येति । दृष्टान्तं विघटयन् प्रथमं तावत् शाब्दत्वं व्यक्तेर्विघटयति—यत्त्विति । असमर्थत्वात्—अशक्तत्वात् । अतिप्रसङ्गादिति । वृक्षशब्दात् प्लक्षप्रतीतिः स्यादित्यर्थः । ननु नातिप्रसङ्गः । व्यक्तावपि शब्दस्य शक्तिः स्यादित्याशङ्क्य, तदानीं जातिवत् व्यक्तेरप्यभिधेयत्वं स्यात । तच्च भवतोऽनिष्टमित्याह—अथेति ।

ननु न जातिवत् व्यक्तिरभिधेया । तत्र स्वाभाविकशक्त्यभावात् । तथापि जात्यभि-धायकस्य शब्दस्य व्यक्तिप्रतीतिमन्तरेण तदभिधानासंभवात् तदभिधायकत्वसिद्ध्यर्थमन्यैव शक्तिः कल्प्यते । सा च नाभिधाशक्तिः । तथाऽपि केवलमाक्षेपात् प्रतीयते । अतो नाभिधेयत्वं, केवलं शाब्दत्वमेवेति शङ्कते—यदि त्विति । दूषयति—तद्युक्तमिति । प्रमाणाभावादिति । जातिमात्रमभिधेयं, व्यक्तिस्तु नाभिधेयेत्यत्र, प्रमाणं नास्तीत्यर्थः । प्रमाणाभावमेवोपपादयति—

---

२. ३९ ऊनचत्वारिंशश्लोके ग्रन्थकृता घटादिशब्दानां घटत्वादिजातिरेव शक्या, जाति प्रत्ययो व्यक्तिप्रत्ययस्य हेतुरिति प्रतिपादितम् । तथा च घटत्वादिमात्रविषयकानुभवो घटादिपद-धीजन्यः । इदञ्च वाक्याधिकरणभट्टवार्तिकोक्तपक्षत्रये प्रथमपक्षावलम्बनेन । तथा च वार्तिकम्—

'भावनैव हि वाक्यार्थस्सर्वत्राऽऽख्यातवत्तया ।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता' ॥२-१-१४॥
'अन्वय-व्यतिरेकाभ्यां प्रत्ययार्थस्तु सेव्यते ।
कैश्चित्, अन्यैस्तु धात्वर्थस्तत्सामीप्योपकारतः' ॥
'अपरैस्समुदायार्थस्तत एव हि गम्यते ।
पाकादौ यत्र दृष्टाऽसौ भवत्यादौ तथैव च ॥' श्लो. वा. पृ. ९१४-१५ इति

अत्र सामीप्येनोपकारत इति ब्रह्मानन्देनोद्धृतः पाठः । इन्द्रियकामाधिकरण (२-२-९)-शास्त्रदीपिकायां विभक्त्यभिहित कारकविशिष्टं दधि, दधिविशिष्टे कारकं वा विधीयते पृ. १५३ इत्युक्तम् अत्र करणत्वं कर्मत्वादेरुपलक्षणमिति बोध्यम् ।

अथ न व्यक्तौ शब्दस्य शक्तिः। किन्तु जातावेव। सा तु शब्देनैव प्रतीयमाना वस्तुस्वभावाद्व्यक्त्या सह प्रतीयत इत्युच्यते। तन्न। व्यक्तिप्रतीतेः कारणाभावात्। अप्रतीयमानया च तया सह जातेः प्रत्येतुमशक्यत्वात्। कथं व्यक्तिप्रतीतेः कारणं नास्तीत्युच्यते ? शब्दस्याशक्तत्वेनाकारणत्वात्। जातिप्रतीतेश्च ततः पूर्वमनिष्पन्नत्वेन तत्कारणत्वायोगात्। तेन पूर्वावगतिर्जातेरङ्गीकर्तव्या। नन्वसौ न केवला प्रत्येतुं शक्यते। एवन्तर्ह्यस्या अप्रतीतिः प्रसज्ज्येत। व्यक्तिस्तावत्प्रत्यायकाभावान्न प्रतीयते। तस्यां चाप्रतीयमानायां न तया सह जातिः प्रत्येतुं शक्यते। केवला च न प्रतीयत-इत्यप्रतीतिरेव जातेः स्यादिति। तस्माज्जातिरेव शब्दात्प्रतीयत इत्यङ्गीकर्तव्यम्।

## अन्विताभिधानवादिनोक्तस्य दूपणस्य परिहारः

रूपिशून्या च रूपेषु बुद्धिरस्त्येव तद्यथा।
हिमवर्तिनि हेमन्ते शैत्यसंवित्त्वगिन्द्रियात् ॥ ४० ॥
तथा गन्धवति द्रव्ये नासाग्रमधिरोहति।
न द्रव्ये जायते संविद्गन्ध एव तु जायते ॥ ४१ ॥
तस्माज्जात्यभिधायित्वाच्छब्दस्तामेव बोधयेत्।
सा तु शब्देन विज्ञाता पश्चाद्व्यक्तिं प्रबोधयेत् ॥ ४२ ॥

---

**यदि हीति**। शाब्दप्रतीतिगोचरत्वाविशेपात् जातेरेवाभिधेयत्वं, व्यक्तेस्तु आक्षेपगम्यत्वमित्येतदप्रमाणकमित्यर्थः।

ननु जातावेव शब्दस्य शक्तिः। व्यक्तिस्तु जातिस्वाभाव्यात् सह प्रतीयतामित्यत्राह—**अथ न व्यक्ताविति**। दूषयति—**तन्नेति**। यदि व्यक्तौ शक्तिर्नास्ति, तर्हि तत्प्रतीतेः कारणं नास्तीत्यर्थः। ननु जातिप्रतीतिः कारणं स्यादित्यत्राह—**अप्रतीयमानयेति**। व्यक्तिप्रतीत्यभावे-जातेरेव प्रत्येतुमशक्यतया, सापि न कारणमित्यर्थः।

ननु व्यक्तिप्रतीत्यन्यथानुपपत्त्या यत्किञ्चित् कारणं कल्प्यम्। ततश्च कथं कारणाभावः इत्याक्षिपति—**कथञ्च व्यक्तिप्रतीतेरिति**। तत्र कारणं भवत् शब्दो वा, जातिप्रतीतिर्वेति-विकल्प्य, आद्यं प्रत्याह—**शब्दस्येति**। जातावेव शब्दशक्तिः। न व्यक्तौ गौरवादिति भावः। द्वितीयं प्रत्याह—**जातिप्रतीतेश्चेति**। ततः पूर्वं—व्यक्तिप्रतीतेः पूर्वम्। नहि निराश्रया जातिः प्रतीयत इत्यर्थः। ततः किमित्याशङ्क्य, तस्मात् त्वया जातेः प्रथमं प्रतीतिरङ्गीकार्या। ततश्च-सह प्रतीतिस्त्वदभिमता न सिध्यतीत्याह—**तेनेति**।

ननु न पूर्वावगतिसंभवः। केवलायाः प्रत्येतुमशक्यत्वात्। ततः सह प्रतीतिरेव स्यादित्याक्षिपति—**नन्वसाविति**। एवं तर्हि त्वन्मते जातेः प्रतीतिरेव न स्यादिति दूपयति—**एवं तर्हीति**। अप्रतीतिमेवोपपादयति—**व्यक्तिस्तावदिति**। दूषणमुपसंहरति—**तस्मादिति**। यतो जातिव्यक्त्योः शाब्दत्वं, सह प्रतीतिः, प्रत्याय्यप्रत्यायकभावश्च न संभवति। तस्माज्जातिरेव शब्दात् प्रतीयते। व्यक्तिस्तु पश्चादाक्षेपतः प्रतीयत इत्यङ्गीकार्यमित्यर्थः।

पूर्वोक्तदूषणमुद्धरति—**रूपि शून्या चेति**। प्रबोधयेत्—आक्षिपेत्। शैत्यादिवदित्यर्थः। इदानीं जातेरेवाभिधेयत्वं, व्यक्तेस्तु केवलं शाब्दत्वमङ्गीकृत्यापि दार्ष्टान्तिके तद्वैषम्यमाह—

भवतु वा जातिमात्राभिधानशक्तेनापि शब्देनापर्यवसानादेवावगम्यमाना व्यक्तिर्न पृथक् शब्दशक्तिं प्रकल्पयति। न त्विह तथा, पृथक् शक्तिमन्तरेणान्वयप्रतीतिसंभवः। जातिर्हि व्यक्तेरर्थान्तररूपा युक्तं यत् तस्यामभिधीयमानायामपि न व्यक्तिरभिधामनुप्रविशतीति। न हि व्यक्तिमत्त्वैव जाते रूपं, येनाभिधेयानुप्रवेशाद्व्यक्तेरप्यभिधेयत्वं स्यात्। अन्वितस्य चान्वयवत्त्वैव रूपमिति, तस्मिन्नभिधीयमानेऽन्वयस्याप्यभिधानानुप्रवेशः स्यादेव। ततस्तत्रापि शक्तिः कल्पनीया।

अथान्वितशब्देन पदार्थानां स्वरूपमुपलक्ष्यते। तच्चानभिधायान्वयमभिधातुं शक्यत इत्युच्यते, न तर्हि शब्देनान्वयप्रतीतिसिद्धिः। न हि जातिवद्व्यक्तिमन्वयमन्तरेण पदार्थस्वरूपमनिरूप्यं, येन तदपर्यवसानाच्छब्देन प्रत्याय्येत।

ननु यथा जातिर्न क्वचिदपि व्यक्तिविकलाऽवगता, तथा पदार्था अपि न व्यतिषङ्गविकलाः क्वचिदप्युपलभ्यन्ते। 'अन्ततोऽस्त्यर्थेनापि सर्वत्र सर्वपदार्थानामन्वितत्वम्। तस्याप्यपर्यवसानादेव सिद्धेर्नाभिधेयत्वमिति। सत्यम्। अन्वयमात्रमपर्यवसानाद्गम्यते। तद्विशेषस्तु नान्तरेणाभिधानं शाब्दीं प्रतीतिमारोहति। तस्मादन्विताभिधायित्वे शब्दस्य शक्तिकल्पनागौरवात्, स्वरूपमात्रमभिधेयम्।[२]

---

भवतु वेति। अर्थान्तररूपा—विलक्षणस्वभावा। अत्यन्तभेदवादिनस्तव मते तु नितरां विलक्षणस्वभावा। अतोऽपर्यवसानात् शक्तिमन्तरेणापि सा प्रतीत्यर्हेति वक्तुं युज्यत इत्यर्थः। तदेवोपपादयति—न हीति। यथाऽन्वयवत्त्वैवान्वितत्वमित्यन्वितानुप्रविष्टोऽन्वयः। नैवं जातिशरीरानुप्रविष्टा व्यक्तिः। अतो जातेरभिधानेऽपि व्यक्तेरनभिधानं युज्यते। नैवमन्वयाभिधानमन्तरेणान्विताभिधानं युज्यत इत्यर्थः। तत्रापि शक्तिः कल्पनीयेति। अन्यथा तत्प्रतीतिरेव न स्यादित्यर्थः।

ननु भाष्येऽन्विताभिधायी शब्द इत्यादिव्यवहारेष्वन्वितशब्देन पदार्थस्वरूपमुपलक्ष्य, तत्रैव शब्दस्य शक्तिः कल्प्यते। अतो न गौरवमित्याशङ्क्य, तर्हि अन्वयप्रतीतिस्त्वन्मते निर्मूला स्यादित्याह—अथान्वितेति। अन्वयमनभिधायापि पदार्थस्वरूपमभिधातुं शक्यत इत्यन्वयः।

ननु न निर्मूला। अपर्यवसानाल्लभ्यत इत्याशङ्क्य दूषयति—नहीति। पदार्थस्वरूपस्य पृथक् प्रतीत्यर्हतया नापर्यवसानलभ्योऽन्वय इत्यर्थः। अन्वयस्यापर्यवसानलभ्यत्वं दृष्टान्तावष्टम्भेन शङ्कते—ननु यथा जातिरिति। अन्ततोऽस्त्यर्थेनापीति। अस्ति-भवति-विद्यतीनां सर्वत्रान्वययोग्यत्वादित्यर्थः। नाभिधेयत्वमिति। अतो न शक्तिकल्पनागौरवमित्यर्थः।

परिहरति—सत्यमिति। नहि येन केनचिदन्विताभिधानं त्वदभिमतम्। किं तु शब्दसंनिहितेन वा बुद्धिसंनिहितेन वा। तत्तु शक्तिमन्तरेण न सिध्यतीत्यर्थः। महाप्रकृतं निगमयति—तस्मादिति।

---

१. 'अस्तिभवन्तीपरोऽप्रयुज्यमानोऽस्ति' का. वार्तिकमत्रानुसन्धेयं।

२. न्यायरत्नमालायां घटत्वादिकमेव घटादिपदशक्यम्। नत्वन्वयांशस्य तत्र निवेश इत्युक्तं-ग्रन्थकृता। तत् वाक्याधिकरणे वार्तिककृतोक्तपक्षत्रये आद्यपक्षावलम्बनेनेति ध्येयम्।

## भाष्यस्य स्वमते आनुगुण्यकथनम्

कथं तर्हि भाष्यकारेण 'प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याह' शा. भा. पृ. ९९ इति प्रत्ययस्यान्विताभिधायित्वमुच्यते ? भवन्मते वा कथं सर्वशब्दानामन्विताभिधायित्वे सति विशेषेण तत् प्रत्ययस्य कथ्यते। तेन ग्रन्थानुगुण्याच्छब्दान्तराणां स्वरूपमात्राभिधायित्वम्। प्रत्ययस्य त्वन्विताभिधायित्वमिति-व्यवस्थाऽयम्।

## प्रकारान्तरेण भाष्यार्थकथनम्

यद्वा अनेनाप्यन्विताभिधायित्वं प्रत्ययस्य नोच्यते। किन्तर्हि ? प्रत्ययेन स्वार्थोऽभिधीयमानः प्रथमावगतप्रकृत्यर्थानुरक्त एवावगम्यत इति। तत्रान्वय-व्यतिरेकाभ्यां प्रकृतेः, प्रत्ययस्य च स्वे स्वेऽर्थे, अनुरागांशे च प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदान्तरसमभिव्याहारस्यैव पदार्थान्तरानुरागनिमित्तत्वं विविच्यते। यथा ग्रहण-स्मरणात्मनि प्रत्यभिज्ञाने ग्रहणांशस्येन्द्रियनिमित्तत्वं, स्मरणांशस्य च संस्कारनिमित्तत्वम्। यथा च वस्त्वन्तराभावविशिष्टे वस्त्वन्तरे गृह्यमाणे विशेष्यस्य भावांशस्य-प्रत्यक्षादिविषयत्वं, विशेषणस्य चाभावांशस्याभावविषयत्वं विविच्यते। तथाऽत्राप्यनुरागांशस्य प्रकृतिप्रत्ययसमभिव्याहारादेव प्रतीतिसिद्धेर्न प्रत्ययस्य तदभिधायकत्वम्। स तु स्वार्थमेवाभिधत्ते।

आह च—'प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत्।
भेदेनैवाभिधानेऽपि प्राधान्येन तदुच्यते॥

---

एवमपि भाष्यानुगुण्यं नास्तीत्याक्षिपति—कथं तर्हीति। 'विशेषकः-द्वितीयार्थस्य-कर्मत्वस्य विशेषकः। विशेषकत्वं च प्रकृतिप्रत्ययार्थयोरन्वितत्वे संभवतीत्यर्थः।

भाष्यमप्यस्मत्पक्ष एवानुगुणम्। न तु त्वत्पक्ष इति परिहरति—भवदिति। प्रकृति-प्रत्यययोः विशिष्यान्विताभिधानमितरेषां तन्निषेधपरमित्यर्थः। अतः पूर्वभाष्यानुगुण्यादिदं भाष्यमेवं व्याख्येयमित्याह—तेनेति।

प्रकारान्तरेण भाष्यं व्याचष्टे—यद्वेति। प्रकृत्यर्थानुरक्तः-प्रकृत्यर्थसंबद्धः। तत्रान्वयेति। यद्यपि प्रकृतिप्रत्ययाभ्यां स्वस्वार्थाविभागेन प्रथममभिधीयते। तथापि पश्चादावापोद्वापाभ्यां स्वस्वांशे शक्तिग्रहात्, तयोर्वैशिष्ट्यं प्रकृतिप्रत्ययसमभिव्याहारगम्यमवशिष्यत इत्यर्थः। अनुरागांशे-वैशिष्ट्यांशे। प्रथममविभागेन प्रतिपन्नस्य, पश्चात् कारणविवेचने दृष्टान्तमाह—यथेति। ग्रहणांशस्येदमंशस्य, स्मरणांशस्य तदंशस्य। विशेष्यांशस्य-'घटशून्यं भूतलमि'त्यत्र भूतलांशस्य। विशेषणांशस्य-शून्यांशस्य। उक्तार्थानुगुणतया आचार्यश्लोकौ पठति-आह चेति।

---

### टिप्पणी

विशेषकः—व्यावर्तकः। अत्र इतिशब्दः उपलक्षणविधया व्यावर्तकत्वलाभार्थः। तथा च प्रातिपदिकार्थोपलक्षितो योऽन्वयः, तद्विशिष्टवाचिका सा इत्यर्थः। अतएव यास्केन प्रकृति-प्रत्ययौ सहार्थं ब्रूत इत्यवोचि। घटत्व-कर्मत्वांशयोरनुवादादन्वयमात्रे पर्यवसितं सहवाचकत्वमितिबोध्यं।

पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥' इति।

## मत्वर्थीयप्रत्ययानामन्विताथंप्रतिपादकत्वम्

मत्वर्थीयास्तु विशिष्टमेवाभिदधति। न हि तेषां वाच्यान्तरं निरूप्यते। 'हिरण्यमालिन ऋत्विजः' आ. श्रौ. सू. १८-२-११ इत्यत्र विशेषणभूता हिरण्यमाला तावत् प्रकृत्यैवाभिहिता, ऋत्विजोऽपि हि विशेष्याः स्वपदेनैव। मत्वर्थीयः किमभिदध्यादन्यद्विशिष्टात्। तदसौ विशिष्टाभिधाय्येव। अन्येषामपि तु येषां युगपदनेकार्थाभिधायित्वं विभक्तेरिव लिङ्ग-संख्या-कारकाणां, तेषामप्यन्विताभिधायित्वम्। एतच्च सर्वमङ्गनिर्णये एव वक्ष्याम इति।

## स्वसिद्धान्तस्योपन्यासः

इतरेषान्तु शब्दानां स्वार्थरूपमेवाभिधेयम्, अन्वितरूपस्तु वाक्यार्थः पदार्थगम्य इति। अत एव वाक्यार्थो लाक्षणिक इति मीमांसकाः। अभिहितार्थसम्बन्धादभिगम्यमानत्वात्। नन्वविनाभावनिमित्ता लक्षणा। न च पदार्था वाक्यार्थविशेषेणाविनाभूता इति, स कथं लक्ष्यते इत्युच्यते? नावश्यमविनाभावनिमित्तैव लक्षणा। 'एकवाक्यताऽपि

---

यदिति। वैयाकरणानुशासनमिति शेषः। प्राधान्येन—प्रत्ययार्थप्रधान्येन। तदेव विवृणोति—पाकमिति। नैकस्य कस्यचिदिति। संमभिव्याहारव्यतिरेकेणान्यस्य—प्रकृतेः प्रत्ययस्य वा—न वाच्य इत्यर्थः।

मत्वर्थीयप्रत्ययानां तु अन्वित एवार्थेऽनुशासनादन्विताभिधायित्वं युक्तमित्याह—मत्वर्थीयास्त्विति। विशिष्टाभिधायित्वमेवोपपादयति—नहीत्यादिना। दण्डीत्यत्र प्रकृत्या दण्डमात्रमभिधीयते। इनिप्रत्ययेन तदन्वितमेव विशेष्यमित्यर्थः।

विभक्तेरिव लिङ्ग-संख्या-कारकाणामिति। [2]'पशुना यजेते'त्यत्र तृतीयाविभक्तेः

---

१. एकवाक्यताऽपि—लक्षणा साधारण्येन प्रवृत्ताऽप्येकवाक्यतया नियम्यत इति दर्शनबलादंगीक्रियते। योऽप्यन्विताभिधानमिच्छति, तेनाऽपि सामान्यतः प्रवृत्तालक्षणा पदान्तरैकवाक्यत्वेन नियम्यते इत्येतदंगीकृतमेव। तत् सर्वत्र पदसमभिव्याहारादेव सर्वत्रास्तु।

किञ्चान्वितभेदत्वात् वाक्यैकत्वमुच्येत, तर्हि 'यजेत स्वर्गः फलं हविः पशुरानिर्देवता' इत्यत्राप्येकवाक्यता स्यात्, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, समिधोयजतीत्यत्राप्येकवाक्यता स्यात्, इष्टमेवेति चेन्न। तत्र प्रकरणानुमेयमेकवाक्यं, न प्रत्यक्षम्। अन्यथा वाक्यविनियोगापत्तेः।

किञ्च समासे परस्परान्वयपूर्वकः पदार्थान्वयः तेनान्वितयोरेवाऽन्वयः। न चा सावभिधानतस्सिद्धयति। अतिशोभनोराजपुरुष इत्यादौ।

अन्विताभिधानवादेयोगाद्रूढिर्बलीयसी न्यायो रथकाराधिकरणसिद्धः वरीवर्ति। अन्विताभिधानवादेबलाबलं विपरीतयापद्येत।

अत्रत्योविशेषश्शास्त्रदीपिकायास्तर्कपादेविजिज्ञासुभिर्द्रष्टव्यः—इति। नायकरत्नकृता च केचन विषया वर्णिता इति ध्येयं।

२. 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेते' ए. ब्रा. ६-३ तै सं. ६-३-१० यस्यैवार्थेऽनुवाद इति बोध्यम्।

तत्र निमित्तम्। अत एवासत्यप्यविनाभावे 'व्रीहीनवहन्ती'त्यत्र दर्शपूर्णमासैकवाक्यतया-तत्साधनत्वलक्षणोपपत्तिः। एकवाक्यता च क्वचित्प्रत्यक्षा। यथा—'सोमेन यजेते'ति। क्वचित्प्रकरणाद्यनुमेया। यथा 'दर्शपूर्णमासाभ्यां यजेत, समिधो यजती'त्यनयोः—समिदुपेता दर्शपूर्णमासभावना कर्तव्येत्येवंरूपैकवाक्यता कल्प्यते। एवमन्यत्रापि द्रष्टव्यम्॥

तस्मान्न वाक्यं न पदानि साक्षाद्वाक्यार्थबुद्धिं जनयन्ति किन्तु।
पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यतेऽसाविति सिद्धमेतत्॥ ४३॥

पार्थसारथिमिश्रेण निर्णयोऽभिहितान्वये।
यथागमं यथाप्रज्ञं वार्तिकोक्तः प्रदर्शितः॥ ४४॥

इति यज्ञात्मसूनुसूरि-महामहोपाध्याय-श्रीपार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां वाक्यार्थनिर्णयो नाम पञ्चमं प्रकरणं समाप्तम्।



---

पुंस्त्वम्, एकत्वं, करणत्वं च युगपदभिधेयम्। तच्चान्योन्यानुरक्तमेवाभिधीयते। एकेन पुंसा करणभूतेन यागः कर्तव्य इत्यर्थः। इतरेषां—मत्वर्थीयप्रत्ययव्यतिरिक्तानां पदानां, प्रत्ययानां च। यतस्तावत् अभिहितपदार्थसंसर्गरूपो वाक्यार्थोऽभिहितपदार्थसंबन्धादवगम्यते। अतएव गङ्गासंबन्धगम्यतीरवत् तस्य लाक्षणिकत्वप्रसिद्धिर्युक्तेत्याह—अत एवेति।

ननु 'गङ्गायां घोषः' इत्यत्र नियतसंबन्धनिमित्ता लक्षणा दृष्टा। 'गौरानीयतामि'त्यत्र न गोपदार्थस्यानयतिना नियतान्वयः, तस्य सर्वपदार्थसाधारणत्वात्। तत् कथमत्र संसर्गविशेषो-लक्ष्यत इति शङ्कते—नन्विति। नायं नियम इति परिहरति—नावश्यमिति। एकवाक्यता—पदानां-परस्परसमभिव्याहारः। अत एव गोपदार्थ आनयत्यर्थेन संसर्गबोधक इति नियतावगतिसिद्धिः। समभिव्याहारस्य निमित्तत्वात् वाक्यार्थस्य कथञ्चिच्छाब्दत्वप्रसिद्धिरप्युपपन्ना। एकवाक्यतायाः—नियामकत्वं चाधस्तादुक्तमित्यर्थः।

एकवाक्यतानिमित्तां लक्षणां दर्शयति—अत एवेति। 'व्रीहीनवहन्ती' आप. श्रौ. १-१९-११ त्येतद्वाक्यं दर्शपूर्णमासप्रकरणपठितम्। तत्र प्रधानवाक्यैकवाक्यतया दर्शपूर्णमाससाधनत्वं लक्षयित्वा, तत्साधनभूतान् व्रीहीनवहन्यादिति वाक्यार्थः संपद्यत इत्यर्थः। एकवाक्यता कथं निर्णीयत इत्याशङ्क्य, निर्णायकं प्रमाणमाह—एकवाक्यतेति। क्वचित् प्रकरणाद्यनुमेयेति। अङ्गवाक्य-प्रधानवाक्ययोरित्यर्थः। तदेव दर्शयति—समिध इति।

एवमन्यत्रापीति। 'यस्य पर्णमयी जुहूर्भवती' तै. सं. ३-५-७ त्यनारभ्याधीतानां दर्शपूर्णमासैकवाक्यत्वमवगन्तव्यमित्यर्थः। प्रकरणार्थं श्लोकमुखेन सङ्गृह्णन्नुपसंहरति—तस्मादिति। यथागमं—यथासूत्रं, यथाभाष्यञ्चे त्यर्थः।

इति धर्मपुरी श्रीमद्रामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने वाक्यार्थ [ अभिहितान्वय ] निर्णयव्याख्यानं समाप्तम्॥



## अथ नित्यकाम्यविवेको नाम षष्ठं प्रकरणम्

### सिद्धान्तस्य संक्षेपेण निरूपणम्

दृष्ट्या वार्तिककारस्य विशेषः काम्यनित्ययोः।
अङ्गसाकल्यवैकल्यलक्षणः प्रतिपाद्यते ॥ १ ॥

केचित्किल नास्त्येव नित्यकाम्ययोर्वैषम्यम्, उभयत्रापि सकलाङ्गोपसंहारादिति-मन्यन्ते। एकदेशिभिश्च कैश्चिदनतिप्रयत्नेन दुर्बलहेत्वभिधानात्तेषामेव प्रसरः स्थिरीकृतः।

### कर्तव्यार्थप्रतिज्ञा

उभयेषान्निरासेन सम्यङ्न्यायः प्रदर्श्यते।
येन सिध्येत्स्फुटो भेदः कर्मणोः काम्यनित्ययोः ॥ २ ॥

तत्र पूर्वपक्षः।

अधिकारो हि सर्वत्र विनियोगानुसारतः।
अन्यथा ह्यनिवार्या स्याच्छूद्रादेरप्यधिक्रिया ॥ ३ ॥

सर्वत्र न केवलं काम्येऽपि तु नित्येऽपीत्यर्थः। यस्मिन् कर्मणि यदङ्गजातं श्रुत्या-दिभिः, स्मृत्या, आचारेण वचन-नामधेय-चोदनालिङ्गादिनिमित्तातिदेशेन च प्रापितं, तदुपसंहारशक्तियुक्तस्यैव तत्राधिकार इति तिर्यगधिकरणे मी. द ६-१-२ स्थापितम्। सामग्र्यधीनत्वात्फलसिद्धेरितिकर्तव्यतायुक्तस्यैव च करणस्य तत्त्वात् समुच्चितानां-

---

संप्रति षष्ठाध्याये सर्वशक्त्यधिकरणे बहुविवादसंभवादाचार्यमतेन तदधिकरण-मारचयितुं प्रतिजानीते–दृष्ट्येति। लक्षणं–स्वरूपम्। विशेषो–भेदः। १। सामान्येनाधि-करणारम्भं प्रतिज्ञाय, पूर्वपक्षनिराकरणार्थं मतान्तरनिराकरणमपि प्रतिजानाति–केचिदिति। अधिकरणपूर्वपक्षवादिनः। एकदेशिभिः–प्राभाकरैः। तेषामेवेति। अयुक्तराद्धान्ताभिधानात् पूर्वपक्ष एव स्थापितः स्यादित्यर्थः।

अत्र पूर्वपक्षमाह–तत्रेति। विनियोगानुसारत इति। अङ्गविनियोगक्रमं पर्यालोच्य, तत्र तत्राङ्गे तस्य तस्य शक्तिरिति निश्चित्य, सर्वेष्वप्यङ्गेषु यस्य शक्तिः, तस्यैव तत्राधिकारः–इत्यङ्गविनियोगोत्तरकालमेव तदनुसारेणाधिकारो निश्चीयत इत्यर्थः।

सर्वत्रेति। उभयत्र न्यायसाम्यादित्यर्थः। न्यायसाम्यमेव तिर्यगधिकरणराद्धान्तोप-जीवनेनोपपादयन् श्लोकं तात्पर्यतो व्याचष्टे–यस्मिन् कर्मणीत्यादिना। तिर्यगधिकरण इति। तत्र हि अन्धपङ्ग्वादीनामाज्यावेक्षण-विष्णुक्रमाद्यङ्गानुष्ठानशक्त्यभावादनधिकार इति प्रति-पादनादविशेषेण सर्वत्र सर्वाङ्गानुष्ठानसमर्थस्यैवाधिकार इति प्रतिपादितं स्यादित्यर्थः। तिर्यगधिकरणराद्धान्तमेवोपपादयति–सामग्रीति। तत्त्वात्–फलसामग्रीत्वात। ननु सर्वेषाम-प्यङ्गानां फलसामग्र्यनुप्रवेशः कथमित्याशङ्क्य, अङ्गिना प्रकरणपठितानामप्यङ्गानां समुच्चयेन ग्रहणादित्याह–समुच्चितानामिति।

मङ्गानामुपसंग्रहणात्। अन्यथा ह्यष्टविधदोषनिदानविकल्पापत्तेः। विकल्पितस्य चाननुष्ठेयत्वात् कुतो यथाशक्ति प्रयोगसिद्धिः? यदि च कतिपयाङ्गोपसंहारेऽपि फलसिद्धिः स्यात्, काम्येऽपि स्यात्। अविशेषात्।

ननु यावज्जीवादिवाक्येषु निमित्तश्रुत्या तस्मिन् सत्यवश्यकर्तव्यत्वावगमात्, अकरणे च तद्विरोधात्तद्बलेनाङ्गहीनस्यापि फलसाधनत्वावगमात् तथैवानुष्ठीयते। काम्ये त्वेवंविधविरोधाभावात्सर्वाङ्गोपसंहारेणानुष्ठानमिति चेत्? न। निमित्तवशादप्यवश्यकर्तव्यत्वमधिकारिण एव। सर्वशक्तियुक्तश्चाधिकारी, नान्यः।

निमित्तवाक्ये सर्वेषामधिकारावगमात्, तदनुसारेणाङ्गोपसंहारः। यो यावन्त्युपसंहर्तुं समर्थः, तस्य तावद्भिरेव फलसिद्धिरिति यद्युच्येत, तर्हि काम्येऽपि स्वर्गकाममात्रस्याधिकारावगतेस्तथैवानुष्ठानप्रसङ्गः। यदि च निमित्तबलेनाङ्गसंकोचः स्यात्, ततः शूद्रस्यानाहिताग्नेराहिताग्नीनां च विद्याविरहिणां तद्व्यतिरिक्ताङ्गानुष्ठानशक्तिशालिनामप्यधिकारः स्यात्। तस्मात्सर्वाङ्गशक्तिरधिकारिविशेषणमिति। अत एव पञ्चमाध्यायात् परमधिकारनिरूपणम्। शक्त्यपेक्षत्वादधिकारस्य। शक्तेश्च शक्यरूपानुष्ठेयाधीननिरूपणत्वात्, तस्य चाध्यायपञ्चकेनावधारणात्।

---

ननु कथं समुच्चयेन सर्वेषां ग्रहणमवसीयते? तेषामेकैकस्यैव विकल्पेन ग्रहणं किमिति न स्यादित्याशङ्क्य, तत्र दोषबाहुल्यात् तथा ग्रहणं न युज्यत इत्याह—अन्यथा हीति। विकल्पाश्रयणे हि विकल्पितेष्वङ्गेषु शक्तस्य, अशक्तस्य चैकमेवाङ्गमनुष्ठेयम्, इतरदङ्गजातं नियमेन परित्याज्यमिति न भवदभिमतयथाशक्तिप्रयोगः सिध्यतीत्याह—विकल्पितस्येति। विकल्पितेषु उपात्तव्यतिरिक्तस्य। तिर्यगधिकरणन्यायसाम्यात् काम्यवन्नित्येऽपि सकलाङ्गोपसंहारमुपपाद्य, इदानीं नित्ये कतिपयाङ्गपरित्यागाङ्गीकारे न्यायसाम्यात् काम्येऽपि तत्प्रसङ्गमापादयति—यदि चेति।

नित्य-काम्ययोर्न्यायवैषम्यमाशङ्कते—नन्विति। अवश्यकर्तव्यत्वावगमादिति। यदा निमित्तमुपनिपतेत्, तदा सामर्थ्ये सति, असति च प्रधानस्यानुष्ठेयत्वमवगम्यत इत्यर्थः। अकरणे चेति। अङ्गोपसंहारशक्त्यभावादननुष्ठाने तदवश्यकर्तव्यत्वं विरुध्यत इत्यर्थः। फलसाधनत्वं—प्रत्यवायपरिहारलक्षणफलसाधनत्वम्। विरोधाभावादिति। निमित्ताश्रवणादुक्तविरोधो नास्तीत्यर्थः। निमित्तश्रवणादवश्यकर्तव्यत्वावगमेऽपि नित्यस्य अशक्ताधिकारत्वं न प्रसज्यत इति परिहरति—नेति। सर्वशक्तियुक्तश्चेति। सर्वाङ्गानुष्ठानशक्तियुक्तस्यैवाधिकार इति, तिर्यगधिकरणनिर्णयादिति भावः।

ननु शक्तिरधिकारिविशेषणतया न साक्षाच्छ्रूयते। किं तु अङ्गाम्नानादनुमीयते। निमित्तं तु प्रधानवाक्ये श्रूयते। अतस्तद्युक्तस्यैवाधिकारो निष्पन्नः। अनुमेया तु शक्तिः तदनुरोधेनैवानुमेयेति, सर्वशक्तियुक्तस्यैवाधिकार इति नियमो नास्तीति शङ्कते—निमित्तवाक्य इति। तर्हि काम्येऽपि प्रधानवाक्ये फलकामिनोऽधिकारावगमात् तत्राप्यङ्गसंकोचः स्यादिति न्यायसाम्येन परिहरति—तर्हीति। प्रधानवाक्यश्रुतनिमित्तवशेनाङ्गसंकोचेऽतिप्रसङ्गमप्याह—यदि चेति। विद्याविरहिणां—वेदाध्ययनविरहिणाम्। तदधिकारः स्यादिति। ततश्चापशूद्राधिकरण—मी. द. ६—१—७ विरोधः स्यादिति भावः। ततश्च नित्ये, काम्ये च सर्वशक्तियुक्तस्यैवाधिकार इति सिद्धमिति निगमयति—तस्मादिति। एवमङ्गीकारे सत्येवाचार्योक्तासंगतिः संगच्छते—

तदुक्तं 'कार्ये ज्ञातेऽधिकारः स्यादि'ति। एतेन ज्ञाप्यज्ञापकभावं सम्बन्धं निराकृत्य, अवसरलक्षणमधिकारलक्षणस्याचक्षाणा निरस्ता वेदितव्याः। तदुभयत्रापि सर्वाङ्गोपसंहार इति।

## प्राभाकरमतस्य संक्षेपेण कथनम्

केचित्तु विषयीभावः करणीभावपूर्वकः।
काम्ये तेनाङ्गसाकल्यमाहुर्नित्ये विपर्ययम्॥ ४॥

## प्रतिज्ञातस्यार्थस्य विस्तरेणोपपादनम्

कार्यं तावदपूर्वं प्रधानवाक्यार्थं इति स्थितम्। तच्च कृत्यधीनात्मलाभम्। कृतिश्चैवंविधेषु पुरुषप्रयत्न एव। स च चेतनं कर्तारमपेक्षते। तस्य च कर्तृत्वमधिकारापेक्षम्। यो हि मदर्थमिदं कर्म, अहमत्र स्वामीति विजानाति, स तदनुतिष्ठति, नान्यः। स चाधिकृत इत्युच्यते। अधिकारश्चैवंविधेषु नियोज्यतापेक्षः। तद्धि कर्म तस्य स्वं भवति, यद्यस्य कार्यं साधयति। तेन ममेदं कार्यमित्येवं कार्यबोधमपेक्ष्य, तत्साधने कर्मणि पुरुषस्याधिकारावगमः। यश्च कार्यं स्वकीयत्वे न बुध्यते, स नियोज्यः।

---

इत्याह—अत एवेति। उक्तेऽर्थे आचार्यवाक्यमपि संवादयति—तदुक्तमिति। कार्ये—शक्यवर्गे। अधिकारः। तच्छक्तियुक्तस्येति शेषः। एवं च पञ्चलक्षण्याः शक्यवर्गगमकत्वेन षष्ठस्य संगतिरिति प्राभाकरमतमयुक्तमित्याह—एतेनेति। लक्षणं—स्वरूपम्। पूर्वपक्षमुपसंहरति—तदिति॥२—३॥

इत्थं स्वमतेन पूर्वपक्षमुक्त्वा, पराभिमतं राद्धान्तमनुवदति दूषयितुम्—केचित्त्विति। भावार्थः प्रथमपूर्वं प्रति विषयतयाऽन्वीय, पश्चात् तस्यैव करणतयाऽन्वेतीत्येतन्नित्ये, काम्ये च समानम्। तथापि काम्ये भावार्थः प्रथमं फलं प्रति करणतयाऽन्वीयते। तस्यामेव वेलायां करणस्येतिकर्तव्यतासाहित्यात् सर्वैरप्यङ्गैः संयुज्यते। पश्चादपूर्वं प्रति विषयतया। ततोऽपि तं प्रति करणतया। एवं चात्र पूर्वमेव सकलाङ्गान्वितस्यापूर्वविषयतयाऽन्वयात्, अङ्गलोपे विषयविलयादपूर्वप्रतीतिरेव न निर्वहेदिति, सकलाङ्गोपसंहारः। नित्ये तु फलाभावेन प्रथममेवापूर्वविषयतयाऽन्वये, पश्चात् करणतयाऽन्वये च सति ततोऽङ्गैः संबन्धः। ततश्चाङ्गान्वयात् पूर्वमेवापूर्वविषयतयाऽन्वयादङ्गलोपे विषयाविलयादपूर्वप्रतीतिर्निर्वहेदिति, कतिपयाङ्गत्यागेऽपि न कश्चिद्दोष इति यथाशक्तिप्रयोग इति, काम्य-नित्यभेद इति केचिद्वदन्तीत्यर्थः॥ ४॥

अपूर्वस्य फलानुकूलत्वे हि भावार्थस्य फलकरणत्ववेषेणापूर्वविषयत्वं युज्यते। फलानुकूलत्वञ्च तस्य फलकामिनियोज्यसंबन्धाधीनम्। तत्संबन्धश्चाकाङ्क्षामूल इति तमाकाङ्क्षाक्रमं वक्तुमुपक्रमते—कार्यं तावदित्यादिना। अस्त्वपूर्वं वाक्यार्थः। तस्य नियोज्याकाङ्क्षा कथमित्याशङ्क्य, तामुपपादयति—तच्चेत्यादिना।

अपूर्वस्य कृतिसाध्यत्वं लिङ्प्रत्ययेनैव प्रतीयते। सा च कृतिः साक्षादपूर्वं गोचरयितुमशक्ता भावार्थमेव विषयीकरोति। तत्सिद्ध्यर्थं च कर्तारमपेक्षते। स चाधिकारिणम्। स च नियोज्यमित्यनेनैव द्वारेणापूर्वस्य नियोज्यापेक्षेत्यर्थः। एवंविधेषु साक्षात् देहव्यापाररूपासु क्रियासु प्रवर्तमाना। स चेति। कर्मणि मदर्थमिदं कर्मेति स्वाम्यवानधिकारीत्यर्थः। एवंविधेषु साक्षाददृष्टं फलं काम्यं साधयत्सु दर्शादिषु।

न चापूर्वं कार्यं सुखदुःखपरिहारवत्कस्यचिदिच्छागोचरः। यतः प्रमाणान्तरेणैव तदर्थिनः कार्यत्वावगमात् तत्साधने कर्मण्यधिकारः स्यात्। अतो वचनेनैवास्येदं कार्यमिति प्रतिपादयितव्यम्। तदेवं नियोज्यापेक्षं कार्यम्।

## नियोज्यविशेषणकथनम्

स चानुपादेयविशेषणविशिष्टः। तच्च फल-निमित्तभेदेन द्विविधम्। तत्र फलमनुत्पन्नं न स्वरूपेण विशेषणीभवितुमर्हतीति, स्वकामनामुखेन नियोज्यं विशिनष्टि। फलकामश्च स उच्यते, यः फलमात्मनः साधयितुमिच्छति। स च तदेव कार्यं बुध्यते, यत्स्वकामनानुगुणमिति। नन्वपूर्वस्य फलं प्रति जनकत्वेनान्वये विशेषणतापत्त्या नियोग एव प्रधानं वाक्यार्थ इति सिद्धान्तासिद्धिरित्यत आह। नियोगस्येति[1]। प्रधानस्यापि नियोगस्य स्वसिद्ध्यर्थो यः फलकामनाविशिष्टनियोज्येन सम्बन्धस्तदर्थं फलानुकूल्यमास्थेयं स्वीकार्यमित्यर्थः।

## काम्यात् नित्यस्य वैलक्षण्यम्

तच्च कार्यं प्रयत्नसम्पाद्यं प्रयत्नस्यानवच्छिन्नस्यानिरूपणात्, तदवच्छेदकमपेक्षते। अवच्छेदकश्च प्रायेण भावार्थः। तस्यैव स्वरूपेण तत्संबन्धित्वात्। न खल्वलब्धपाकादि-

नन्वस्तु नियोज्यापेक्षा। तथापि कार्याकारेण तस्मिन् ज्ञाते लौकिककार्यं इवास्येदं कार्यमिति प्रतिपादकनियोज्यपरवचनमन्तरेणापि तत्र ममेदं कार्यमिति प्रतीति–प्रवृत्ती स्याताामिति, नियोज्यपरशब्दो व्यर्थ इत्याशङ्क्य, लौकिककार्यादस्य विलक्षणतया नियोज्यपरवचनमन्तरेण प्रतीतिप्रवृत्ती न स्त इति, सार्थकमेव वचनमित्याह–न चापूर्वमिति। प्रमाणान्तरेण अन्वयव्यतिरेकाभ्याम् तदर्थिनः–सुखदुःखपरिहारार्थिनः। तत्साधन इति। तस्य साक्षात् प्रवृत्त्ययोग्यत्वेन तत्साधनेऽधिकारजननद्वारा प्रवृत्तिर्भवतीत्यर्थः।

एवं कार्यस्य नियोज्यापेक्षामुपपाद्य, तत्संबन्धादपूर्वस्य फलानुकूल्यमुपपादयितुं नियोज्यस्वरूपं, तदवान्तरभेदश्चाह–स च चेति। अनुपादेयम्–अननुष्टेयम्। अनुत्पन्नं कालान्तरभावित्वात्। स्वरूपेणेति। विशेष्यसंबन्धि व्यावर्तकं खलु विशेषणम्। तदानीमसतस्तु विशेषणत्वं न युज्यते इत्यर्थः। नियोगस्य फलानुकूल्यमुपपादयति–फलकाम इति। कामनानुगुणं काम्यमानसाधनमेवेत्यर्थः। प्रधानस्यापीति। यदि फलकामः फलार्थं प्रवृत्तस्तत्सिद्ध्यर्थं तदुपायतया तस्य कार्यत्वमवगच्छेत्, तदा भवेत्तस्योपसर्जनत्वम्। नत्वेवं स्वतः कार्ये। तत्र फलकामस्य नियोज्यतया प्रतिपादनात् तत्संबन्धार्थं तस्य फलोपायत्वं भवति। न तु फलोपायतया तस्य कार्यत्वमिति न तस्य प्राधान्यं भज्येत इत्यर्थः।

नियोगस्य फलानुकूल्यं प्रतिपाद्य, फलकरणीभूतस्यैव भावार्थस्य विषयत्वमुपपादयितुं नियोगस्य विषयान्वयक्रमं दर्शयति–तच्च कार्यमित्यादिना। अनिरूपणादिति। केनाप्यवच्छेदकेन भाव्यमिति भावः। प्रायेणेति। क्वचिदन्यस्यापि भावार्थानुषङ्गादवच्छेदकत्वं भवतीति भावः। स्वरूपेणेति। अन्यस्य प्रतीतमप्यवच्छेदकत्वं भावार्थद्वारा निर्वोढव्यमिति भावः।

१. नियोगस्य फलानुकूल्यं प्रधानस्यापि स्वसिद्ध्यर्थंविशिष्टनियोज्यसंबन्धार्थमास्थेयम्। इत्यधिकः पाठः।

भावार्थविषयः प्रयत्नो लोके दृश्यते। कचिच्च शब्दवशेन द्रव्यदेवतासंबन्धादिर्भावार्थनिर्वाहितप्रयत्नसंबन्धोऽवच्छेदको भवति। तदेवं कार्यस्य कृत्यवच्छिन्नत्वात्कृतेश्च भावार्थाद्यवच्छेदकमन्तरेणाप्रतीतेः कृतिप्रणाडिकया कार्यस्य भवति भावार्थोदिरवच्छेदकः। अवच्छेदकश्च विषय इत्युच्यते। प्रतीत्यनुबन्धो हि विषयः। अनवच्छिन्नं च कार्यं प्रत्येतुमशक्यमिति, तदवच्छेदकं तत्प्रतीत्यनुबन्धितया भवति विषयः। स च भावार्थः कामानुगुणस्य कार्यस्य विषयभावात् पुरस्कृतकामोपायभावः शक्योऽधिगन्तुमित्युपायत्वेनैव रूपेण विषयीभवति। तदुपायता च निखिलाङ्गग्रामसंपादितोपकारस्येत्येकाङ्गानुषङ्गव्यतिक्रमे समस्ताङ्गोपसंहारस्यासम्पत्तेः, उपायत्वाभावे विषयबाधाद्विषयिणोऽपि कार्यस्याप्रतीतेर्न तद्बलेन हीनाङ्गकर्मानुष्ठानं भवेत्।

नित्ये तु नायं प्रकारः संभवति। न हि तत्र फलकामो नियोज्यः। येनानुपायं कार्यं कार्यतया न बुध्येत। सिद्धविशेषणविशिष्टस्तु भावार्थमात्रावच्छिन्नमेव कार्यं प्रथममवगच्छति। प्रतीतसविषयकार्यस्तु कृतिं विना कार्याभावात्कृतेश्चाकरणिकाया असंभवात् करणमपेक्षमाणः सन्निहितस्य भावार्थस्य विषयीभूतस्य करणतामुपकल्पयति।

---

कृतेर्भावार्थावच्छेदनियमः कथमित्याशङ्क्य, तदनवच्छिन्नायास्तस्या लोके कुत्राप्यदर्शनादित्याह—न खल्विति। न प्रयत्नः प्रयत्नात्मना स्वरूपेण प्रतीयते। किं तु पाकप्रयत्नो गमनप्रयत्न इति क्रियानुरक्तवेषेणेत्यर्थः। क्वचिद्भावार्थादन्यस्य विषयत्वं भावार्थद्वारकमित्याह—क्वचिदिति। 'अनुमत्यै चरुं, तै. ब्रा. राकायै चरुमि'त्यादिषु शब्दश्रवणबलात् द्रव्यदेवतासंबन्धः सिद्धरूप एव नियोगस्य विषयतयाऽन्वेति। तन्निर्वाहस्तु योगमन्तरेण तदभावात् तद्द्वारा भवतीत्यर्थः। उपपादितं नियोगस्य भावार्थावच्छेदकत्वं निगमयति—तदेवमिति।

अस्त्ववच्छेदकतयाऽन्वयः, तथापि विषयतयाऽन्वयः कथमित्याशङ्क्य, अयमेव विषयतयाऽन्वय इत्याह—अवच्छेदक इति। करणत्ववत् विषयत्वं नियोगस्योत्पत्त्यनुबन्धि न भवति। किं तु प्रतीत्यनुबन्धीत्याह—प्रतीतीति। कुतः? तत्राह—अनवच्छिन्नमिति। अस्त्वेवम्। तत' किम्? तत्राह—सचेति। शक्यतेऽधिगन्तुमिति। भावार्थस्य प्रथमप्रतीतस्य फलोपायत्वं, नियोगस्य फलानुकूलस्य विषयत्वेऽपि नापयातीत्युपायत्ववेषस्यापि विषयानुप्रवेशोऽङ्गीकार्य इति भावः। अस्तूपायस्यापि विषयानुप्रवेशः। सर्वाङ्गोपसंहारः कथमित्याशङ्क्याह—तदुपायतेति। उपायत्वाभाव इति। इतिकर्तव्यतासाध्यानुग्रहाभावे करणत्वमेव न निर्वहेदित्यर्थः। तद्बलेन—कार्यप्रतीतिनिर्वाहबलेन।

काम्ये सकलाङ्गोपसंहारमुपपाद्य, नित्ये फलकामिनो नियोज्यत्वाभावेन भावार्थस्य फलोपायत्वाप्रतीतेर्नियोगस्यापि फलानुगुण्याभावान् स्वरूपेणैव नियोगविषयत्वं नाङ्गसमेतस्येत्यङ्गलोपे विषयाविलयात् यथाशक्ति प्रयोगः सिध्यतीत्याह—नित्ये त्वित्यादिना। प्रथममिति। करणत्वावगमादङ्गसाहित्याच्च पूर्वमित्यर्थः। एवं च फलाभावेन तत्प्रति करणत्वाभावादपूर्वं प्रत्येव विषयतयाऽन्वितस्य पश्चात्करणत्वं पर्यवस्यतीत्याह—प्रतीतेति। कृतेश्चेति। नियोगस्य न साक्षात् करणापेक्षा। अक्रियात्मकत्वात्। कृतेस्तु क्रियारूपतया करणाकाङ्क्षेति, तद्द्वारा नियोगस्यापि तदाकाङ्क्षेत्यर्थः।

कथं पुनः कृतिनिर्वर्त्य एव भावार्थस्ताम्प्रति करणमिति चेत् ? न। तदवच्छिन्नायास्तस्यांशस्तदपूर्वविशेषकृतित्वात्तथाविधस्य च लोके करणत्वप्रसिद्धेः। तथा हि यथा छेत्तुरुद्यमन-निपातनलक्षणया क्रियया परशुर्व्याप्यमानोऽपि तामेव प्रति करणम्। तद्विषयायास्तस्या द्वैधीभावफलत्वात्। न हि लोष्टविषये उद्यमन-निपातने द्वैधीभावं फलतः। एवं यद्यपि कृत्या भावार्थो व्याप्यते, तथाऽप्यपूर्वविशेषकृतित्वं तस्यास्तद्विषयत्वाधीनमिति, युक्त एव करणभावो भावार्थस्य। अपूर्वस्य तूद्देश्यत्वात् कार्यत्वम्। तदेवं नित्ये विषयीभूतस्य भावार्थस्त पश्चात्करणत्वाम्, इतिकर्तव्यतासाहित्यं च तस्य प्रतीयत इति, नाङ्गलोपेऽपि विषयाभावः। ततश्च विषयाधीनप्रतीतेः कार्यस्य विषयाविलयेऽविलयात्, तत्साधने कर्मण्यधिकारप्रतीतेस्तद्बलेन हीनाङ्गकमपि कर्मानुष्ठापयति नियोगो वैकृत इव प्रत्याम्नात–प्रतिषिद्ध–लुप्तार्थाङ्गव्यतिरिक्ताङ्गानुष्ठानमितिसिद्धः काम्य- नित्यविशेषः।

तदेतदापातकल्याणं सूक्ष्मन्यायदृष्ट्या निपुणं निरूप्यमाणमारकूटायते। कथम् ?

## दोषाष्टकप्रदर्शनेनोक्त प्राभाकरमतस्य निरासः

फलस्य विप्रकृष्टत्वादपूर्वानभिधानतः।
तत्प्राधान्यप्रहाण्या च विषयत्वोपपत्तितः॥ ५॥
समप्रधानभावेन स्वरूपस्यानपायतः।
अप्रयोजकभावेन जातेष्टौ च प्रसङ्गतः॥ ६॥

---

ननु क्रियायाः साधकतमं करणम्। अत्र च भावार्थः कृतिरूपक्रियायाः साध्य एव, न तु साधकः। अतस्तस्य कृतिकरणत्वमयुक्तमिति शङ्कते–कथमिति। यदा कृतेर्भावार्थनिष्पत्तिरेव फलं, तदा भावार्थः साध्यतया कर्म। न तु साधकः। यदात्वपूर्वनिष्पत्तिः फलं, तदा कृतेरपूर्वार्थप्रवृत्तत्वात् तत्साध्यो भावार्थोऽन्यार्थप्रवृत्तकृतिव्याप्यत्वात् करणं भवतीत्युत्तरमाह–तदवच्छिन्नाया इति। तदवच्छिन्नायास्तद्विषयाया अपि तस्या अपूर्वनिष्पत्तिफलसाधनत्वात्। तथाविधस्य–परार्थप्रवृत्तव्यापारसाध्यस्य। तदेव दृष्टान्तमुखेनोपपादयति–यथेति। उद्यमननिपातने एव यदा ऊर्ध्वाधोदेशसंयोगफलावच्छिन्नवाचिभ्यामुद्यच्छतिनियच्छतिभ्यामभिधीयेते, तदा तत्फलाश्रयतया परशुरेव कर्म। यदा तु त एवोद्यमननिपातने द्वैधीभावफलावच्छिन्नाभिधायिना छिनत्तिनाऽभिधीयेते, तदा फलाश्रयः काष्ठं कर्म। परशुस्तु अन्यार्थप्रवृत्तव्यापारव्याप्यतया करणम्। एवमेव भावार्थस्य कृतिं प्रति करणत्वम। अपूर्वस्य तु कर्मत्वमित्यर्थः। लोष्टविषय इति। तत्रोद्यमननिपातनयोः द्वैधीभावफलकत्वाभावात् तयोर्लोष्टं कर्मैव, न तु करणमित्यर्थः।

अस्तु भावार्थस्य कृतिकरणत्वम्। प्रकृते किमायातम् ? तत्राह–तदेवमिति। कतिपयाङ्गवैकल्ये कर्मानुष्ठापकनियोगं दृष्टान्तयति–नियोगो वैकृत इवेति। यथा वैकृतो नियोगः प्रत्याम्नात-प्रतिषिद्ध-लुप्ताङ्गविधुरमेव कर्मानुष्ठापयति, तथा अशक्याङ्गविधुरमेव कर्मानुष्ठापयतिनित्योऽपि नियोग इत्यर्थः।

विप्रकृष्टं हि पदान्तरोपात्तं फलं भावार्थस्य। सन्निकृष्टन्तु स्वपदोपात्तमपूर्वम्। तत्र विप्रकृष्टेन प्रथमं साधनतयाऽन्वीय, विप्रकृष्टतरैर्वाक्यान्तरोपात्तैरङ्गैरसम्बद्ध्य तदन्वितेन रूपेण स्वपदप्रतिपाद्यमपूर्वं पश्चादवच्छिनत्तीति कः श्रुतिवाक्यबलाबलज्ञो ऽभिदधीत। यद्यपि कामोपायस्य कार्यस्य विषयीभवतो भावार्थस्य तत्साधनत्व मवश्यंभावि, तथाऽपि न तत्प्रथमं निरूप्यं तव्यम्। न हि येन विना यद्वस्तु नोपपद्यते, तन्निरूपणपुरःसरमेव तद्वस्तु प्रत्येतव्यम्। प्रतिपन्नेऽपि च वस्तुनि तदुपपादकं वस्तु पश्चादपि प्रतीयत एव। धूम इव धूमध्वजः। तेन प्रथमं पदश्रुत्या भावार्थमात्रविषयमपूर्वं प्रतिपद्य, पश्चात्फलोपायभूतकार्यविषयत्वान्यथानुपपत्त्या तत्साधनभावः। तदुपपत्तये चाङ्गान्वयः प्रतीयत इति, नास्त्यङ्गलोपे विषयविलोपः—इति।

यदि च विप्रकृष्टप्रमाणकं चरमनिरूपणमपि साधनत्वमवश्यं भवतीति कृत्वा विषयकोटौ निवेश्येत, ततो नित्येऽपि विषयीभवतस्तत्करणत्वावश्यंभावादङ्गोपेतस्य च तत्त्वात् तथैव विषयत्वमित्यङ्गाभावे विषयविलयः प्रसज्येत। यस्तु वदति नावश्यं नित्ये नियोगविषयस्य तत्करणत्वम्। अकरणभूतस्यापि नञर्थस्य नियोगविषयत्व-

---

गुरुमतराद्धान्तं दूषयितुमुपक्रमते—तदेतदिति। आपातदृष्टया सुवर्णमिव प्रतिभाति। सूक्ष्मया तु न सुवर्णमित्यर्थः। आरकूटं नाम सुवर्णसदृशो लोहविशेषः। तन्मते अष्टौ दोषान् प्राधान्येन कथयति श्लोकद्वयेन। तत्राद्यं विवृणोति—विप्रकृष्टं हीति। श्रुतिवाक्येति। श्रुतिरत्र समानपदोपादानम्। न वयमपूर्वविषयान्वयात् पूर्वमेव फलसाधनतयान्वयात् तद्वेषस्य विषयानुप्रवेशं वदामः, येनैवमुपालभ्येमहि। किं तु प्रथममेवापूर्वान्वयेऽपि तस्य फलोपायत्वात् भावार्थस्य तद्विषयत्वं तस्यापि फलसाधनत्वमन्तरेण नोपपद्यत इति, विषयीभूतस्य फलसाधन- त्वमप्यवश्यंभावीति, तद्वेषस्यापि विषयानुप्रवेशोऽङ्गीक्रियत इत्याशङ्कामनूद्य दूषयति—यद्यपीति। किमवश्यंभावित्वात् प्रथममेव तदवगम्य विषयत्वमवगन्तव्यमिति, तस्य तस्य विषयानुप्रवेशः कथ्यते, अथवा पश्चात् तस्य फलकरणत्वमवश्यमुपनिपततीति तस्यापि विषयानुप्रवेश इति विकल्प्य, प्रथमं नियमासम्भवेन दूषयति—तथापीति। तदेव दृष्टान्तमुखेन उपपादयति—नहीति। द्वितीये तु पक्षे पश्चाद्भावि प्राथमिकविषयानुप्रवेश इति, अङ्गलोपेऽपि न विषयविलयः स्यादित्याह—तेनेति।

ननु पश्चाद्भावित्वेऽप्यावश्यकत्वात् विषयानुप्रवेशः स्यादेवेत्याशङ्क्य, तर्हि नित्ये फलकरणत्वाभावेऽप्यपूर्वकरणत्वस्यावश्यंभावात् तस्यापि विषयानुप्रवेशः स्यात्। ततस्तत्रापि सर्वाङ्गोपसंहारः स्यादित्याह—यदि चेति। विप्रकृष्टप्रमाणप्रतिपन्नत्वात्-चरमनिरूपणत्वम्।

नित्ये विशेषमाशङ्कते—यस्त्विति। 'कामाधिकारादन्यत् सर्वमिह नित्यत्वेन विव- क्षितम्। फलाभावात्। 'नापगुरेत्, न निहन्यादि' तै. सं. २-६-१० त्यादिष्वपगोरणादिप्रवृत्तः— एव सामर्थ्यलभ्यो नियोज्यः। नञर्थो विषयः। तस्य च प्रवृत्तिरूपत्वाभावात् करणत्वं नास्तीति विषयीभूतस्य करणत्वमावश्यकं न भवतीत्यर्थः।

---

## टिप्पणी

१. अत्रत्योविशेषो निमित्तश्रवणादित्यादिनवमश्लोकव्याख्यायां नञर्थोऽपूर्वस्य विषय इत्यत्र टिप्पण्यां द्रष्टव्यः।

दर्शनादिति। स वक्तव्यः काम्यनियोगविषयस्यापि नैकान्तिकं फलकरणत्वम्। द्रव्यदेवतासंबन्धस्याकरणभूतस्यापि सौर्यादिवाक्येषु विषयत्वदर्शनादिति। स चेदेवमुक्तः प्रतिब्रूयादकरणभूतोऽपि द्रव्यदेवतासंबन्धस्तदविनाभूतस्तेन रूपेण विषय इति, प्रतिब्रूयादेनमेवं [१]नञर्थस्यापि तदविनाभूतस्य तेनैव रूपेण विषयत्वमिति—तुल्या चर्चा। तस्माद्यथा नित्येषु भावार्थमात्रे विषयीभूते पश्चात्करणत्वम्, इतिकर्तव्यतान्वयश्च प्रतीयते, तथा काम्येष्वपि।

श्रुत्या भावार्थमात्रस्य विषयत्वे निरूपिते।
पश्चात्फलादिसम्बन्धो वाक्यादेः संप्रतीयते॥ ७॥

एवं पदान्तरोपादानलक्षणस्तावदेको विप्रकर्षः। लक्षणानिमित्तश्चापरः। तथा हि-न स्वर्गकामशब्देन स्वर्गस्य साध्यत्वमभिधीयते। कामसंबन्धात्तु स्वर्गस्य साध्यत्वम्-

---

तर्हि काम्येऽप्येतावत् समानमिति परिहरति—स वक्तव्य इति। शब्दोपात्तत्वात् द्रव्यदेवतासंबन्ध एव विषयः। सिद्धरूपं न करणम्। तदाक्षिप्तो भावार्थ एव तत्करणमिति, तत्रापि न नियमोऽस्तीत्यर्थः।

ननु द्रव्यदेवतासंबन्धस्य स्वतःसिद्धरूपत्वेऽपि स्वाविनाभूतस्य भावार्थस्य करणत्वात् तदनुरागवेषेणास्यापि विषयत्वात् तत्र विषयीभूतस्य करणत्वमावश्यकमिति शङ्कते-स चेदिति। एवं चेन्निषेधाधिकारेऽपि नञर्थस्य सिद्धत्वेऽपि प्रवृत्तस्य नियोज्यत्वेन तन्निवृत्तेर्व्यापाररूपतया तस्य करणत्वात्, तदनुरक्तस्यैव तस्यापि विषयत्वमिति विषयस्य करणभावनियमोऽस्तीति-परिहरति—प्रतिब्रूयादिति। एवं च नित्ये, काम्येऽपि फलं वा अपूर्वं वा प्रति करणीभावस्यावश्यकत्वादुभयत्रापि पश्चादेव करणीभाव इति; अङ्गलोपेऽपि न प्रथमान्वितविषयविलयः। काम्ये तु विशिष्य फलकरणत्वस्य विप्रकृष्टवाक्यप्रमाणावगततया पश्चाद्भावित्वमेवेत्याह—तस्मादिति।

भावार्थस्य पदश्रुत्युपात्तादपूर्वात् फलं न केवलं वाक्योपात्ततया विप्रकृष्टम्। अपि तु प्रकारान्तरेणापीति पुनरपि विप्रकर्षान्तरं दर्शयति—लक्षणेत्यादिना। अपूर्वस्य साध्यत्वम्-

---

### टिप्पणी

१. नञर्थस्येति-प्राभाकरमीमांसकास्तु सर्वत्र कार्यवाक्यार्थवादिनो निषेध्यस्य प्रत्यवायफलकत्वं न प्रमाणवत्, तेन विनाऽपि विषय-नियोज्यान्वितस्य नियोगस्य वाक्यार्थस्य परिपूर्णत्वेन तत्कल्पकाभावात्,। तथाहि—'न कलञ्जं भक्षयेदि'ति निषेधवाक्यस्थितेन लिङ्प्रत्ययेन कार्यमभिधीयते। तस्य नञर्थो विषयः। तच्च विषयत्वं कृत्यवच्छेदद्वारेण कार्यावच्छेदकत्वं, तच्च कृतिविषयस्यैव संभवति। नञर्थश्चौदासीन्यात्मा न कृतिसाध्य इति, न तस्य विषयत्वमितिवाच्यम्। औदासीन्यस्य प्रागभावरूपस्य केवलात्मस्वरूपावस्थानापरपर्यायस्य प्रचलितावस्थपुरुषेणानुपाल्यतया कृतिविषयत्वमुपपद्यते। प्रचलितत्वं नाम निषेध्यकार्यताबोधः, तदुपायचिकीर्षा वा, तदवस्थस्य पुरुषस्य भक्षणप्रागभावपरिपालनमुत्तरकालसंबन्धित्वलक्षणमुक्तचिकीर्षाविघातकानुपाल्यत्वबुद्धयुत्पादनं विना न संभवति। ततश्चानुपाल्यत्वबुद्धयुत्पादनेनोक्तचिकीर्षानुपाल्यत्वाद्यपनोदनद्वाराऽनुपाल्यस्य प्रागभावस्य कथंचित् कृतिसाध्यत्वात् युक्तं विषयत्वम्। भक्षणे प्रवृत्तश्च भक्षणाभावविषये कार्ये नियोज्यः। तस्मात् विषयस्य नियोगस्य नियोज्यस्य च प्रत्यवायपरिहारानपेक्षयैव लब्धात्मकत्वं, नानुपपत्त्यभावेन प्रत्यवायः कल्प्यः—इति वदन्तीत्याशयं मनसि निधायाह नञर्थस्येति।

अनुमाय, ततः स्वर्गसाधनत्वं यागस्य निरूपयितव्यमिति विप्रकर्षः। यत्र च द्रव्यदेवता-संबन्धो नियोगविषयः, तत्र तस्य करणत्वानभ्युपगमादकरणीभूतस्य विषयत्वानुपपत्तेः, एवं वक्तव्यम्। करणीभूतयागसंपाद्यो द्रव्यदेवतासंबन्धो नियोगस्य विषयः। अङ्गाभावे च करणीभूतयागाभावात्तत्संपाद्यद्रव्यदेवतासंबन्धाभावेन विषयविलय इति। ततश्च द्रव्यदेवतासंबन्धेन यागमनुमाय, तस्य च करणत्वं परिकल्प्य, तत्संपाद्यद्रव्यदेवतासंबन्धस्य विषयत्वनिरूपणमिति विप्रकर्षः। विश्वजिदादौ च यत्र फलकामो नियोज्यो न श्रूयते, तत्र नियोज्यं कल्पयित्वा, तत्संबन्धेन यागस्य करणत्वं परिकल्प्य, तादृशस्य विषयत्वं निरूपयितव्यमित्यपि विप्रकर्षः।

किञ्च तत्र नियोज्यपरिकल्पने निमित्तं तावन्न नियोगः। तस्याप्रतिपन्नत्वात्। न ह्यप्रतिपन्नं कल्पकं कल्पनाय कल्पते। अप्रतिपन्नश्चात्र नियोगः, विषयानिरूपणात्। अविषयकार्यप्रतीत्यनुपपत्तेः। करणीभूतो हि यागो नियोगविषयः। न चाकल्पिते नियोज्ये फलकामे करणीभूतयागसिद्धिः। तत्सिद्धौ च नियोज्यसिद्धिः। तदधीना च करणीभूतयागसिद्धिरिति, चक्रकमप्रतिष्ठितमापद्येत। तेन तत्र प्रथमं भावार्थमात्रविषयमपूर्वं प्रतीत्य, ततो नियोज्यत्वादिकल्पनमिति, अङ्गलोपे विषयाविलयाद्यथाशक्तिप्रयोगप्रसङ्गः।

किञ्च सोमादिषु साधनेषु स्ववाक्येषु श्रूयमाणेष्वपि तत्साध्यरूपेण विषयत्वमनभ्युपगम्य, फलश्रवणबलेन तत्साधनरूपस्य विषयत्वमिच्छद्भिः स्वदर्शनानुरागोऽतीवाविष्कृतः। कः खलु पदान्तरेभ्यः फलपदे विशेषः? तदधीनसिद्धित्वमिति चेत्?

---

आभिधानिकम्। यागस्य च स्वरूपेणैव विषयतयाऽन्वयः। स्वर्गस्य तु साध्यत्वञ्च लाक्षणिकम्, तत्प्रतिपादकशब्दाभावात्, अनुपपत्तिमूलत्वाच्च। ततश्चाभिधानिकान्वयात् लाक्षणिकान्वयस्य विप्रकृष्टस्य प्राथमिकत्वं वक्तुं न युज्यत इत्यर्थः।

आनुमानिकमपि विप्रकर्षं क्वचित् दर्शयति—यत्र चेति। साक्षाच्छ्रुतस्य द्रव्यदेवतासम्बन्धस्य यत्किञ्चित्कल्पनामन्तरेणैवापूर्वविषयत्वे सम्भवति, ततः पूर्वमेवानुमानिकस्य यागस्य करणत्वमपि परिकल्प्य, तस्य फलेनान्वयो न युज्यत इत्यर्थः। तत्सम्पाद्येति। देवतामुद्दिश्य त्यक्ते द्रव्ये, पश्चात् तस्य द्रव्यदेवतासम्बन्धो निर्वाह्यत इति, तस्य यागसम्पाद्यत्वम्। साधनभूतयागानुमानात् विप्रकर्षमभिधाय, साध्यभूतफलानुमानादपि विप्रकर्षमाह—विश्वजिदादाविति। नियोज्यं परिकल्प्येति। फलानुमानमपि न साक्षात्, किंतु नियोज्यकल्पनाद्वारेणेत्यतिविप्रकर्ष इत्यर्थः।

विश्वजिदादौ न केवलं विप्रकर्षमात्रेण फलकरणीभूतयागस्य विषयत्वानुपपत्तिः। किंतु चक्रकप्रसङ्गादपीति प्रतिपादयितुमुपोद्घातमाह—किंचेत्यादिना। ननु विषये निरूपिते, पश्चात् प्रतिपन्न एव नियोगो नियोज्यकल्पकः स्यादित्याशङ्क्य, तदानीं चक्रकं स्यादित्याह—करणीभूत इति। एवं चक्रकभयात् करणान्वयात् प्रागेव तत्र विषयान्वयोऽङ्गीकार्य इति, यथाशक्ति प्रयोगः स्यादित्याह तेनेति।

यदि यागस्य विप्रकृष्टेन फलेनान्वये सति तदन्वितेन रूपेणापूर्वविषयत्वं, ताह तत्समानविप्रकर्षैर्वस्त्वन्तरैरपि प्रथमत एवान्वयात्, तदन्वितेन च रूपेणापूर्वविषयत्वमपि स्यात्।

न। व्याघातात्। स्यादेतत्। फलकामिनियोज्यसम्बन्धबलेन हि यागस्य तत्साधनत्वानुपपत्त्या तद्व्यतिरिक्तमपूर्वं सिध्यत्तदानुकूल्येन सिध्यतीत्यवश्यं तद्विषयस्य तत्साधनत्वेन भवितव्यमित्यस्ति पदान्तरेभ्यः फलपदस्य विशेषः। तन्न। व्याघातात्। यस्मात्क्षणिकस्य यागस्य फलसाधनत्वं नोपपद्यते, तस्मात् फलकामी न तत्कार्यतया बुध्यते, अपि तु फलसाधनभूतयागविषयमपूर्वं बुध्यत इति, कथमिदं परस्परं व्याहतं बुद्धिमन्तोऽभिदधीरन्।

## शालिकनाथोक्तस्यार्थस्यानुवाद-निरासौ

'कश्चित्तु निपुणंमन्यः प्रभाकरदर्शनं शिक्षयन्निदं ब्रह्मास्त्रमुत्सृजति। नैव भावार्थस्य फलकरणभूतस्य विषयत्वम्। किन्तर्हि? फलकामस्य यत्कार्यं, तत्तत्सामग्र्यवच्छिन्नमेव तेन प्रत्येतव्यम्। सामग्री च करणेतिकर्तव्यतारूपा। तेनेतिकर्तव्यतालोपे विषयविलय इति। न चैवं यागस्याविषयत्वम्। सामग्र्यवच्छिन्नस्यापि तद्विशेषापरिज्ञानेन साकाङ्क्षत्वात्। तेन स्वपदावगतो नियोगः पश्चाद्यागेनावच्छिद्यते। न तु याग एव फलान्वितोऽवच्छेदकः—इति।

तस्यापि तदस्त्रं अयमेव ब्रह्मदण्डो ग्रसते 'फलस्य विप्रकृष्टत्वादि'ति। न खलु पदान्तरोपात्तफलाविनाभावप्रतीता तत्सामग्री स्वपदस्थाद्यागात्पूर्वमेवापूर्वमवच्छेत्तुम्—

---

विप्रकर्षस्य तुल्यत्वादिति दूषणान्तरमप्याह— किंचेति। विप्रकर्षसाम्येऽपि नियोगस्य फलाधीनसिद्धित्वमेव फलपदस्य विशेष इति शङ्कते—तदधीनेति। परिहरति नेति।

शङ्कोत्तरे स्वयमेव विवृणोति—स्यादेतदित्यादिना। अयंभावः—न तावल्लिङ्शब्दश्रवणमात्रेण प्रथमं नियोगः प्रतीयते। वृद्धव्यवहारे तत्र व्युत्पत्त्यभावात्। किं तु यागस्यैव फलसाधनत्वे प्रतीते, फलस्य कालान्तरभावितया तदनुपपत्तेः स्थास्नुर्नियोगः सिध्यतीति, नियोगः फलाधीनसिद्धिक इति, तत्सिद्धेः पूर्वमेव यागस्य फलसाधनत्वं प्रतीतम्। सिध्यतोऽपि नियोगस्य फलानुकूलतया तद्विषयस्य यागस्यापि फलसाधनत्वं पश्चादप्यावश्यकमिति च प्रथमप्रतीतफलोपायत्ववेषेणैव विषयत्वमिति, फलपदस्योपपदात् विशेषोऽस्तीति। यस्मादिति। नियोगमन्तरेण यागस्य फलसाधनत्वमनुपपन्नमिति वचनस्य, नियोगावगतेः पूर्वमेव यागस्य फलसाधनतयाऽन्वयो भवतीति वचनस्य चान्योन्यव्याहतिरेवेत्यर्थः।

फलकरणीभूतस्य विषयत्वाभावेऽप्यङ्गलोपे विषयविलयं कश्चिदुपपादयांचकार। तन्मतमनुवदति—कश्चिदिति। फलकामस्य कार्यतया प्रतीयते हि नियोगः। तस्य हि साध्यफलानुमिता सामान्येन प्रतीता तत्सामग्री योग्यतया विषयत्वेन संबध्यते। का सामग्रीति—विशेषाकाङ्क्षायामङ्गप्रधानवाक्यैः करणेतिकर्तव्यताजातं तद्विशेषत्वेनोपस्थाप्यते। एवं च यागस्य प्रथमत एव न विप्रकृष्टेन फलेनान्वयः। अङ्गानामपि सामग्र्यनुप्रवेशात् तल्लोपे विषयविलयश्च भवतीति, न कश्चित् दोषः। नित्ये तु फलाभावेन तत्सामग्र्या अप्यभावात् समानपदोपात्तस्य यागस्यैव विषयत्वात् नाङ्गलोपे विषयविलय इति भावः। सामग्र्यवच्छिन्नस्येति। प्रथमतः सामान्येन सामग्रीविषयकनियोगस्य सामग्रीविशेषापरिज्ञानेन कोऽसौ सामग्रीविशेष इत्यपेक्षायां यागस्य सामग्रीविशेषतया पश्चात् विषयत्वं भवतीत्यर्थः।

दूषयति—तस्यापीति। विश्वामित्रप्रयुक्तं निजमयूखविद्योतितदिङ्मुखं ब्रह्मास्त्रं वसिष्ठप्रयुक्तो ब्रह्मदण्डोऽग्रसदिति श्रीरामायणे प्रसिद्धम्। तत्कटाक्षेणाह—अयमेव ब्रह्मदण्ड इति।

पारयति। यथा न यागोऽपूर्वं विहाय फलेन प्रथमं सम्बद्ध्यते, तथाऽपूर्वमपि यागं विहाय फलसामग्न्या। विप्रकर्षस्य तुल्यत्वादित्यलमनेन।

प्रसिद्ध एव मार्गे दूषणान्तरमुच्यते। यदि च करणीभूतो यागो विषयः, ततो नियोगस्य विषयाधीननिरूपणत्वादनिरूपिते च विषये तदधीननिरूपणाशक्तेर्नियोगप्रतिपत्तेः पूर्वमेव फलसाधनत्वं यागस्य निरूपयितव्यम्। निरूपितसाधनभावं च यागं फलकामी कार्यतया बोद्धुमलमेवेति, न नियोज्यसम्बन्धानुपपत्त्या क्रियातिरिक्तकार्याभिधानकल्पनाबीजं लिङादीनां सिध्यतीति, सर्वं भवदीयसिद्धान्तकोशसाधनभूतमपूर्वाभिधानमुत्सन्नसंकथं जातम्।

सिध्यतु वाऽभिधानम्। न पुनः प्राधान्यं सम्भवति, परार्थभूतभावार्थविषयत्वात्। अङ्गप्रधानोत्पत्तिनियोगवत्। यो हि साधिकारवाक्येषु प्रधानभूतकार्याभिधायित्वेन प्रज्ञातानामपि लिङादीनां प्रयाजादिवाक्येषु विनियुक्तविषयतया प्राधान्यं विहाय, लक्षणया गुणभूतकार्याभिधानमाश्रयति। स कथमन्यत्राविदितप्रधानकार्याभिधानमाश्रयेत्। तेनापूर्वस्य प्राधान्यं विहीयत इति।

किञ्चोपपद्यत एव यागस्याकरणभूतस्यापि विषयत्वम्। नियोगो हि फलसाधनम्। तस्य यागः स्वरूपेणैव विषय इति किन्नोपपद्यते। यद्युच्येत सत्यमपूर्वं-

---

विप्रकर्षमेवाह—न खल्विति। नियोगे हि समानपदोपात्तेन साक्षाच्छ्रुतेन विषयीभावयोग्येन यागेनान्वयं त्यक्त्वा, ततःपूर्वमेव पदान्तरोपात्तया फलानुमितया तत्सामग्र्या अन्वयः पदान्तरोपादानानुमानलक्षणविप्रकर्षद्वयेन न युज्यत इत्यर्थः। यथा न याग इति। पूर्वोपपादितसमानपदश्रुत्येत्यर्थः।

प्रसिद्धेति। प्रसिद्धो मार्गः—फलकरणीभूतस्य पश्चान्नियोगविषयत्वं, तत्रेत्यर्थः। द्वितीयं दोषं विवृणोति—यदि चेति। अनुपपत्त्येति। उत्सन्नेति। यागस्य कार्यत्वानुपपत्त्या खलु स्थिरकार्याभिधानाश्रयणम्। तदभावे तत् नाश्रयणीयमिति भावः।

तदभिधानाङ्गीकारेऽपि तृतीयात् दोषात् न मोक्ष इत्याह—सिध्यत्विति। अङ्गनियोगवत्, प्रधानोत्पत्तिनियोगवच्चेत्यर्थः। अङ्गप्रधानोत्पत्तिवाक्येषु प्रधाननियोगानुवादशङ्कया न प्रथममपूर्वान्तरं प्रतीयते। किंतु यागस्वरूपमेवोपस्थाप्यते। उपस्थितेषु तेषु ग्राहकग्रहणे संजाते, पश्चात् तेषां साक्षात् ग्राहकान्वयायोगात् द्वारभूतान्यपूर्वाण्यङ्गीक्रियन्ते। तानि च विनियुक्तविषयतया गुणीभावावश्यंभावात् प्रधानाभिधायिनापि लिङ्शब्देन लक्षणया गुणत्वेनाभिधीयन्त इति हि भवद्राद्धान्तः। एवमङ्गीकुर्वता त्वयाऽधिकारनियोगस्यापि विनियुक्तविषयत्वसंभवात् गुणीभावाभिधानं लक्षणादोषाभावात् विशेषतोऽङ्गीकार्यमिति भावः।

विषयत्वोपपत्तित इति पदं व्याचष्टे—किंचेति। फलकामिनियोज्यसंबन्धाधीनं फलसाधनत्वं नियोगस्यैव, न तु यागस्य। यागस्तु केवलं तद्विषयः। तद्विषयत्वं च तस्य स्वरूपेणैवोपपद्यत इति, फलकरणत्ववेषस्यापि तदनुप्रवेशकथनं गौरवपराहतमित्यर्थः। शङ्कते—यदीति। सत्यमपूर्वं फलसाधनम्, न यागः। यागस्तु तद्विषय एव। विषयत्वं च तस्य कृतिद्वारकम्। कृत्यवच्छेदद्वारा कार्यावच्छेदको हि विषयः। कृतिस्त्वपूर्वफलयोरेकैव। उभयोरपि साक्षात् संबन्धाभावात्। भावार्थगोचरकृतिसंबन्धित्वस्य त्वविशिष्टत्वात्। एवं च कृतिद्वाराऽपूर्व-

फलसाधनम्। तत्तु न स्वरूपेण कृतिगोचरम्। भावार्थगोचरया तु तया साध्यम्। तयैव च कृत्या तद्गोचरयाऽपूर्वद्वारेण फलमपि साध्यते। तेनैकयैव कृत्यैकभावार्थगोचरयाऽपूर्वं, फलं च साध्यत इत्यपूर्वविषयस्य भावार्थस्य फलकरणत्वमवश्यम्भावीति। सत्यमेवम्। किन्त्वपूर्वकरणत्वनिरूपणपुरोधान एव सति फलकरणत्वमुक्तं भवति। तत्करणत्वं च विषयत्वपुरःसरमिति विषयभूतस्य करणत्वप्रसङ्गः। अवश्यं चापूर्वकरणत्वपुरःसरमेव क्रियायाः फलकरणत्वं निरूपयितव्यम्। अन्यथा कथं क्षणिकायाः तस्याः कालान्तरभाविनि फले साधनत्वं सम्भाव्येत। नन्वलब्धे द्वारे मा नाम सम्भूत्। लब्धे तु किमिति न सम्भवति।

किमत्र द्वारं लब्धम्। किन्तत्?, अपूर्वं, तत्त्वान्तरं वा। तत्त्वान्तरत्वे तावत् तत एव यागस्य करणत्वोपपत्तेर्देयजलाञ्जल्यपूर्वं प्रसज्येत। अपूर्वद्वारेण तु फलसाधनत्वमपूर्वसाधनत्वनिरूपणाधीननिरूपणम्। तद्धि तस्य द्वारमुच्यते यद्येन स्वफलोद्देशप्रवृत्तेन तत्सिद्ध्यर्थमन्तरा साध्यते। तदेवं सत्यपि यद्यत्र करणीभूतस्य विषयत्वमुच्यते, ततः फलकरणत्वाधीनं नियोगविषयत्वं, तदधीनञ्च नियोगं प्रति करणत्वं, तदधीनञ्च फलकरणत्वमिति चक्रकमापद्येत।

किञ्चैवमङ्गलोपे विषयविलयं ब्रुवाणः प्रष्टव्यः—किमङ्गविशिष्टस्य विषयत्वम्? उत तदुपलक्षितस्येति। किञ्चातः? यदि तावदङ्गविशिष्टस्य, ततः सर्वेषामेव प्रयाजादीनाम्, आग्नेयादीनाञ्च समप्राधान्यं प्रसज्येत, गुणाधिकारवत्। यथा हि दधिविशिष्टहो-

---

संबन्धिनो भावार्थस्य फलसंबन्धित्वमावश्यकमिति फलसंबन्धित्ववेपस्यापि विषयानुप्रवेशोऽङ्गीकार्यं इति भावः।

उत्तरमाह—सत्यमिति। प्रथमतो हि लिङ्प्रत्ययेनापूर्वमेव कृत्युपरक्तं प्रतीयते। न फलम्। तस्यां दशायां भावार्थस्तस्य विषयो भवति। तदा कृतिर्नान्योपरक्ता सविषयके त्वपूर्वे प्रतीयते। यदा तत् साक्षात् साधयितुमशक्यतया करणापेक्षं भवति, तदा सा कृतिर्भावार्थेऽवतरति। तस्यां दशायामपूर्वार्थंप्रवृत्तकृतिव्याप्यत्वादपूर्वं प्रति करणं भवति, न फलं प्रति। कृतेः पूर्वं तादर्थ्याप्रतीतेः। पश्चात्तु नियोगस्य फलसाधनतया तत्करणीभूतस्यापि भावार्थस्य फलकरणत्वं पर्यवस्यतीति, तस्य प्राथमिकाद्विषयान्वयात् पूर्वमेव वचनमिति व्याहतमिति भावः।

तदेवान्वयक्रमपर्यालोचनादपि सिध्यतीति व्यतिरेकमुखेनोपपादयति— अवश्यं चेति। क्षणिकस्य साक्षात् फलसाधनत्वाभावेऽपि, द्वारद्वारिकया तत् स्यादिति शङ्कते— नन्विति। विकल्प्य परिहरति- किमत्रेति। एवमनङ्गीकारे द्वारत्वमेव न सिध्यतीत्याह—तद्धीति। अन्तरा-मध्ये। साध्यते-उत्पाद्यते। तथापि फलकरणीभावस्य विषयत्वात् पूर्वभावाङ्गीकारेचक्रकाश्रयः स्यादित्याह - एवं सत्यपीति। एवं—फलकरणीभावस्यापूर्वकरणत्वपूर्वकत्वावश्यंभावेऽपि।

समप्रधानभावेन स्वरूपस्यानपायत इति दूषणद्वयं विकल्पद्वयदूषणतया योजयितुं विकल्पयति - किंचेति। तस्मिन् सति किं स्यादिति पृच्छति—किंचात इति। प्रथमं दूषयति—यदि तावदिति। तत्र तदभिमतमेव दृष्टान्तमाह—गुणाधिकारवदिति। 'दध्नेन्द्रियकामस्य जुहुयात्' तै. ब्रा. २-१. ५-६. इत्यत्र दधिमात्रमेव विधीयते। होमस्य प्राप्तत्वात्। सिद्धरूपस्य-

मस्येन्द्रियकामापूर्वसाधनत्वेन दधिहोमयोरपि समप्राधान्यं, न गुणप्रधानभावः। तद्वदिहापि स्यात्। अथाङ्गोपलक्षितस्य यागस्वरूपस्य, तर्हि पुरोडाशद्वयोपलक्षितस्ये-वान्तरालकालस्यांगोपलक्षितस्यांगलोपेऽपि एकपुरोडाशापायेऽप्यनपायान्नास्त्यङ्गलोपे विषयविलयः।

किञ्चैवमपूर्वप्रयुक्तिः, अपूर्वग्रहणञ्चाङ्गानां न स्यात्। साधिकारो विधिः प्रतिपन्नः सन् स्वसन्निधिसमाम्नातान् प्रयाजादीन्, अवघातादींश्च स्वस्यानुवादशङ्का-निरुद्धनियोगान्तरविषयभावान् स्वार्थतया गृहीत्वा स्वगृहीतेष्वेव व्रीह्यादिषु द्वारभूतेषु स्वरूपातिक्रमेणैव स्वसाधनविशेषरूपे विनियुङ्क्ते। अङ्गसम्बन्धात्तु प्राग्विषयाभावेना-प्रतिपन्ने नियोगे सर्वमिदमजातपुत्रक्रीडनकमापद्यते। फल, करणं वा प्रयोजकं-स्यादङ्गानाम्।

अप्रयोजकभावेनेत्यस्यापरा व्याख्या। फलसाधनरूपेण भावार्थ नियोगेन संबद्ध्यमाने 'अर्थाभिधानकर्म च' मी. द. ४.१.२६ इत्यनेन न्यायेन तुषोपवाप-

---

दध्नः साक्षात् विषयत्व-करणत्वयोरनुपपत्तेः, होमस्य श्रुतत्वाच्च दधिविशिष्टस्य होमस्यैव नियोगविषयत्वं, करणत्वं चेति द्वयोरपि यथेन्द्रियकामापूर्वं प्रति समप्राधान्यं, तद्वदत्रापीत्यर्थः।

द्वितीयं दूषयति—अथेति। यथा 'उपांशुयाजमन्तरा यजति' तै. सं. २–६–६ इत्याग्ने-याग्नीषोमीयपुरोडाशद्वयोपलक्षितान्तरालकालविहितोपांशुयाजस्य 'नासोमयाजिनोऽग्निषोमीय-पुरोडाशः' इत्यसोमयाजिनोऽग्नीषोमीयपुरोडाशाभावे 'द्रव्यापचारे आज्येन प्रतिसंख्याय यजेत' आ. श्रौ. सू. इत्याज्यप्रत्याम्नानेऽपि पुरोडाशद्वयोपलक्षितस्य कालस्यानपायः[1] तद्वदङ्गलोपेऽपि न करणीभूतयागस्यापायः, नापि विषयस्येति यथाशक्तिप्रयोगप्रसङ्ग इत्यर्थः।

अप्रयोजकभावेनेत्युक्तं सप्तमं दूषणं विवृणोति—किंचेति। अङ्गसंबन्धोत्तरकालं करणी-भूतस्य यागस्य अपूर्वविषयत्वेऽपूर्वस्याङ्गप्रयोजकत्वं न स्यात्। ग्राहकग्रहणस्य ग्राहकीयद्वार-विनियोगस्य चासिद्धिः। तत्पूर्वत्वाच्च प्रयोजकत्वस्येत्यर्थः। असिद्धिमुपपादयितुं नियोगस्य ग्राहकत्वक्रमं, विनियोजकत्वप्रकारं च दर्शयति—साधिकार इति।

आरादुपकारक-संनिपत्योपकारकाङ्गजातान्यधिकारनियोगप्रत्यभिज्ञाने लिङ्शब्दस्य तदनु-वादशङ्कया, नियोगान्तरस्य च शब्दादप्रतीततया न नियोगान्तरविषतया स्वार्थोपस्थापकानि। किंतु स्वरूपेणैव। तदानीं च योग्यतया प्रथमं ग्राहकेण स्वशेषतया तानि गृह्यन्ते। तद्गृहीतानां च तेषां साक्षात् ग्राहकान्वयाभावात् ग्राहकेणैव स्वीयेषु व्रीह्यादिष्ववान्तरनियोगेषु च शेषतया विनियुज्यन्त इत्यर्थः। प्रथमं विषयान्वयाभावे त्वेतद्द्वयं नोपपद्यते। प्रयोजकत्वं तु दूर इत्याह—अङ्गसंबन्धादिति। प्रथमप्रतीतयोः फल करणयोरेव ग्राहकत्व—विनियोजकत्व—प्रयोज-कत्वानि प्रसज्यन्त इत्याह—फलमिति।

नियोगस्याप्रयोजकत्वप्रसङ्गं प्रकारान्तरेणाप्याह—फलेति। यथा 'पुरोडाशकपालेन तुषानु-पवपति आप. श्रौ. सू. इति कपालस्य पुरोडाशशेषत्ववेषेणैव तुषोपवापे विनियोगात् तुषोपवापो न प्रयोजकः। किंतु पुरोडाश एव। तथा सर्वाङ्गसमेतस्य यागस्य फलकरणीभाववेषेणैव नियोग-विषयत्वे साङ्गस्य तस्य फलमेव प्रयोजकं स्यात्, न नियोग इत्यर्थः। अनेनेति। एतत्सूत्रोक्त-न्यायेनेत्यर्थः।

---

१. इदञ्च शाखान्तराभिप्रायेण, असोमयाजिनोऽग्नीषोमीयपुरोडाशस्य स्थानेऽविधानात्।

वत्कपालस्याप्रयोजकं साङ्गस्य यागस्यापूर्वं प्रसज्येत। नन्विष्टमेव काम्येषु विधेरप्रयोजकत्वम्। अत एव श्येनस्याविधेयत्वादनर्थत्वम्। यद्यपि स्वविधिसिद्ध्यर्थमनुष्ठीयेत, तथाऽपि न विधेयत्वम्। यस्य विधिः स्वसिद्ध्यर्थमनुष्ठानमाक्षिपति, तद्विधेयं, न तु विधिसाधनमात्रम्। काम्येषु तु फलत एवानुष्ठीयमानं कर्म विधिमपि साधयतीति, न विधेयमिति। किमिदानीमङ्गेष्वप्यप्रयोजको विधिरिष्यते ? साङ्गस्य हि फलसाधनस्य विषयत्वोपगमे तादृशस्यैव फलप्रयुक्तस्योपजीवनादप्रयोजको विधिरङ्गानामपि स्यात्। ततश्चाग्नीषोमीयहिंसा विधेयत्वाभावान्निषेधगोचरोऽनर्थः स्यात्।

## शालिकनाथोक्तस्यार्थस्यानुवाद–निरासौ

अत्र कश्चिद्[1] वैयात्यादेवमाह—मा भूदङ्गानां विधेयत्वम्। न चैतावताऽग्नीषोमीयादेर्निषेधप्रसङ्गः। द्विविधस्यापि निषेधस्यासंभावनीयत्वात्। द्वेधा हि किञ्चित् फलोद्देशेनानुष्ठीयमानं कर्म निषिध्यते फलपर्यन्तं वा–साधनत्वमात्रपर्यवसानं वा। तद्यथा सुखार्थं मदिरास्वादः प्रसक्त एव निषिध्यते—नानेन सुखमवाप्तव्यम्। अकार्यमेतत्साध्यं सुखमिति। क्वचित्साधनत्वमात्रं निषिध्यते। तद्यथा – रोगार्त्तस्तदुपशमार्थी तदुत्कोपक एव भेषजबुद्ध्या प्रवर्तमानो निषिध्यते—मैवं कार्षीर्नेदमस्योपशमसाधनमिति। तत्र न तावदग्नीषोमीये फलपर्यन्ते निषेधसंभवः। स्वर्गस्य निरतिशय-

---

एतद्द्वयमिष्टमेवेति शङ्कते—नन्विति। यतः काम्येषु विधिर्न प्रयोजकः। अत एवायमपि तान्त्रिकप्रवाद उपपद्यत इति प्रसङ्गादाह—अत एवेति। अयं भावः—'न हिंस्यात् सर्वा भूतानि' इत्यनारभ्यवाक्येन सामान्येन हिंसामात्रं निषिध्यते। श्येनयागोऽपि हिंसारूपः। मारणरूपत्वात्। नहि मरणं हिंसा। अपि तु तद्धेतुभूतो व्यापारः। तादृशश्च श्येनयागः। स यदि विधेयः स्यात्, तदा सामान्यनिषेधस्य तद्व्यतिरिक्तविषयत्वादनर्थत्वं नास्ति। यदि न विधेयत्वं, तदा निषेधगोचरत्वादनर्थत्वमिति, श्येनस्यानर्थत्वमङ्गीकुर्वतामस्माकमविधेयत्वमिष्टमेवेति।

ननु 'श्येनेनाभिचरन् यजेत' षड्वि–ब्रा. ३–८ इति लिङ्प्रत्ययेन विधिप्रतीतेर्यागस्य विधिसाधनत्वाच्च कथमविधेयत्वमित्याशङ्क्याह–यद्यपीति। विध्यधीनानुष्ठानत्वं विधयत्वम्। काम्येषु च फलस्य प्रयोजकत्वेन नियोगस्याप्रयोजकत्वात् विधिसाधनत्वेऽपि विधेयत्वं नास्तीत्यर्थः।

दूषयति–किमिदानीमिति। अङ्गसमेतस्यैव फलसाधनत्व–विधिविषयत्वयोरनङ्गीकारे सकलाङ्गोपसंहारासिद्धे सर्वाङ्गसमेतस्यैव तथात्वमिति वक्तव्यम्। ततश्च करणांश इवाङ्गांशेऽपि विधेयत्वासिद्धेः श्येनवदग्नीषोमीयस्याप्यनर्थत्वं स्यादित्यर्थः। निषेधगोचरः अग्नीषोमीययागइति शेषः।

अग्नीषोमीयहिंसाया विधेयत्वाभावेऽपि निषिद्धत्वं नास्तीति कश्चित् वदति। तन्मतमनुवदति–अत्र कश्चिदिति। वैयात्यात्–धाष्ट्र्यात्। द्वेधा हीति। साधनत्वे संभवत्येव तत्फलस्याकार्यत्वप्रतिपादनेन वा, फलस्य कार्यत्वेऽपि कर्मणस्तत्साधनत्वाभावेन वा द्वेधा निषेधःप्रवर्तत इत्यर्थः। द्वैविध्यमेवोदाहरणमुखेन दर्शयति–तद्यथेति। अकार्यमिति। मदिरास्वादजन्यसुखस्येष्टत्वेऽप्यनिष्टापादकत्वादकार्यत्वं बोध्यत इत्यर्थः। उत्कोपके–सन्धुक्षके। प्रकृते तु उभयथा निषेधो न संभवतीत्याह—तत्र न तावदिति। वचनविरोधात् 'ज्योतिष्टोमेन स्वर्ग-

---

[1] कश्चित्–शालिकनाथः।

सुखरूपस्य कार्यत्वेन सर्वजनविदितस्याकार्यत्वाभिधाने प्रमाणान्तरविरोधप्रसङ्गात्। नापि साधनत्वनिषेधः। वचनविरोधात्। तस्मान्न निषेध्यत्वमिति।

तदिदमतितुच्छं न निराकरणमपि प्रयोजयति। तथा हि—मदिरास्वादेन संपाद्यं सुखं प्रमाणान्तरेण कार्यं विदितमप्यकार्यमुच्यते वचनेन, तथा स्वर्गसुखमपीति किमिति—नोच्यते। प्रमाणान्तरं हि क्षिप्रमेवाग्रहणतया व्याख्यायते। तस्मादङ्गेष्वप्यप्रयोजकत्वमनिष्टमेव। तच्चापद्येताङ्गविशिष्टस्य विषयत्वे।

## शंका—तन्निरासौ

आह—सत्यमङ्गविशिष्टस्य विषयत्वे समप्राधान्यम्, अप्रयोजकत्वं च स्यात्। न तु तद्विशिष्टो विषयः। करणीभूतस्तु विषयः। तदभावाच्चाङ्गलोपे विषयविलय इत्युच्यते। न तु कृत्स्नाङ्गोपेतस्यैव विषयत्वम्। तस्माददोष इति चेत्? नैतद्युक्तम्। यद्यङ्गलोपे करणत्वं नास्ति, नित्येऽपि तर्हि हीनाङ्गस्य करणत्वं नास्तीत्यननुष्ठानं स्यात्। अथ तत्र विधिना यावदङ्गं प्राप्यते, तदुपेतस्यैव करणत्वं भवति, तदितरत्रापि कियद्भिरङ्गैरुपेतस्य करणत्वमित्यनवगमाद्विधिगृहीतानामेवाङ्गानां संग्रहणाद्यावन्त्यङ्गानि विधिना प्राप्यन्ते, तदुपेतस्यैव करणत्वं भवतीति, नास्ति विषयविलयः।

---

कामो यजेत' इत्यनेन वचनेन साङ्गज्योतिष्टोमस्य स्वर्गसाधनत्वप्रतीतेः, असाधनत्वाभिधाने तद्विरोध इत्यर्थः।

दूषयति—तदिदमिति। स्वर्गस्य कार्यत्वमपि न वचनादवगम्यते। किं तु सुखरूपतयाऽनुमानादेव। तस्य मदिरासुखवत् वचनेन अकार्यत्वाभिधाने न कश्चिदनुपपत्तिलवः समस्तीत्यर्थः। तर्हि स्वर्गस्य, कार्यत्वावगमकप्रमाणस्य का गतिरित्याशङ्क्याह—प्रमाणान्तरमिति। अग्रहणतया—भेदाग्रहणगर्भतया। भेदाग्रहणवशात् कार्यमेतदिति मिथ्याव्यवहारप्रवर्तकतयेत्यर्थः। तस्मादिष्टापत्तिरिति भवद्वचनमनुपपन्नमित्याह—तस्मादिति।

ननु प्रधानस्यैव फलकरणत्वम्, अपूर्वविषयत्वं च। नत्वङ्गानाम्। ततश्च पूर्वोक्तं समप्राधान्यम्, अविधिप्रयुक्तत्वदोषश्च न प्रसज्यते। अङ्गलोपे विषयविलयश्च सिध्यति। करणीभूतस्य प्रधानस्य विषयत्वात्, इतिकर्तव्यतानुग्राह्यस्य च करणत्वात् तल्लोपे प्रधानस्यैव करणीभावहानेः। न त्वङ्गानां साक्षात् तदनुप्रवेशादिति न कश्चित् दोष इति शङ्कते—आहेति। तदभावादिति। प्रधानस्यैव करणीभावाभावादित्यर्थः। यद्वा इतिकर्तव्यताननुगृहीतस्य करणीभावाभावात्।

अङ्गलोपेन करणत्वहानौ, नित्येऽपि विषयविलयाभावेपि करणत्वविलयादकरणस्य कार्यार्थिभिरनुष्ठानानुपपत्तेरेव हीनाङ्गस्यानुष्ठानं न सिध्यतीति दूषयति—नैतदिति।

ननु करणत्वमङ्गसद्भावमात्रमपेक्षते। न तु सकलाङ्गसमवायम्। ततश्च नित्ये यमधिकारिणं यदा यावन्त्यङ्गान्यनुष्ठापयति नियोगः, तावद्भिरेव प्रधानस्य करणत्वं सिध्यतीति, कतिपयाङ्गत्यागेऽपि प्रधानकरणत्वस्याविघातादनुष्ठानं स्यादिति शङ्कते—अथ तत्रेति। तर्हि काम्येऽप्येवमेव कतिपयाङ्गत्यागेऽपि करणत्वसिद्धेर्विषयाविलयात् यथाशक्ति प्रयोगः स्यादिति—दूषयति—तदितरत्रापीति।

किञ्च जातेष्टौ संवलिताधिकाराभ्युपगमात्करणीभूतस्यैव विषयत्वमिति, न यथाशक्ति प्रयोगः स्यात्। ततश्चाङ्गसंपत्त्यर्थमेवोत्कर्षस्य वक्तुं शक्यत्वाच्छेषिविरोधेन निमित्तस्वभावभङ्गार्थमाद्यमधिकरणमनर्थकं स्यात्। ननु तत्र निमित्तश्रवणबलादङ्गहानं स्यात्। न। श्रुतेऽपि निमित्ते विषयाभावेनाधिकारविलयात्। श्रुतेऽपि हि निमित्ते नैमित्तिकमेव कर्तव्यं, नान्यत्। करणीभूतभावार्थविषयश्च कार्यं नैमित्तिकमिति, कुतोऽनीदृशस्यानुष्ठानमित्यलमनेन करणीभूतविषयत्वेन।

---

अष्टमं दूषणं विवृणोति–किंचेति। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इतीष्टिं विधाय श्रूयते–'यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' तै. सं. २–२–५ इति। अत्र चार्थवादिकं पूतत्वादिफलं विवक्षितमिति प्रथमाध्याये ४. पा. १२ अधिकरणे निर्णीतम्। चतुर्थे हि किं पूतत्वादिफलं पितृगामि, उत पुत्रगामीति संशये, पुत्रगामित्वे पितुस्तत्साधनयागानुष्ठानानुपपत्तेः 'शास्त्रफलं प्रयोक्तरि' मी. द. ३–७–१८ इति न्यायेन पितृगाम्येवेत्याशङ्क्य 'यस्मिन् जाते स पूतो भवति' इति वचनेनैव पुत्रफलत्वस्य कण्ठोक्तत्वात् पुत्रफलस्यापि पितुरिष्टत्वेन, तदर्थमपि साधनानुष्ठानोपपत्तेश्च पुत्रगाम्येव फलमिति प्रतिपाद्य, पुनरपि विचारितम्–किमियमिष्टिः पुत्रजननानन्तरमेव कार्या, उत कृते जातकर्मणीति। निमित्तानन्तरत्वात् नैमित्तिकस्य तदनन्तरमेवानुष्ठेयेत्याशङ्क्य, जातकर्मानन्तरं विहितं स्तन्यपानम्। ततः पूर्वं चेष्टौ क्रियमाणायां स्तन्यपानस्य वहुकालोत्कर्षः स्यात्। ततश्च पुत्रविपत्तिप्रसङ्गात् तद्गतफलसाधकस्य यागस्य वैयर्थ्यमेव स्यात्। तस्मात् पुत्रगतफलरूपशेषिविरोधेन निमित्तस्वरसप्राप्तमप्यानन्तर्यं बाधित्वा, कृत एव जातकर्मण्यनुष्ठेयेति राद्धान्तितम्। तदनन्तराधिकरणे च किं जातेष्टिः जातकर्मानन्तरमेव कार्या, उत आशौचकालापगमे पर्वकाले प्राप्त इति विचार्य, शेषिविरोधाद्धि जातकर्मानन्तर्यमाश्रितम्। ततःपरं विलम्बे कारणाभावात् तदनन्तरमेव कार्येत्याशङ्क्य, येन केनापि हेतुना निमित्तानन्तर्यस्य बाधे सति अङ्गोपसंहारस्य कर्तव्यत्वात् शुचित्वे सति पर्वकाल एवेति निर्णीतम्। इत्थं फलस्य विवक्षितत्वं, १. तस्य च पुत्रगामित्वम्, २. इष्टेश्च जातकर्मानन्तर्यम्, ३. अङ्गोपसंहारार्थं पर्वकालप्रयोगश्च ४. शास्त्रे प्रतिपादितम्। नैमित्तिकत्वात् काम्यत्वाच्च संवलिताधिकारत्वं चार्थसिद्धम्। अत्र पुत्रगतफलप्रतिपादनं शेषिविरोधेन निमित्तस्वभावभङ्गकरणार्थम्। तच्चाङ्गोपसंहारापेक्षासिद्ध्यर्थम्। तच्च पर्वकालोत्कर्षप्रतिपादनार्थम्।

एवं स्थिते संवलिताधिकाराभ्युपगमात् फलस्यापि संभवेन, फलकरणीभूतस्यैव यागस्य नियोगविषयत्वात् काम्यवत् सर्वाङ्गोपसंहारः प्रसज्येतेत्यर्थः। भवत्वेवम्। को दोषः ? तत्राह–ततश्चेति। अत्र करणीभूतस्य विषयत्वे स्वत एवाङ्गोपसंहारापेक्षासंभवात् तत्सिद्ध्यर्थं निमित्तानन्तर्यबाधप्रतिपादकमत्रत्यमाद्यमधिकरणं व्यर्थं स्यादित्यर्थः। ननु निमित्तानन्तरं नैमित्तिकस्य कर्तव्यत्वादङ्गोपसंहारावश्यंभावे तदनुपपत्तेस्तद्बलात् करणीभूतस्य विषयत्वेऽपि जातेष्टौ हीनाङ्गानुष्ठानं स्यादिति शङ्कते–ननु चेति। नहि निमित्तमनुष्ठापकं, किं तु नियोगः। स चाङ्गलोपे विषयविलयात् न प्रतीयत एव। अतो नानुष्ठापयतीति यथाशक्ति प्रयोगः तत्र न सिध्यतीति परिहरति–न श्रुतेऽपीति। अधिकारविलयात्–अधिकारनियोगप्रतीतिविलयादित्यर्थः। किंच निमित्तबलादेवानुष्ठानेऽपि प्रतीतस्य नियोगस्यैवानुष्ठेयत्वात्, तस्य चाङ्गाभावे प्रतीत्यसिद्धेरेव हीनाङ्गानुष्ठानं न सिध्यतीत्याह–श्रुतेऽपीति। उपसंहरति–अलमनेनेति।

तदेतत्सर्वसिद्धान्तकोशसाधनमुद्धरन् ।
को हि शङ्कनिधिं प्राज्ञः स्वगृहे स्थापयेत्स्वयम् ॥ ८ ॥

तस्मात् सर्वत्र नित्ये, काम्ये च निखिलाङ्गोपसंहारः-इति ।

## स्वमतेन सिद्धान्तः

अत्राभिधीयते—निमित्तश्रवणान्नित्यं यथाशक्ति प्रयुज्यते ।
काम्यं च तदभावेन निखिलाङ्गसमन्वितम् ॥ ९ ॥

इह हि 'यावज्जीवमग्निहोत्रं जुहोति' बह्वृ ब्रा. इति यावच्छब्दानुबन्धाज्जीवनं होमनिमित्तत्वेनावगम्यते। निमित्तस्य च तद्रूपं, यत्तस्मिन् सति नैमित्तकमवश्यं कार्यम् । किमिदमवश्यं कार्यमिति ? अवश्यमेव कर्तारमभिप्रेतेन फलेन योजयतीत्यर्थः । यथा चैतदेव कार्यत्वं, तथा प्रतिपादितं विधिविवेके। अत एवैष सर्वेषामभिमतः प्रत्यवायपरिहारः प्रयोजनमवकल्पते । यदि ह्यन्यथालक्षणं फलं स्यात्, ततः सर्वेषां फलसाधनत्वं श्रुतमुपरुद्ध्येत ।

## सूत्रविरोधाधिकरणविरोधातिप्रसंगैराशंका

ननु च सर्वेषामभिमतः स्वर्गः किमिति न कल्प्यते ? न । तस्य मुमुक्षुभिरप्रार्थितत्वात् । प्रत्यवायपरिहारस्तु तैरपीष्यत एव । नन्वेवं विश्वजित्यपि प्रत्यवाय-

---

उपालभते—तदेतदिति । सर्वसिद्धान्तरूपकोशस्य साधनं वर्धकं शङ्खनिधिमुद्धरन्—स्वयमेवोन्मूलयन् कः पुमान् तमेव कथं स्वगृहे स्थापयेत् । करणीभूतस्य विषयत्वोक्त्या सकलसिद्धान्तव्यवहारोपयुक्तमपूर्वप्राधान्यादिकमुन्मूलयन् कथं तदेव भवता पुनरप्यङ्गीकर्तुं शक्यम्, विरोधादिति भावः ॥ ८ ॥ एवं च गुरुमतस्यायुक्तत्वात् पूर्वपक्ष-एव स्थिरोऽभूदित्याह—तस्मादिति ।

स्वमतेन राद्धान्तमाह—अत्रेति । निमित्तश्रवणादिति । निमित्तश्रवणमेवाङ्गसंकोचे स्वमते प्रधानहेतुरित्यर्थः । तदेवोपपादयितुमुपक्रमते—इहेत्यादिना । अत्र यावच्छब्दो निमित्तत्वसूचक इत्यर्थः । अस्तु तर्हि निमित्तत्वं, ततः किं ? तत्राह—निमित्तस्य चेति । करणस्वरूपस्यानन्तरक्षणे कार्याविनाभूतत्वात् । अन्यथा श्रुतकरणत्वहानिरेवेत्यर्थः । निमित्ते सति कार्यत्वं-किं स्वरूपेण, फलसाधनत्ववेषेण वेति विप्रतिपत्त्या पृच्छति—किमिदमिति । स्वाभिमतं निर्धारयति—अवश्यमिति । फलसाधनत्वमेव कार्यत्वम् । तस्यावश्यकत्वं नाम सहकारिसमवधाने, तदभावेऽपि निमित्तोत्तरकालाविनाभूतस्वानुष्ठानमात्रेणाभिमतफलसाधकत्वम् । ननु नैमित्तिकानां फलमेव न श्रूयत इति, तत्साधकत्वं नास्ति । अवश्यसाधकत्वं तु दूरत इत्याशङ्क्य अवश्यफलसाधकत्वश्रवणबलादेव तदनुगुणमश्रुतमपि फलं निमित्तश्रुतिबलेनकल्पनीयमित्याह—अत एवेति । निमित्तश्रुतिबलेन यस्य कस्यापि पुरुषस्य निमित्ते समुपनिपतिते कर्मणस्तदानन्तर्याविनाभावप्रतीतेः कतिपयपुरुषानभिमते फले तस्य कल्प्यमाने, तेषां निमित्तोपनिपातेऽपि कर्मानुष्ठानाभावेनानन्तर्यनियमव्याहतिप्रसङ्गात् सर्वाभिमतमेव फलं तस्य कल्पनीयमित्यर्थः ।

ननु भवेन्नाम तादृशफलस्यैव कल्पनम् । न तु प्रत्यवायपरिहार एवेति नियमोऽस्ति । स्वर्गस्यापि तादृशत्वात् । अतस्तदेव फलं स्याद् सुखरूपत्वादिति शङ्कते— नन्विति ।

परिहार एव फलं स्यात्। कथं तर्हि 'स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्' मी द. ४-३-१५ इति। पापक्षयार्थस्य च नित्यत्वे विघनादीनामपि पापक्षयार्थानां नित्यत्वं स्यात्। तथा च यथाशक्ति प्रयोगः स्यात्। उच्यते। न तावद्विश्वजिति प्रत्यवायपरिहारः फलं प्रसज्यते। गौरवात्। प्रत्यवायो हि न तावत्स्वरूपेण फलम्, अपुरुषार्थत्वात्। न च तत्प्रागभावः, तस्य स्वयमेव सिद्धत्वात्। न तद्ध्वंसः, उत्पन्नस्य दुःखस्य स्वयमेव विशरणात्। तेन प्रत्यवायहेतुभूतादृष्टप्रध्वंसः फलं कल्पयितव्यम्। ततश्च प्रत्यवायावच्छिन्नं तद्धेतुं निरूप्य, तदभावः फलं कल्पयितव्यमिति गौरवम्। सुखस्य तु स्वयमेव साध्यत्वं सुकल्पमिति लाघवम्। तेन सुखरूपे तावत्साध्ये कल्पयितव्ये, पशुपुत्रादिसुखविशेषापेक्षयाऽनवच्छिन्नसुखरूपस्य स्वर्गस्य सर्वान् प्रत्यविशिष्टत्वादिति विशेष उच्यते।

---

तस्य सर्वाभिमतत्वं नास्तीति परिहरति—तस्येति। प्रत्यवायपरिहारस्य तु दुःखाभावरूपत्वात् तत्प्रेप्सुभिरप्याकाङ्क्षणीयोऽसावित्याह—प्रत्यवायेति। प्रत्यवायपरिहारस्यैव स्वर्गादपि सर्वाभिमतत्वेन नैमित्तिककर्मसाध्यत्वे सूत्रविरोधम्, अधिकरणविरोधम्, अतिप्रसङ्गं च क्रमेण शङ्कते—नन्वेवमित्यादिना। अविशिष्टत्वात्—अभिमतत्वेन साधारणत्वादित्यर्थः। विश्वजितीति। तत्र स्वर्गपरिकल्पने सर्वाभिमतिरेव हेतुः। अन्यस्य तस्मादपि सर्वाभिमतत्वात् तदेव फलं कल्पनीयं स्यादिति भावः। विघनादीनामिति। पाप्मनि प्रसक्ते तन्निवृत्त्यर्थमनुष्ठीयमानः काम्यकर्मविशेषो विघनशब्देनोच्यते। यथा 'यो वा ब्राह्मणस्तमसा, पाप्मना प्रावृतः स्यात्, स एतेन यजेत, विधनेनैवैनद्विहत्य' तै ब्रा. २.७.१७.२ —इति। तदादीनां 'अग्नयेंऽहोमुचेऽष्टाकपालं निर्वपेद्यः पाप्मना-गृहीतः स्यादि'त्येवमादीनामित्यर्थः। नित्यत्वं स्यादिति। फलस्य नित्यतया साधनस्यापीतरनित्यवत् नित्यत्वं स्यादित्यर्थः। ततः किं? तत्राह—तथाचेति। अधिकरणविरोधपरिहारादेव तत्सूत्रविरोधोऽपि परिहृतः स्यादित्यभिप्रायेण तद्विरोधं तावत् परिहरति—तदुच्यत इति। गौरवात्—कल्पनायां प्रतीतिगौरवात्। यदि विधिरूपप्रत्यवायः फलं स्यात्, तदा प्रतीतिलाघवं भवेत्। नैवम्। भावस्यानर्थरूपत्वादित्याह—प्रत्यवायो हीति। अभावरूपस्य दुःखाभावरूपतया पुरुषार्थस्य यद्यपि भावनिरूपणाधीननिरूपणत्वेन प्रतीतिगौरवमस्त्येव, तथापि तस्य प्रागभाव-प्रध्वंसयोरन्यतरस्यापि कृतिसाध्यत्वाभावेन स्वतः सिद्धतया फलत्वं न युक्तमित्याह—न तदिति। एवं तर्हि प्रत्यवायपरिहारस्य फलत्ववाचोयुक्तिरेव कथं? तत्राह—तेनेति।

भवत्वेवं तस्य विश्वजिति फलत्वकल्पने काऽनुपपत्तिः? तत्राह—ततश्चेति। स्वर्गस्य तु फलत्वे एवं गौरवदोषाभावात्, तस्यैव फलत्वमित्याह—सुखस्य त्विति। साध्यत्वं—फलत्वम्। एवं च सूत्रे सर्वशब्दस्य प्रकृतपरामर्शितया सुखाकाङ्क्षिणां सर्वेषामित्युक्तं भवतीति, न सूत्रविरोधोऽपीत्याह—तेनेति। स्वर्गस्य सुखमात्ररूपत्वेनानेकापेक्षितत्वात्। पशुपुत्रादिसाध्यसुखस्य तु सुखविशेषत्वेन कतिपयापेक्षितत्वात् बह्वपेक्षितस्य सामान्यस्यैव कल्पनं युक्तमिति, सूत्रार्थः[1]। अनवच्छिन्नस्य—पश्वादिसाधनाविशेषितस्य। विशेष इति। सुखरूपफलेष्वस्यैव कल्पने- सर्वापेक्षितत्वं विशेष इत्यर्थः।

---

१. 'स स्वर्गस्स्यादि'त्यादिसूत्रार्थवर्णनेन मीमांसाकौतूहलोक्तं विध्वस्तम्।

## प्राभाकरोक्तस्यार्थस्य निरासः

येऽपि जीवदधिकारं प्रयुक्तिकल्पनाभयादनिष्ट्वा कामाधिकारमिच्छन्ति, तैरपि प्रत्यवायनिवृत्तिकाममुत्सृज्य स्वर्गकामकल्पनेऽयमेव न्यायः समाश्रयितव्यः। विद्यन्ते हि तेषामपि दर्शने शंय्वधिकरणसिद्धान्तात्केचित्प्रत्यवायकरा निषिद्धाः[1]। अभ्युपगम्यैतदुच्यते। न तु जीवनेऽधिकारिविशेषणे किञ्चिद्गौरवम्।

---

नैमित्तिकाधिकारे फलमनङ्गीकुर्वतो विश्वजित्यपि नियोज्यकल्पनामेवाङ्गीकुर्वाणस्य प्राभाकरस्य नियोज्यविशेषणतयापि प्रत्यवायपरिहारकल्पने, स्वर्गकल्पने चास्मदुक्तगौरव–लाघवे एव हेतुतया आश्रयणीये इत्याह—येऽपीति। ननु तत्रापि जीवनं निमित्ततया नियोज्यविशेषणं किमिति न स्यात्? तत्राह—जीवदिति। कामाधिकारे नियोगस्य केवलमङ्गेष्वेव प्रयुक्तिः।

---

### टिप्पणी

१. शंयुवाकवाक्यशेषे श्रूयते–'देवा वै यज्ञस्य स्वगाकर्तारं नान्वविन्दन्, ते शंयुं बार्हस्पत्यमब्रुवन्, इमं नो यज्ञं स्वगाकुर्विति। सोऽब्रवीत् वरं वृणे यदेवाब्राह्मणोक्तोऽश्रद्धधानो यजातै, सा मे यज्ञस्याशीरसदिति। तस्मात् यदब्राह्मणोक्तोऽश्राद्धधानो यजते, तस्य शंयुमेव यज्ञस्याशीर्गच्छति, एतन्ममेत्यब्रवीत्। किं मे प्रजाया इति, योऽपगुरातै शतेन यातयात्, यो निहनत्, सहस्रेण यातयात्, यो लोहितं करवत्, यावतः प्रस्कद्य पांसून् संगृह्णीयात्, तावतस्संवत्सरान् पितृलोकान्न प्राजानादि'ति। तस्मात् ब्राह्मणाय नापगुरेत, न हन्यात्, न लोहितं कुर्यात् एतावता हैनसा युक्तो भवति' तै सं. २–६–१०–२।

तस्यायमर्थः—यस्मै देवाय यद्धविर्विहितं, तस्य हविषस्सांकर्यमन्तरेण तस्य तस्य देवस्य स्वगातं कुर्विति बृहस्पतिपुत्रं शंयुनामानं प्रति देवा अब्रुवन्। तदाऽसौ शंयुश्चिन्तितवान्—एतत्काम एतेन यज्ञेन यजेतेत्यतादृशेन ब्राह्मणेनानुक्तो यः कश्चित् यजेत स्वेच्छयैव। यश्चान्यश्श्राद्धारहितो यजेत, तयोरुभयोर्यज्ञफलं ममास्त्विति वरः। तत आरभ्य तत् फलद्वयं शंयुमेव प्राप्नोति।

पुनरपि शंयुरेवमुवाच तदेतदुभयं मम संपन्नं। मदीयायाः पुत्र-पौत्रादिरूपायाः प्रजायाः किं दास्यत–इति। ततो देवा अपगोरणादिकर्तुर्यातना त्वत्पुत्राद्यधीना भवत्विति वरं दत्तवन्तः। अपगोरणं—ताडनोद्योगः इति वेदभाष्यम्। तमुद्योगं यो ब्राह्मणविषये करोति, तं शतनिष्कदण्डेन यातयात्–क्लेशयेदित्यर्थः। यो निहनत्–ताडयेत्, तं सहस्रनिष्कदण्डेन क्लेशयेत्। यो ब्राह्मणशरीरे लोहितं [ताडयति] ग्राहयेत्, लोहितं भूमौ पतित्वा यावतः परमाणून् व्याप्नोति, तावतस्संवत्सरानयं पितृलोकं न प्राप्नोति, किन्तु यमयातनामनुभवति। ततसर्वं त्वत्प्रजाधीनमिति वरः। यस्मादुक्तरीत्या ब्राह्मणाधिक्षेपादौ प्रत्यवायोऽस्ति। तस्मान्न कुर्यात्, करणे चैतावता पूर्वोक्तेन पापेन युक्तो भवतीत्यर्थः।

इदमेव विषयवाक्यमधिकृत्य शेषलक्षणे शंय्वधिकरणं प्रववृते। भाट्टमतेन १० दशमाधिकरणं, प्राभाकरमतेन षष्ठमधिकरणमिति विवेक्तव्यम्। समस्तैनानृतवदनप्रतिषेधन्यायेन क्रत्वर्थस्यापगोरणस्य प्रसज्यमानस्य प्रतिषेधः। कथं प्रसक्तिः? चतुर्ब्राह्मणसाध्यत्वात् दर्शपूर्णमासयोस्तदानत्यर्थं साम-दान-भेद-दण्डेषु प्रसज्यमानेषु अन्वाहार्यदानेनाऽऽनमयेदिति गम्यते। यदा तन्मात्रेण नाममन्ति। तदा यथा न दानादानमन्ति, तथा प्रयत्यमाने लौकिकोपायप्रसक्तौ

करणांशे फलरागत एव प्रवृत्तिसिद्धेः। निमित्ताधिकारे तु करणांशेऽपि विधेरेव प्रयुक्तिः– कल्पनीयेति गुरुतरा तत्र प्रयुक्तिरिति निमित्तकल्पनमयुक्तमिति भावः।

ननु प्रत्यवायपरिहारो नाम प्रत्यवायहेतुभूतादृष्टध्वंस इत्युक्तम्। तादृशमदृष्टं गुरुमते नास्ति, तत्र प्रमाणाभावात्। न च निषेधवाक्यं प्रमाणम्। तत्र नञर्थविषयकापूर्वमात्रप्रतीतेः।

---

सत्यामयं दण्डोपायोऽपगोरणादि प्रकारोऽपि प्राप्तो भवति। स प्रतिषिद्धयते। न कर्तव्यं तेन, तद्व्यतिरेकेणोपायान्तराश्रयण कार्यमिति। अत्र यदिष्टं तन्न विधीयते, किन्तु अनिष्टफलोपादानमात्रेण तन्निषेधस्सिद्धयति। अनिष्टफलस्य पुरुषगामितया पुरुषार्थत्वम्। अपि च शंयुना प्रजानां नानुग्रहः पृष्टः। देवैश्च यत् कामयसे इत्युक्ते, ब्राह्मणमात्रमेव तेभ्यः परित्तं परिपालनायोपक्षिप्तम्। देवैश्च ब्राह्मणमात्रमेवोद्दिश्यानुग्रहः प्रत्तः इति वाक्यशेषोऽपि समर्थितो भवतीति वार्तिककारीयः पन्थाः। तथा च पारमर्षं सूत्रं 'शंयौ सर्वपरिदानादि' ३–४–१६ ति। तस्यायमर्थः–शंयौ–शंयूपक्रमे वाक्ये योऽयमपगोरणादिप्रतिषेधः, स च प्रकरणादपकृष्येत, कुतः? सर्वपरिदानात्, सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थानपेक्षस्य पुंसः परि–नरकपरिहारार्थे दानात्–अवगोरणादीनां खण्डनात्। निषेध इति भाष्यमतम्।

वार्तिकमतेन सूत्रार्थः—सर्वेभ्यः ऋत्विग्भ्यः अनृत्विग्भ्यश्च ब्राह्मणेभ्यः परिपालनाख्य–वरदानादिति।

## अत्र प्राभाकरीयं व्याख्यानम्

'शंयौ पुनश्शतेन यातयादि'ति फलश्रुतेर्न प्रकरणकल्पनान्याय्या स्ववाक्यस्था कार्यावगतिर्बलीयसी, अन्तरंगत्वात्'। इति पञ्चिका। पूर्वाधिकरणे जञ्जभ्यमाने धत्ते इति वर्तमाननिर्देशः। अत्र यातयादितिभविष्यदर्थतां लिङ् अवगमयतीति विशेषः। अत्र ब्राह्मणापगोरणं निमित्तम्। यातना तु नैमित्तिकी। एवञ्च प्रतीतनिमित्तनैमित्तिकभावानुसारेण किञ्चिदवान्तरकार्यं कल्प्यते, यत् कृत्वा शतयातना भवति। बृ. पृ. ८३०–८३१.

अत्र भवनाथमिश्रस्याभिप्रेतोऽर्थः। तथाहि—'अत्र कालान्तरभाविशतयातनादेर्नक्षणिकमपगोरणं साधनं भवितुमर्हति। अतः किञ्चित् दुरितापूर्वं कल्पनीयम्। न च तदपि श्रौतं, दुःखफलतया अकार्यत्वेनऽशक्यार्थत्वात्। अत अपगोरणे तादृशापूर्वकल्पनमेव काम्यविधिवाक्येषु स्वतन्त्रमपूर्वं गमयति, तमन्तरेण तदनुपपत्तेः' न.वि.इति,पृ. अस्यैव समर्थनं वरदरीजीयेऽपि। काम्याधिकारे सिद्ध एव नियोगोऽत्रापि कल्प्यते। अन्यत्र दृष्टमेवाऽन्यत्र कल्प्यते इति।

---

यजेतेत्यादौ लिङ्प्रत्ययः कृतिसाध्यं नियोगमभिधत्ते। अतस्तेन कृतिनियोगयोः प्रतीतेः, उभयोरेकपदत्वेन साध्यसाधनभावप्रतीतौ भावार्थविषयकत्वेन तज्जनकत्वनियमात् कृतेर्नियोगस्याभावार्थत्वेन प्रकृत्यभिधेयं भावार्थमुत्पाद्य, तद्वारा नियोगसाधनत्वं कृतेरंगीक्रियते प्राभाकरमीमांसकैः। अत एवोक्तं शब्दान्तराधिकरणे भवनाथमिश्रेण।

'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः।
कार्ये संघटिताकारे करणत्वेन सम्मतः॥' न. वि. पृ. इति

अस्यायमर्थः—कृतिः प्रयत्नः, तत्साध्यो नियोगो यागदानादिर्विषयो मतः। षिञो बन्धनकर्मणो विषयशब्दव्युत्पत्तेः। कृतिं नियोगादौ घटयतो धात्वर्थस्य विषयत्वं। स एव तस्मिन् करणत्वेन संमत इति। विषयत्वं घटकत्वम्। तच्च साधनसाधनत्वे सति कृतिसाध्यत्वमिति वाजपेयाधिकरणवरदराजीये द्रष्टव्यम्। एतत्सर्वं मनसि निधायाह टीकाकारः–शंय्वधिकरणेति।

ननु निमित्ताधिकारे विधेः प्रयोजकत्वमपि कल्पयितव्यम्, इतरत्रापि विधेः फलसाधनत्वं कल्पयितव्यमित्यविशेषः। प्रत्युत प्रयोजकत्वमेव विधेः स्वाभाविकम्। अप्रयोजकत्वन्त्वपवादः। किञ्चाख्यातार्थाविनाभावप्रतीतकर्तृत्वबलेनैवाजीवतस्तदनुपपत्तेर्जीवनं प्रतिपन्नं, तस्याधिकारिविशेषणत्वमेव केवलं कल्प्यम्। इतरत्र फलकामनास्वरूपमेवान्यतोऽप्रतिपन्नं कल्प्यमिति महान् विशेष–इति। प्रकृतमनुसरामः। तदेवं विश्वजिति तावत्स्वर्गः फलं, यावज्जीवादिष्वावश्यकत्वात्पापक्षय इत्युक्तम्।

## अतिप्रसंगलक्षणस्य तृतीयस्य दोषस्य निरासायाऽनुवादः

'यत्तु विघनादीनामप्यावश्यकत्वं तत्फलकत्वादिति। तन्न। आवश्यकानां पापक्षयः फलमुच्यते। न तत्फलानामावश्यकत्वमिति। कः पुनरनयोर्विशेषः?

नापि निषेधानुपपत्त्या निषेध्यस्य प्रत्यवायहेतुत्वं कल्प्यम्, अनुपपत्त्यभावात्। निषेधस्य नियोगविषयोपस्थापनेन चरितार्थत्वात्? नियोगस्यापि निषिद्धव्यापारप्रवृत्तनियोज्यलाभेन निराकाङ्क्षत्वात्। अतो न प्रत्यवायादृष्टमस्तीति, तत्प्रध्वंसस्य फलत्वं नाङ्गीक्रियते–इत्याशङ्क्याह—विद्यन्ते हीति। शंय्वधिकरणे हीति (मी. द. ३.४.१०) 'तस्मात् ब्राह्मणाय नापगुरेत्' इति विधिशेषभूतेन 'योऽपगुरेत् तं शतेन यातयात्' इत्याद्यर्थवादेनापगोरणादीनां शतयातनादीनां च साध्यसाधनभावाश्रयणात् साक्षाच्च साध्यसाधनभावानुपपत्तेः मध्ये दुरितापूर्वं कल्प्यमिति प्रतिपादितम्। अतो गुरुमतेऽपि प्रत्यवायादृष्टसंभवात् तद्ध्वंसस्य नियोज्यविशेषणत्वमनाश्रित्य, स्वर्गस्य तदाश्रयणे अस्मदुक्तयुक्तिरेवाश्रयणीयेति भावः।

पूर्वं विश्वजितो नैमित्तिकाधिकारत्वे प्रयुक्तिगौरवात् फलकामाधिकारत्वमभ्युपगम्य, फलविशेषकल्पने अस्मदुक्तयुक्तिरेवाश्रयणीयेत्युक्तम्। इदानीं नैमित्तिकत्वे दोष एव नास्ति इति, तस्य कामाधिकारत्वमेव न सिध्यतीति प्रसङ्गात् प्रतिपादयितुमुपक्रमते—अभ्युपगम्येत्यादिना। जीवन इति। फलेषु स्वर्गवन्निमित्तेषु जीवनस्य सामान्यत्वात् तदेव विशेषणतया कल्पनीयमिति भावः।

तत्र प्रयुक्तिगौरवमाशङ्कते–नन्विति। प्रयोजकत्वमपीति। करणांशेऽपि इति शेषः। प्रयुक्तिकल्पनानिमित्तगौरववद् गौरवान्तरं कामाधिकारेऽप्यस्तीति, गौरवभयं तत्र समानमेवेति-परिहरति–इतरत्रापीति। गौरवं तु कामाधिकार एवातिशयितमिति दोषाधिक्यमपि तत्रैवेत्याह–प्रत्युतेति। प्रयोजकैकरसो हि नियोग इति, प्रयोजकत्वं तस्य स्वभावः। तस्य चाङ्गेषु प्रवृत्तस्य निमित्ताधिकारत्वे करणांशेऽपि विषयाधिक्यमात्रं कल्प्यम्। कामाधिकारत्वे त्वस्वाभाविकं फलसाधनत्वं स्वरूपेणैव कल्प्यमिति, तत्रैव कल्पनागौरवातिशय इत्यर्थः। न केवलं विश्वजितो

१. विघनादीनामिति। अत्रेदं बोध्यम्–ताण्ड्यमहाब्राह्मणे 'अ. १९ पृ. ३९३ अथैष विघनः' इत्यादिना पापक्षयार्थो विघनो नामैकाहविशेषोविहितः। इदं वाक्यं व्याचक्षाणो भाष्यकारोमाधवाचार्यो भाषतेस्म इन्द्रः प्रजाप्रतिबन्धकीभूतं पापरूपं शत्रुमेतेन क्रतुना विशेषेण विहतवान्। सोऽयमर्थस्तैत्तिरीयकैर्विशदीकृत्याऽऽम्नायते—इन्द्रं वै स्वा विशो मरुतो नापाचयन्नि'त्यादि २–७.१.१७.२ उद्धृतस्य वाक्यस्यायमर्थः। तथाहि योब्राह्मणस्तमोरूपेण पाप्मना प्रकर्षेणावृतस्स्यात्। सोऽयं पुरुषो अधिकारी। स च विघनाख्येनाऽनेन क्रतुना यजेत, तेन प्रातिकूल्यं विनाश्य ब्राह्मणोऽपापो भवतीत्यर्थः। वे. भा. पृ. ७५६ ६५७।

अयमस्ति विशेषः। यत् फलमवश्यमेव साधयति, तदावश्यकम्। नैमित्तिकञ्च तथा। विघनादि तु नावश्यं फलं साधयतीति शब्दोऽस्ति, निमित्ताश्रवणात्। फलन्तु सर्वेषामिष्टं नाम भवतु। फलसाधनत्वावश्यंभावश्चाङ्गसंकोचनिमित्तमिति, न यथाशक्तिप्रयोगप्रसङ्ग इति-गभीरोऽयं न्यायमहाह्रदः।

आह—कथं पुनरवश्यंभावादङ्गसंकोच इति? उच्यते। अवश्यमेवास्मिन् सतीदं कृतं फलं साधयतीति प्रतीयते। यदि त्वङ्गलोपे न साधयेत्, अवश्यसाधत्वं विरुद्धयेत। नन्वधिकारिणा कृतमवश्यं साधयतीति वक्तव्यम्। इतरथा शूद्रादिकृतमपि साधयेत्, अकाले च। सर्वाङ्गशक्तश्चाधिकारीत्यन्यादृशेन कृतमसाधनमिति।

---

नैमित्तिकाधिकारत्वे लाघवम्। एतावन्नियोज्यविशेषणकल्पनेऽपि लाघवातिशयोऽस्तीति प्रतिपादयति—किंचेति। प्रतिपन्नस्य विशेषणत्वमात्रकल्पने लाघवम्। अप्रतिपन्नस्य स्वरूपमपि परिकल्प्य, तस्य विशेषणत्वकल्पनेऽत्यन्तगौरवमित्यर्थः। आख्यातार्थः—भावार्थः। तस्याविनाभावः—क्रियायाः कर्तृकारकाविनाभावः। प्रासङ्गिकं त्यक्त्वा प्रकृतमनुसरति—प्रकृतमिति। सिद्धान्तं तावदनुवदति—तदेवमिति।

अतिप्रसङ्गलक्षणं तृतीयं दूषणमनूद्य परिहरति—यच्चेति। यद्यावश्यकत्वे पापक्षयहेतुत्वं हेतुः, तदा स्यादयं दोषः। नैवम्। किंतु निमित्तमेवावश्यकत्वे हेतुः। आवश्यकत्वाच्च-पापक्षयफलकत्वं कल्प्यमिति। अतो विघनादीनां पापक्षयफलकत्वेऽपि निमित्ताश्रवणेनावश्यकत्वाभावन्न यथाशक्ति प्रयोग इत्यर्थः। कः पुनरिति। अनयोरावश्यकस्य पापक्षयफलकत्वमस्ति, न तु पापक्षयफलकस्यावश्यकत्वमित्यनयोर्भेदप्रयोजको हेतुः क इत्यर्थः। नैमित्तिकेषु दुरितपरिहारकल्पनोपयुक्तन्यायं निगमयति-गम्भीर इति।

नन्वस्तु निमित्तश्रवणादावश्यकत्वम्। तेन यथाशक्तिप्रयोगप्रसङ्गः कथमिति शङ्कते—कथंमिति। उत्तरमाह—उच्यत इति। अवश्यफलसाधकत्वमवश्यकार्यत्वमित्युक्तम्। एतद्बलेनाङ्गेषु सत्स्वसत्स्वपि प्रधानस्य फलसाधकत्वं सिध्यतीति, अङ्गलोपेऽपि न फलहानिरित्यर्थः। अवश्यफलसाधकत्वेऽप्यङ्गसंकोचो न सिध्यतीति शङ्कते—नन्विति। यद्यपि प्रधानस्यैवावश्यकत्वमवगम्यते, तथापि तदप्यधिकारिणैवानुष्ठितं फलमवश्यं साधयतीति वक्तव्यमित्यर्थः। एवमनङ्गीकारे दोषमाह—अन्यथेति। आधानसंपाद्याहवनीयविरहिणाम्, अध्ययनसंपाद्यार्थज्ञानविरहिणामपि शूद्राणां तदितराङ्गानुष्ठानसमर्थतया त्वधिकारः प्रसज्येत इत्यर्थः। अकाले चेति। कालस्याप्यङ्गत्वात् श्रुतकालाभावेऽपि नित्यानुष्ठानं स्यादित्यर्थः।

अस्त्वेवम्। ततः किं? तत्राह—सर्वाङ्गेति। निमित्तवत् सर्वाशक्तिरप्यधिकारानुप्रविष्टेति—वक्तव्यमित्यर्थः। अतः काम्येष्विव निमित्ताधिकारेऽपि सर्वशक्तेरधिकारिविशेषणत्वान्निमित्तवत इव सर्वशक्तियुक्तस्यैवावश्यकार्यत्वावगमात् न हीनाङ्गस्य फलसाधनत्वं सिध्यतीत्याह—अन्यादृशेनेति। सर्वशक्तेरधिकारिविशेषणत्वाभावेऽपि नित्येषु शूद्राणामनधिकारः श्रुतकालोपसंहारश्च सिध्यतीति परिहरति—तदभिधीयत इत्यादिना।

यद्यपि निमित्तवच्छक्तिमात्रमधिकारिविशेषणं भवत्येव, तथापि न सर्वशक्तेर्नियमेन तद्विशेषणत्वं युज्यत इति प्रतिपादयितुं, प्रथममुपोद्घाततया शक्तिरूपविशेषणं प्रत्यक्षश्रुतात् प्रधानवाक्योपात्तान्निमित्तादङ्गवाक्यपर्यालोचनावगम्यत्वादानुमानिकत्वाच्च दुर्बलमित्याह—

तदुच्यते । न तावच्छक्तिरधिकारिविशेषणं संश्रूयते । साऽनुष्ठानोपदेशान्यथानुपपत्त्याऽशक्तस्य तदुपदेशासम्भवात्कल्प्यते । तत्र यावत्प्रयोगविधिना श्रुत्या, अर्थाद्वा-अनुष्ठाप्यते, तच्छक्तिरधिकारिविशेषणम् । स च स्ववाक्यश्रुतनिमित्ताविरोध्यङ्गमनुष्ठापयतीति, यावन्त्यङ्गानि यदा अनुष्ठातुं शक्यन्ते, तावन्ति तदाऽनुष्ठापयति । न चैवमङ्गोपादान-परित्यागाभ्यां वैरूप्यं प्रसज्यते । यथाशक्ति कुर्यादित्येवंविधैकरूपयैव वचोभङ्ग्योभयसिद्धेः ।

एतच्च प्रयोगविध्यनुष्ठाप्येष्वङ्गेषूच्यते । यद्धि कुर्यादित्युच्यते, तद्यथाशक्तीत्युपपद्यते । यानि तु स्वभावसिद्धानि, विध्यन्तरसिद्धानि चोपजीव्यन्ते । यथा लोकेऽर्थार्जनादि, वेदे कालो, विद्या अग्नयश्च, तेषां स्वरूपेणैवाधिकारिविशेषणत्वं, अमावास्या-

---

न तावदिति । श्रूयत इति । तत्प्रतिपादकशब्दाभावादित्यर्थः । कल्पनीयापि शक्तिर्न सर्वाङ्गविषयाऽधिकारिविशेषणतया कल्प्या । किं तु प्रयोगविध्यनुष्ठाप्याङ्गविषयैव । अनुष्ठेयमात्रविषयत्वाच्छक्तेरित्याह—तत्र यावदिति । अर्थादिति । श्रुतसिध्यर्थं यदनुष्ठीयते, तदर्थात् । यथा व्रीह्यादिद्रव्यसंपादनं । यथा वाऽवघातादीनामावृत्तिरिति भावः । एवं च प्रयोगविधेः प्रथमप्रवृत्तनिमित्ताविरोधात् तदवगतावश्यंभावाविरोधेन सर्वाङ्गशक्तिरधिकारिविशेषणम् । तद्विरोधे तु विरुद्धाङ्गपरित्यागेन यावच्छक्ति कतिपयाङ्गशक्तिरेवाधिकारिविशेषणं भवतीत्यशक्याङ्गपरित्यागः सिध्यतीत्याह—स चेति । सः—प्रयोगविधिः ।

नन्वेवं प्रयोगविधिप्रतिपादकस्य महावाक्यस्य 'साङ्गं प्रधानमनुतिष्ठेत्' इत्येवंरूपस्य नित्येषु वैरूप्यं प्रसज्येत । निमित्ताविरोधे सर्वाङ्गसमेतं प्रधानमनुष्ठेयम् । तद्विरोधे तु कतिपयाङ्गहीनमित्येवंरूपोपादानपरित्यागरूपार्थद्वयस्यैकेन वाक्येन प्रतिपादयितुमशक्यत्वादित्याशङ्कामनूद्य परिहरति—न चेति । काम्येषु यथा फलकामी सर्वाङ्गसमेतं प्रधानमनुतिष्ठेदित्युक्ते न वाक्ये वैरूप्यं, तथा निमित्तवान् यथाशक्त्यनुतिष्ठेदित्युक्तेऽपि न वैरूप्यम्, अर्थद्वितयं च सिध्यतीत्यर्थः । वचोभङ्ग्या—वाक्यप्रवृत्त्या । एवं नित्येषु यथाशक्तिप्रयोगसिद्धिमुपपाद्य, प्रयोगविध्यनुष्ठाप्याङ्गविषयाया एव शक्तेरधिकारिविशेषणत्वोपपादनात् शूद्राणामनधिकारः, कालोपसंहारश्च सिध्यतीत्यभिप्रायवानाह—एतच्चेति ।

तद्यथाशक्तीति । शक्तेरनुष्ठानमात्रनियतत्वात् यथाशक्तिरपि तावन्मात्रनियतेत्यर्थः । अस्त्वेवम् । अभिमतार्थसिद्धिः कथम् ? तत्राह—यानि त्विति । स्वभावसिद्धः कालः, तस्य स्वरूपतोऽनुपादेयत्वात् । विध्यन्तरसिद्धा विद्या, अग्नयश्च । विद्या हि अध्ययनविधेरर्थज्ञानपर्यन्ततया तेनैव सिद्धा । अग्नयस्त्वाधानविधिसिद्धाः । एवं च स्वतो वा विध्यन्तरेण वा सिद्धानेतान् प्रयोगविधिरुपजीवत्येव । नत्वनुष्ठापयति । ततश्चानुपादेयभूतनिमित्तवदेवैतान्यप्यधिकारिविशेषणानि भवन्तीत्यधिकारिकोटयनुप्रविष्टानि । ततश्च शूद्राणां त्रैवर्णिकाधिकाराध्ययनाधानवैधुर्येण विद्याग्न्यभावादनधिकारः, कालोपसंहारश्च सिध्यतीति, न कश्चित् दोष इति भावः ।

ननु निमित्तवशेन यद्यङ्गपरित्यागः, तदा तेन प्रधानस्यैवावश्यकत्वप्रतीतेः सर्वेषामङ्गानां सर्वदाऽननुष्ठानमेव स्यात् । न च यथाशक्ति प्रयोगः सिध्येत् । किं च निमित्ते सत्यपि कालविद्याद्यभावादननुष्ठाने निमित्तश्रुत्यवगतावश्यकत्वविरोधात् कथं तेषामधिकारिविशेषणत्वम् ? तद्विरोधेऽपि तेषामधिकारिविशेषणत्वे कथमङ्गान्तराणामप्यधिकारिविशेषणत्वं न स्यात् ।

संबन्धी, द्रव्यवान्, विद्यावान्, अग्निमानिति। एतदुक्तं भवति–अङ्गं हि नाम विधिसम्बन्धादुपादीयते, निमित्तानुरोधात्त्यज्यते वा। उभयानुग्रहार्थं वा शक्तं-प्रत्युपादीयते, अशक्तं प्रति त्यज्यत इति नान्या गतिरस्ति। तत्रोभयानुग्रहस्तावत्साधीयान्, यदि सम्भवति। सम्भवश्चोपादेयेष्वङ्गेषु यथाशक्ति व्रीहीन् संपादयेत्, यथाशक्ति वाऽवहन्यादिति। आहवनीयादिस्वरूपन्तु नानेन विधिनोपादीयते। यद्यपि होमं प्रत्युपादीयते, स्वरूपन्तु नोपादीयते। तत्र यद्याहिताग्निराहवनीये जुहुयत्, इतरश्च यत्र क्वचिदिति विधीयते, ततो वैरूप्यं प्रसज्येत। न च यथाशक्त्याहवनीयं संपाद्य-जुहुयादित्युभयसाधारण्येन विधानं सम्भवति। आहवनीयादिसम्पादनस्यात्रार्थादपि व्रीह्यादिसम्पादनवदविधानात्। तेनाहवनीयमनादृत्यैव होममात्रमनुष्ठाप्येत,

---

ततश्च सर्वाङ्गानामप्यधिकारिविशेषणत्वे यथाशक्तिकथोच्छिन्ना स्यादिति शङ्काद्वितयं परिहरन् स्वोक्तस्यैव तात्पर्यं विविच्य दर्शयति–एतदुक्तं भवतीत्यादिना।

तत्र प्रथमां शङ्कां परिहरति–अङ्गं हि नामेति। विधिसंबन्धात्–अङ्गविधायकवाक्योपात्तत्वादित्यर्थः। साधीयान् संभवतीति। यद्यपि निमित्तानुरोधेन सर्वाङ्गपरित्यागः प्रसज्यते। अङ्गवाक्यानुरोधे तु सर्वाङ्गोपसंहारः स्यात्। यथाशक्तिप्रयोगाङ्गीकार उभयानुरोधसंभवात् स एव पक्षः साधीयानिति भावः।

द्वितीयामाशङ्कां परिहरति–संभवश्चेति। उपादेयेपु–प्रयोगविध्यनुष्ठाप्येपु। तत्रार्थि-काङ्गेपु यथाशक्ति दर्शयति––यथाशक्ति व्रीहीनिति। संपादनमार्थिकमित्यर्थः। श्रौताङ्गेष्वपि तां दर्शयति–यथाशक्तेति। तथा च स्वरूपताः, विध्यन्तरेण वा सिद्धानां कालाग्निविद्यानामेत-त्प्रयोगविध्यनुष्टाप्यत्वाभावेन यथाशक्त्यभवात् निमित्तवदधिकारिविशेषणत्वमेव सिद्धमित्यभि-प्रायेणाह–आहवनीयादीति।

नन्वग्नेः कथमनुपादेयत्वम्। 'आहवनीये जुहोती' तै. ब्रा. १-१-१० त्यनेन वाक्येन यज्जुहोति तदाहवनीय इति होमं प्रत्याहवनीयस्योपादानादित्याशङ्कामनूद्य परिहरति–यद्यपीति। उपादेयत्वं द्वेधा-स्वरूपस्य संपाद्यत्वेन वा, अन्यतः सिद्धस्य स्वरूपस्य कार्यार्थं व्यापार्यत्वेन वा। अत्र त्वाधानविधिसंपन्नस्याहवनीयस्वरूपस्य संपाद्यत्वाभावेऽपि', होमार्थं व्यापार्यत्वेनोपादेयत्वं भवति। तत्संभवेऽप्यनुष्ठाप्यत्वाभावात् न यथाशक्तिसंभव इति नाहवनीयविरहिणाम-धिकार इति भावः।

यद्याहवनीयवानाहवनीये जुहुयात्, अन्यस्त्वन्यत्रेति वाक्यद्वयं संभवेत्, तदा यथाशक्त्युप-बन्धाभावेऽपि भवत्येवाहवनीयवतः, तदितरषां चाधिकारः। नैवं वाक्यद्वयमस्ति। न 'चाहवनीये–जुहोती'त्यनेनैवोभयसिद्धिः आहवनीयवतो होमोद्देशेनाहवनीयमात्रविधानपरत्वात् तस्य। अनेनैवा-न्यस्याहवनीयादन्यत्र होमविधाने शब्दाध्याहारो वाक्यभेदश्च स्यादित्याह–तत्र यदीति। ननु वैरूप्यमन्तरेणैकेन वाक्येनोभयसिद्धिः किमिति न स्यादित्याशङ्क्य, तदा यथाशक्त्युपनिबन्धे–सति तत्संभवेत्। तदपि न युज्यते। आहवनीयसंपादनस्यात्र श्रुत्याऽर्थाद्वा प्राप्त्यभावादित्युक्त-मेवाह–न चेति। उभयसाधारण्येन–अहवनीयत्यागोपादनसाधारण्येन। ततः किमित्याशङ्क्य एवं चाहवनीयस्यात्यन्तपरित्यागो वा, नियमेनोपादानं वा स्यात्। न तु केनचित् पुरुषेणोपादानं, केनचित् परित्याग इति उभयसिद्धिरित्याह–तेनेति।

आहवनीयवन्तं वाऽधिकृत्याहवनीये होमः। तत्रानादरे सत्याहवनीयविधेरत्यन्तबाधप्रसङ्गात्, यावज्जीवशब्दस्य तदीयजीवनेऽपि कृतार्थत्वेनात्यन्तपीडाभावादग्निमान् जीवन् जुहुयादित्येवमाश्रीयते। अनेन कालविद्यादयो व्याख्याताः।

## शंका

नन्वेवमङ्गान्तरेऽपि किमिति जीवनं नोपसंह्रियते—तच्छक्तिमान जीवन्निति। शक्त्यपेक्षयाऽप्युपसंहारे तेषामत्यन्तविरोधाभावात्। तत्र निमित्तं वाऽङ्गानुरोधेन किञ्चिद्बाध्यते, अङ्गानि वा निमित्तानुरोधेनेति चिन्तायां, प्रधानवाक्ये श्रुतत्वेन निमित्तं प्रथमं प्रधानमनुरुध्य प्रधानाविरोधेनाङ्गानि सम्बन्धयति। काम्ये तु प्रधानवाक्यस्य कश्चिदपि विरोधो नास्तीत्यङ्गान्यपेक्षितान्युपसंह्रियन्त इति, निखिलाङ्गयुक्तस्यैव प्रयोगः। नित्ये तु यथोक्तेन न्यायेन विद्याग्निकालार्षेयवरणपरित्यागेनान्येषामङ्गानां यथाशक्त्युपसंहार इति, सिद्धः काम्यनित्यविशेषः।

## निमित्तस्यावश्यानुष्ठापकत्वनियमाभावशंका

आह—भवेदेवं यदि निमित्तानन्तरं नैमित्तिकेनावश्यं भवितव्यम्। न तु तदस्ति। कारणपर्यायो हि निमित्तशब्दः। न चावश्यं कारणानि कार्यवन्ति। सत्यपि कारणे सहकारिण्यपेक्षया कार्यविलम्बदर्शनात्।

---

ननु निमित्तबलेन तदनन्तरमाहवनीये सत्यसति वाऽऽवश्यकत्वावगमात् तद्विरोधेनाहवनीयस्यात्यन्तपरित्याग एव। ततश्च शूद्रादीनामधिकारः किमिति न स्यात्। तत्राह—तत्रेति। वचनप्रतिपन्नयोरन्यतरस्यात्यन्तबाधे विषयसंकोचे च प्राप्ते विषयसंकोचाश्रयणमेव युक्तमिति भावः। आहवनीयविधेः—'अहवनीये जुहोती'ति वाक्यस्य। तदीयजीवनेन—आहवनीयवतो जीवनेन। उक्तयैव युक्त्या कालविद्ययोरप्याहवनीयवदधिकारिविशेषणत्वं द्रष्टव्यमित्याह—अनेनेति।

ननु 'यदाहवनीये जुहोती'त्यङ्गवाक्यबाधप्रसङ्गात् तद्वति निमित्तसंकोचः। तर्हि—अङ्गवाक्यान्तरबाधप्रसङ्गादङ्गान्तरेष्वपि निमित्तसंकोचः प्रसज्यत इति सर्वाङ्गोपसंहारः स्यादिति—शङ्कते—नन्विति। प्रसज्यतां नामाङ्गवाक्याना बाधः। नत्वाहवनीयवक्यवदत्यन्तबाधो—भवति। समर्थानां तदङ्गानुष्ठानसिद्धेः। अतो न तद्वशेन निमित्तसंकोचः कार्यं इति परिहरति—शक्त्यापेक्षयाऽपीति। नन्वङ्गवाक्यस्य वा, निमित्तवाक्यस्य वा शक्तापेक्षया संकोचप्रसङ्गः—इत्यङ्गवाक्यस्यैव संकोचाङ्गीकारे को विशेष इत्यत्राह तत्रेति। निमित्तस्य प्रधानवाक्यगतत्वेन प्रयोगविधेरत्यन्तसंनिधानप्राबल्यात् तद्बलेन व्यवहिताङ्गवाक्यसंकोचो युक्तः। यत्र त्वत्यन्तबाधप्रसङ्गः, तत्र भवेन्निमित्तसंकोचः। अन्यत्र तु निमित्तबलादङ्गसंकोच इति यथाशक्तिप्रयोग इति भावः। महाप्रबन्धेनोपपादितं काम्यनित्यविशेषं निगमयति—काम्ये त्विति।

नन्वावश्यकत्वबलेन खल्वङ्गसंकोचः। तदेव च न सिध्यति। निमित्तस्य स्वानन्तरक्षणे कर्मानुष्ठानहेतुत्वनियमाभावादिति शङ्कते—आहेति। तदेवोपपादयति—कारणपर्यायो हीति। सामग्री अवश्यमनन्तरक्षणे कार्याव्यभिचारिणी। नत्वेकैकं कारणमिति भावः।

## तन्निरासः

तदुच्यते—कारणशब्दस्तावदनेकष्वनेकविधेषु च भावेषु कार्यजननं निमित्ती-कृत्य प्रवर्तमानो न तदतिवर्तितुमर्हति। न खल्वसृग्दृष्ट्रजं पुरुषं स्त्रग्विणमाचक्षते। यस्त्वकुर्वत्यपि मृत्पिण्डे घटकारणव्यपदेशः, स लक्षणयेति द्रष्टव्यम्। न च यावज्जी-वादिशब्दस्य लक्षणाकारणमस्तीति, मुख्यमेव जीवनादीनां निमित्तत्वम्। तादृशश्च कार्याव्यभिचारीति, भवत्येव नैमित्तिकस्यावश्यं भाव इति युक्त एवाङ्गसंकोचः—इति।

### प्राभाकरमते नैमित्तिकस्यानुष्ठानमेव न भवतीत्यनुपपत्तिप्रदर्शनम्

यस्य नैमित्तिकं कर्म विफलं तस्य तादृशः।
अनुष्ठानं कुतः सिद्ध्येद्यथाशक्ति कुतस्तराम्॥ १०॥

कार्यस्य हि न फलापेक्षाऽस्ति। स्वयमेव कार्यरूपत्वात्। विश्वजिदादावपि न फलापेक्षया स्वर्गः कल्प्यते। किन्तु कार्यस्य कृत्यधीनत्वात् कृतेश्च कर्तृत्वाधिकारित्व-प्रणाडिकया नियोज्यापेक्षत्वात्तस्य चाविशिष्टस्यानुपपत्तेस्तद्विशेषणापेक्षायां स्वर्गस्त-द्विशेषणतया कल्प्यते। न फलतया। तथाविधस्य च तस्य बादर्यधिकरणन्यायेन—

---

कार्यपूर्वक्षण एव वस्तूनां कारणत्वम्। कारणशब्दप्रवृत्तिनिमित्तस्य तदानीमेव संभवात्। ततश्च कारणत्वश्रुतिबलादनन्तरक्षणे कर्मावश्यंभावः सिध्यतीति, तन्निमित्तकाङ्ग-संकोचः सिध्यतीति परिहरति—तदुच्यत इति। अनेकविधेष्वित्यनेनानुगतजात्यादिः प्रवृत्तिनिमित्तं नास्तीति दर्शयति। यदि पूर्वक्षण एव कारणत्वं, तर्हि अन्यत्र कारणशब्दप्रयोगः कथं? तत्राह—यस्त्विति। प्रकृते तु मुख्ये कारणत्वे संभवति, लक्षणाश्रयणायोगादावश्यकत्व-सिद्धिरित्याह—नचेत॥ ९॥

एवं नैमित्तिकाधिकारे स्वमतेन यथाशक्तिप्रयोगमुपपाद्य, प्राभाकरमते त्वनुष्ठानमेव न सिध्यतीति प्रसङ्गादुपपादयितुमुपक्रमते—यस्य नैमित्तिकमित्यादिना। तादृशस्य-निष्फलस्य। कुतः सिध्येदिति। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादिति भावः। तन्मते नैमित्तिकस्य निष्फलत्वमुपपादयति—कार्यस्य हीत्यादिना। कार्यमेव हि प्रधानं वाक्यार्थो लिङादिना प्रतिपाद्यते। इतरत्सर्वं तत्प्रकरणाधीतपदार्थजातं तदनुगुणतया सम्बध्यते। क्वचिदश्रुतमप्याकाङ्क्षितं परिकल्प्य गुणतयैव सम्बध्यत इति स्थितिः। अत्र तु न तावत् फलं श्रुयते। नापि कल्पनीयम्। वाक्यस्य तदपेक्षाभावादिति भावः। कथं तदनपेक्षेत्याशङ्क्य, किं स्वस्य कार्यत्वसिद्ध्यर्थम्, उत नियोज्यविशेषणतया, अथवा भाव्यतयेति विकल्प्य, आद्यं दूषयति स्वयमेवेति। वचनेनैव साक्षात् कार्यत्वप्रतीतेर्न तत्सिद्ध्यर्थं फलसाधनत्वं तस्य कल्प्यमित्यर्थः।

ननु यदि स्वतः कार्यं नियोगः, तर्हि विश्वजिदादिषु फलापेक्षा कथमित्याशङ्क्य, तत्रापि न कार्यत्वसिद्ध्यर्थम्। किंतु प्रकारान्तरेणेत्याह—विश्वजिदादाविति। फलापेक्षया कार्यत्वसिद्ध्यर्थमिति शेषः। प्रणाडिकयेति। पूर्वोपपादितक्रमेणेत्यर्थः। तर्हि नियोज्यविशेषणस्य स्वर्गस्य नियोगासाध्यत्वेन फलत्वं कथमित्याशङ्क्य न्यायान्तरेणेत्याह—तथाविधस्येति। तर्हि निमित्ताधिकारे तथैव नियोज्यविशेषणतया फलान्वयः स्यादिति द्वितीयं विकल्पमा-

मी. द. ३.१.३ फलत्वं संपत्स्यते। नैमित्तिकेषु तु निमित्तस्यैव नियोज्यविशेषणस्य लब्धत्वान्न तद्विशेषणतया फलसिद्धिः। नच फलतया। अनपेक्षितत्वात्। भावनाया हि वाक्यार्थत्वे स्याद्भाव्यापेक्षा। भावनोपसर्जनकस्य तु भाव्यरूपस्यापूर्वस्य वाक्यार्थत्वेन फलापेक्षा नास्तीति, नैमित्तिकं कर्म विफलमिति यस्य दर्शनं, तस्य मते तादृग्भूतस्य विफलस्य कर्मणोऽनुष्ठानमेव न सिद्ध्यति। प्रागेव तु यथाशक्त्यनुष्ठानम्। कार्यत्वावगमात्प्रवृत्तिरेव। नतु फलमपेक्षत इति चेत्? फलवत्त्वादृते कार्यत्वस्यैवासम्भवात्। कृतिप्रधानं हि कार्यमुच्यते। न च सुख-दुःखपरिहार-तत्साधनव्यतिरिक्तं कृतेः प्रधानं भवितुमर्हति।

नन्विदमनुमानमागमविरुद्धं नोत्पत्तुमर्हति। आगमेन ह्यपूर्वस्य कार्यत्वमुच्यते। तत्कथमनुमानेन निराक्रियते। सत्यम्। प्रवृत्त एवागमोऽनुमानं निरुणद्धि। तत्प्रवृत्तिरेव तु पदार्थयोग्यत्वाधीना। न चासुखस्य, अतत्साधनस्य वाऽपूर्वस्य कृतिं प्रति प्राधान्ययोग्यताऽस्ति। एकशब्दवाच्यत्वादविरोध इति चेत्? न। व्युत्पत्तिविरोधात्।

यदि मन्येत एकेन हि प्रत्ययेन कृतिस्तत्प्रधानं च कार्यमुच्यते। अतस्तत्र-योग्यत्वमकारणम्। यत्र त्वनन्वितौ स्मृतौ पश्चादन्वितावभिधेयौ, तत्र योग्यत्वं-

---

शङ्क्याह—नैमित्तिके त्विति। तृतीयं दूषयति—न फलयतयेति। कथं न भाव्याकाङ्क्षेत्याशङ्क्य भाट्टमत एव तदाकाङ्क्षासम्भवः, नास्मन्ते। भाव्यस्यै वाक्यार्थत्वादित्याह—भावनाया हीति। निगमयति—इति नैमित्तिकमिति। श्लोकं विवृण्वन्नेव दूषयति—तस्य मत इति। न सिध्यतीति। निष्फले कस्यचिदपि प्रेक्षावतः प्रवृत्त्ययोगादित्यर्थः।

ननु यद्यनुष्ठानं फलाधीनं, तदा भवेन्नाम निष्फले प्रवृत्त्ययोगः। नत्वेवम्। कार्यज्ञानाधीनत्वात् सर्वत्र प्रवृत्तेः। अतोऽत्र फलाभावेऽपि नियोगस्य स्वतःकार्यत्वात् प्रवृत्तिः सिध्यतीति-शङ्कते—कार्यत्वावगमादिति। नेति। भवतु कार्यस्यैव साक्षात् प्रवृत्तिहेतुत्वम्। न फलस्य। अथापि फलं विना कार्यत्वस्यैवानुपपत्तेः प्रवृत्तिर्न सिध्यतीति परिहरति—नेति। कथं फलं विना कार्यत्वानुपपत्तिः। तत्राह—कृतिप्रधानमिति। कृत्युद्देश्यं हि कार्यम्। यस्मिन्निच्छया प्रवर्तते, तदुद्देश्यम्। इच्छा च फल-तत्साधनमात्रविषयेति, फलाभावे कार्यत्वं न सिध्यतीत्यर्थः।

ननु किमत्र नियोगस्य फलसाधनत्वाभावे प्रमाणमेव नास्तीत्युच्यते, अथ फलसाधनत्वाभावादकार्यत्वमनुमीयते। नाद्यः लिङ्शब्दस्यैव प्रमाणत्वात्। न द्वितीयः। अनुमानस्यागमविरुद्धत्व कालात्ययापदिष्टत्वादिति शङ्कते—नन्विदमिति। परिहरति—सत्यमिति। आगमे निर्णयपर्यन्तं प्रवृत्ते सति तद्विरोधेन प्रवर्तमानमनुमानं भवेत्कालात्ययदिष्ठं। न चैवं। अत्र त्वग्नेस्सेकेनवेह निष्फलेन कृतेःस्संबद्धुमयोग्यतया शब्दप्रत्यायकत्वस्य योग्यवाधीनत्वादग्निसेकसंवन्धवत् कृतेर्निष्फलेन संबन्धो बोधयितुमशक्य इति न कालात्ययापदिष्टत्वमित्यर्थः।

पुनः शङ्कते-एकेति। परिहरति—नेति। शङ्कां विवृणोति—यदीति व्युत्पन्नेष्वनेकेषु पदेषु श्रुतेषु यदर्थस्मरणे सति पश्चात् योग्यतादिपरामर्शे अन्विताभिधानं भवतीति विमर्शदशायामाकाङ्क्षायोग्यादिपरामर्शापेक्षो वाक्यार्थबोध एव। पदात् पदार्थस्मरणस्य तु ततःपूर्वभावितया न तत्र योग्यतापेक्षातिस्तीलिङ्प्रत्ययवाच्यकार्यत्वे न योग्यत्वमपेक्षणीयमिति-

कारणमिति। तन्न। व्युत्पत्तिविरोधात्। अन्वयायोग्ययोर्ह्यर्थयोरनेनैव शब्देनान्वितावभिधेयाविति व्युत्पत्तिरेवासम्भावनीया। तेनायोग्यता भिन्नशब्दवाच्ययोरन्वयं निरुणद्धि, एकशब्दवाच्ययोस्तु व्युत्पत्तिमिति। व्युत्पत्त्यवसरे नास्त्ययोग्यत्वमिति चेन्? न। इतरत्रापि प्रसङ्गात्।

स्यादेतत्। कामाधिकारे ह्यपूर्वस्याभिधेयत्वं निरूप्यते। तत्र च फलानुकूलत्वादस्येव कृतिप्राधान्ययोग्यत्वमपूर्वस्येति। तन्न। एवं सति नैमित्तिकेऽपि फलं प्रसज्येत। यदा हि कामाधिकारे कार्यत्वनिर्वाहकत्वेन फलवत्त्वमङ्गीकृतं, तदा नैमित्तिकेऽपि कार्यत्वाभ्युपगमेन तन्निर्वाहकं फलवत्त्वमपि नियोज्यवदङ्गीकर्तव्यम्। तदभावे नियोज्याभाव इव कार्यत्वस्यैव प्रविलयान्नानुष्ठानं सिद्ध्यति। नतरां यथाशक्त्यनुष्ठानमित्यास्तां तावत्।

## नैमित्तिके निमित्त–फलयोस्संबन्धे वाक्यभेदशंका

ननु च—निमित्तफलसम्बन्ध एकवाक्ये न युज्यते।
उद्देश्यद्वयसम्बन्धे वाक्यभेदः प्रसज्यते॥ ११॥

निमित्त–फलयोर्हि द्वयोरुद्देश्ययोरेकवाक्ये सम्बन्धासम्भवात्प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्निमित्तवाक्ये दुरभ्युपगमं फलमिति।

## तस्य परिहारः

उच्यते—द्वाभ्यां विधेयसम्बन्धे वाक्यभेदः प्रसज्यते।
उद्देश्येन निमित्तेन विधेयस्य न सङ्गतिः॥ १२॥

---

न कश्चित् विरोध इति भावः। परिहारं विवृणोति—तन्नेति। यद्यपि पदात् पदार्थस्मरणे न योग्यतापेक्षास्ति। अथापि यत्रार्थद्वयस्यान्योन्यान्वितस्यैकपदवाच्यत्वं, तत्र व्युत्पत्तिस्तयोरन्योन्यान्वये सति संभवेत्। अन्वयश्च योग्यताधीन इति, अयोग्यत्वे तदर्थान्वयस्यैवासंभवात् तत्र व्युत्पत्तिरेव न सिध्यति। पदात् तदर्थस्मरणं तु दूरत इति भावः।

शङ्कते–स्यादेतदिति। व्युत्पत्तिसमय एव खलु योग्यतापेक्षा। न स्मरणवेलायाम्। एवं च व्युत्पत्तिस्थानाभिमते कामाधिकारे नियोगस्य फलवत्तया कृतिसंबन्धयोग्यत्वेन तत्र व्युत्पत्तौ निर्वृत्तायां, नैमित्तिके योग्यत्वाभावेऽपि तत् स्मरणं सिध्यतीति, तस्य अकार्यत्वानुमानं कालात्ययापदिष्टमित्यर्थः।

परिहरति—तन्नेति। यदि कामाधिकारे फलवत्त्वं कृत्यन्वययोग्यतया कार्यत्वसाधकमङ्गीकृतं, तर्हि अश्रुतमपि फलं निमित्तेऽपि तत्सिध्यर्थं अकामेनाप्यङ्गीकार्यं विश्वजिदादौ नियोज्यवदित्यर्थः। एवं च फलस्य कार्यत्वसाधनद्वारा प्रवृत्त्युपयोगित्वात्, तदभावे नैमित्तिकेषु प्रवृत्तिरेव न सिध्यतीति दूषणमुपसंहरति–तदभाव इति।

ननु नैमित्तिकेषु फलाङ्गीकारे निमित्त–फलयोरुभयोरनुपादेयत्वेनोद्देश्यत्वात् वाक्यभेदः–प्रसज्यत इति, तेषां निष्फलत्वमङ्गीकार्यमिति शङ्कते–निमित्तफलेति॥ ११॥

आकाङ्क्षायां असत्यामेकप्रकारेणैवोद्देश्यद्वयसंबन्धो वाक्यभेदकः। अत्र तु प्रकारभेदे नोभयोः सम्बन्धादाकाङ्क्षासंभवाच्चोद्देश्यद्वयेऽपि न वाक्यभेद इति परिहरति–उच्यत इति।

विधेयस्य हि द्वाभ्यामुद्देश्याभ्यां सम्बन्धे वाक्यभेदो भवति। न चेह तथा। विधेयस्य कर्मणः फलेन सम्बन्धात्। तत्कर्तव्यतायाश्च निमित्तेन। न चैवं सति-वाक्यभेदो भवति। साकाङ्क्षत्वात्। भवति ह्यस्मिन् सतीदं कुर्यादित्युक्ते किमर्थमित्याकाङ्क्षा। तत्रैतदर्थमिति संबध्यमानं फलं न वाक्यं भिनत्ति। समानजातीयं ह्युद्देश्यद्वयं वाक्यं भिनत्ति। न विजातीयम्। यथा 'यस्य पिता पितामहः सोमं न पिबेत्' इति निमित्तद्वयम्। 'यः प्रजाकामः, पशुकामोः वा' तै सं. २-१-१ इति फलद्वयम्। तस्मान्नास्ति वाक्यभेदः-इति।

## उक्तार्थे मण्डनाचार्यवचनविरोधशंका-परिहारौ

यत्तु भगवता मण्डनाचार्येण निमित्तस्योद्देश्यत्वं वाक्यभेदपरिहारार्थं निराकृतं, तद्विधेयं प्रत्युद्देश्यभावाभिप्रायम्। वार्तिके बहुशो निमित्तस्योद्देश्यत्वाभिधानादित्यलमतिविस्तरेण। तस्मात्सिद्धः काम्यनित्यविशेषः-इति।

---

तत्रैकप्रकारेणोद्देश्यद्वयाभावं प्रथमं निरूपयति-विधेयस्य हीति। अयं भावः-विधेयाया भावनायाः प्रथमं फलेनैव संवन्धः। तस्य भाव्यतयाऽऽकाङ्क्षितत्वात्। नतु निमित्तेन। तस्य किं केन कथमंशेष्वननुप्रविष्टतयाऽनाकाङ्क्षाविषयत्वात्। अतश्च विधेयभावनाया उद्देश्यभूतेनापि निमित्तेनासंबन्धादेकवाक्यत्वमित्यर्थः।

---

### टिप्पणी

१. 'धातुसंवन्धे प्रत्ययाः अ. पा सू ३.४.१. इत्यधिकारे यावतिविन्दजीवोरि ३ अ. ४पा. ३०. त्यनेन यावच्छब्दे उपपदे जीवप्राणधारणे इत्यस्माद्धातोर्विहितेन णमुलप्रत्ययेन जीवनस्य यजेतेति समभिव्याहृतयजिधात्वर्थसवन्धोऽवगम्यते। स च निमित्तनैमित्तिकभावादन्यो। न संभवति। निमित्तस्य न कर्मस्वरूपेण संवन्धः, किन्तु निमित्ते सति कर्म-कर्तव्यमितिकर्तव्यतया। अत एव निमित्तस्यानुष्ठापकत्वमुपपद्यते। एवञ्चात्र धात्वर्थसंवन्धः कर्तव्यतात्मकतदनुरक्तभावनासंवन्धपर्यवसन्नः। अतस्तस्य निमित्तत्वम्

२. यत्तु भगवता मण्डनाचार्येण इत्यादेः विधेयं प्रति उद्देश्यभावाभिप्रायमित्यन्तस्यायमाशयः-विधेयं प्रति निमित्तस्य ईप्सितत्वाख्यं उद्देश्यत्वं नास्ति, अनुष्ठापकत्वरूपेमुद्देश्यत्वं वार्तिकादौ बहुशः प्रपञ्चितम्। तत्तु अभिलषितमेव समानजीतीययोमुद्देश्यद्वयसंबन्धे वाक्यभेदौ भवत्येव। प्रकृते तु विजातीयमिति अतो न वाक्यभेदः। तथा च विधिविवेकसन्दर्भः। तथाहि विधीयमानस्य कर्मणः फले विधानात्, तत्र विधौ, निमित्ते उभयविधानात् वाक्यभेदः-इति।

उच्यते-यत्र जाते कर्मणोऽवश्यकर्तव्यता, तत् निमित्तम्। कथं? यस्मिन् सति भवत्येव, स हेतुर्मुख्यः, इतरस्तु भक्तया, तदवस्थाभेदनिबन्धनत्वात्। 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इत्यावश्यकत्वसिद्धिः, तत् निमित्तसामर्थ्यादेव। निमित्तमेव तत्र स्यात्। यस्मिन् सति न क्रियेत। अवश्यकर्तव्यता च कर्मणः प्रतीता नोपसंहार्यंनिखिलांगस्य कल्प्यते। न कदाचिदिहितोपायस्य, इत्यतः यथाशक्त्यंगसमेतं सदा समभिलषितोपायं कर्मेति गम्यते। निमित्तता च कर्तव्यताया विधिरूपायाः तस्मिन् सति तत् कुर्वतो यथाकथञ्चित् सदा समीहितं एनःक्षयं साधयत्येव। भावव्यतिरेकेपि च शब्दप्रमेयत्वम्। अविधेयस्यापि विधिवत् विध्यनुप्रवेशात् विधिविशेषणत्वात्। वि. वि. पृ. ३५९-३६३ इति।

पार्थसारथिना सम्यग्विशेषः काम्यनित्ययोः ।
आचार्यमतमाश्रित्य न्यायलेशात्प्रदर्शितः ॥ १३ ॥

इति श्रीयज्ञात्मसूरिसुत महामहोपाध्याय पार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां नित्यकाम्यविवेको नाम षष्ठं प्रकरणं समाप्तम् ।



---

कथं तर्हि निमित्तान्वयः ? तत्राह—तत्कर्तव्यताया इति । यद्यपि विनियोगवेलायां भावनायाः फलेनैवान्वयः । अथापि पश्चात् प्रयोगवेलायामनुष्ठेयत्वं तस्या यदा प्रतीयते, तदा तेनैव वेषेण निमित्तेन संबन्ध इति प्रकारभेदसंभवात् न वाक्यभेद इत्यर्थः । इदानीमाकाङ्क्षासंभवाच्च न वाक्यभेद इत्याह—साकाङ्क्षत्वाच्चेति । तदेव दर्शयति—भवति हीति । किमर्थमित्याकाङ्क्षेति । अत एवाश्रुतमपि फलं कल्प्यत इत्यर्थः । प्रकारभेदाभावे तु भवत्येव वाक्यभेद इत्याह—समानेति । तत्र प्रतिनिमित्तं, प्रतिफलं च वाक्यपरिसमाप्तेः, प्रतिनिमित्तं प्रतिफलं च कर्मावृत्तिर्भवतीत्यर्थः ॥ १२ ॥

ननु निमित्तस्योद्देश्यत्वमङ्गीकृत्यैव प्रकारभेदादिभिर्वाक्यभेदपरिहारो मण्डनाचार्यवचनविरुद्ध इत्याशङ्कामनद्य परिहरति—यत्त्विति । प्रासङ्गिकं परिसमापयति—अलमिति । सिद्धान्तमुपसंहरति—तस्मादिति । अधिकरणं निगमयति—पार्थेति ॥ १३ ॥

विच्छिन्नसर्वसंदेहा सर्वशिष्यहितैषिणी ।
जातवेदोगुरुव्याख्या लोके विजयतेतराम् ॥

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने नित्यकाम्यविवेकव्याख्यानं समाप्तम् ।



# अंगनिर्णयो नाम सप्तमं प्रकरणम्

## अथाङ्गनिर्णये प्रथमः परिच्छेदः

### कर्तव्यार्थस्य प्रतिज्ञा

अङ्गस्वरूपसंबन्धप्रमाणं सप्रकारकम् ।
यदुक्तं वार्त्तिके सम्यक्तत्संक्षेपेण कथ्यते ॥ १ ॥

यदङ्गस्वरूपं, यथाविधं च, यश्च तस्य प्रधानेन संबन्धः यथा च, यच्च तत्र प्रमाणं, यथा च तत्प्रमाणं भवति, तत्सर्वं यथावर्त्तिकमनुसंधास्यामः ।

### अंगानां त्रैविध्यम्

तत्र—दृष्टादृष्टोभयार्थत्वात्त्रेधाऽङ्गानि प्रचक्षते ।
दृष्टार्थानि चतुर्द्धा स्युर्जाति-द्रव्य गुण-क्रियाः ॥ २ ॥
अदृष्टार्थं द्विधा कर्म द्व्यर्थमपि तन्मतम् ।
दृष्टार्थेष्वपि सर्वेषु नियमाद्दृष्टमिष्यते ॥ ३ ॥

---

### नायकरत्नम्

अथेदानीं द्वादशलक्षण्यां नियतक्रमायां मीमांसायां प्रथमाध्यायप्रतिपाद्यां प्रमाणचिन्तां प्रायशो वहिरङ्गयुक्तिमूलतयोपेक्ष्य, द्वितीयाध्यायगोचरां कर्मभेदचिन्तामप्यतिविप्रतिपत्त्यभावादनादृत्य, अवशिष्टाध्यायदशकप्रतिपाद्यमेयतत्त्वसंग्राहकमङ्गनिर्णयाख्यं प्रकरणं प्रारभमाणस्तत्प्रतिपाद्यं सामान्यतः प्रतिजानीते—अङ्गस्वरूपेति । सप्रकारकमिति प्रत्येकं संबन्धः । श्लोकं व्याचष्टे—यदङ्गेति । शास्त्रे समीहितसाधनत्वमङ्गानां सामान्यं स्वरूपम् । तस्य प्रकारोः—दृष्टादृष्टोभयार्थत्वात् आरादुपकारकत्व—सन्निपत्योपकारकत्वादिः । तस्य शेषिणा संबन्धः—समीहिततत्साधनत्वलक्षणः । तस्य प्रकारो—द्रव्याणां साक्षात् क्रियानिर्वृत्तिः । जातिगुणयोः कारकद्रव्यावच्छेदः । क्रियास्वपि संनिपातिनीषु तत्तत्कारकेषु उत्पत्ति—प्राप्ति—विकृति—संस्काराः । आरादुपकारकेषु प्रातिस्विकापूर्वद्वारा फलपूर्वोपकारः । अवहननादीनां व्रीहिशेषत्ववत् परम्परया तण्डुलपिष्टपुरोडाशप्रणाड्या यागफलभावनाशेषत्वमप्यपरः संबन्धप्रकारः । तत्र प्रमाणं श्रुतिलिङ्गाद्युपदेशप्रमाण—वचननामधेयचोदनालिङ्गविशेषातिदेशप्रमाणसंहितो विधिः तत्प्रकारश्चान्योन्यविरोधे प्राबल्यदौर्बल्यादिलक्षणः । यथा चेति । येन प्रकारेणेत्यर्थः । यथावार्तिकमिति । तन्त्रटीकां, दुप्टीकां चानुरुध्येत्यर्थः ।

तत्र प्रथममङ्गावान्तरभेदं, तस्य प्रधानेन संबन्धप्रकारं चाह—दृष्टादृष्टेत्यादिना । द्व्यर्थमपि तन्मतमिति । जाति-गुण-द्रव्याणां केवलदृष्टार्थत्वम् । कर्मणस्तु दृष्टार्थम्, अदृष्टार्थत्वम्, उभयार्थत्वं च । तत्रारादुपकारकाणां केवलादृष्टार्थत्वम् । सन्निपातिनां तूत्पत्तिप्राप्तिविकृतिनिमित्तानां केवलदृष्टार्थत्वम् । संस्कारहेतूनां तु केवलादृष्टार्थत्वम् । अंशे सन्निपातिनाम्, अंशान्तरे आरादुपकारिणां तु उभयार्थत्वमिति विभाग इत्यर्थः ।

त्रिविधमङ्गजातं—दृष्टार्थम्, अदृष्टार्थम्, उभयार्थमिति। दृष्टार्थमपि जाति-द्रव्य-गुण-क्रियात्मकम्। तत्र जाति—गुणौ 'पशुना यजेत', 'अरुणया क्रीणाति' इति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यावच्छेदेन दृष्टेनैवोपकारेण तस्याः शेषभावमनुभवतः। कथं पुनर्द्रव्यपरिच्छेदात्क्रियासाधनत्वमिति चेत्? उच्यते। विशिष्टस्य द्रव्यस्य क्रिया-साधनत्वात्, तस्य च विशेषणाधीनप्रतिपत्तित्वादप्रतिपन्नस्य च साधनभावासंभवात्, तत्प्रतिपत्त्युपायभूतयोर्जाति—गुणयोस्तद्द्वारेण भवति क्रियासाधनत्वम्। गुणस्य तु साधनत्वं श्रुतं यथोक्तेन प्रकारेणोपपादयितुं, तद्विशिष्टस्य द्रव्यस्य क्रियासाधनत्वं कल्प्यते। तदेवं जाति—गुणयोर्दृष्टार्थत्वम्। द्रव्यस्य तु साक्षादेव क्रियानिर्वृत्तिः दृष्टमेव-प्रयोजनम्। क्रियाऽपि चावघातादिर्दृष्टार्थैव, यां सन्निपत्योपकारकमाचक्षते, अदृष्टार्थं तु क्रियाया एव। सा च द्वेधा—सन्निपत्योपकारकरूपा प्रोक्षणादिः, आरादुपकारकरूपा प्रयाजादिः।

## सन्निपत्योपकारकाणां चातुर्विध्यम्

सन्निपत्योपकारकाणि च दृष्टार्थानि कर्माणि स्वकारकाणां कर्मादीनामुत्पत्तिं, प्राप्तिं, विकारं वा कुर्वन्ति सन्ति तत्साध्यस्य प्रधानस्योपकुर्वन्ति। यथा संयवनं पिण्ड-

---

सोपपत्तिकं श्लोकद्वयं व्याचष्टे—त्रिविधमित्यादिना। तत्र दृष्टार्थान्यङ्गानि दर्शयति दृष्टार्थमपीति। जातिगुणयोर्दृष्टार्थत्वमुपपादयति—तत्रेति। विनियुक्ताविति। 'य एवं-विद्वान् सोमेन यजेत' तै. सं. ३-२-२ इत्यत्र सोमवत्तृतीयाश्रुत्येति शेषः। द्रव्यावच्छेदेनेति। द्रव्यान्तरादक्रियासम्बन्धिनः स्वाश्रयद्रव्यव्यावर्तनेनेत्यर्थः। ननु द्रव्यस्यैव क्रियासाधनत्वं, जाति—गुणयोस्तु तदवच्छेदकत्वमेव। तथा च तद्द्वारा तयोः कथं क्रियाशेषत्वनिर्वाह इत्याक्षिपति—कथं पुनरिति। यद्यपि जातिगुणयोः न साक्षात् क्रियासाधनत्वम्। अथापि तौ विहाय द्रव्यस्य व्यावृत्ततया प्रत्येतुमुपादातुं चाशक्यतया तेन क्रियानिर्वृत्तिरेव न निर्वहेत्। तदवच्छिन्नेन तु तेन तन्निर्वृत्तिः संभवतीति तद्व्यावर्तकत्वमुखेन तयोः श्रुतक्रियासाधनत्वं निर्वहतीति परिहरति—विशिष्टेति। विशिष्टस्य—तद्विशिष्टस्य तद्व्यावृत्तस्येति यावत्। अप्रतिपन्नस्येति। व्यावृत्ततयेति शेषः। द्रव्यावच्छेदद्वारा क्रियासाधनत्वमुभयोः समानम्। तन्निर्वाहक्रमस्तु गुणस्य विलक्षण एवेत्याह—गुणस्य त्विति। जातौ तु जातिशब्देनैव द्रव्यस्याप्युपात्ततया प्रथममेव परस्परान्वये सिद्धे क्रियान्वयः। द्रव्य-गुणयोस्तु भिन्नशब्दोपात्ततया प्रथमत एव क्रियान्वये सति तन्निर्वाहार्थमन्योन्यान्वयः पाष्ठिक एवेति भावः। श्रुतमिति। गुणशब्दानां गुणमात्रपर्यवसिततया केवलस्य तस्य क्रियासाधनत्वं तृतीयया प्रतिपन्नमित्यर्थः। कल्प्यत इति। क्रियान्वयात् पश्चादिति शेषः।

द्रव्यस्य दृष्टोपकारकत्वप्रकारमाह—द्रव्यस्य त्विति। क्रियायां संनिपातिन्यामेव दृष्टार्थत्वमित्याह—क्रियापीति। अदृष्टार्थाङ्गमाह—अदृष्टेति। क्रियाया एवेति। न जाति-द्रव्य-गुणानामित्यर्थः। सन्निपत्य—आहत्य शेषिणि द्रव्येऽतिशयमादधदुपकारकं सन्निपत्यो-पकारकम्। आरात्—दूरेण अपूर्वव्यवधानेन शेषिण उपकारकं आरादुपकारकम्। सन्निपाति-कर्मणां दृष्टोपकारकत्वप्रकारमाह—सन्निपत्येत्यादिना। कर्मादीनामिति। प्रथमं प्रधानापूर्व-शेषतया विनियुक्तानामिति शेषः। तत्साध्यस्येति। अङ्गाहितसंस्कारवद्द्रव्यनिष्पाद्यस्येत्यर्थः। संयवनमिति। 'पुरोडाशं संयौति' श. ब्रा. १-१-६-३, इति संयवनेन—मिश्रीकरणेन

स्योत्पत्तिम्। दोहनं पयसः प्राप्तिम्। अवघातो व्रीहिविकारम्। अदृष्टार्थं तु सन्निपातिसंस्कारं स्वकारकस्य कुर्वत्प्रधानोपकारि भवति। तदेवमुत्पत्त्यादिसाध्यभेदात्सन्निपातिचतुर्विधं भवति। तच्च कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादि करोति। तद्यथा कर्मण्यवघातः। कर्त्तरि व्रतम्। करणे प्रयाजशेषाभिधारणम्। संप्रदाने पशुपुरोडाशयागः। अपादानेऽग्नेस्तृणान्यपचिनोतीति। अधिकरणे दध्यानयनम्।

आरादुपकारकं तु न कारकद्वारम्। अपूर्वद्वारं तु तत्प्रधानस्योपकरोति। दृष्टादृष्टार्थं च किंचित्कर्म यदाश्रयिशब्दाभिधानीयकं भजते। यथा पशुपुरोडाशयागः। स हि त्यागांशेनादृष्टम्, उद्देशांशेन च दृष्टं देवतास्मरणं करोतीत्युभयार्थः। 'एकं वा चोदनैकत्वात्' मी. द. ४.३.१४ इत्येकेनैव विध्युपपत्तेः प्रयोजनद्वयं न युक्तमितिचेत्? न। दृष्टत्वादेव तावत्प्रयोजनापेक्षायां प्रथमं स्मरणं स्वीक्रियते। स्वीकृते च तस्मिंस्त्यागांशस्य तत्रोपयोगमपश्यतः पुनरपेक्षा जायते। सा चादृष्टकल्पनयैव निवर्त्तते। तेनैवंजातीयकमुभयार्थम्।

---

पुरोडाशपिण्डस्योत्पत्तिर्भवतीत्यर्थः। दोहनमिति। 'पयो दोग्धि' इति दोहनेन गोगतं सदेव पयः प्राप्यते। अवघात इति। 'व्रीहीनवहन्ति' आप. श्रौ. १–१९–११ इति अवहननेन सतामेव व्रीहीणां वैतुष्यलक्षणो विकारो भवति। संस्कारमिति। प्रोक्षणादिभिर्व्रीह्यादिषु वैतुष्यादिवत् दृष्टरूपातिशयस्यासंभवात् तच्छेषत्वनिर्वाहाय तद्गतोऽदृष्टरूपः कश्चित् संस्कारः–कल्प्यत इति भावः।

प्रसङ्गात् सन्निपातिनां चातुर्विध्यं फलितमित्याह–तदेवमिति। संनिपातिनामुत्पत्त्याद्यतिशयाधायकत्वं प्रायशो द्वितीयाप्रतिपन्ने कर्मण्येव। अथापि प्रधानशेषतया विनियुक्तेषु कारकान्तरेष्वपि तत्र तत्र संभवतीत्याह–तच्चेति। कर्मणेति। अवघातेन कर्मभूतेषु व्रीहिषु संस्कारो जायते। कर्तरीति। 'केशश्मश्रु वपते' तै. सं. ६–१–१. 'तीर्थे स्नाति'। 'दीक्षयति' इत्यादिना कर्ता संस्क्रियते। करण इति। 'प्रयाजशेषेण हवींष्यभिघारयति' मै. सं. २–२–२. इत्यत्र प्रयाजयागविनियुक्ताज्यशेषस्य करणस्य दार्शपौर्णमासिकहविष्षु क्षारणेन, चात्वालप्रासनेन कृष्णविषाणाया इव प्रतिपत्तिलक्षणस्संस्कारो जायते। संप्रदान इति। पशौ या देवता सैव पशुपुरोडाशयागेऽपि। ततश्च पशुयागोपयुक्ताया एव देवतायाः पुनः पुरोडाशयागेऽग्नीषोमाभ्यामिदमित्यादिप्रकारेणोद्देशात् संप्रदानभूताया देवतायाः प्रतिपत्तिः स्यादित्यर्थः। अपादान इति। अग्निसकाशात् तृणानामन्यत्र अपनयनेन अपादानेऽग्नौ संस्कारः स्यादित्यर्थः। अधिकरण इति। 'तप्ते पयसि दध्यानयति' इति दधिप्रक्षेपेणाधिकरणं पयः संस्क्रियत इत्यर्थः। आरादुपकारिणामदृष्टार्थत्वप्रकारमाह–आरादुपकारकमिति। उभयार्थमङ्गमाह–दृष्टादृष्टेति। अभिधानीयकम्-अभिधानम्। शास्त्रे आश्रयिकर्मेति व्यवह्रियत इत्यर्थः। उदाहरति–यथेति। उभयार्थत्वमुपपादयति–स हीति। देवतामुद्दिश्य द्रव्यत्यागो यागः। तत्र त्यागांशेनापूर्वोत्पत्तेरदृष्टार्थत्वम्। उद्देशांशेन विनियुक्तदेवताप्रतिपत्तेः दृष्टार्थत्वमित्युभाभ्यामंशाभ्यामुभयात्मको याग उभयार्थ इत्यर्थः।

एकस्य यागस्योभयार्थकत्वमसंभावितमिति शङ्कते–एकं वेति। एकेनैवेति। प्रयोजनेनेति शेषः। विध्युपपत्तेरिति। एकेनैव प्रयोजनेन विधेः प्रवर्तकत्वोपपत्तेरनेकप्रयोजनकल्पनं गौरवपराहतमिति भावः। एकस्यापि यागस्यांशभेदेन पृथक् प्रयोजनापेक्षावशात् प्रयोजनद्वया-

## आश्रयिकर्मविषये प्राभाकरमतं

यस्तु यागस्य साक्षाद् दृष्टोपकारित्वाभावात्, तदङ्गभूतयोश्चासेचन-मन्त्रयोः-द्रव्यदेवतयोर्दृष्टं कुर्वतोर्यागेऽधिकारानुप्रविष्टे तत्र विनियोगासंभवात् तस्य चापूर्वमन्तरेण तदनुप्रवेशासंभवाददृष्टार्थत्वम्, अङ्गद्वारेण च दृष्टार्थतेत्युभयार्थत्वं स्विष्टकृदादीनामाह।

तस्य पशुपुरोडाशयागः पूर्वमेव यागसंबन्धात्, दृष्टं कुर्वन्नोभयार्थः स्यात्। तेन यथोक्तेनैव न्यायेनोभयार्थत्वम्।

## नियमादृष्टस्य वर्णनं

अनेनैव च न्यायेन सर्वेषु दृष्टार्थेषु नियमादृष्टमुन्नेयम्। यदि तु दृष्टमेव तुषविमोचनमवहननस्य प्रयोजनं स्यात्, तत्ततस्तस्यान्यतोऽपि संपत्तेर्नावश्यमवघातोऽनु-

---

श्रयणेऽपि न गौरवमिति परिहरति—नेति। दृष्टप्रयोजनसाध्यसाधनभावस्य मानान्तरसिद्धत्वेनाकल्प्यतया हठात्तस्य प्रयोजनतयाऽन्वेतीति भावः। तत्रेति। दृष्टे प्रयोजने।

स्वयं दृष्टप्रयोजनपूर्वकमदृष्टप्रयोजनाश्रयणेनोभयार्थत्वमुपपादितवान्। प्राभाकरास्तु-अदृष्टकल्पनापूर्वकं दृष्टप्रयोजनाश्रयणमुपपादयांचक्रुः। तदनुवदति—यस्त्विति। प्रधानयागविनियुक्तमेव द्रव्यं स्विष्टकृद्यागस्य द्रव्यम्। प्रकृतयागदेवतैव पञ्चमप्रयाजस्य देवता। अत्र

मानसत्यागरूपयोः स्विष्टकृत्—पञ्चमप्रयाजयागयोर्दर्शपूर्णमासयागं प्रति न कश्चन दृष्टोपकारो दृश्यते। तदङ्गभूतयोस्तु द्रव्यप्रक्षेप मन्त्रयोर्दर्शपूर्णमासयागद्रव्यदेवताश्रयत्वात् दृष्टरूपस्तु द्रव्यदेवतासंस्कारो यद्यपि प्रतिभाति, तथापि अनयोः स्विष्टकृदुत्तमप्रयाजमात्रशेषतया साक्षात्—प्रधानयागशेषत्वाभावात् तद्द्रव्यदेवतासंस्कारत्वं न साक्षात् युज्यते। यदि तु तच्छेषिभूतयोः स्विष्टकृदुत्तमप्रयाजयोः प्रधानशेषत्वं निर्व्यूढं स्यात्, ततस्तद्द्वारा तयोरपि प्रधानशेषद्रव्यदेवतासंस्कारकत्वं भवेत्। तन्निर्वाहश्च अपूर्वरूपादृष्टकल्पनामन्तरेण न संभवतीति, प्रथमं यागयोर दृष्टप्रयोजनं परिकल्प्य, पश्चात् तदंशयोः प्रक्षेप—मन्त्रयोर्दृष्टप्रयोजनपरिकल्पनमिति अदृष्टप्रयोजनपूर्वकमेव दृष्टप्रयोजनाश्रयणमित्यर्थः। यागस्य—स्विष्टकृदादियागस्य। आसेचनं—द्रव्यस्याग्नौ प्रक्षेपः। द्रव्य-देवतयोरिति सप्तमी। प्रधानयागसंबन्धिनोरिति शेषः। यागे—स्विष्टकृदादियागे। अधिकारानुप्रविष्टे—अनिर्वाहितप्रधानशेषत्वे। तत्र-प्रधानयागे। विनियोगसंभवात् प्रक्षेप-मन्त्रयोः तद्द्रव्यदेवताशेषत्वेनेति शेषः।

उभयार्थेऽदृष्टकल्पनापूर्वकमेव दृष्टमाश्रयणीयमिति अयं नियमो न सर्वत्र संभवतीत्याह—तस्येति। पशुपुरोडाशयागः पशुयागस्य साक्षादेवोपकर्तुं शक्नोति। न प्रक्षेपमन्त्रादिवत् द्रव्यान्तरमपेक्षते। नापि स्विष्टकृदादिवत् स्वयमेव प्रधानस्य दृष्टोपकारं कर्तुं समर्थः। स्वांशभूतेनैवोद्देशेन देवतास्मरणस्य कर्तुं समर्थत्वात्। अतोऽत्र दृष्टत्वात् प्रथमं देवतास्मरणंप्रयोजनमाश्रित्य पश्चात् अदृष्टं कल्पयितव्यमिति भवदुक्तक्रमनियमाश्रयणे त्वस्योभयार्थत्वं न सिध्येदिति भावः। पूर्वमेव यागसंबन्धादिति। अदृष्टप्रयोजनमुखेन प्रधानयागशेषत्वनिर्वाहात् तस्मादस्मदुक्तयैव रीत्या उभयार्थत्वमङ्गीकर्तव्यमित्याह—तेनेति।

दृष्टार्थेष्वपीति श्लोकशेषं सोपपत्तिकं व्याचष्टे—अनेनैवेति। यथोभयार्थेष्वेकस्यांशस्य दृष्टार्थत्वलाभेऽपि, अंशान्तरस्य तत्रोपयोगाभावात् अदृष्टं प्रयोजनमाश्रितम्, एवमेव केवल-

छीयेत। तत्रास्य विधिरुपरुध्येत, तेनावघातेनादृष्टानुविद्धास्तण्डुला निष्पाद्यन्त इति-कल्प्यते। क्रियानिष्पाद्यमपि चादृष्टं नियमस्य प्रयोजनपेक्षायां तत्फलत्वे कल्प्यमानं नियमादृष्टमित्युच्यत इति।

किं पुनरेषामङ्गत्वम्? किं च तत्र प्रमाणम्?

तदुच्यते—क्रत्तुः समीहितं येन सिद्ध्यत्यङ्गं तदुच्यते।
प्रमाणं च विधिस्तत्र श्रुतिलिङ्गादिसंयुतः॥ ४॥

समीहितसाधनत्वं तावदङ्गत्वम्। यद्यथा समीहितं पुरुषस्य, तत्तथा येन तत्समीहानिमित्तपुरुषव्यापारगोचरीभूतेन साध्यते, तत्तस्य समीहितस्याङ्गमुच्यते।

---

दृष्टार्थेष्वप्यवघातादिषूपायान्तरनिवृत्तिफलकस्य नियमांशस्य दृष्टोपयोगासंभवात् व्रीहिगतमदृष्टं किंचित् प्रयोजनमाश्रयणीयमित्यर्थः। ननु दृष्टेनैव क्रतूपकारसिद्धेः किमर्थमदृष्टं कल्प्यते-इत्याशङ्क्य तदकल्पने नियमानुपपत्तिमाह यदि त्विति। अन्यतोऽपि—नखविदलनादिनाऽपि। मास्तु नाम नियमेनानुष्ठानं, किं? तत्राह—ततश्चेति।

दर्शपूर्णमासयागस्य पुरोडाशसाध्यत्वात् 'व्रीहिभिर्यजेते' आ.प.श्रौ. ६.३१ १३ ति व्रीहीणाञ्च पुरोडाशप्रकृतित्वेनान्वयात् अतण्डुलीभूतानां तेषां तत्प्रकृतित्वानुपपत्तेस्तण्डुलीभावः सामर्थ्यप्राप्तः। नानाविधाश्च तदुपायाः सामर्थ्यप्राप्ताः। ततश्चावघातस्य तण्डुलीभावमात्र-प्रयोजनत्वे, तदुपायनियमानङ्गीकारे वा अवघातविधिर्व्यर्थ एव स्यात्। ततश्च विधिपरि-गृहीतावघातनिष्पन्नतण्डुलानामुपायान्तरनिर्वर्त्यतण्डुलेभ्योऽदृष्टं किंचित् वैलक्षण्यमस्तीति-कल्प्यमित्यर्थः। उपरुध्येत—वैयर्थ्यान्न तत्र प्रवर्तेत।

एवं तर्हि अदृष्टस्यापि अवघातक्रियानिष्पाद्यतया तस्यैव तत्प्रयोजनं स्यात्। न तु नियमांशस्येत्यत्राह—क्रियेति। यद्यपि नियमस्याक्रियारूपत्वात् न साक्षाददृष्टनिर्वर्तकत्वं, तथापि तदकल्पने नियमस्यासिद्धेः तत् तत्प्रयोजनमित्युच्यत इत्यर्थः। एवमङ्गत्रैविध्यमुक्तम्।

अपरे [1]चतुर्धा विभजन्ति—आराद्रुपकारकं, संनिपाति, उभयात्मकम्, अनुभयात्मकं चेति। तत्रोभयात्मकमाश्रयिकर्म। अनुभयात्मकास्तु जाति-द्रव्य-गुणाः। ते हि न कारकेऽतिशय-मादधते। नापि फलापूर्वे। किन्तु क्रियामात्रनिर्वर्तका इति प्रकारान्तरम्। एवमङ्गावान्तर-भेदः, तेषां प्रधानेन संबन्धप्रकारश्चार्थादुक्तः।

इदानीमङ्गसामान्यस्वरूपं, तत्प्रमाणं च वक्तुं जिज्ञासामुत्थापयति-किं पुनरिति। अङ्गानां प्रधानेन समीहित-तत्साधनंभावलक्षणः सामान्यसम्बन्धस्तु अङ्गसामान्यस्वरूपकथनेनैव कथितो भवतीति, न पृथगसौ प्रतिपादितः। अङ्गसामान्यलक्षणपरं प्रथमार्धं व्याचष्टे-समीहितेति। यत् वस्तु यथा साक्षात् पुरुषार्थतया, तत्साधनतया वा समीहितम्—इष्टम्। तद्वस्तु। तथा-पुरुषार्थतया, तत्साधनया वा। या समीहा-इच्छा जायते। सा तत्समीहा। तां निमित्तीकृत्य तत्सिध्यर्थं यः प्रयत्नात्मा पुरुषव्यापारः, स तत्समीहानिमित्तपुरुषव्यापारः। तद्गोचरीभूतेन—तद्विषयीभूतेनान्येन येन वस्तुना यत् वस्तु साध्यते, तत् साध्यं वस्त्वङ्गि। साधनं त्वङ्गमित्यर्थः।

अयं भावः—यः पुरुषार्थतया वा, तत्साधनतया वा यत् वस्तु अवगच्छति, तस्य तद्विष-येच्छा जायते। तदनन्तरं तत्सिद्ध्यर्थं प्रयत्नस्तद्विषयः। स च साक्षात् तत् साधयितुमशक्नुवन्-

---

१. टीकाकारोऽङ्गानां विभागविषये प्रकारान्तरमुपन्यस्यतीव्यवधेयं।

इदमेव च पारार्थ्यम् । यथोक्तम् 'उद्देशेन हि तादर्थ्यं विविच्यते' तं. वा. पृ. इति उद्देशः समीहाऽभिसंधिरिच्छेति पर्यायाः । तेन समीहितसाधनमङ्गशब्देन शेषगुणादि-पर्यायेणाभिधीयते ।

तत्र च विधिः प्रमाणम् । स हि चेतनप्रवर्त्तनात्मकः । न चासौ समीहित-साधनादन्यत्र प्रवर्तयितुं शक्यते । तेन विधिरेव स्वात्मा मा भञ्जीति, स्वविषयस्य समीहितसाधनभावं कल्पयन्नङ्गत्वे प्रमाणम् । यदा तु श्रेयःसाधनत्वमेव विधिरित्या-श्रीयते, तदा श्रौतमेवाङ्गत्वम् । सर्वथा विधिशब्द एव श्रुत्या, अर्थाद्वाऽङ्गत्वं बोधयति ।

कथं तर्हि श्रुत्यादीनि विनियोगकारणानि ? तादर्थ्यमेव हि विनियोगः । तच्चेद्विधितः, न श्रुत्यादीनां तत्कारणत्वमुपपद्यते । अत उक्तं 'श्रुतिलिङ्गादिसंयुतः' इति ।

तत्साधनेऽवतरति । तेन च साधनेन तत् साध्यत इति, अन्यार्थप्रवृत्तपुरुषप्रयत्नव्याप्यत्वमङ्गत्वम् । प्रयत्नोद्देश्यत्वमङ्गित्वमिति । इदं च लौकिकवैदिकसाधारणं लक्षणम् । वैदिकं तु वेदावगतसमी-हितसाधनत्वमिति । 'ननु 'शेषः परार्थत्वात्' मी. द.३-१-२ इति पारार्थ्यमङ्गलक्षणम् । कथमिद-मित्यत आह—इदमेवेति । समीहितसाधनत्वमेव । कथमिदं पारार्थ्यमित्याशङ्क्य, तत्र संमतिमाह—यथोक्तमिति । तादर्थ्यं—पारार्थ्यम् । उद्देशशब्दार्थमाह—उद्देश इति । अतो यदुद्देश्यं, तदङ्गि । यत् तत्साधनं, तदङ्गमिति भावः । अङ्गलक्षणोपपादनं निगमयति—तेनेति । पर्यायेणेत्यनेन शेषत्वगुणत्वाङ्गत्वानां केषांचिदभिमतं भिन्नार्थत्वं निरस्तम् । द्वितीयमर्धं व्याचष्टे—तत्रेति । विधिशब्देन लिङादिप्रत्यया अभिधीयन्ते । अत्र लिङादिशब्दानां भावना तत्प्रेरणालक्षणशब्द-व्यापाररूपो विधिश्चोभयमप्यर्थ इत्येकेषां मतम् । अपरेषां तु भावना तद्गतं प्रवर्तनारूपमिष्ट-साधनत्वं चार्थ इति ।

तत्र प्रथमपक्षे विधेरङ्गत्वे प्रामाण्यप्रकारमाह—स हि चेतनेति । स च—लिङादिप्रत्ययः । लिङाद्यर्थस्य प्रवर्तनारूपतया लिङादिप्रत्ययस्यापि प्रवर्तनात्मकत्वमुपचारादुच्यते । अस्त्वेवम् । तथापि कथं तस्याङ्गत्वे प्रामाण्यं ? तत्राह—न चासाविति । असौ चेतन इष्टसाधनव्यतिरिक्ते विधिना प्रवर्तयितुं न शक्यते । सर्वोऽपीष्टसाधन एव प्रवर्तत इत्यर्थः । ततः किं ? तत्राह । तेनेति । स्वात्मा--प्रेरणास्वरूपस्वार्थः । मा भञ्जि—मा लोपि । न निर्वहेदिति यावत् । स्वविषयस्य—स्ववाच्यभावनाया इत्यर्थः । समीहितसाधनभावं—समीहितसाधनत्वं कल्पयन् तस्यैव समीहितं प्रत्यङ्गत्वात् तत्र प्रमाणं भवति ।

द्वितीयपक्षे विधेरङ्गत्वे प्रामाण्यप्रकारमाह—यदा त्विति । श्रौतमेवेति । साक्षात् विधिशब्दवाच्यमित्यर्थः । पक्षद्वयेऽपि विधिशब्दस्याङ्गत्वे प्रामाण्यप्रकारमुपसंहरति—सर्वथेति । द्वितीयपक्षे तु अर्थात् ।

तुरीयपादं शङ्कापूर्वकमवतारयति—कथं तर्हीति । तादर्थ्यं—तच्छेषत्वं समीहितसाधन-त्वमिति यावत् । विनियोगः—अङ्गत्वम् । तत्कारणत्वं—तत्प्रमाणत्वम् । विधिर्हि प्रथममेक-

११. 'योऽत्यन्तमुपरस्योपकारेवर्तते, तं वयं शेष इति ब्रूमः' इति महाभाष्योक्तं लक्षण-मत्रानुसन्धेयम् । एतेन श्रुतप्रकाशिकोक्तमन्यस्य प्रयोजनमेव यस्य परसप्रयोजनं, स शेषः इति । परगतातिशयाधानेच्छयोपादेयत्वमेव शेषत्वमिति वेदार्थसंग्रहोक्तं चिकित्सितम् ।

विधिर्हि भावनायाः सामान्यतः श्रेयःसाधनत्वं बोधयंस्तद्विशेषसमर्पकमन्यदपेक्षते। न हि व्रीह्यादिश्रुतिमन्तरेणावघातादिभावनाया व्रीह्याद्यर्थत्वं सिध्यति। बर्हिर्लवन-मन्त्रस्य वा लिङ्गमन्तरेण लवनार्थत्वम्। यागस्य वा स्वर्गकामादिपदसमभिव्या-हारमन्तरेण तादर्थ्यम्। प्रयाजादीनां वा विना प्रकरणेन क्रत्वर्थत्वम्। तेन समीहित-विशेषप्रतिपत्त्यर्थं तावत् श्रुत्याद्यपेक्षा।

धात्वर्थानां, नामार्थानां च विधेयत्वमेव श्रुत्याद्यपेक्षम्। विधिर्हि विधेयस्या-ङ्गत्वमवगमयति, नान्यस्य, न चासौ भावनाव्यतिरिक्तं साक्षाद्विधत्ते। किन्तु तामेव विशिष्टां विषयीकुर्वंस्तद्विशेषणान्यप्यर्थाद्विधत्ते। यत्रापि च सामान्यतः प्राप्ता, तत्रापि विशिष्टविषयत्वेन प्रतीयमानो विधिः प्राप्ताप्राप्तविवेकेन विशेषणपरो भवति।

---

प्रत्ययोपात्ताया भावनायाः श्रेयःसाधनत्वलक्षणमङ्गत्वमवगमयति। श्रुत्यादयस्तु भावनायाः—अंशत्रयपरिपूरणं कुर्वन्ति। एतदेव विनियोगविधिं प्रति श्रुत्यादीनां सहायभावः। एतदेव तेषां विनियोजकत्वमपि। तत्र भाव्यविशेषसमर्पणेन श्रुत्यादीनां सहायाचरणप्रकारमाह–विधिर्हीति। तद्विशेषसमर्पकं–भाव्यरूपश्रेयोविशेषसमर्पकम्। श्रुत्यादिना भाव्यविशेषासमर्पणे विधिना प्रतिपन्नं समीहितसाधनत्वलक्षणमङ्गत्वं समीहितरूपाङ्गिविशेषप्रतिपत्तिमन्तरेण न निर्वहतीति, समीहित-विशेषोपस्थापकानां श्रुत्यादीनां विनियोजकत्वमिति भावः।

विनियोजकत्वमुदाहरति–नहीत्यादिना। श्रुतिं–द्वितीयाश्रुतिम्। बर्हिर्मन्त्रस्येति। 'बर्हिर्देवसदनं दामि' मै. सं १. १. २ इत्ययं मन्त्रो दर्शपूर्णमासप्रकरणे पठितः। 'बर्हिर्लुनाति' तै. ब्रा. ३–२–२ इति लवनमपि तत्र विहितम्। अतो लिङ्गबलेन समीहितविशेषं बर्हिर्लवनं प्रकाशयन् मन्त्रः तच्छेष इत्यर्थः। पदसमभिव्याहारो वाक्यम्। तादर्थ्यं–स्वर्गशेषत्वम्।

इदानीं भावनायाः करणेतिकर्तव्यतासमर्पणेन श्रुत्यादीनां विनियोजकत्वमाह— धात्वर्थानामिति। धात्वर्थानां–क्रियाणाम्। नामार्थानां–प्रातिपदिकार्थानां द्रव्यगुणादीनाम्। एतच्च धातुगतप्रत्ययार्थानां नामगतप्रत्ययार्थानां चोपलक्षणम्। विधेयत्वं–विधिसंबन्धः। विधिर्हि प्रथमं भावनया संबध्य, तस्याङ्गत्वमवगमयति। तद्द्वारा तदंशैः संबध्यते। तत्र भाव्यांशस्य समीहिततया, तत्र रागादेव पुरुषप्रवृत्तेः विधिनाऽसंबन्धात् करणेतिकर्तव्यतयोस्तु संबध्य, पश्चात् तदंशयोरप्यङ्गत्वमवगमयति। अतः तयोः अंशयोर्विधिना संबन्धः श्रुत्यादिभिर्भावनाविशेषण-स्वाधीन इति, तयोर्विधेयत्वं श्रुत्याद्यपेक्षमित्युक्तम्।

एतदेवाह–विधिर्हीति। साक्षात्–अव्यवधानेन। विशिष्टां–करणेतिकर्तव्यताविशिष्टाम्। अर्थात्–भावनाद्वारा परंपरया। भावनाविधानोत्तरकालं चाङ्गत्वमवगम्यत इति, श्रुत्यादीनां विनियोजकत्वमिति भावः। ननु यदि भावनाद्वारकमेवान्येषां विधेयत्वं विधि-सम्बन्धित्वलक्षणं, तर्हि 'दध्ना जुहोति' इत्यादिषु 'अग्निहोत्रं जुहोति' इत्यादिवाक्यान्तर-प्राप्तैव होमभावना। तत्र कथं तद्द्वारा दध्यादीनां विधेयत्वमित्यत्राह–यत्रापीति। सामान्यतः–दध्याद्यविशिष्टवेषेण।

अयं भावः–'दध्ना जुहोति' इत्यत्रापि प्रधानवाक्यैकवाक्यतायाः पूर्वं होमभावनायाः अप्राप्ततया दधिविशिष्टहोमभावना विहितेति दध्यपि तदानीं विहितम्। पश्चादग्निहोत्रवाक्यै-कवाक्यतायां प्राप्ताप्राप्तांशपरामर्शे सति होमभावनायाः प्राप्ततया, पूर्वं प्रतीतहोमसंबन्धो दधिसंबन्ध एव पर्यवसित इति, तत्रापि भावनाद्वारा दधिविधिरुपपद्यत इति। ननु भवतु

विशेषणत्वं च श्रुत्याद्यधीनम्। समानप्रत्ययाभिधानोपादानलक्षणया हि श्रुत्या कर्तृसंख्यादीनां भावनाविशेषणत्वम्। पदश्रुत्या धात्वर्थस्य, पदान्तरोपात्तानां तु पश्वादीनां तत्संख्यालिङ्गयोश्च विभक्तिश्रुत्येत्याद्यूहनीयम्। तदेवं शेषिविशेषप्रतिपादनेन, शेषविशेषप्रतिपादनेन चाङ्गत्वं बोधयतो विधेः साहायकं कुर्वन्ति श्रुत्यादीनि विनियोगे कारणान्यभिधीयन्त इत्यनवद्यम्।

तत्र श्रुतिस्त्रिधा भिन्ना विध्युक्तिविनियोगकृत्।
विनियोक्त्री त्रिधा भिन्ना तुल्यशब्दादिभेदतः ॥ ५ ॥

तत्र विधात्री लिङाद्या। अभिधात्री व्रीह्यादिश्रुतिः। विनियोक्त्री त्रिधा-एकाभिधानं, एकं पदं, विभक्तिरिति। यस्य हि शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते, सा-विनियोगश्रुतिः। तद्यत्रानेकार्थाभिधानमेकेन शब्देन युगपद्भवति, विभक्त्यर्थे व लिङ्ग-संख्या-कारकाणां, तत्र तेषामन्वितानामेवाभिधानम्। अनन्वितानामनेकेषामर्थानामेकेन

---

भावार्थ-नामार्थयोर्भावनाद्वारा विधेयत्वम्। कथं श्रुत्यादीनां तद्विनियोजकत्वम्? तत्राह—विशेषणत्वं चेति। भावनाविशेषणसमर्पकत्वमेव हि श्रुत्यादीनां विनियोजकत्वमिति भावः। भावनाविशेषणसमर्पकत्वं श्रुत्यादीनामुदाहरणमुखेन दर्शयति—समानाभिधानेत्यादिना। 'स्वर्गकामो यजेत' 'राजपुरोहितौ यजेयाताम्' 'सत्रमासीरन्' इत्यादिषु एकत्वादीनां भावनायाश्चैकलिङादिप्रत्ययेनोपादानात् अन्योन्यान्वय इत्यर्थः। स चान्वयो भावनाक्षिप्तकर्तृद्वारा निर्वहति। पदश्रुत्येति। यजेतेत्यत्र यागस्य भावनान्वय एकपदोपादानेनेत्यर्थः। पदान्तरेति। 'पशुना यजेत' इत्यत्र पशोः, एकत्वसंख्यायाः, पुंस्त्वस्य च तृतीयाश्रुत्या यागभावनाशेषत्वमित्यर्थः। यागशेषभूतानां पशुसंख्यालिङ्गानां परस्परान्वयस्तु अरुणैकहायनीन्यायेन पार्ष्ठिकः। उक्तं-श्रुत्यादीनां विनियोजकत्वप्रकारमुपसंहरति—तदेवमिति।

श्रुत्यादीनां विनियोजकत्वप्रकारमुक्त्वा, तेषां स्वरूपं निरूपयिष्यन् तत्र श्रुतिं विभजते—तत्र श्रुतिरिति। विमर्शमनपेक्ष्य पदार्थप्रतिपादकशब्दः श्रुतिः। सा च केवलं प्रकृतिर्वा, प्रत्ययो वा, उभयं वा। विधात्री कर्तव्यताबोधिका। अभिधात्री वस्तुस्वरूपमात्रप्रतिपादिका। विनियोक्त्री सम्बन्धबोधिका। एकाभिधानम्-एकप्रत्ययः। विनियोजकश्रुतेर्लक्षणमाह—यस्य हीति। श्रवणादेव-विमर्शनिरपेक्षादित्यर्थः। यद्यपि विनियोगप्रकरणात् विनियोगश्रुतिरेव निरूपणीया, अथापि श्रुतित्वसामान्यात् इतरश्रुतिद्वयं प्रसङ्गादुक्तम्।

एकाभिधानश्रुतेः सम्बन्धबोधकत्वमुपपादयितुमुपक्रमते—तद्यत्रेति। तादृशस्थलमुदाहरति—विभक्त्यर्थे वेति। विभक्त्या—'पशुना यजेते'त्यत्र तृतीयाविभक्त्या। अत्र एकेन लिङादिप्रत्ययेन उपात्ता विधि-भावना-कर्तृ-संख्याश्चोदाहर्त्तव्याः। तादृशस्थले एकस्यैव शब्दस्य सम्बन्धबोधकत्वमाह—तेषामिति। अन्वितानामेव तेषामभिधाने परस्परसम्बन्धोऽप्यवगत इति, तत्रैकाभिधानं विनियोजकमिति भावः।

नन्वेकेनैव शब्देन लिङ्गसङ्ख्यादीनामनन्वितानामेव युगपदभिधानं किमिति न स्यात्? तत्राह—अनन्वितानामिति। एकस्य शब्दस्यानन्वितानेकाभिधायकत्वं न सम्भवति, अनेकशक्तिकल्पनाप्रसङ्गात्। क्वचिदनेकशक्तिकल्पनायामपि 'अक्षैर्जानाति' अक्षैर्दीव्यतीति प्रयोगभेदेनैवैकस्याक्षशब्दस्यानेकार्थाभिधानम्। तेन न सकृत् प्रयुक्तस्यानेकार्थाभिधानं संभवति।

शब्देन युगपदभिधानस्यैकशेषमन्तरेणासम्भवात् । अक्षशब्देनेव विदेवनादीनाम् । अन्यथा गामानयेतिवद्यां कांचिद्व्यक्तिमक्षमानयेति नियुक्तो विदेवनादीनामन्यतममानयेत्, न सन्दिहीत । सन्दिग्धे च किंपरोऽयं प्रयुक्त इति । तस्मादन्वितानामेवाभिधानम । तत्रापि प्रतीतिवलेन कारकं प्रधानतो, लिङ्गसंख्ये गुणतः । तथा चोक्तं 'यदा कर्मादयो विभक्त्यर्थाः, तदैकत्वादयो विशेषणत्वेन' इति ।

एतेन विभक्तिवाच्यायाः संख्यायाविध्याक्षेपेण कारकविशेषणत्वमभिदधानाः-निरस्ताः । अनन्वितानामप्यभिधाने प्रथममेकशब्दोपात्तेन प्रधानभूतेन च कारकेणैव

---

यत्र तु—'अक्षैः प्रवर्तते सम्यग्विज्ञानद्यूतयोरयम्' ।

इत्यादिषु सकृत् प्रयोगेऽप्यनेकार्थप्रतीतिर्दृश्यते, तत्र द्विः प्रयोक्तव्यस्य शब्दस्यैकशेषमाश्रित्यानेकार्थाभिधानं निर्बन्धेन भवति । न तु स्वारस्येन । तादृशनिर्बन्धस्तु प्रकृते नाश्रयितुं युक्त इति भावः ।

नन्वक्षादिशब्देषु सकृत्प्रयोगेऽप्येकशेषमन्तरेण स्वरसत एवानन्वितानेकार्थाभिधानं किमिति न स्यात् । तत्राह—अन्यथेति । यथा परस्परानन्वितानामप्येकजात्याक्रान्तानां सर्वासामपि गोव्यक्तीनामेकेन गोशब्देनाभिधानात् किमेतद्व्यक्तिपरोऽयं गोशब्दः, अथवैतद्व्यक्तिपर इति न संदेहः, तद्वत् भिन्नजात्याक्रान्तानामपि विभीतकविदेवनादीनामक्षशब्देन स्वरसत एवाभिधाने तद्वदेव संदेहो न स्यात् । अस्ति च संदेहः । तस्मात् न तत्र स्वारस्येनानेकार्थाभिधानमित्यर्थः । परस्परान्विताभिधाने त्वन्वितगोचरयैकयैव शक्त्या तत्सिद्धे नानेकशक्तिकल्पनादोषः । नाप्येकशेषनिर्बन्धाश्रयणम् । अतः पशुनेत्यत्र तृतीयया पुंस्त्वादीनामन्वितानामेवाभिधानं सिद्धं निगमयति—तस्मादिति ।

अन्वितानामभिधानमित्युक्तम् । केन प्रकारेण तेषामन्योन्यान्वयः तत्राह—तत्रापीति । प्रतीतिवलेन—तथैव सर्वेषां प्रतीतेरित्यर्थः । कारकस्य प्राधान्ये संमतिमाह—तथा चोक्तमिति । विशेषणत्वेन—कर्मादिकारकविशेषणत्वेन विभक्त्यर्थतां भजत इत्यर्थः । 'पशुना यजेते'त्यत्र लिङ्गसंख्याविशेषितमेव करणत्वं तृतीयाश्रुत्या विधीयत इति स्वयमुपपादितवान् ।

प्राभाकरास्तु-पशुत्व-लिङ्ग-संख्यासम्बन्धानामन्योन्यानन्वितानामेव प्रथमं ग्राहकग्रहणे सति, पश्चात् पशुनेति तृतीयया प्रातिपदिकार्थगतानां लिङ्ग-संख्या-करणत्वानामभिधानेऽपि, प्रथमं तृतीयया श्रुत्या पशोर्यागशेषतया ग्राहकैदमर्थ्यस्य निर्वाहो भवति । लिङ्गसंख्ययोस्तु करणत्वेनानभिधानात् साक्षात् यागान्वयासंभवात् पश्चात् पशुद्वारा ग्राहकैदमर्थ्यनिर्वाहो वाच्यः, तत्र तयोः पशुमात्रान्वयेऽपि तदनिर्वाहात् उपादानापरपर्यायेण विधिव्यापारेणैव ग्राहकीयपशुशेषत्वसिद्धेः तन्निर्वाह इति वदन्ति ।

तद्दूषयति—एतेनेति । एतेन—तृतीयया लिङ्गसंख्यान्वितकरणत्वाभिधानोपपादनेन तयोः साक्षात् यागान्वयस्यैव सिद्धेरित्यर्थः । संख्याया इति लिङ्गस्याप्युपलक्षणम् । कारकविशेषणत्वं करणीभूतपशुशेषत्वम् । लिङ्गसंख्यान्वितमेव करणत्वं तृतीययाऽभिधीयत इत्युक्तम् । अथाप्यनन्विताभिधानं, तथापि तयोः प्रथमत एवैकप्रत्ययोपादानबलात तदन्वयसिद्धेः न त्वदभिमतसिद्धिरित्याह—अनन्वितानामिति । संख्यायास्तु प्रत्ययोपात्तात् करणत्वात् प्रकृत्युपात्तः पशुर्विप्रकृष्ट इत्यर्थः ।

संख्या सम्बध्यते, न प्रातिपदिकार्थेन विप्रकृष्टेन गुणभूतेन च। प्रातिपादिकार्थान्वितैव हि साऽभिधीयते, न कारकान्वितेति तु स्वसमयसन्तमसतिरस्कृतार्थतत्त्वानां श्रद्धामात्रम्, न प्रामाणिकम्। प्रतीत्यविशेषात्। यथा पशुनेत्युक्ते पशुः करणं प्रतीयते, तथैकं करणमित्यपि प्रतीयत एव।

न चैकमभिधानमर्थान्तरान्वितमर्थान्तरमभिदधानं न दृष्टम्। लिङ्प्रत्ययस्य, कृत्यप्रत्ययस्य च कृत्यवच्छिन्नापूर्वाभिधानाभ्युपगमात्। कथं च विध्याक्षेपः? तादर्थ्यादिति चेत्? न। प्रातिपदिकार्थं, कारकं वा प्रति विशेषणभूतस्यैकत्वस्य तदवधीरणेन विध्यैदमर्थ्यासम्भवात्। सम्भवे वा क्षेपिष्ठत्वादीनामपि विध्यर्थत्वं स्यात्। तदुपपत्तये च देवताभूतवायुविशेषणता कल्प्येतेति, क्षेपिष्ठत्वगुणविशिष्ट एव वायुर्देवता स्यात्, न वायुस्वरूपमित्यलमनेनालौकिकविवादेन। तदेवं संख्यादेरेकशब्दोपादानलक्षणया श्रुत्या कारकान्वयः।

प्रातिपदिकार्थस्य तु पदश्रुत्या। प्रकृति-प्रत्ययार्थयोर्हि श्रवणादेव सम्बन्धः प्रतीयते। न तु पदद्वयार्थवत् परामर्शमपेक्षते इति, पदमपि श्रुतिपक्षे निक्षिप्यते तदेवमेककारकान्वितानां जाति-लिङ्ग-संख्यानामरुणैकहायनीन्यायेन परस्परनियम इति।

---

विभक्त्युपात्तानां लिङ्ग-संख्या–करणत्वानां प्रातिपदिकार्थेनैव प्रथममन्वयः, नान्योन्यान्वयः इति तन्मतं दूषयति—प्रातिपदिकेति। कथं अप्रामाणिकं? तत्राह—प्रतीतीति। पशुवल्लिङ्गसंख्ययोरपि अविशेषेण करणतया प्रतीतेरित्यर्थः। तदेव दर्शयति–यथेति। नन्वेकस्य प्रत्ययस्य कथमन्वितानेकार्थप्रत्यायकत्वमित्याशङ्क्य, एतत् त्वयाऽप्यङ्गीकृतमित्याह—न चैकमिति। लिङ्गसंख्ययोः साक्षात् यागान्वयोपपत्तेः करणीभूतपशुशेषत्वं तयोर्विध्याक्षेपगम्यमित्येतन्निराकृतम्।

इदानीं ग्राहकग्रहणानुपपत्त्यापि तत् दूषयितुमुपक्रमते—कथं चेति। तादर्थ्यादिति। ग्राहकग्रहणाख्येन प्रमाणेन सर्वेषां विध्यैदमर्थ्यप्रतीतेः लिङ्गसंख्ययोरपि तादर्थ्यावगतेरित्यर्थः। दूषयति—प्रातिपदिकार्थमिति। लिङ्गसंख्ययोः संनिहितपरित्यागेन व्यवहितग्राहकान्वयासंभवात् तयोर्ग्राहकग्रहणमेव न संभवतीत्यर्थः।

यदि प्रकरणपठितानां सर्वेषां पदार्थानां संनिहितान्वयं परित्यज्य प्रथमं ग्राहकग्रहणे सति पश्चादन्योन्यान्वयः, तर्हि 'वायुर्वै क्षेपिष्ठा' इत्यत्र वायोः क्षेपिष्ठत्वगुणस्य च ग्राहकग्रहणे सति पश्चात् तन्निर्वाहायान्योन्यान्वयः स्यात्। ततश्चैकत्वविशिष्टस्यैव पशोर्यागशेषत्ववत क्षेपिष्ठत्वगुणविशिष्टस्यैव वायोः देवतात्वं स्यात्। ततश्च क्षेपिष्ठाय वायव इदं न ममेत्याद्यनुवचनादिप्रसङ्गः स्यादित्याह–संभवे वेति। एकाभिधानश्रुतिं निगमयति–तदेवमिति।

एकपदश्रुतेरुदाहरणमाह—प्रातिपदिकेति। प्रातिपदिकार्थस्य पशुत्वस्य प्रत्ययोपात्तेन करणत्वेनान्वयः एकपदोपादानादित्यर्थः। कथमेकपदस्य श्रुतित्वमित्याशङ्क्य योग्यतादिपरामर्शनैरपेक्ष्येण संबन्धबोधकत्वात् इतरश्रुतिवत् तदुपपद्यत इत्याह—प्रकृतीतिति। पदश्रुत्या, प्रत्ययश्रुत्या च प्रधानेन करणत्वेनान्वितानां पशुत्वलिङ्गसंख्यानां विभक्तिश्रुत्या यागान्वये सति, परस्परान्वयस्तु पाष्ठिक इत्याह—तदेवमिति। अरुणैकहायनीन्यायेनेति। यथा 'अरुणयैकहायन्या गवा सोमं क्रीणाति तै. सं. ६–१–६ इत्यत्र प्रथममारुण्यादीनां क्रयान्वये सति, या

## विभक्तिश्रुतेर्विनियोजकत्वनिरूपणम्

विभक्तिश्रुतिस्तु सम्बन्धमेव साध्यत्वं, साधनत्वं वा प्रतिपादयन्ती विनियोगकारणम्। तत्र द्वितीया साध्यत्वं प्रतिपादयति। तृतीयादयस्तु साधनत्वम्। तत्र 'व्रीहीनवहन्ति' इति द्वितीया साध्यत्वेन व्रीहीनभिदधाना अवघातस्य तेषु विनियोगकारणं भवति। कथं तर्हि सक्तुषु होमस्याविनियोगः। तेषामसमीहितत्वात्।

समीहितं हि भाव्यं स्यात्सक्तवो न समीहिताः।
अपूर्वसाधनत्वेन व्रीहयस्तु समीहिताः॥ ६॥

सक्तवो हि द्वितीयया साध्यत्वेन प्राप्ता अपि, समीहितत्ववैधुर्योत्त्यज्यन्ते। न हि द्वितीया समीहितत्वं प्रतिपादयति। अपि तु साध्यत्वमेव वदति। तेन सक्तुनां शेषित्वं न संभवतीति, विपरिवृत्य होमभावना भाव्यान्तरमपेक्षते। अवघाते तु नैवं विपरिवृत्तिकारणमस्ति। तथा हि—अवघातभावना भाव्यं समीहितमपेक्षमाणा द्वितीयाप्रतिपादितसाध्यभावान् व्रीहीन्भाव्यत्वेन स्वीकर्तुमभिप्रस्थिता स्वरूपेण तेषामसमीहितत्वाद्विलम्बते। तत्र यदि कथंचिदपि तेषां समीहितत्वं सक्तुवन्न लभ्येत, ततो विपरिवृत्य भाव्यान्तरमपेक्षेत। संभवति च तेषां प्रकृतापूर्वसाधनत्ववेषेण समीहितत्वम्। तथा हि—

---

अरुणा, सा गौरेवेति नियमः पश्चात् भवति, तद्वदत्रापि प्रथममेकेन पुंसा पशुना यजेतेति सर्वेषां यागान्वये कृति, स एव पशुः पुमानेक एवेति नियमः पश्चात् भवतीत्यर्थः।

विभक्तिश्रुतेर्विनियोजकत्वप्रकारमाह—विभक्तिश्रुतिस्त्विति। साध्यत्वं, साधनत्वं वेति। अन्यतरप्रतिपादने सति तदितरदप्याक्षेपलभ्यमिति साध्यसाधनभावसम्बन्धबोधिका विभक्तिरित्यर्थः। तत्र द्वितीयाश्रुतेर्विनियोजकत्वमुदाहरति—तत्रेति। ननु द्वितीया व्रीहीणां साध्यत्वप्रतिपादनेन तेषु यद्यवघातस्य विनियोजिका, तर्हि 'सक्तून् जुहोती'त्यत्र होममपि सक्तुशेषतया विनियुञ्ज्यादिति शङ्कते—कथं तर्हीति। न साध्यत्वमात्रेण शेषित्वम्। किन्तु समीहितत्वया। सक्तूनां द्वितीयया साध्यतया प्रतिपादनेऽपि, क्रतुसम्बन्धानध्यवसायेन समीहितत्वाभावात् न होमशेषित्वमिति परिहरति—तेषामिति। सक्तवो हीति। भावनां प्रति भाव्यांशस्य शेषित्वम्, इतरांशयोस्तु शेषत्वम्। अंशानां परस्परशेषशेषिभावस्तु पश्चात् भावनाद्वारक इति स्थितिः। तदत्र समीहितत्वप्रत्यासन्नं साध्यत्वमभिदधती भाव्यांशोपस्थापनेन विनियोगकारणम्। यत्र साध्यत्वाभिधानेऽपि न समीहितत्वनिर्वाहः तत्र न भाव्यांशमुपस्थापयतीति न विनियोजिकेति भावः। विपरिवृत्त्य भाव्यत्वेन प्रतीतमपि परित्यज्य, भाव्यान्तरमपेक्षत इति सक्तूनां भाव्यत्वानिर्वाहाद्वारादुपकारकतया प्रयाजादिवत्क्रतुरेव भाव्यो भवतीति भावः।

व्रीहिनवहन्तीत्यत्र तु नैवमित्याह—अवघाते त्विति। तदेवोपपादयति—तथाहीति। असमीहितत्वादिति। व्रीहीणां स्वतः पुरुषार्थत्वाभावादित्यर्थः। कथंचिदपि तेषां समीहितत्वमिति। प्रकरणपर्यालोचनादिना परंपरयापि पुरुषार्थत्वमित्यर्थः। संभवतीति। पुरुषार्थत्वमिति शेषः। प्रकृतापूर्वम्—दर्शपूर्णमासापूर्वम्।

प्रकृतापूर्वसाधनतापरम्परया समीहितत्वमुपपादयति—तथाहीति। उत्पत्तिशिष्टेति। 'आग्नेयोऽष्टाकपाल' इति यागोत्पत्तिवाक्य एव यागस्य पुरोडाशद्रव्यकत्वप्रतीतेः तद्विरोधेन

व्रीहिभिर्यजेते'ति यागसाधनत्वेन व्रीहयो विहिताः। न च तेषां साक्षाद्यागसाधनत्वमुत्पत्तिशिष्टपुरोडाशावरोधादुपपत्तिमत्। तेन पुरोडाशप्रकृतित्वेन तेषां साधनत्वमिति, तेन रूपेण समीहिताः तथैव भाव्या भवन्ति। व्रीहिशब्दश्च तद्रूपलक्षणार्थः। एवं च यवेष्वप्यौपदेशिक एवावघातः सिद्धो भवति। तद्रूपस्य तेष्वप्यविशेषात्।

## श्रौतविनियोगस्थले प्रकरणस्य सहकारित्ववर्णनम्

तदेवं प्रकरणसहितया श्रुत्याऽवघातविनियोगः। तदधीनत्वादपूर्वसाधनलक्षणायाः। तथा हि—दर्शपूर्णमासप्रकरणे श्रुतत्यावघातस्य श्रुतिसंयुक्तव्रीहिमात्रेण प्रयोजनापर्यवसानाद्व्रीहीनवहन्तीति वाक्यं साकाङ्क्षं प्रकृतेन दर्शपूर्णमासवाक्येनैकवाक्यत्वं प्रतिपद्यते। दर्शपूर्णमाससम्बन्धिनो व्रीहीनवहन्तीति। तत्सम्बन्धिनश्च प्रयोजनाविनाभूताः स्वसाध्यं प्रयोजनमुपस्थापयन्ति। तस्मिंश्चोपस्थिते तदर्थत्वमवघातस्य व्रीह्यर्थत्वापरित्यागेन सपादयितुं व्रीहिशब्दस्य तत्साधनलक्षणार्थत्वावगतिः'।

---

नोत्पन्नशिष्टा व्रीहयस्तत्समकक्ष्यतया यागसाधनत्वेनान्वीयन्त इत्यर्थः। पुरोडाशप्रकृतित्वेनेति। योग्यतादिपरामर्शे सति तण्डुलपिष्टादिद्वारेण पुरोडाशप्रकृतित्वसंभवात् श्रुतयागसाधनत्वं तन्मुखेनैव निर्वहतीत्यर्थः। तेन रूपेण—परम्परयाऽपूर्वसाधनभावेन। तथैव, अपूर्वसाधनत्वेनैव। नन्वप्रतीतस्यापूर्वसाधनत्ववेषस्य कथं भाव्यानुप्रवेशस्तत्राह—व्रीहिशब्दश्चेति। द्वितीयाप्रतिपन्नभाव्यत्वानुपपत्त्या 'व्रीहिभिर्यजेते'ति विनियोगवलेन प्रकृतापूर्वसंवन्धप्रतीतेश्च तत्साधनत्ववेषो लक्ष्यते इति भावः।

अत एवैतदपि सिद्धमित्याह—एवं चेति। 'व्रीहिभिः यजेत, यवैर्वा' इति विनियोगेन व्रीहिवत् यवानामपि प्रकृतापूर्वसंवन्धप्रतीतेः व्रीहीनवहन्तीत्यस्य च प्रकृतापूर्वसाधनभूतान्यवहन्यादिति वाक्यार्थसंपत्तेश्च यवानामपि तद्रूपस्याविशेषात् अवघातः तेषु सिद्धो भवतीत्यर्थः। केवलश्रुत्या विनियोगानिर्वाहात् इह प्रकरणं तत्साधनतयाऽनुप्रविशतीत्याह—तदेवमिति।

अपूर्वसाधनत्वलक्षणायाः प्रकरणाधीनत्वमुपपादयितुमुपक्रमते—तथाहीति। द्वितीयाश्रुत्या व्रीहीणामवघातभावनां प्रति भाव्यत्वेनान्वयेऽपि तेषां स्वतोऽसमीहितत्वेन भाव्यांशे साकाङ्क्षैव भावनाऽवतिष्ठते। प्रधानभावनायाश्चेतिकर्तव्यताकाङ्क्षायामन्योन्याकाङ्क्षालक्षणेन प्रकरणेन एकवाक्यत्वानुमाने सति दर्शपूर्णमासयागसंबन्धिनो व्रीहीनिति वाक्यार्थः संपद्यत इत्यर्थः। तथाप्यवघातभावनायाः कथं समीहितं भाव्यं स्यात्। कथं वा आकाङ्क्षोपरमस्तत्राह—तत्संबन्धिनश्चेति। 'व्रीहिभिर्यजेते'ति दर्शपूर्णमाससंबन्धितयाऽवगता व्रीहयः स्वसाध्यानि तण्डुल-पिष्ट-पुरोडाशयागादीनि अपूर्वपर्यन्तानि प्रयोजनानि संबन्धीनि स्मारयन्ति। ततश्चापूर्वमेव प्रयोजनं भवतीति तदर्थत्वमवघातस्य भवति। श्रुत्या तु व्रीह्यर्थत्वं प्रतीतम्। ततश्च तदुभयानुसारात् व्रीहिशब्दोऽपूर्वसाधनत्वलक्षको भवति। एवं च अपूर्वसाधनभूतानवहन्यादिति वाक्यार्थः स्यात्। ततश्चाकाङ्क्षोपरमः। ततश्च व्रीहिशब्दस्य लक्षकत्वेन स्वार्थे तात्पर्याभावात् यदा व्रीहयः साधनं, तदा तन्मुखेनापूर्वार्थत्वमवघातस्य। यदा तु यवास्तदा तन्मुखेनापि अपूर्वार्थत्वं स्यादिति भावः। साध्यं-प्रयोजनं अपूर्वम्। तदर्थत्वम्—अपूर्वार्थत्वम्। व्रीह्यर्थत्वापरित्यागेनेति। यवाद्यननुप्रवेशे व्रीह्यर्थत्वमपि न सिध्यतीत्यर्थः।

नन्वेवं सति 'बर्हिर्लुनाती'त्यस्यापि दर्शपूर्णमासवाक्येनैकवाक्यत्वात्तत्साधने बर्हिषि लवनस्य विनियोगादङ्गप्रधानार्थता न सिध्येत्। न सम्यगवगतमस्मन्मतमायुष्मता। न हि दर्शपूर्णमासाभ्यां व्रीहिर्बर्हिः प्रभृतयस्तादर्थ्येन विशेष्यन्ते दर्शपूर्णमासार्थान् व्रीहीनिति। किं तर्हि। तत्संबन्धमात्रेण। तत्संबन्धित्वं चाङ्गानामप्युपकारकत्वाद्भवत्येव। तत्संबन्धिभिश्च यत्प्रयोजनं प्रधानापूर्वम्, अन्यद्वाऽपूर्वमुपस्थाप्यते। तत्साधनरूपे व्रीहिबर्हिरादिशब्दैर्लक्षिते तत्र विनियुज्यमानं लवनादि तस्य

---

ननु प्रकरणेन प्रधानवाक्यैकवाक्यतया सत्यां अपूर्वसाधनत्वलक्षणायां यदि संनिपातिनामन्वः, तर्हि 'बर्हिषि हवींष्यासादयति'। इति बर्हिषोऽङ्गप्रधानार्थहविरासादनशेषत्वेन श्रुतेः लवनादीनां तत्संस्काराणां प्रधानापूर्वसाधनभूत एव बर्हिष्यन्वयः स्यात्। नाङ्गापूर्वसाधनभूते। ततश्च तेषामङ्गप्रधानार्थत्वं न स्यादिति शङ्कते—नन्वेवमिति।

परिहरति—न सम्यगिति। व्रीह्यवहननबर्हिर्लवनादिवाक्यानां प्रकरणावगतं प्रधानवाक्यैकवाक्यत्वं यावता निर्वहति, तावदेव समाश्रयणीयम्। तच्च व्रीहिर्बर्हिरादीनां प्रधानसंबन्धमात्रेण विशेषणेऽपि निर्वहतीति, न ते प्रधानशेषत्वलक्षणेन संबन्धविशेषेण विशेषणीयाः। एवं चाङ्गहविरासादनार्थस्य बर्हिषोऽङ्गापूर्वमात्रशेषतया प्रधानशेषत्वाभावेऽपि प्रधानोपकारकतया तत्संबन्धित्वात् प्रधानसंबन्धित्वेन तदपि बर्हिर्विशेषितं भवति। ततश्च प्रधानसंबन्धमात्रविशेषणेऽपि तेषां व्रीहिर्बर्हिरादीमां समीहितत्वानिर्वाहात् विनियोगादिपरामर्शेन तण्डुलहविरासादनादीनां साक्षात्प्रयोजनान्वयः स्थाप्यते। तत्र तावतापि तदनिर्वाहात् तत्तत्साध्यप्रयोजनपरंपरामुखेनापूर्वाण्युपस्थाप्यन्ते। तेषां फलप्रायतया ततः परं तु नाकाङ्क्षोदयः। यानि चोपस्थापितान्यपूर्वाणि तत्सर्वसाधनत्वेन लक्षितेषु बर्हिरादिषु विनियुज्यमानं लवनादि तत्सर्वापूर्वशेषं भवतीति बर्हिर्लवनादीनां अङ्गप्रधानार्थत्वं सिध्यतीत्यर्थः। तादर्थ्येन—तच्छेषत्वेन।

अङ्गानामुपकारकत्वादिति। अखण्डोपकारानुप्रवेशेन तेषामपि प्रधानोपकारकत्वमित्यर्थः। बर्हिर्लवनादीनामङ्गप्रधानार्थत्वमुपपादितम्। अनेनैव न्यायेन केषांचित् धर्माणामपूर्वान्तरशेषत्वमपि सिध्यतीत्याह—अत एवेति। अयं जावः—ज्योतिष्टोमे त्रयः पशुयागाः। अग्नीषोमीयः, सवनीयः, आनुबन्ध्यश्चेति। तत्र यस्मिन्नहनि अग्नीषोमीयस्यानुष्ठानमाम्नातं, तस्मिन्नेव यूपस्तद्धर्माश्छेदनादयः पर्यग्निकरणादयश्च सर्वे पशुधर्मा आम्नाताः। ततश्चानुष्ठानसादेश्यलक्षणेन स्थानप्रमाणेन सर्वेषां यूपादीनां पश्वङ्गानामग्नीषोमीयपशुशेषत्वम्। अतः स एव सर्वेषां पशूनां प्रकृतिः। तत्र यूपपरिव्याणमाम्नातं परिव्ययत्यूर्द्ध्वं रशनयेति। रशनात्रिवृत्त्वदर्भमयीत्वादयश्च तत्रैवाम्नाताः—'त्रिवृद्भवति दर्भमयी भवती श. ब्रा. ४. २-४-११ त्यादिना। इदं च परिव्याणं पशुनियोजनार्थम्। तया सवनीयपशौ परिव्याणान्तरमाम्नातम्—'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति' श. ब्रा. ४. २-४-११ इति। इदं तु यूपदृढीकरणार्थं, न तु पशुनियोजनार्थम्। सवनीयपशोर्विकृतित्वेनाग्नीषोमीययागाद्यूपः, तत्परिव्याणं, तत्र रशना तद्धर्मा अपि प्राप्ताः। तत्र सवनीययागस्य यूपान्तरप्रयोजकत्वशक्तावपि ज्योतिष्टोमप्रयोगान्तर्गतत्वादग्नीषोमीययागे यो यूपः, स एव लाघवादवतिष्ठते। सवनीययागेऽपि यत् पशुनियोजनार्थपरिव्याणं, तत्र रशना, तद्धर्माश्चातिदेशत—एव प्राप्ताः। औपदेशिके तु द्वितीयपरिव्याणे पशुनियोजनरूपकार्याभावात् कार्यद्वारकत्वाच्चातिदेशिकपदार्थानुप्रवेशस्य रशनातद्धर्माणामतिदेशतो न प्राप्तिः।

सर्वस्याङ्गं भवति। अत एव स्थानादग्नीषोमीययागेन विशेषितेऽपि यूपे विनियुज्यमानानां रशनातद्धर्माणामग्नीषोमीयप्रधानतदङ्गापूर्वव्यतिरेकेण तद्यूपसाध्यसवनीययागाङ्गत्वमपि। ततश्च तदीयद्वितीयपरिव्याणेऽपि रशना तद्धर्माश्चौपदेशिका भवन्ति। यद्यङ्गाङ्गेष्वपि तद्धर्मा भवन्ति, वैमृधाङ्गेष्वपि तर्हि व्रीहिषु तद्धर्मा उपदेशेनैव भवेयुः। न। तदभावात्। न हि वैमृधस्य व्रीहय उपदिष्टा भवन्ति। यदा तु तत्र चोदकेन प्राप्नुवन्ति, तदा सहैवावघातेन प्राप्नुवन्तीति द्विरुक्तत्वान्नोपदेशसम्भवः। अत एव सवनीयस्य वैशेषिके द्वितीय एव परिव्याणे रशनादीनामुपदेशो, नान्यत्र द्विरुक्तिदोषादिति। तत्सिद्धं प्रकरणसनाथया श्रुत्याऽवघातादीनां विनियोग इति।

## कुत्र प्रकरणस्यापूर्वसाधनत्वलक्षकत्वं कुत्र नेतिविवेचनम्

तदत्र प्रकरणवशेन श्रुतस्यैव शब्दस्यार्थविशेषलक्षणापरत्वं कल्प्यते। प्रयाजादिषु

---

एवं स्थिते सत्यग्नीषोमीययागे रशनातद्धर्मविधायकवाक्यानामेवं वाक्यार्थो निष्पन्नो भवति—यदग्नीषोमीययागसंबन्धिपरिव्याणं तदिह त्रिवृत्त्वादिधर्मयुक्तया रशनया कर्तव्यमिति। तदनन्तरं तद्यूपसाध्यप्रयोजनपरामर्शे सवनीयापूर्वस्याप्यग्नीषोमीययागापूर्ववत् तद्यूपसाध्यत्वात् तदुभयसाधनत्वेन यूपे लक्षिते तत्परिव्याणे रशनातद्धर्माणां विनियोगात् सवनीययागद्वितीयपरिव्याणस्यापि तद्यूपपरिव्याणत्वात् तत्रापि रशनातद्धर्माणामुपदेशत एव प्राप्तिरिति यागद्वयशेषभूता रशनातद्धर्मा इति। विशेषितेऽपीति। संबन्धित्वेनेति शेषः। यूपे यूपसंबन्धिनि परिव्याणे। भवन्तीति। उपदेशत इति शेषः।

ननु यदि लवनादीनामङ्गप्रधानबर्हिरर्थत्वं तर्हि 'पौर्णमासीं संस्थाप्य वैमृधमनुनिर्वपेत्' श. ब्रा. ११-१-३-१ इति पौर्णमास्यङ्गभूतवैमृधेऽपि पुरोडाशप्रकृतिभूतव्रीहिषु अवहननादीनामुपदेशत एव प्राप्तिः स्यादिति शङ्कते—यदीति। परिहरति—नेति तदभावादिति। व्रीहिषु अवघातादीनां विनियोगकाले वैमृधेष्टौ व्रीहीणामभावादित्यर्थः। तदेवोपपादयति—नहीति। यदि तत्रापि व्रीहीणामुपदेशः स्यात् तदाङ्गप्रधानार्थबर्हिरुद्देशेन लवनादीनामिवोभयार्थव्रीह्युद्देशेनावघातविनियोगः सिध्येत्। न तु तदस्तीत्यर्थः। ननु व्रीहीणां तत्रोपदेशाभावेऽप्यतिदेशतः प्राप्तत्वात् तद्व्रीह्युद्देशेनावघातविनियोगः स्यात्। तत्राह—यदा त्विति। न हि प्रतिपदार्थमतिदेशः। तत्र वैमृधेष्टौ व्रीहयः प्राप्नुवन्तः सावघाता एव प्राप्नुवन्तीति, तत्रावघातविनियोगो व्यर्थः। अयुक्तश्च। प्रकृतावुपदिष्टव्रीह्युद्देशेनावघातवाक्यव्यापारे पश्चात् व्रीहीणामतिदेशे सति तदुद्देशेनापि व्यापारेण वाक्यस्य द्विविधव्यापारप्रसङ्गात्। अतो न तत्रावघातोपदेश इति भावः।

ननु सवनीयस्यापि विकृतित्वात् तत्रापि रशनातद्धर्माणामुपदेशतो विनियोगे द्विरुक्तिदोषः स्यात्। तत्राह—सवनीयेति। सवनीये उपदिष्टं यत् द्वितीयपरिव्याणं, तत्रैव रशनादीनामुपदेशतः प्राप्तिं वदामः। न तु तत्र कश्चित् दोषः। न त्वतिदिष्टे पशुनियोजनार्थे परिव्याणे द्विरुक्तिदोषादेवेत्यर्थः : वैशेषिके विशेषधर्मभूते। निगमयति—तत्सिद्धमिति।

नन्वारादुपकारिषु भाव्योपदेशाभावेन तत्र भाव्यविशेषसमर्पकतया प्रकरणविनियोगो युज्यते। संनिपातिषु तु श्रुत्यादिभिरेव भाव्यस्य समर्पितत्वात् प्रकरणस्य विनियोजकत्वं कुत इत्याशङ्क्य प्रतिपादितप्रकारमाश्रित्यैवोत्तरमाह—तदत्रेति। संनिपातिषु श्रुत्याद्युपनीतानामपि भाव्यत्वानिर्वाहादाकाङ्क्षायां तदुपशमस्य प्रकरणाधीनत्वादुभयेषामपि प्रकरणं विनियोजकमेवेत्यर्थः। श्रुतस्यैव शब्दस्य—व्रीह्यादिशब्दस्य। अर्थविशेषलक्षणा—अपूर्वसाधनत्वलक्षणा।

तु शब्दस्वरूपमेव विनियोजकं कल्प्यते इत्येतावान्विशेषः। प्रकरणाधीनत्वं तूभयत्राविशिष्टम्। यस्य तु क्रतुसम्बन्धाव्यभिचारः स्रुवादेः तत्साधनत्वेन विनियुज्यमानस्य खादिरत्वादेस्तद्द्वारेण प्रयोजनाकाङ्क्षायां बुद्धावविपरिवर्त्तमानमपि पूर्वमपूर्वं तेनैवाव्यभिचारिणा लिङ्गेन हृदयमागच्छतीति, विनाऽपि प्रकरणं तत्साधनरूपलक्षणया विनियोगोपपत्तिः। यत्र द्वयं नास्ति, तत्र साधनलक्षणं न घटते इति, प्रकरणसहिता श्रुतिरवघातविनियोगे कारणम्।

## श्रुतिवाक्ययोर्विनियोगांशे वैलक्षण्यम्

स्यादेतत्। द्वितीयया व्रीहीणां साध्यत्वमात्रमभिधीयते। अवघातसाध्यत्वं तु तत्पदसमभिव्याहारात्मकाद्वाक्यादेव। तत्कथं श्रुत्याऽवघातस्य व्रीह्यङ्गत्वमिति। सत्यं यथाऽऽह भवान्। किं तु विनियोगः श्रुत्यैव। सम्बन्धो हि विनियोगः। स च समीहितासमीहितयोः साध्यसाधनभावरूपः। तत्र द्वितीया व्रीहीणां समीहितानां साध्यत्वं प्रतिपादयन्ती प्रतियोगिनः शेषत्वमाक्षिप्य तद्विशेषमात्रं पदान्तरसमभिव्याहारात्मका-

---

शब्दस्वरूपमेव विनियोजकमिति। प्रयाजादिभिः फलभावनां भावयेदिति विनियोजकं वाक्यस्वरूपमेमेत्यर्थः।

ननु यद्यपूर्वसाधनलक्षणा प्रकरणाधीना तर्हि 'यस्य खादिरः स्रुवो भवति' 'यस्य पर्णमयी जुहूर्भवति' इत्याद्यनारभ्याधीतवाक्येषु खादिरादिप्रकृतिद्रव्येण स्रुवादीन् भावयेदिति वाक्यार्थः संपद्यते। तत्र स्रुवादीनां स्वरूपेणासमीहितत्वेन भाव्यत्वानिर्वाहात् अपूर्वसाधनलक्षणा कर्तव्या। तत्तु कथम्। असंनिहितत्वेन प्रकरणाद्यभावादित्याशङ्क्याह—यस्य त्विति। नहि प्रकरणं साक्षादपूर्वसाधनत्वलक्षणम्। किंतु प्रकरणेन प्रथमं प्रधानैकवाक्यता। तदनु विनियोगादिपरामर्शः। तदनन्तरमपूर्वोपस्थानम्। ततस्तत्साधनत्वलक्षणा। तदनु तत्र विनियोग इति। अत्र तु प्रकरणाभावेन प्रथमं प्रधानान्वयाभावेऽपि आकाङ्क्षावशात् विनियोगादिपरामर्शेनापूर्वसाधनलक्षणायां विनियोगः। पश्चात्तु प्रधानान्वय इति। पूर्वमविपरिवर्तमानं असंनिहितत्वेन पूर्वं बुद्धावनारूढम्। अव्यभिचारिणा अव्यभिचरितक्रतुसंबन्धेन लिङ्गेन स्रुवादिद्रव्येण। अवहननादीनां व्यभिचरितक्रतुसंबन्धिव्रीह्यादिसंबन्धेऽपि प्रकरणेन प्रधानसंबन्धे प्रतीते, तन्निर्वाहाय संनिहितापूर्वसाधनत्वलक्षणा शीघ्रमेव भवतीति तन्मुखेन क्रत्वनुप्रवेशः। खादिरादेस्तु स्रुवादिभिरविनाभावबलात् अपूर्वोपस्थाने तत्साधनलक्षणया तु क्रत्वनुप्रवेशः। येषु तु 'सुवर्णं भार्यम्' इत्याद्यनारभ्याधीतवाक्येषु न प्रकरणमस्ति, नाप्यव्यभिचरितक्रतुसंबन्धी द्रव्यसंबन्धः, तत्र सुवर्णस्य क्रतावपि विनियोगात् क्रत्वपूर्वसंबन्धेऽपि क्रतुबाह्यत्वेनापि तस्यैव पुरुषार्थसाधनत्वात् प्रयोजनोपस्थाने त्वविशेषेण द्वयोरप्युपस्थानात् नियमेनापूर्वसाधनत्वलक्षणाभावात् न सुवर्णमुखेन भरणस्य क्रत्वनुप्रवेशः। किन्तुसुवर्णभरणस्य पुरुषार्थत्वमेवेत्येवंविधानान्न क्रत्वर्थमित्याह—यत्र त्विति। महाप्रकृतं निगमयति—प्रकरणेति।

ननु विनियोगो नाम सम्बन्धः। तत्प्रतीतिश्च सम्बन्धिद्वयप्रतीतिपूर्विका। सा च वाक्यादेव। अतोऽत्र कथं श्रुतेर्विनियोजकत्वमिति शङ्कते—स्यादेतदिति। सत्यं साध्यत्वमेव द्वितीयाऽभिधत्ते, तथापि तस्य साधनत्वप्रतिसम्बन्धित्वात् यत्किंचित्साधनाक्षेपेण सम्बन्धेऽपि स्वयमेव प्रमाणीभवतीति, श्रुतिरेव विनियोजिका। वाक्यं तु तदाक्षिप्तसाधनविशेषोपस्थापकतया सहायमात्रमिति परिहरति—सत्यमिति। दध्ना जुहोतीत्यादिषु तृतीयाश्रुतेरप्येवमेव

द्वाक्याल्लभते। तृतीयादिरपि साधनत्वं प्रतियोगिनः शेषित्वमाक्षिप्य तद्विशेपमात्रार्थं वाक्यमपेक्षते। तेनोभयत्रापि श्रुतिरेव विनियोगकारणमुच्यते।

यत्र पुनः शेषिशेपयोः साध्यसाधनभावो न श्रुतः, पदद्वयसमभिव्याहारादेव शेषशेषित्वयोग्यत्वमालोच्य कल्प्यः। यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति' तत्र वाक्येनैव विनियोग इति। न हि तत्र स्वर्गकामस्य, यागस्य वा साध्यत्वं, साधनत्वं वा केनचिदुपात्तम्। पदद्वयसमभिव्याहारादेव तु सम्बन्धे कल्पयितव्ये 'असाधकं तु तादर्थ्यात्' ( ६ १.२ ) इत्यनेन न्यायेन कामिनः प्राधान्यं, यागस्य गुणत्वं कल्प्यते।

आह—स्वर्गकामस्य भूतस्य भाव्यत्वं संभवेत्कथम्।
भूतिकर्त्तृ हि भाव्यत्वं भूतः कर्ता न भूतिषु॥ बृहट्टीका। इति।

भवनस्य ह्युत्पत्त्यपरनामधेयस्य कर्त्ता भाव्यो भवति। स्वर्गकामस्तूत्पन्नो नोत्पत्तुमर्हति इति न भाव्यः स्यादिति।

तदुच्यते भूतस्यापि स्वरूपेण स्वर्गकामस्य भाव्यता।
धर्मान्तरविशिष्टस्य क्रतुव्रीह्यादिवद्भवेत्॥ ७॥

## शेषत्वस्य द्वैविध्यम्

स्वर्गकामस्य तावद्यागभावना शेष इति वाक्यादवगम्यते। शेषत्वं च द्वेधा भवति यदि तत्स्वरूपमेव समीहितं साधयति, तद्गतं वा कंचिद्धर्मभेदम्। उभयथाऽपि च साध्यं शेषि भवति। यथा प्रयाजादिभावनायाः क्रतुः। न हि प्रयाजादिभिः क्रतुस्वरूपमुत्पाद्यते। तदुपकार एव तु साध्यते। अथ च क्रत्वर्थत्वेनैव प्रयाजादयः सम्बध्यन्त इति वक्ष्यामः। यथा च व्रीहयो निष्पन्ना अध्यवघातस्य भाव्या भवन्ति। न हि

---

विनियोजकत्वसिद्धिरित्याह—तृतीयादिरपीति। तर्हि कुत्र वाक्यं स्वतो विनियोजकं तत्राह—यत्र त्विति। योग्यत्वं-समीहितभावः। सम्बन्धे कल्पयितव्य इति। पदद्वयार्थयोः सन्निधानात् प्रथमं सम्बन्धमात्रं कल्प्यते। स च सम्बन्धो न्यायपरामर्शात् साध्यसाधनभावो भवति। स एव समीहितविवेके शेषशेषिभावः पर्यवस्यति इत्यर्थः।

येन न्यायेन तत्र शेषशेषिभावः, तमेव न्यायमाह—तदुच्यत इति। तमेव न्यायं सोपस्कारं प्रतिपादयितुं प्रथमं सिद्धस्वरूपस्य स्वर्गकामस्य यागभावनां प्रति भाव्यत्वेनान्वयासम्भवात् तच्छेषित्वं न युज्यत इति शङ्कते —आहुरिति। भूतस्य-निष्पन्नस्य। भूतः-निष्पन्नः। भूतिषु-उत्पत्तिषु। उत्पन्नस्यापि स्वर्गकामस्य स्वरूपतः सिद्धत्वेऽपि, फलविशिष्टवेषेण भाव्यत्वसंभवात् तच्छेषत्वमुपपद्यत इति परिहरति—उच्यत इत्यादिना। स्वरूपेण भूतस्यापीत्यन्वयः। यागभावनेति। भावनाया भाव्याकाङ्क्षायां सन्निहितत्वेन स्वर्गकामस्यैवान्वयात् भावनायाश्च शेषत्वं प्रथममापाततः प्रतीयत इत्यर्थः। यदि तदिति। यद्वस्तु यस्य वस्तुनः समीहितं स्वरूपमेव साधयति, यस्य च समीहितं धर्मविशेषं, द्विविधमपि तत्साधनं शेषः। द्विविधमपि तत्साध्यं शेषीत्यर्थः। आद्यस्य पुरोडाशसंयवनमुदाहरणम्। द्वितीयमुदाहरति—यथेति। क्रत्वर्थत्वेन। वक्ष्याम इति प्रकरणविनियोगावसरे।

श्लोकगतं द्वितीयमुदाहरणं विवृणोति—यथा चेति। नन्वस्तूभयोरपि स्वरूपेणैवाविशेषेणैव भाव्यत्वम्। उभयत्रापि विनियोगस्याविशेषात्। अत्र स्वरूपेण भाव्यत्वम्, अत्र

स्वरूपेणैवोत्पाद्यं भाव्यमिति नियमः समस्ति। धर्मान्तरोपेतेनापि रूपेण भाव्यतोपपत्तेः।

तत्र प्रथमं भाव्यतामात्रात्मके शेषित्वेऽवधृतेऽपि कमुपकारं कृत्वाऽस्यायं शेषः ? किं स्वरूपोत्पत्तिं किं वोपकारान्तरमिति विशेषापेक्षायां सामर्थ्येन विशेषः कल्प्यते। तत्र स्वर्गकामस्य भूतस्य स्वरूपेण भाव्यत्वं न सम्भवतीति, फलविशिष्टत्वेनैव रूपेण भाव्यत्वं भवति। अत एव फलपरं स्वर्गकामपदं मीमांसकवरिष्ठा मन्यन्ते। यथा 'दण्डी प्रैषानन्वाह' इति दण्डविशिष्टेऽनुवचनाङ्गत्वेन चोद्यमाने विशेष्यस्य पूर्वमेव क्लृप्तत्वाद्विशेषणभूतस्य दण्डस्यानुवचनाङ्गत्वप्रतिपादनपरं वचनं सम्भवति। तथा स्वर्गकामो यजेतेति विधिनैव यागभावनायाः पुरुषार्थत्वे प्राप्ते पुरुषस्य शेषित्वं न स्वरूपेण सम्भवतीति किंचित्फलमिच्छतस्तद्विशिष्टेन स्वरूपेण शेषित्वमिति सामर्थ्यादवगते, फलविशेषमात्रे चानवगते स्वर्गकामस्य शेषित्वमुच्यमानं स्वर्गाख्यविशेषणपरमेव भवति। तेन स्वर्गसाधनद्वारेण यागस्य पुरुषशेषत्वमिति। यथाऽऽहुः—

'अपेक्षिततत्वात् भाव्यस्य कामशब्दा हि तत्पराः।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितम्॥" भा. चि. पृ. १०७ इति॥

## उक्तार्थे उपष्टम्भकतया भाष्यसन्दर्भस्योपन्यासः

तदेतदेकादशाद्ये विस्पष्टमेव भगवता भाष्यकारेणोक्तम्। 'ननु नैवात्र स्वर्गः फलं श्रूयते' इत्यादिना फलस्य वाचकाभावं चोदयित्वा 'अनेन स्वर्गकामशब्देन' इत्युक्त्वा 'ननु पुरुषविशेषस्यायं वक्ता' इत्यादिना चोद्यपूर्वकं पुरुषपरत्वं, कालपरत्वं च स्वयं निरस्य, निमित्तपरत्वं चाख्यातोपात्तकर्तृसंख्याविवक्षाप्रतिपादनावसरे षष्ठे स्पष्टं

---

विशिष्टवेषेणेति विशेषः कथं सिध्यतीत्याशङ्क्य, तत्तत्साधनभूतवस्तुस्वभावादेवेत्याह—तत्रेति। शेषित्वेऽवधृते विनियोजकप्रमाणेनेति शेषः। अस्त्वेवं प्रकृते केन प्रकारेण भाव्यत्वं? तत्राह— तत्रेति। स्वर्गविशिष्टस्य पुरुषस्य भाव्यत्वे प्राप्ताप्राप्तविवेकेन विशेषणस्य स्वर्गस्यैव भाव्यत्वं भवतीति, विशेषणपरः स्वर्गकामशब्द इति मीमांसकप्रसिद्धिरुपपद्यत इत्याह —अत एवेति।

कथं विशिष्टाभिधायकस्य शब्दस्य विशेषणपरत्वं युज्यत इत्याशङ्क्य, तत्र दृष्टान्तमाह— यथेति। दण्डविशिष्टे। पुरुष इति शेषः। विशेष्यस्य—पुरुषस्य। दार्ष्टान्तिकेऽपि तदुपपादयति— तथेति। अपुरुषार्थरूपायां भावनायां पुरुषस्य प्रवर्तयितुमशक्यत्वात विधिवलेन भावनायाः पुरुषार्थत्वं—पुरुषशेषत्वमवगम्यते। तच्च पुरुषोपकारकत्वं विना न संभवति, इत्युपकारकत्वं कल्प्यते। तदुपकारश्च कथमित्याकाङ्क्षायां तदाकाङ्क्षितफलसाधनत्वमेव सामर्थ्यात् पर्यवस्यति। एतावच्च स्वर्गकामपदमन्तरेणापि लभ्यत इति, नैतत्परः स्वर्गकामशब्दः। किंतु अनन्यलभ्यफलविशेषपर इति, विशेषपरत्वं तस्य युक्तमित्यर्थः। प्रतिपादितेऽर्थे आचार्यसंमतिमाह—यथाहुरिति। भाव्यस्य—फलस्य। तत्परं—फलपरम्। विशेषप्रधानत्वं—विशेषणप्रतिपादनपरत्वम्।

स्वर्गकामादिशब्दानां फलपरत्वे भाष्यकारसंमतिमप्याह—तदेतदित्यादिना। कालपरत्वमिति। यदा स्वर्गकामनोत्पद्यते, तदा यागानुष्ठानस्य काल इत्येवं कालपरत्वमित्यर्थः। निमित्तपरत्वं चेति। 'परस्त्रीकामः प्रायश्चित्तं कुर्यात्' इत्यादिवदित्यर्थः।

सूत्रकारेणैव 'फलकामो निमित्तमिति चेत्। न नित्यत्वात्'। ( जै. ६-२-९-१० ) इति परिहृतमित्युक्त्वा 'परिशेषात्फलसंयोग एवायम्' इत्युपसंहृत्य 'कथं पुनरनेन शक्यते फलमभिधातुम्' इति पृष्ट्वा वचनव्यक्तिद्वयमुपन्यस्य मलिनः स्नायादितिवत् शेषित्वेनान्वयं पुरुषस्य स्वर्गकामाय याग उपदिश्यत इति दर्शयित्वा, तत्र च स्वर्गाख्योपकारविशेषप्रतिपत्तिपरत्वमेव संपत्स्यत इत्यन्तेऽभिहितम्–'अन्तरेणापि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते। तस्माद्यागात्स्वर्गो भवतीत्येवमर्थं वचनम्' इति।

तदेवं यत्र साध्यसाधनभावप्रतिपादकविभक्त्यभावस्तत्र वाक्येन विनियोगः। यत्र तु शेषिणि साध्यत्वप्रतिपादिका यथा व्रीहीनिति, शेषे च साधनत्वप्रतिपादिका वा विभक्तिर्यथा सोमेन यजेतेति। तत्र श्रुतिविनियोगः।

यत्राप्यन्यतरत्र सम्बन्धमात्रप्रतिपादिका षष्ठी–यथा दध्नेन्द्रियकामस्येति शेषिणि, यजमानस्य याज्येति शेषे–तत्रापि योग्यत्वालोचनया सैव सम्बन्धविशेषे वर्त्तत इति श्रुतिविनियोगः।

यत्रापि शेषिणि चतुर्थी–मैत्रावरुणाय दण्डमिति–तत्रापि संप्रदानस्य कर्मणाऽभिप्रेयमाणस्य स्फुटमेव साध्यत्वमिति श्रुतिरेव। तादर्थ्यचतुर्थ्यां तु स्फुटतर एव श्रुतिविनियोगः। यथा 'यः सोमकामी स्यात् तस्मा एतं सौमेन्द्रं श्यामाकं चरुंनिर्वपेत्' 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति च।

---

न नित्यत्वादिति। दर्शपूर्णमासादिकर्मणां 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादिभिः जीवने सत्यवश्यकर्तव्यत्वप्रतीतेर्नित्यत्वमवगम्यते। तेषामेव निमित्ते सति कर्तव्यत्वप्रतिपादनमेतद्विरुद्धमिति भावः। फलमभिधातुं–फलं प्रतिपादयितुमित्यर्थः। मलिनः स्नायादितिवत् इति। नात्र स्नानक्रियामलिनत्वयोः निवर्त्यनिवर्तकभावेनान्वयः। किंतु स्नानस्य पुरुषापेक्षितमालिन्यापाकरणहेतुतया शेषत्वेन, पुरुषस्य शेषित्वेनेत्यर्थः। तद्वचनं–स्वर्गकामशब्दम्। आख्यातात् भावनाक्षेपेणेति शेषः। प्रसङ्गागतं केवलवाक्यस्य विनियोजकत्वप्रकारं निगमयति –तदेवमिति। तत्रेति। न्यायपरामर्शेन संबन्धविशेषपरिकल्पनादिति शेषः।

एवं विभक्तिश्रुतेर्विनियोजकत्वमुपपाद्य, विनियोजिकास्तास्ता विभक्तीर्दर्शयति–यत्रेत्यादिना। अन्यतरत्रेति। शेषिणि, शेषे वेत्यर्थः। इन्द्रियकामस्य फलित्वेनाधिकारित्वं शेषित्वम्। ऋत्विगादिवत् यजमानस्यापि याज्याप्रयोक्तृत्वात् शेषत्वम्। योग्यत्वालोचनयेति। न हि द्वितीयादयो विभक्तयः साक्षात् शेषशेषिभावस्य बोधिकाः। किं तु साध्यसाधनभावादिसंबन्धस्य। तथैव तासां नैरपेक्ष्यम्। पश्चात् योग्यतादिपरामर्शेन स एव संबन्धः शेषशेषिभावे पर्यवसितो भवति। अयं न्यायः षष्ठ्यामपि समान इति, तत्रापि श्रुतिविनियोग इत्यर्थः। कर्मणाऽभिप्रेयमाणस्य–उद्दिश्यमानस्य। यथा क्रियोद्देश्यं कर्मकारकं क्रियायाः साध्यं शेषि च भवति, एवं कर्मकारकोद्देश्यं संप्रदानमपि कर्मकारकस्य, क्रियायाश्च साध्यं शेषि चेत्यर्थः। तादर्थ्यचतुर्थ्यामिति। 'तादर्थ्ये चतुर्थी वक्तव्या' इति विहितायामित्यर्थः। स्फुटतर इति। षष्ठ्यादिष्विव संबन्धमात्राभिधाने, पश्चात् पर्यवसानलभ्यो नात्र शेषशेषिभावः। किंतु साक्षात् वाचनिक इत्यर्थः। कामेभ्यः–फलेभ्यः। पञ्चम्यास्तु शेषशेषिभावे औदासीन्यात् न साऽत्रोदाहृता। 'यदाहवनीये जुहोति' तै. ब्रा. १.१.१० 'बर्हिषि हर्वींष्यासादयति' इत्यादिषु सप्तम्या यद्यपि शेषत्वप्रतीतेः शेषविभक्तित्वमस्ति, तथापि 'तप्ते पयसि' इत्यादिषु वैपरीत्यस्यापि दर्शनेन

यत्र तु श्रुतिविपर्ययः—यथा 'पूर्वेद्युरमावास्यायां वेदिम्'। इति शेषिणि सप्तमी 'सक्तून् जुहोति' इति शेषे द्वितीया,—तत्र लक्षणया साधनवाचिन्या साध्यत्वं, तद्वाचिन्या च साधनत्वं प्रतिपाद्यम्। लक्षणा च सर्वत्र वाक्यनिमित्ता इति, वाक्यविनियोग इति। एवं तावत् श्रुतिविनियोगः प्रपञ्चितः।

आह—कथं पुनर्विनियोगश्रुतेस्त्रैविध्यमुक्तम्। पदस्य कारकविभक्तीनां च विनियोजकत्वमिति हि द्वैविध्यमेव दर्शयति। पदग्रहणं तुल्याभिधानश्रुतेरपि दर्शनार्थमित्यदोषः।

यथा च—'कारकेण गृहीतत्वादेकत्वादेः क्रियार्थता।
कारकं श्रुतिगम्यत्वाद्बाधते द्रव्यशेषताम्॥' (तंत्र वा. पृ)

तथा—'तथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते।
समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता॥' इति॥ (तंत्र वा. पृ)

तत्र समानाभिधानश्रुतिं दर्शयति। तस्मात् त्रिविधा विनियोक्त्रीति सूक्तम्॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रेण प्रणीतायां
न्यायरत्नमालायामङ्गनिर्णये प्रथमः परिच्छेदः समाप्तः।



---

नियमाभावात् न साप्यत्रादृता। क्वचित् विनियोजकविभक्तिसंभवे न श्रुत्या विनियोगः। किंतु वाक्येनेत्याह—यत्रेति। विपर्यय इति। शेषिपरायाः शेषत्वं, शेषपरायास्तु शेषिपरत्वमित्यर्थः। अमावास्यायां—अमावास्याख्ये कर्मणि। 'वेदिं करोतीति समनन्तरवाक्यशेषः। वाक्यनिमित्तेति। अमावास्यायामिति सप्तम्या दर्शस्य साधनत्वप्रतीतेः फलसाधनत्वेन समीहितस्य तस्यासमीहितां वेदिं प्रति शेषत्वानुपपत्त्या श्रुतिरेव समीहितलक्षणया साध्यत्वं प्रतिपादयति। तत्प्रतिपादनं च पदान्तरान्वयपरामर्शफलमिति, तस्य वाक्यनिमित्तत्वमित्यर्थः। श्रुतिविनियोगमुपसंहरति—एवमिति।

ननु श्रुतित्रैविध्यकथनमाचार्यानभिमतमिति शङ्कते—आहेति। परिहरति—पदग्रहणमिति। कथं पदग्रहणेनैवाभिधानश्रुतेरपि विवक्षितत्वमिति आशङ्क्य, तत्र तत्र तस्या अपि पार्थक्येन श्रुतित्वव्यवहारादित्याह—तथा चेति। कारकेणेति। 'पशुना यजेते'त्यत्र एकत्वपुंस्त्वादेः करणकारकेणान्वयात् तद्द्वारेण प्रथमं यागेनैवान्वयः न तु पशुनेत्यर्थः। कथमेतदित्याशङ्क्याह—कारकमिति। एकप्रत्ययोपादानलक्षणया श्रुत्या संनिहितेन कारकेणैवैकत्वादीनामन्वयः। ननु प्रकृत्युपात्तेन व्यवहितेन पशुनेत्यर्थः। तथेति। स्थलान्तरेऽपीत्यर्थः। निगमयति—तस्मादिति।

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने
नायकरत्ने अंगनिर्णये प्रथमः परिच्छेदः समाप्तः॥



# अङ्गनिर्णये द्वितीयः परिच्छेदः

## प्रतिपाद्यस्यार्थस्य संक्षेपेण निर्देशः

सर्वभावगता शक्तिर्लिङ्गमित्यभिधीयते ।
वाक्यं तु पदसङ्घातमात्रमित्युदितं पुरा ॥ १ ॥
इति कर्त्तव्यताकाङ्क्षा प्रक्रिया द्विविधा च सा ।
पाठानुष्ठानसादेश्यभेदेन द्विविधः क्रमः ॥ २ ॥
समाख्या यौगिकी संज्ञा लौकिकी वैदिकी तथा ।
विनियोजकमेतावदिति भाष्यविदो विदुः ॥ ३ ॥

तत्र बर्हिर्मन्त्रस्य प्रकरणसापेक्षेण लिङ्गेनापूर्वसाधनविशेषे बर्हिर्लवने विनियोगः। दृष्टार्थेष्वेवाङ्गेषु लिङ्गस्य विनियोजकत्वम्, नादृष्टार्थेषु। श्रुतिवच्चात्रापि प्रकरणापेक्षा साधनविशेषाङ्गत्वसिद्धये भवति

---

महागिरेर्माल्यवतः समीपे गोदावरीरोधसि धर्मपुर्याम् ।
पद्मासनप्रार्थनयाऽवतीर्णं नमामि नित्यं नरसिंहमाद्यम् ॥

एवं श्रुतिं निरूप्य, लिङ्गादीनां स्वरूपम्, अवान्तरभेदं चाह–सर्वभावेत्यादिना । भावः–पदार्थः । शक्तिः–सामर्थ्यम् । पदार्थसामर्थ्यं–लिङ्गमित्यर्थः । प्रक्रिया–प्रकरणम् । द्विविधेति । महाप्रकरणावान्तरप्रकरणभेदेनेति शेषः । पाठेति । क्रमः–स्थानप्रमाणम् । तस्य लक्षणं–समानदेशत्वम् । तत् द्विविधं–पाठसादेश्यमनुष्ठानसादेश्यमित्यर्थः । समाख्येति । महाप्रकरणावान्तरप्रकरणभेदेनेति शेषः । पाठेति । क्रमः–स्थानप्रमाणम् । तस्य लक्षणं–समानदेशत्वम् । तत द्विविधं–पाठसादेश्यमनुष्ठानसादेश्यमित्यर्थः समाख्येति । शब्दावयवशक्त्युपजीवनेन प्रवृत्ता संज्ञा समाख्या । सा द्विविधा केवलयाज्ञिकप्रसिद्धिसिद्धा, वेदप्रसिद्धा चेत्यर्थः । एतावत् नान्यदस्तीत्यर्थः ॥ १–३ ॥

लिङ्गस्य विनियोजकत्वप्रकारं उदाहरणविशेषे दर्शयति–तत्रेति । 'बर्हिर्देवसदनं दामि' तै. सं. १–१–२ इत्यस्य मन्त्रस्य । प्रकरणसापेक्षेणेति । उभयार्थमत्र प्रकरणापेक्षा । विनियुज्यमानस्य मन्त्रस्य लिङ्गविनियोगात् प्रागेव सामान्येन क्रतुसंबन्धप्रसिद्धयर्थं, विनियोगवेलायां व्रीह्यादिवदुद्देश्यस्य बर्हिर्लवनस्यापूर्वसाधनत्वसिद्धयर्थं च । एतच्च समनन्तरमेव वक्ष्यति ।

दृष्टार्थेष्विति । अदृष्टसाध्ये विषये वस्तुसामर्थ्यस्यागमैकसमधिगम्यतया तत्र श्रुत्यादिभिरेव विनियोगात् प्रमाणान्तरसिद्धसामर्थ्यस्य च दृष्टसाध्यमात्रविषयत्वात् दृष्टार्थानामेवाङ्गानां लिङ्गं विनियोजकम् । ततश्च न क्वचिदपि आरादुपकारिषु लिङ्गविनियोगः । संनिपातिष्वपि नादृष्टार्थेष्विति भावः ।

साधनविशेषाङ्गत्वसिद्धये इति । अपूर्वसाधनविशेषं बर्हिर्लवनं प्रति मन्त्रस्याङ्गत्वसिद्धय इत्यर्थः । अयमत्र भावः–मन्त्रस्य बर्हिर्लवनप्रकाशकत्वसामर्थ्यादनेन मन्त्रेण बर्हिर्लवनं भावयेदिति वाक्ये कल्पिते, बर्हिर्लवनस्यासमीहितत्वेन तस्य वाक्यस्याकाङ्क्षोदये सति प्रकरणेन तस्य प्रधानान्वये सति पश्चात् अपूर्वसाधनत्वं लवनस्य परिकल्प्य, तत्र मन्त्रस्य विनियोग इति ।

अयं चापरो विशेषः—यदत्र विनियुज्यमानस्य मन्त्रस्य लिङ्गविनियोगात्प्रागेव केनापि प्रमाणेन क्रतुसंबन्धोऽपेक्षितः। तदभावे लिङ्गविनियोग एव न सम्भवतीति 'लिङ्गक्रमसमाख्यानात्, (जै. ३. २. २०) इत्यत्र प्रतिपादितम्।

वाक्यविनियोगस्तु श्रुतिविनियोगावसर एव विवेककथनार्थं प्रपञ्चितः। मन्त्रेष्वपि यानि समवेतार्थाभिधायिन्यतिरिक्तानि सवित्रादिपदानि तेषां वाक्येनैव निर्वापादिषु विनियोगः।

प्रकरणविनियोगस्तु प्रयाजादीनाम्। किं पुनः प्रकरणम्? इतिकर्त्तव्यताकाङ्क्षा। कस्य पुनरितिकर्त्तव्यताकाङ्क्षा? भावनाया इति 'कर्मण्यारम्भभाव्यत्वात्' (जै. ११. १. २०) इत्यत्र भाष्यकारो वक्ष्यति। भावना हि प्रतिलब्धभाव्यसम्बन्धा तत्सिद्ध्यर्थं करणमपेक्षते। तत्र प्रत्यासत्त्या प्रकृत्यर्थः सम्बध्यते—यागेन स्वर्गं भावयेदिति। ततः कथमितीतिकर्त्तव्याकाङ्क्षा भवति। तेन भाव्यसिद्ध्यर्थं भावनया

---

किंच श्रुतिविनियोगादत्राधिकमपेक्षणीयान्तरमस्तीत्याह—अयं चेति। प्रमाणेन—प्रकरणाद्यन्यतमेन। ननु किमर्थं तस्य तत्रापेक्षा इत्यत्राह—तदभाव इति। इदमत्राकूतम्—श्रुत्या दध्यादिद्रव्यस्येव पूर्वं क्रत्वसंबद्धस्यापि मन्त्रस्य क्रतुसंबन्धिनि कुत्रचित् पदार्थे तदनुवादेन विनियोग उपपद्यते। लिङ्गेन तु न तथा संभवति। मन्त्रप्रकाश्यस्यार्थस्यापूर्वसाधनत्वलक्षणायां हेत्वभावेन विनियोगस्यैवासिद्धेः। तथाहि—बर्हिर्लवनादिमन्त्रस्य स्वप्रकाश्यबर्हिर्लवनस्यापूर्वीयत्वकल्पनेन तच्छेषतया विनियोगः स्वस्य प्रकरणादिना दर्शपूर्णमाससंबन्धमन्तरेण न सिध्यति। ततश्च विनियोगात् पूर्वमेव स्वस्य क्रत्वीयबर्हिर्लवनादौ विनियोगसिद्ध्यर्थं क्रतुसंबंधप्रमाणं किंचिदपेक्षणीयमिति।

विवेककथनार्थमिति। श्रुतिवाक्ययोः परस्परवैलक्षण्यकथनार्थमित्यर्थः। वाक्यविनियोगस्योदाहरणमपि तत्रैवाभिहितम्। उदाहरणान्तरमिदानीमाह—मन्त्रेष्विति। 'देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यामग्नये त्वा जुष्टं निर्वपामि' तै. सं. १—१—४ इत्यस्मिन् मन्त्रेऽग्निजुष्टनिर्वापपदार्थानां दर्शपूर्णमासे संभवात् पदत्रयमेव समवेतार्थाभिधायि। तावन्मात्रस्यैवाग्न्यादिविशेषिते निर्वापे लिङ्गाद्विनियोगः। इतरपदार्थानां त्वैतत्पदैकवाक्यतया निर्वापे विनियोग इति, वाक्यादेव तत्र विनियोग इत्यर्थः।

प्रकरणविनियोगमुदाहरति—प्रकरणविनियोगस्त्विति। प्रयाजादीनामारादुपकारिणामित्यर्थः। इति कर्तव्यताकाङ्क्षा इति। इति शब्दः—प्रकारवचनः। कर्तव्यता—क्रिया। क्रियायाः प्रकाराकाङ्क्षा इति यावत्। भाव्यस्यापूर्वस्येतिकर्तव्यताकाङ्क्षेति प्राभाकरा वदन्ति। तन्निराकर्तुं जिज्ञासामुत्पादयति—कस्य पुनरिति। भाष्यकारोक्तमेवार्थं सोपस्कारं प्रतिपादयितुमुपक्रमते—भावना हीत्यादिना। तत्सिद्ध्यर्थमिति। केनैतत्साधयेदित्येवमित्यर्थः। ततः कथमिति। अनेन यागेन कथं फलं साधयेत्। कस्मिन् प्रकारे सत्यस्मात् यागात् फलं सिध्यतीत्येवमित्यर्थः। ननु यदि भावनाया एवेतिकर्तव्यताकाङ्क्षा, तर्हि तयैवाङ्गानामन्वयात् सैव तेषां प्रयोजिका स्यात्। ततश्च भाव्यरूपापूर्वप्रयुक्तान्यङ्गानीति मीमांसकानां व्यवहारः कथमित्यत आह—तेनेति। न हि भावना स्वरूपेणेतिकर्तव्यतामाकाङ्क्षते। किं तु भाव्यकरणसंबन्धात्। तथा च पश्चात् करणान्वयात् भाव्यसिद्धिः कथमिति प्रकारमाकाङ्क्षते। ततश्च भाव्यस्य प्रयोजनत्वात् तत्प्रयुक्तत्वमङ्गानामुपपद्यते। भावनाया एवाकाङ्क्षोदयात्तदन्वयश्चाङ्गानामुपपद्यत

सम्बध्यमानमितिकर्त्तव्यताजातं भाव्यप्रयुक्तमुच्यते। न तु स्वरूपेण भाव्यमितिकर्त्तव्यतया सम्बन्धुमर्हति। न हि भवत्यपूर्वं कथमिति। भवति तु भावयेत्कथमिति।

ननु च 'स्वर्गं भावयेदिति ब्रूमः' 'भावना च फलस्योच्यत' इत्येवमादिभिस्तत्र तत्र भाष्यकारेण फलस्य भाव्यत्वाभिधानात् भाव्यप्रयुक्तमितिकर्त्तव्यताजातं फलप्रयुक्तं स्यान्नापूर्वप्रयुक्तम्। उच्यते। सत्यं फलमेव प्रथमं भाव्यतया सम्बध्यते। तत्तु कालान्तरभावित्वात्क्षणभङ्गुरेण यागेन साक्षान्न भावयितुं शक्यत इत्यपूर्वद्वारेणेत्युपबध्यते–यागेनापूर्वं कृत्वा स्वर्गं कुर्यादिति। न चैतावता यागस्य करणत्वहानिः। 'तुषपक्का भवन्ति' इतिवदुपपत्तेरिति सप्तमाद्ये भाष्यकारेणैवोक्तम्। एवं चापूर्वे कृते तत एव फलं सिद्ध्यतीत्यवधारणात्फलकर्त्तव्यताऽपूर्वे संक्रामतीतिकर्त्तव्यतामपेक्षते–कथमनेन यागेनापूर्वं कर्तव्यमिति। तत्रेत्थंभावेन प्रयाजादयः सम्बध्यन्ते। तेन भाव्यप्रयुक्तमप्यान्तरालिकभाव्येऽपूर्वे वाङ्नियमवद्दीक्षणीयापूर्वे पर्यवस्यति। एतच्चोपरिष्टाद्विस्पष्टं वक्ष्यामः।

तेनापूर्वभावनया प्रयाजादयः सम्बध्यन्ते। प्रयाजभावना हि भाव्यमपेक्षते। फलभावना चेत्थंभावम्। अतस्तयोराकाङ्क्षासन्निधि-योग्यत्वैरेकवाक्यता।

---

इत्यर्थः। यस्तु भाव्यस्यापूर्वस्यैवेतिकर्तव्यताकाङ्क्षामाह तत्रापि न तस्य स्वरूपेणेतिकर्तव्यतापेक्षा। किंतु भावनोपरक्तत्वेपेण। ततश्च प्राप्ताप्राप्तविवेकेन भावनाया एवाकाङ्क्षेति, तेनाप्यङ्गीकृतं भवतीत्यर्थः। नत्विति। स्वरूपेण- भावनानुपरक्तवेपेण। तदेवाह–नहीति। भावनायास्तु तदाकाङ्क्षोपपद्यत इत्याह–भवति त्विति।

ननु सिध्यतु नाम भावनान्वयेऽपि भाव्यप्रयुक्तत्वमङ्गानाम्। तथापि फलस्यैव भाव्यत्वात् तत्प्रयुक्ततैव तेषां, नापूर्वप्रयुक्तता। ततश्चापूर्वप्रयुक्तान्यङ्गानीति मीमांसकप्रसिद्धिविरोधस्तदवस्थ एवेति शङ्कते—नन्विति। सत्यं भावना प्रथमं फलमेव भाव्यमवलम्बते। तदा तु नेतिकर्तव्यतामपेक्षते। किं तु करणान्वयोत्तरकालम्। तदन्वयश्चापूर्वकल्पनामन्तरेण न सिध्यतीति कल्पितेऽपूर्वे तदेव तस्या भाव्यमवतिष्ठते। पश्चादितिकर्तव्यताकाङ्क्षायामङ्गानामन्वयात्तदानीमपूर्वस्यैव भाव्यत्वात् तत्प्रयुक्तत्वमेव तेषां सिध्यतीति परिहरति—उच्यत इति। उपलभ्यते–अवगम्यते। नन्वपूर्वव्यवधाने यागस्य फलं प्रति करणत्वं न स्यादित्याशङ्क्य, तस्यावान्तरव्यापारतयैव कल्पनात् न व्यवधायकत्वमिति परिहरति—न चेति। तुषपक्का भवन्तीति। तुषाणां पाकसाधनत्वं ज्वालाव्यवधानेनेत्यर्थः। फलकर्तव्यता–फलभावना। अपूर्वसंक्रान्ता–अपूर्वेऽवतीर्णा। नन्वङ्गानामपूर्वभावनान्वयेऽप्यपूर्वस्यापि फलार्थत्वेन फलस्यैव परमप्रयोजनत्वात् तत्प्रयुक्तत्वमेवाङ्गानां स्यादित्यत्राह—तेनेति। यद्यस्य साक्षात् प्रयोजनं, तदेव तस्य प्रयोजकमाश्रयितुं युक्तम्। तस्य यदि प्रयोजकत्वं न युज्यते, तदा व्यवहितमपि प्रयोजनं प्रयोजकं स्यात्। यथा आरादुपकारिदीक्षणीयादिशेषभूतानां वाङ्नियमादीनां संनिहितदीक्षणीयाद्यपूर्वमेव प्रयोजकम्, नतु व्यवहितं प्रधानापूर्वम्। यथा च व्रीह्यादिद्रव्याङ्गानामवहननादीनां, तच्छेषभूतानामुलूखलमुसलादीनां च प्रति संनिहितशेषिणां व्रीह्यादीनाम्, अवहननादीनां च प्रयोजकत्वानुपपत्त्या व्यवहितं प्रधानोत्पत्त्यपूर्वमेव तेषां प्रयोजकम्। एवं च संनिहितस्यापूर्वस्यैवाङ्गप्रयोजकत्वोपपत्तौ न व्यवहितं फलं तत्प्रयोजकमाश्रयणीयमिति भावः। फलितं दर्शयति—तेनेति। भावनाया एवेतिकर्तव्यताकाङ्क्षित्वात्, तस्या एव तदन्वयो युक्त इत्यर्थः।

प्रयाजभावनोपेता दर्शपूर्णमासभावनाऽपूर्वं साधयतीति । तेन विशिष्टस्य साधनत्वं विशेषणेनोपकारजनने घटते नान्यथेति विशेषणस्य प्रयाजस्योपकारकत्वं कल्प्यते । तत्रापि च करणोपकारकत्वेनैव तदुपकारकत्वं सम्भवतीति, करणोपकारकत्वं भावनाङ्गत्वेनावगतानां प्रयाजादीनां तादर्थ्यनिर्वाहाय पश्चात्कल्प्यते ।

आह च—"एकभावनयोपेतास्त्रयोऽप्यंशाः परस्परम् ।
उपकार्योपकारित्वं पश्चादनुभवन्ति ते ॥" ( श्लो. वा. ७.२६५ ) इति ॥

एवं चोभयोरप्याकाङ्क्षोपरमः ।

---

संप्रत्यपूर्वभावना-प्रयाजभावनयोरन्योन्यान्वयप्रकारमाह—प्रयाजभावनेति । तयोः—तत्प्रतिपादकवाक्ययोः । एकवाक्यतेति । प्रयाजादिभिः फलभावनां भावयेदित्येवंरूपेणेत्यर्थः । सा चेति । प्रयाजादिभावनां प्रति भाव्यत्वेनान्विताया: फलभावनाया भाव्यत्वं न स्वरूपेण संभवति । किंतु प्रयाजादीनां तदाकाङ्क्षितोपकारसंपादकतया तद्विशिष्टवेषेण । ततश्च प्रयाजादीनां फलभावनायां प्रथमं शेषशेषिभावेनान्वयः । तन्निर्वाहाय पश्चादुपकार्योपकारकभावेनेत्यर्थः ।

तत्राचार्यसंमतिमाह—एकेति । भावनां प्रति शेषित्वेन भाव्यांशस्य, करणेतिकर्तव्यतांशयोश्च तां प्रत्येव शेषत्वेन प्रथममन्वये सति, पश्चात् करणस्य भाव्यशेषतयाऽन्वयः इतिकर्तव्यतायाश्च करणशेषतयाऽन्वयो भावनाद्वारा भवति इति, ततोऽपि पश्चादितिकर्तव्यतायाः

---

१. ऊहनिरूपणे बाधनिरूपणे हेतुहेतुमद्भावरूपा संगतिरिति प्राभाकराः मन्यन्ते । तेषामयमाशयः । तथाहि—अवघातादेर्विकृत्यपूर्वतादर्थ्ये सति प्राकृतस्थानपतिते कृष्णलादौ तच्चिकीर्षायां द्रव्यान्तरेऽनुष्ठेयत्वेन प्रयोगविकारात्मके ऊहे निश्चिते, पश्चात् द्वार चिन्तायां द्वारलोपरूपप्रयोजनाभावस्यावतारो, भवति, ततो बाध इति तन्मतमर्यादा । एवञ्चोहस्य साक्षात् बाधहेतुत्वाभावेऽपि बाधहेतुभूतद्वारलोपद्वारा हेतुत्वम् । अपि च नार्षेयं वृणीते, न तौ पशौकरोतीत्यादिनिषेधस्थले, शरमयं बर्हिर्भवतीति प्रत्याम्नानस्थलेऽपि बाधोऽस्ति, परं द्वारलोपस्थल एवास्य हेतुत्वमुक्तम्, न तु प्रतिषेधादिस्थले इति बोध्यम् । इदञ्च प्राभाकरमीमांसकानां संगतिवर्णनं न साधु । ऊह-बाधयोः विषयभेदेन परस्परवार्तानभिज्ञतया हेतुहेतुमद्भावो नोपपद्यत इति मत्वानः पार्थसारथिमिश्रोऽवसरसंगति वर्णयांबभूव । ऊहबाधयोः हेतुहेतुमद्भावाभावेऽपि उभयोरतिदिष्टपदार्थविषयकत्वेनोहस्य पदार्थप्राप्तिरूपत्वेन प्रत्यासन्नत्वेनान्तरंगतासमस्ति । तया च जिज्ञासितत्वमुपपद्यते । तदनन्तरं पदार्थनिवृत्तिरूपस्य बाधस्य निरूपणं संगच्छते । अत एवोक्तमभियुक्तैः —

रूपान्तरत्वादासन्नं नवमे स्थितमूहनं इति । उपकारः—प्रकारः ।

अत्रेयं विषयपरिशुद्धिः—प्राभाकरमीमांसकाः मन्यन्ते परमोपकारएवातिदिश्यते, तस्यैव फलजननसामर्थ्योद्बोधरूपतया प्रथममपेक्षितत्वात् । तस्य च जनकापेक्षायां पदार्था अपि पृथगतिदिश्यन्ते न त्ववान्तरोपकारमुखेन, पदार्थातिदेशः । तेनावघातादेस्तुषविमोकलक्षणावान्तरोपकाराभावेऽपि, सन्निपत्योपकारसद्भावात् पृथक् पदार्थातिदेशेनावहननादेस्तदर्थतया बोधनादेवास्त्येव कृष्णलचरावङ्गत्वम्, द्वारलोपात् अनुष्ठानं परं बाध्यते, न तु तद्वर्जमनिर्देशः—इति ।

ननु प्रयाजभावना भाव्यमपेक्षते। फलभावना च करणोपकारमित्याकाङ्क्षावशात् प्रथममेव प्रयाजभावना करणोपकारेणैव सम्बध्यते। न तु तादर्थ्येनैव क्रतुना। तेन प्रकरणमुपकार्योपकारकभावे प्रमाणं, न तु तादर्थ्ये इति।

वालिशभाषितमेतत्। न ह्याकाङ्क्षा स्वयमेव प्रमाणम्। शब्दस्तु प्रमाणम्। आकाङ्क्षया त्वेतावद्भवति—नायं शब्दो निरपेक्षः। किं तु अन्येन सहैव पर्यवस्यतीति। तत्र यद्यन्यो योग्यः सन्निहितो भवति ततस्तेनैव सहैकवाक्यभावं भजते। अथ न सन्निहितः, ततोऽध्याहृत्य योग्यं तेन सह पर्यवस्यति। तदिह 'समिधो यजति' इत्यस्य साकाङ्क्षस्य सन्निधौ न क्रतूपकारः सन्निहितः। तच्छब्दस्याश्रवणात्। तत्र यदि दर्शपूर्णमासाभ्यां श्रुताभ्यामेकवाक्यतायां नाकाङ्क्षा पर्य्यवस्येत्, ततोऽध्याहृत्यापि यागो-

---

करणद्वारा भाव्यरूपापूर्वशेषतयाऽन्वयः। ततस्तेषामंशानां शेषशेषिभावेनान्वयनिर्वाहाय परस्परमुपकार्योपकारकभावेनान्वयः। तत्र भावनान्वय एव शाब्दः। इतरावशाब्दावित्यर्थः।

नन्वितिकर्तव्यता नाम भावनायाः प्रकारः। करणस्य फलाभिमुखीकरणरूपोऽनुग्रहः करणोपकार इति मीमांसकैरभिधीयते। तस्याकाङ्क्षा—इतिकर्तव्यताकाङ्क्षा। ततश्च फलभावनाया उपकारसंपादनमेवापेक्षितमिति, तस्यैव प्रयाजादिभावनाभाव्यतयाऽन्वयः स्यात्, न फलभावनायाः। तत्संपादनस्यानाकाङ्क्षितत्वात्। ततश्च फलभावनायाः प्रयाजादीनां चान्योन्याकाङ्क्षालक्षणेन प्रकरणेनोपकार्योपकारकभाव एव लभ्यते। न तु शेषशेषिभाव इति शङ्कते—नन्विति। परिहरति—वालिशेति। प्रथममपेक्षितस्याप्युपकारस्य न प्रयाजादिभिरन्वयः, किं तु फलभावनाया एवेति वक्तुं सामान्यन्यायमाह—नहीत्यादिना तेन सह पर्यवस्यतीत्यन्तेन।

स्वयमेवेति। अन्वयं बोधयतां पदानामाकाङ्क्षासंनिधि-योग्यत्वादिसहायमात्रमित्यर्थः। आकाङ्क्षायाः साहाय्यप्रकारमेवाह—आकाङ्क्षयेति। ततः किं तत्राह—यदीति। अध्याहृत्येति। आकाङ्क्षावशात् योग्यार्थप्रतिपादकं शब्दमध्याहृत्य, तेनैकवाक्यत्वं संभवतीत्यर्थः।

---

२—एकवाक्यतेति—प्रयाजादिभिः फलभावनोपकारं भावयेदिति वाक्यार्थः निष्पद्यते, न च तस्याः स्वरूपेण प्रयाजादिभावनां प्रति भाव्यत्वं सम्भवति, अपि तु प्रयाजादीनां तदाकाङ्क्षितोपकारसंपादकतया तद्विशिष्टवेषेण। ततश्च प्रयाजादीनां फलभावनायां प्रथमं शेषिशेषभावेनान्वयो भवति। ततस्तन्निर्वाहाय पश्चादुपकार्योपकारकभावेनान्वयस्तु सामर्थ्यादेव सिद्ध्यतीति। एवञ्चोपकारापेक्षालक्षणं प्रकरणं शेषशेषिभावप्रतिपादकं वाक्यं कल्पयतीति।

३—अत एवेति—प्रकृतौ प्रयाजादीनाम्, फलभावनायाश्च शेषशेषिभावेनान्वयस्य शाब्दत्वात्, स्वरूपेण विशरारूणां प्रयाजादीनामन्वयासम्भवात् पश्चात्तज्जन्योपकारः कल्प्यत इति स्थितिः। प्रकृतौ विनियुक्तेष्वंगेषु, कल्पिते चोपकारे सत्युभयोः क्लृप्तत्वाविशेषात् सौर्यादिविकृतिभावना साक्षादाकाङ्क्षितेनोपकारेणैव प्रथममन्वेति, पश्चात्तज्जनकैः पदार्थैश्शेषशेषिभावेन संबध्यत इति, विकृतावुपकारान्वयपूर्वकः पदार्थान्वय इति भाट्टमीमांसकमर्यादा।

उभयाकाङ्क्षा प्रकरणमिति मूलम्। फलाकाक्षाविशिष्टकथंभावाकाङ्क्षेत्यर्थः। वैशिष्टयञ्च स्वाश्रयभावनासन्निहितभावनाश्रितत्वसम्बन्धेन, एवञ्च प्रयाजादीनां दर्शपूर्णमासांगत्वमिति बोध्यम्।

पकारेण स्यादेकवाक्यता। यथोक्तेन तु मार्गेण दर्शपूर्णमासैकवाक्यतायामाकाङ्क्षापर्य्यवसानमुभयोर्भवति। अपेक्षितोऽपि प्रथममुपकारो न केनचिदपि समर्पितः, येन प्रयाजवाक्येनैकवाक्यतां यायात्। तेन दर्शपूर्णमासप्रयाजवाक्ययोरेकवाक्यतायां गुणप्रधानभावेन निष्पन्नायां पश्चादपेक्षितोपकारनिर्वृत्तिः।

आह च—'दर्शपूर्णमासयोरुपकारमपेक्षमाणयोः प्रयाजादिषु चोपकार्यमपेक्षमाणेष्वनिष्पन्नावस्थ एवोपकारे प्रकरणात्तादर्थ्यं प्रतीयते। तदन्यथानुपपत्तेः करणोपकारः कल्प्यते। तेनोपकारापेक्षामात्रमिह तादर्थ्यप्रमाणानुमाने व्याप्रियते। नोपकारादेव शेषित्वं तादर्थ्यं वा' (तन्त्र. वा. ३.१.२) इति। अत एव पदार्थपूर्वकः प्रकृतावुपकार इति तन्त्रज्ञाः। विनियुक्तेषु पदार्थेषु, कल्पिते चोपकारे, विकृतिरपेक्षा-

---

अस्तु न्याय एवम्। प्रकृते कथम्? तत्राह—तदिहेति। प्रयाजभावनायाः समीहितं यत्किंचित् भाव्यमपेक्षितम् तच्च शब्दोपस्थितत्वेन संनिहितत्वात् योग्यत्वाच्च फलभावनैव भवति, नोपकारः। तस्याशाब्दत्वेनासंनिहितत्वात्। नचाध्याहारेण तत्सन्निधिः। शब्देनैवाकाङ्क्षानिवृत्तौ तदध्याहारायोगात्। शाब्देनैवाकाङ्क्षोपशमनक्रमस्य चोपपादितत्वादित्यर्थः।

ननु यद्यपि प्रयाजादिभावनया न स्वरूपेणोपकारोऽपेक्षितः, तथापि फलभावनया तस्यापेक्षितत्वात तेनैव प्रयाजादीनामन्वयः स्यादित्याशङ्क्य, तत्राप्युक्त एव परिहारो द्रष्टव्य इत्याह—अपेक्षितोऽपीति। फलभावनयेति शेषः। अतः प्रथममुपकारस्याकाङ्क्षितत्वेऽपि अन्योन्याकाङ्क्षालक्षणात् प्रकरणाच्छेषशेषिभावेनैवान्वयः। उपकार्योपकारकभावेनान्वयस्तु पश्चात् सामर्थ्यादेव सिध्यतीति, न तत्र प्रकरणव्यापार इति निगमयति—तेनेति।

उक्तेऽर्थे आचार्यसंमतिमाह—आह चेति। उपकार्यं—भाव्यम्। अनिष्पन्नावस्थ एवोपकार इति। उपकारोपस्थापकशब्दाभावेन तस्मिन्नप्रतीत एवेत्यर्थः। तादर्थ्यं—शेषशेषिभावः। तदन्यथानुपपत्तेरिति। अकिंचित्कुर्वतः शेषत्वानुपपत्तेः, अकिंचित्कार्यस्य च शेषित्वानुपपत्तेः शेषशेषिभावसिध्यर्थम् उपकारः पश्चात् कल्प्यत इत्यर्थः। उपकारापेक्षेति—उपकारापेक्षालक्षणं प्रकरणं शेषशेषिभावप्रतिपादकं वाक्यमनुमापयतीत्यर्थः। मात्रचात्रोपकारो व्यावर्त्यते। नोपकारादेवेति। उपकारे कल्पिते पश्चान्न तन्मूलः शेषशेषिभाव इत्यर्थः।

तादर्थ्यं—शेषत्वम्। यतः प्रथमं शाब्दत्वात् शेषशेषिभावेनान्वये सति, पश्चादुपकारकल्पनमत एतदपि सिद्धमित्याह—अत एवेति। विकृतौ तु नैवमित्याह—विनियुक्तेष्विति।

---

४—अत्रेदं बोध्यम्—शास्त्रदीपिकायाम्, तदनुसारिणि न्यायप्रकाशे, अर्थसंग्रहे च वाक्यप्रकरणयोर्विरोधस्योदाहरणं सूक्तवाकमन्त्राः। इष्टदेवतास्मारका मन्त्रास्सूक्तवाक्यपदेन व्यपदिश्यन्ते।

'बिन्दौ च समुदाये च तोयशब्दो यथेष्यते।
संसर्गिद्रव्यशब्दत्वात् सूक्तवादपदं यथा'॥

इत्यादिवार्तिकम्। पूर्वमुत्तरश्च तन्त्रपदानि, मध्ये यथाविकृति देवतावाचकपदोच्चारणेन सूक्तवाक्संपद्यते, सूक्तवाकपदस्य यौगिकत्वात्। विशेषस्तु वार्तिके ३-२-७-८ द्रष्टव्यः।

अग्नीषोमाविदं हविरजुषेतामि'त्यादौ अग्नीषोमयोर्लिंगात्पौर्णमाङ्गत्वे सिद्धे तदेकवाक्यतयोपात्ताना'मिदंहविरजुषेतामि'त्यादेः पौर्णमास्यंगत्वम्, न तु प्रकरणाद्दर्शपूर्णमासांगत्वमिति,

वशात्प्रथममुपकारमेव गृह्णातीति, तत्रोपकारपूर्वकत्वम्। तदेवं प्रकरणं प्रयाजादीनां विनियोजकम्।

## अवान्तरप्रकरण–महाप्रकरणभेदेन द्वैविध्यकथनम्।

तच्च द्विविधम्-महाप्रकरणम् अवान्तरप्रकरणञ्चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्। तदन्तराले यदङ्गभावनायाः प्रकरणम्, तदवान्तरप्रकरणम्। तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम्। भवति ह्यङ्गभावनानामप्यवान्तरापूर्वसिद्ध्यर्थं कथंभावाकाङ्क्षा। अन्यथा वाङ्नियमस्य दीक्षणीयापूर्वप्रयुक्तिर्न स्यात्।

---

प्रकृतावङ्गेषु विनियुक्तेषु उपकारे च कल्पिते सति उभयोः क्लृप्तत्वाविशेषात् वैकृतभावना साक्षादाकाङ्क्षितेनोपकारेणैव प्रथममन्वेति। पश्चात् तज्जनकैः पदार्थैः शेषशेषिभावेनान्वेतीति, तत्रोपकारान्वयपूर्वकः पदार्थान्वय इत्यर्थः। प्रकरणविनियोगमुपसंहरति–तदेवमिति।

विभजते तच्चेति। उभयोः स्वरूपं क्रमेणाह–तत्रेति। तदन्तराले–महाप्रकरणमध्ये। अवान्तरप्रकरणमुदाहरति–तच्चेति। 'अभिक्रामं जुहोति' तै सं २-६-१। इति प्रयाजसन्निधौ विहितानामभिक्रमणादीनामित्यर्थः। ननु इतिकर्तव्यताकाङ्क्षा खलु प्रकरणम्। सा तु साक्षात् पुरुषार्थगोचरतया फलभावनाया एव। नत्वङ्गभावनानामस्ति। अतः कथमवान्तरप्रकरणसम्भावनमित्यत्राह–अङ्गेति। प्रयाजादिभावनानां प्रथमं फलभावनायां भाव्यत्वेनान्वये सति, तस्याः स्वरूपेण भाव्यत्वानुपपत्त्या महोपकारे कल्पिते तस्यापि साक्षात् भाव्यत्वानुपपत्त्या प्रातिस्विकापूर्वेषु कल्पितेषु तान्येव भाव्यत्वेनावतिष्ठन्ते। तेषां चानिर्ज्ञातप्रकारतया तद्भावनायाः प्रधानापूर्वभावनाया इवेतिकर्तव्यताकाङ्क्षाऽङ्गीकार्येति भावः। कथमङ्गीकार्यत्याशङ्क्य यद्यङ्गापूर्वं स्वसिद्ध्यर्थमितिकर्तव्यतां नापेक्षते, तर्हि क्वचिदप्यङ्गापूर्वाणां स्वाङ्गप्रयोजकत्वं न स्यात्। यस्य हि प्रयोजकस्य स्वसिद्ध्यर्थं यन्नापेक्षितं, तस्य तदनुष्ठापकत्वायोगात् इत्याह–अन्यथेति।

---

एव'मिन्द्राग्नी इदं हविरजुषेतामि' त्यत्रापि इन्द्राग्नीपदस्यापि लिगांद्दर्शांगत्वे सिद्धे तदेकवाक्यतयोपात्तानामिदंहविरित्यादीनां वाक्यात् पौर्णमास्यंगत्वम्, न तु प्रकारणाद्दर्शपूर्णमासाङ्गत्वमिति प्रतिपादितम्।

अत्राचार्यखण्डदेव इत्थमाचिक्षेप तस्यायमाशयः। तथाहि—प्रकरणम् कियाया एव निनियोजकम्। न तु सिद्धस्य द्रव्यादेः, सूक्तवाकमन्त्रस्य सिद्धरूपस्य कथं प्रकरणेन विनियोग इति शंका, तत्रेदं समाधानं वोध्यम्। सिद्धरूपस्य मन्त्रस्य प्रकरणं विनियोजकं न भवति, क्रियायां एव प्रकरणेन विनियोगात्। तथापि प्रकरणादपकृष्टं स्थानाच्चोत्कृष्टमधिकाराख्यं प्रकरणमपूर्वसाधनतालक्षणातात्पर्यग्राहकमङ्गीकरणीयम्। तदभिप्रायेण भाष्य-वार्तिक-शास्त्रदीपिकादिग्रन्थानां प्रवृत्तिः। अत उदाहरणान्तरं देयम् यथा 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति इति, अत्र वाक्यात् वैमृधस्य पौर्णमास्यङ्गत्वमेव, न तु प्रकरणाद्दर्शपूर्णमासांगत्वमिति, यत्तु मन्त्राणां प्रकरणग्राह्यत्वं नास्तीत्युक्तम्, तत् जपमन्त्रादिविषयमिति ध्येयम्।

अत्रेदमवधेयम्। तथाहि ग्रन्थकारस्तु भावार्थापरपर्यायाणां क्रियाणामेव प्रकरणं विनियोजकं भवति, न तु सिद्धानां द्रव्य-गुणादीनाम्। सन्निपत्योपकारकाणाम् श्रुत्यादिभिरेव विनियोगः, प्रकरणन्तु सहायमात्रम्। वाक्योपकल्पितस्यावान्तरव्यापारस्य सत्त्वे तु क्रियाद्वारेण

## अवान्तरप्रकरणविनियोज्यांगाभावादेवावान्तरप्रकरणम् नास्तीति प्राभाकरमतेन शंका।

कश्चित्त्वाह–नावान्तरप्रकरणं नाम प्रमाणं सम्भवति, प्रमेयासम्भवात्। प्रतिलब्धभाव्यसम्बन्धा हि भावना कथंभावमपेक्षते। तत्र यावदेकाऽङ्गभावना प्रयोजनापेक्षा प्रकरणेन फलभावनाङ्गं भवति, तावदितराऽपि प्रधानभावनयैव सम्बध्यत इति, सर्वेषां प्रधानभावनान्वितानां नान्योन्याङ्गाङ्गिभावः सम्भवतीति, नावान्तर-प्रकरणविनियोज्याङ्गसम्भवः। अभिक्रमणन्तु वाक्येनैव प्रयाजादिषु विधीयत इति, तदङ्गम्, नावान्तरप्रकरणात्—इति।

## न्यायविरोधेन, वार्तिकविरोधेन च तन्निरासः।

स नूनं वार्तिके—

'परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यते'॥ तं. वा. पृ. ७४१ इति॥

इत्यस्मिन्नश्रुतपूर्वी। यत्र ह्यङ्गोद्देशेनैव श्रुत्यादिभिः किंचिद्विनियुज्यते, तत्रावश्यमङ्गस्य कथंभावापेक्षोत्थापयितव्या। सा च यदि परस्तादपि किं चित्तदुद्देशेनैव

---

अवान्तरप्रकरणविनियोज्याङ्गासंभवादेव न तद्विनियोगप्रमाणमिति कश्चिदेकदेशी वदति। तन्मतमनुवदति दूषयितुम्–कश्चित्त्विति। प्रमेयासंभवमेवोपपादयति प्रतिलब्धेति। अङ्ग-भावनानां न प्रधानभावनान्वयात् पूर्वं कथमाकाङ्क्षा। तदानीं भाव्यान्वयस्यैवानिर्वाहात्। तदन्वयोत्तरकालत्वाच्चेतिकर्तव्यताकाङ्क्षायाः। प्रधानान्वयश्च प्रकरणस्याविशेषात् युगपदेव महाप्रकरणस्थानां सर्वेषामप्यङ्गानां भवतीति, न किंचिदनन्वितमवशिष्यते। पश्चात्तु अङ्ग-भावनानां कथमाकाङ्क्षासंभवेऽपि प्रधानान्वितस्य कस्याप्यसंभवात् न विनियोगोपपत्तिरिति, नावान्तरप्रकरणं युक्तमित्यर्थः। किं तर्हि अभिक्रमणस्य प्रयाजेषु विनियोजकम्? तत्राह–अभिक्रमणमिति। संनिहितप्रयाजहोमस्यैवानुवादादिति भावः।

तन्मतं न्यायविरोधेन, वार्तिकविरोधेन च दूषयति–स हि नूनमिति। परप्रकरण-स्थानां–महाप्रकरणस्थानां प्रयाजादीनाम् अङ्गे। त्रिभिः–श्रुतिलिङ्गवाक्यैः। श्रुते–विनियुक्ते। तैरेव–श्रुत्यादिभिरेव। पुनश्चाङ्गान्तरे विनियुक्ते। संदंशेन–विनियुक्ताङ्गसंदष्टत्वेन। तत् मध्यस्थितमसंयुक्तम्। इष्यते–तदङ्गत्वेनेष्यत इत्यर्थः। वार्तिकं व्याचष्टे–यत्र हीति। उत्थाप-यितव्येति। यद्यप्यङ्गभावनानामवान्तरापूर्वसिद्ध्यर्थं स्वारसिक्येवाकाङ्क्षोपपादिता, तथापि

---

सिद्धानामपि द्रव्यादीनां परम्परया विनियोगः भवतीत्याह। अयमर्थो मूलेनैव निगदव्याख्यातः, एतेन यद्यपि श्रुत्यादिभिर्मन्त्राणां यथायथं विनियोगो युज्यते, तथापि पृथगाम्नानेन पृथगुत्पत्तिसं-भवात्, अविरोधाच्च प्रकरणेनापि ग्रहणं युज्यत इति नायकरत्नं व्याख्यातम्–इति बोध्यम्।

५—प्रमेयप्रतिपत्तये प्रमाणमास्थीयते प्रामाणिकैः, अवान्तरप्रकरणविनियोज्यस्यांगस्या-भावात्, अवान्तरप्रकरणं नाम विनियोजकं प्रमाणं नाङ्गीकर्तव्यम्, तत्कार्यञ्च वाक्येन संपद्यते, एवञ्चाभिक्रमणस्य वाक्येनैव प्रयाजहोमाङ्गत्वसिद्धेः, नावान्तरप्रकरणं नाम प्रमाणमेषितव्यमिति। अयं भावः-'समिधो यजती' त्यादिना विहितानां प्रयाजाद्यंगभावनानां प्रधानभावनान्वयात् पूर्वं न

विधीयते, तावदनुवर्तत एव। तयोः संयुक्तयोरङ्गयोर्मध्ये यदङ्गमसंयुक्तं विहितम्, तत्तदाकाङ्क्षानुवृत्तेः सन्निधिविशेषाच्च तेनैव सम्बध्यते। योऽप्यङ्गापूर्वाणामननुष्ठेयत्वान्न स्वारसिकीं कथंभावाकाङ्क्षामिच्छति, तेनापि कारणान्तरसमुत्था साऽभ्युपेतव्यैव। अन्यथा दीक्षणीयादिष्वतिदेशानवकल्पनात्।

---

यस्तु तां नेच्छति, तेनापि श्रुतान्वयसिद्धयर्थमुत्थापिताकाङ्क्षाऽङ्गीकार्येत्यर्थः। संनिधिविशेषादिति। संयुक्ताङ्गमध्ये संनिधानात्। अयं तु स्वस्मिन्नपि तदाकाङ्क्षनुवृत्तौ हेतुः। संबध्यत इति। श्रुत्यादिभिरविनियोगादस्य चाकाङ्क्षानुवृत्तेराकाङ्क्षालक्षणेन प्रकरणेनैव विनियुज्यत इत्यर्थः।

एतादृशस्थलेऽवान्तरप्रकरणनैव विनियोगः प्राभाकरेणाप्यवश्यमङ्गीकार्यं इत्याह—योऽपीति। प्रधानापूर्वमेव सनियोज्यकत्वादनुष्ठेयम्। अङ्गापूर्वं तु तत्सिद्धयर्थं कर्मवत् कार्यमेव नानुष्ठेयम्। अतः तस्येतिकर्तव्यताकाङ्क्षा नास्तीति यो मन्यते इत्यर्थः। श्रुतान्वयानुपपत्यादिकारणान्तरसमुत्थापिताकाङ्क्षानङ्गीकारे दोपमाह—अन्यथेति। ज्योतिष्टोमाङ्गभूतदीक्षणीयापूर्वस्याङ्गापूर्वत्वेनेतिकर्तव्यताकाङ्क्षाविरहादनाकाङ्क्षितत्वेन दार्शपौर्णमासिकेतिकर्तव्यतातिदेशो न स्यादित्यर्थः।

---

कथंभावाकाङ्क्षा जायते, तदात्वे भाव्यान्वयस्यैवानिर्वाहात्। भाव्यान्वयोत्तरकालिकत्वात्कथंभावाकाङ्क्षायाः। महाप्रकरणे पठितानां समेपामङ्गानां प्रधानान्वयो युगपदेव भवति, प्रकरणस्याविशिष्टत्वात्। सर्वेपामन्वयेन न किञ्चिदनन्वितमवशिष्यते, अनन्तरम् अङ्गभावनानां कथंभावाकांक्षासम्भवेऽपि कस्यापि प्रधानानन्वितस्यासंभवात् न विनियोगायाऽवान्तरप्रकरणं स्वीकारमर्हति—इत्यभिप्रायं मनसि निधायाऽऽह-कश्चिदित्यादिना नावान्तरप्रकरणविनियोज्याङ्गासंभव इत्यन्तेन।

६—परप्रकरणस्थानामिति। अस्यायमर्थः-परप्रकरणस्थानाम्-महाप्रकरणस्थानाम् प्रक्रतानुसारेण दर्शपूर्णमासप्रकरणस्थानां प्रयाजादीनामित्यर्थः, अंगे औपभृताज्यसमानयनादिके श्रुत्यादिभिस्त्रिभिः—श्रुति-लिंग-वाक्यैः, ज्ञा ते पूर्वं विहितत्वेन अवगते सति, तैरेव श्रुत्यादिभिरेव पुनश्चांगान्तरसंयुक्ते विहिते सति। तत्-तन्मध्यस्थितमसंयुक्तं तदंगत्वेनेष्यत इत्यर्थः। अत्र वार्तिके यद्यपि पूर्वमिति नास्ति, तथापि पुनश्चेति चशब्दबलात् तल्लभ्यत इति न दोपः। एवञ्च सन्दंशोद्भूतावान्तरप्रकरणेनाभिक्रमणस्य प्रयाजहोमांगत्वमिति। संदंशान्तरभेदास्तु ग्रन्थान्तरादवसेयाः।

७—अत्रेदं बोध्यम्। तृतीयप्रथमैकादशाधिकरणे 'उपव्ययते' इत्यादिना विहितस्योपवीतस्यावान्तरप्रकरणात्सामिधेन्यंगत्वम्, अथवा महाप्रकरणाद्दर्शपूर्णमासांगत्वमिति सन्दिह्य, 'देवेद्धो मन्विद्ध' इत्यादिनिवित्संज्ञकैर्मन्त्रैर्व्यवधानात् प्रकरणाद्दर्शपूर्णमासांगत्वम्, नतु सामिधेन्यंगत्वमिति। एवञ्च यस्यावान्तरप्रकरणमस्ति तस्य पूर्वमपि सामिधेनीधर्मविधानात्, अवान्तरप्रकरणेन न सामिधेन्यंगत्वे प्राप्ते निविन्मन्त्रैर्व्यवधानात् महाप्रकरणेन दर्शपूर्णमासांगत्वमिति निविद्भिः व्यवधानप्रतिपादनं संगच्छते। प्राभाकरमते तु तदभावेन सामिधेनीसन्निधनात् सामिधेयंगत्वे प्राप्ते सत्यामपि सन्निधौ सन्निधि-प्रकरणयोर्विरोधे प्रकरणप्राबल्येनोपवीतस्य दर्शपूर्णमासांगत्वे सिद्धे निविद्भिर्विच्छेदप्रतिपादनपरमिदमधिकरणम् निरर्थकमापद्येत।

## एतादृशस्थलेऽवान्तरप्रकरणं प्राभाकरैरपि स्वीकर्तव्यमिति प्रतिपादनम् ।

तेन प्रयाजाद्युद्देशेन श्रुत्यादिभिः किंचिदङ्गमुक्त्वा, मध्ये किंचिदसंयुक्तम् विधाय, पुनरन्ते प्रयाजाद्युद्देशेनाङ्गे विहिते मध्यस्थस्यासंयुक्तस्याङ्गस्य–अवान्तर-प्रकरणात्प्रयाजाद्यङ्गता भवति ।

## अवान्तरप्रकरणमनंगीकुर्वतः प्राभाकरस्य मते सामिधेन्यधिकरणविरोधापादनम् ।

यस्त्वेतन्न मृष्यति, तस्य सामिधेनीनां निविद्भिर्व्यवधानाभावेन सत्यपि सन्निधाने बलीयसा प्रकरणेनोपवीतस्य प्रधानाङ्गत्वसिद्धेर्निविद्भिः सामिधेनीनां विच्छेदप्रतिपादनमनर्थकं स्यात् ।

---

संदंशस्थलमुदाहरति–तेनेति । दर्शपूर्णमासयोः संनिधौ प्रथमं 'समिधो यजती'त्यादिना प्रयाजान् विधाय 'समानयत उपभृत' इत्यादिना तेषां किंचिदङ्गं विधाय, मध्ये 'अभिक्रामं जुहोति' इति असंयुक्तमभिक्रमण विधाय 'समिधो वह्नीरिव यजति' इत्यादिना केचित् गुणाः प्रयाजोद्देशेन विहिताः । तत्र मध्यस्थस्यासंयुक्तस्याभिक्रमणस्यावान्तरप्रकरणेन प्रयाजशेषतया विनियोग इत्यर्थः ।

अवान्तरप्रकरणमनङ्गीकुर्वतः प्राभाकरस्य सामिधेन्यधिकरणविरोधमाह—यस्त्वेत-दिति । एतत्–अवान्तरप्रकरणम् । दर्शपूर्णमासयोः सामिधेनीर्विधाय तासां 'त्रिः प्रथमामन्वाह' इत्यादिभिः गुणं विधाय ततो 'देवेद्धो मन्विद्ध' इत्यादयो निविदो नाम मन्त्रा विहिताः । तत 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इत्युपव्यानं विहितम् । तत 'अन्तरानूच्यं सदेवत्वाय' इति पुनः सामिधेनीधर्मा विहिता । अत्र सामिधीनीनां निविदाञ्च अग्निसमिन्धनार्थत्वात् परस्परं नाङ्गाङ्गिभावः ।

अत्र भाष्यकारेण निविद्भिर्व्यवधानात्तूपव्यानस्य सामिधेन्यङ्गत्वं नास्ति । किं तु प्रकरणात् दर्शपूर्णमासाङ्गत्वमेव इत्युक्तम् । अत्र यस्यावान्तरप्रकरणं नाम प्रकरणमस्ति, तस्य पूर्वमपि सामिधेनीधर्मविधानात् उत्तरत्रापि धर्मविधानात् उपव्यानस्य तन्मध्ये विहिततया अवान्तरप्रकरणेन सामिधेन्यङ्गत्वे प्राप्ते निविद्भिर्व्यवधानात् विच्छिन्नं सामिधेनीनां प्रकरणं नोपवीतविधानमनुवर्तते । अतो नोपव्यानस्यावान्तरप्रकरणेन सामिधेनीष्वपि विनियोगः । किं तु महाप्रकरणेन दर्शपूर्णमासशेषतया विनियोग इति निविद्भिर्व्यवधानप्रतिपादनमुपपद्यते ।

---

यद्युच्येत न वयं सन्निधिप्रमाणेनोपवीतस्य सामिधेनीषु विनियोगमाशंक्य तदभाव-प्रतिपादनाय निविद्भिर्विच्छेदकथनमिति ब्रूमः, अपि तु 'उपव्ययत् इत्येकम् पदम् । अत्राख्यातेन उपवीतं साध्यं प्रतीयते । तच्च निर्वर्तकं कर्तारं विना न पर्यवस्यति । अतोऽन्विताभिधानाय कर्ताऽपेक्ष्यते । किञ्चोपव्ययत इति कर्तृप्रयोगत्वात्, वेञोऽकर्मकत्वाच्च कर्त्रपेक्षा जायते । एवञ्चाकांक्षा-योग्यता-सन्निधिरूपान्वयसामग्रीबलात् सन्निहितसामिधेनीकर्त्रा संबध्यते, सामिधेनी-संबन्धविच्छेदाभावे कर्त्रा एकवाक्यत्वादुपवीतं प्रकरणात् बलीयसा वाक्येन सामिधेन्यंगमेव स्यात् । अतस्सामिधेनीसन्निधिविच्छेदप्रतिपादनपरमधिकरणमिदमर्थवदिति ।

## सामिधेन्यधिकरणविरोधस्य प्रकारान्तरेण परिहारेण, ग्राहक-ग्रहणापरपर्यायान्विताभिधानसिद्ध्यर्थमिति कथनम् ।

अथोच्येत-'उपव्ययते' इत्येकपदश्रवणादन्विताभिधानसिद्ध्यर्थमर्थान्तरापेक्षायां सन्निहिताभिः सामिधेनीभिरन्विताभिधानं भवति, सन्निधानाभावे तु गत्यन्तराभावात्प्रकृतेन प्रधानेनान्वयः सम्पद्यते—इति ।

## प्रकारान्तरेणास्तु पदैरन्विताभिधानोपपत्तिरिति तस्य वैयर्थ्यापादनम् ।

तदयुक्तम् । प्रकृति-प्रत्ययार्थयोरेव मिथस्तत्सिद्धेः । प्रत्ययेन हि प्रधानापूर्वमनूद्य तदङ्गत्वेनोपव्यानं विधीयते । तद्धि कर्तृसंस्कारत्वात्प्रधानापूर्वविषयमवघातादिवदनुप्रविशति ।

---

यस्य त्ववान्तरप्रकरणं नास्ति, तस्य सामिधेनीसंनिधानात् सामिधेन्यङ्गत्वे प्राप्ते, निविद्धिर्विच्छेदकथनं संनिध्यभावप्रतिपादनायेति वक्तव्यम् । तत्र सत्यपि संनिधाने संनिधिप्रकरणयोः प्रकरणप्राबल्येनोपव्यानस्य दर्शपूर्णमासाङ्गत्वे सिद्धे विच्छेदप्रतिपादनमनर्थकम् । अतः तन्मतं तदधिकरणविरुद्धमित्यर्थः ।

ननु न वयं स्थानापरनाम्ना संनिधिप्रमाणेनोपव्यानस्य सामिधेनीषु विनियोगमाशङ्क्य तदभावप्रतिपादनाय निविद्भिर्विच्छेदकथनमिति वदामः । किंतु उपव्ययत इत्येकपदत्वादन्विताभिधानसिद्ध्यर्थं प्रतियोग्याकाङ्क्षायां संनिधानात् सामिधेनीभिरन्विताभिधानं भवति । ततश्च वाक्येनोपव्यानस्य सामिधेन्यङ्गत्वमित्याशङ्क्य निविद्भिर्व्यवधानकथनं सामिधेनीभिरन्विताभिधानाभावप्रतिपादनार्थमिति । अतस्तत्सार्थकमित्याशङ्कते—अथेति । गत्यन्तराभावादिति । विशेषात्तत्संनिहितस्यान्वयार्हस्यान्यस्याभावादित्यर्थः ।

दूषयति—तदयुक्तमिति । इत्थं हि स मन्यते—आरादुपकारकवाक्येषु संनिपातिवाक्येषु च ये लिङादिप्रत्ययास्तैः प्रथमं प्रधाननियोगप्रत्यभिज्ञानेन तदनुवादशङ्कया नियोगान्तरं न प्रतिपाद्यते । किं तु तैर्वाक्यैः प्रकृत्यर्थं एव योग्यविशेषणविशिष्ट उपस्थाप्यते । ततश्च प्रधानापूर्वाभिधायको लिङ्शब्द एव तैस्तैः सर्वैरन्वितं स्वार्थमभिधत्ते । इदमेव ग्राहकग्रहणमित्युच्यते । संनिपात्यङ्गवाक्येषु संनिपातिनां साक्षात् परंपरया वा प्रधानापूर्वविषयनिर्वर्तकत्वेन तदनुप्रवेशात् तद्गतैर्लिङादिभिः प्रधानापूर्वमनूद्य तदन्वितः प्रकृत्यर्थोऽभिधीयते । आरादुपकारकाणां तद्विषयानुप्रवेशासंभवेन पश्चान्न तद्वाक्येषु प्रधाननियोगानुवादः । किंतु तत्प्रकृत्यर्थविषयकनियोगान्तराभिधानमिति । एवं चोपव्यानस्यापि संनिपातित्वेन प्रधानापूर्वानुवादेन

---

एवमन्विताभिधानसिद्धये उपर्युक्तदिशाऽधिकरणस्य सार्थक्यवर्णने एतदधिकरणपूर्वपक्षसमर्थनाय त्वदुक्तेन प्रकारेणैवाभिक्रमणस्य प्रयाजकर्त्रान्वयसिद्धेः, तत्साधनाय प्रवृत्तमधिकरणं तत्र व्यर्थं स्यात्, एकं सन्धित्सतः, अपरं प्रच्यवते इति न्यायात् ।

यदुक्त'मुपव्ययते' इत्येकं पदं पर्यवसानाभावादन्यदपेक्षत इति । इदमापातरमणीयम् । नह्येकपदत्वप्रयुक्तमन्यापेक्षत्वम्, अपि त्वन्विताभिधानापर्यवसानप्रयुक्तम् । तच्चेह विद्यते, प्रत्ययार्थेन प्रकृतेरन्विताभिधानसिद्धेः । अपि 'चोपवीतम् मनुष्याणामि'त्येवमादीनि स्तुतिपदानि सन्निहितानि । तैरप्यन्विताभिधानं सिद्ध्यति । अतः सन्दंशवशादवान्तरप्रकरणमेपितव्यमिति।

**भाष्यकारसम्मत्या संदंशस्थलेऽवान्तरप्रकरणं स्वीकार्यमित्युक्ते केन कार्यम्, कथमिदं कार्यमित्याकांक्षायास्समानत्वात् निरधिकारत्वम्, साधिकारत्वञ्चाप्रयोजकमित्यस्योपसंहारः।**

स्तुतिपदानि च 'निवीतं मनुष्याणामि'त्येवमादीनि सन्ति, यैरुपव्यानमन्वितमभिधीयत इति, नान्विताभिधानसिद्ध्यर्थमर्थान्तरापेक्षा। तस्मादङ्गानामपि भवत्येव कथमिति प्रकारविशेषाकाङ्क्षा। तदाह भगवान्भाष्यकारः—'भवति हि सामिधेनीरनुब्रूयात्कथमिति विशेषाकाङ्क्षं वचनमि'ति।

कश्चैष न्यायः—यत्कार्यरूपत्वे सत्यपि निरधिकाराणामपूर्वाणां स्वरसतः कथंभावापेक्षा नास्ति, साधिकाराणान्तु विद्यत इति। कार्यत्वं हि तदपेक्षायां निमित्तम्। साधिकारम्, निरधिकारमिति तु विशेषमात्रम्। तस्मादस्त्येवाङ्गेऽङ्गस्याप्यपेक्षा।

**अंगानां कथंभावाकांक्षायाः स्वारसिकत्वे प्रयाजादिषु सौमिकधर्मातिदेशस्स्यात्, दीक्षणीयादिष्वैष्टिकधर्मातिदेशश्च न स्यादिति शङ्का।**

यद्येवम्, कथं तर्हि प्रयाजादिष्वव्यक्तचोदितेषु सौमिकधर्मानतिदेशः? कथं वा दीक्षणीयादिष्वैष्टिकधर्मातिदेशः। यथा तत्, तथा श्रूयताम्। स्वारसिकी हि निरधिकाराणामाकाङ्क्षा नास्ति, कारणान्तरसमुत्था तु नापोहितुं शक्यते। तत्र दीक्षणीयादिषु प्रयाजादिदर्शनेनेतिकर्तव्यताकाङ्क्षा कल्प्यते, तस्याञ्च सत्यामतिदेशसिद्धिः। प्रयाजादिषु तु न किञ्चिदाकाङ्क्षोत्थापकमस्तीति नातिदेशः—इति।

---

तदन्वितप्रकृत्यर्थाभिधानसिद्धेर्नान्विताभिधानसिद्ध्यर्थमाकाङ्क्षा जायत इति तत्सिद्ध्यर्थं न संनिधिरपेक्ष्यत इत्यर्थः।

प्रकारान्तरेणापि अन्विताभिधानसिद्धिमाह—स्तुतीति। अवान्तरप्रकणोपपादनं निगमयति—तस्मादिति। प्रकारविशेषाकाङ्क्षेति। अतः क्वचित् संदंशस्थले अवान्तरप्रकरणमङ्गीकार्यमिति शेषः। तत्र भाष्यकारसंमतिमाह—तदाहेति। परमतेऽपि प्रधानापूर्वेऽङ्गापूर्वाणामपि स्वारसिकीमितिकर्तव्यताकाङ्क्षामुपपादयति—कश्चैष इति। कार्यत्वं हीति। इदं कार्यमिति प्रतीते केनेदं कार्यमिति करणाकाङ्क्षावत् कथमिदं कार्यमिति इति कर्तव्यताकाङ्क्षापि स्वरसत एव जायत इत्यर्थः।

अङ्गानामपि कथमाकाङ्क्षायाः स्वारसिकत्वे दोषमाशङ्कते—यद्येवमिति। अव्यक्तचोदितत्वं नाम विधिवाक्ये द्रव्यदेवतयोरव्यक्तत्वम्। इष्टिषु पशुषु च सर्वत्र द्रव्यदेवताविशिष्टस्यैव कर्मणो विधानात् नाव्यक्तत्वम्। ततश्च 'उद्भिदा यजेत' 'बलभिदा यजेत' 'विश्वजिता यजेत' इत्यादिषु अव्यक्तद्रव्यदेवतेषु यथा सौमिकधर्मातिदेशः, तद्वत् 'समिधो यजति' 'तनूनपातं यजति' इत्यव्यक्तद्रव्यदेवताकत्वात् सौमिकधर्मातिदेशः स्यादित्यर्थः। अङ्गानां स्वारसिकाकाङ्क्षाङ्गीकारे परेण दोषे शङ्किते, स्वयं तदनङ्गीकारे दोषमाह—कथं चेति। अङ्गातिदेशस्य हि कथमाकाङ्क्षा मूलम्। तदभावे स न सिध्यतीत्यर्थः। स्वारसिकाकाङ्क्षाभावेऽप्युत्थापिताकाङ्क्षासंभवात् दीक्षणीयादिषु अतिदेशसिद्धिमाशङ्कते—यथा तदिति। तदुत्थापकं कारणमाह तत्रेति। दीक्षणीयेष्टिसंनिधौ प्रयाजादयो ह्यनुकीर्तिताः ततश्च तदन्वयसिद्ध्यर्थं तस्याः कथमाकाङ्क्षोत्थापयित-

## एतन्निरासः ।

अत्राभिधीयते । इदमत्र विकल्पनीयम्–किं येन प्रयाजादिनाऽऽकाङ्क्षा कल्प्यते, तेन तदेव प्रति सा कल्प्यते, उत तद्दर्शनादेव तावद्विशेषेणेतिकर्तव्यताकांक्षा कल्प्यत इति । यदि तावत्पूर्वः कल्पः, ततो दैक्षस्य पशोरङ्गत्वेन स्वाभाविकाकाङ्क्षा-विरहिणः प्रयाजादिदर्शनेन दर्शपूर्णमासविध्यन्ताकाङ्क्षैव कल्प्यत इति, न विकृतित्वं सिद्धं कृत्वा तत्प्रकृतिविशेषविचारो घटते । यदा तावत्स्वरूपमात्रमालोच्यते, तदा निराकाङ्क्षत्वान्न प्रकृतिविशेषचिन्ता । यदा तु प्रयाजादिदर्शनेन विकृतित्वं कल्प्यते,

---

व्येत्यर्थः । एवं तर्हि तदुत्थापिताकाङ्क्षयैव प्रयाजादिष्वपि सौमिकधर्मातिदेशः स्यात् । तत्राह–प्रयाजादिष्विति ।

दीक्षणीयादिषु प्रयाजादिदर्शनस्याकाङ्क्षोत्थापकत्वं विकल्प्य दूषयति--अत्रेति । येन प्रयाजादिना दीक्षणीयादेराकाङ्क्षोत्थाप्यते सा यस्य प्रकृतिविशेषस्य दर्शपूर्णमासाख्यस्य प्रयाजादीन्यङ्गानि प्रथममधिगतानि, किं तदेव प्रति तदङ्गविषयैवोत्थाप्यते, अथवा प्रथमं प्रयाजादिना इतिकर्तव्यताकाङ्क्षामात्रे उत्थापिते, पश्चात् न्यायान्तरेण प्रकृतिविशेषनिर्णय इति विकल्पार्थः ।

अत्र प्रथमं पक्षं भाष्यविरोधेन दूषयति–यदि तावदिति । अष्टमे च 'पशौ च लिङ्ग-दर्शनात्' जै. ८-१-१२ इत्यस्मिन् सूत्रे भाष्यकारो ज्योतिष्टोमाङ्गभूतस्याग्नीषोमीयस्य पशोः किं दर्शपूर्णमासप्रकृतिकत्वम्, उत सोमप्रकृतिकत्वमिति विचार्य दर्शपूर्णमासे चाग्नेयोऽष्टाकपालः ऐन्द्रं दधि, ऐन्द्रं पय इत्यादिवत् अत्रापि चाग्नीषोमीयं पशुमालभेतेति द्रव्यदेवताचोदनाया ऐकरूप्यात् दर्शपूर्णमासविकृतित्वमेव तस्य न सोमविकृतित्वमिति प्रतिपादयांचकार । अयं विचारो भवन्मते नोपपद्यते इत्यर्थः । प्रयाजादिदर्शनेनेति । पशुसंनिधावपि 'एकादश प्रयाजान् यजति' श. ब्रा. ३ ६.५.१. इति प्रयाजादयः पठिताः । विध्यन्ताकाङ्क्षा-इतिकर्तव्यताकाङ्क्षा । कथं नोपपद्यत इत्याशङ्क्य, यदा प्रयाजादिदर्शनेनाग्नीषोमीययागस्येतिकर्तव्यताकाङ्क्षोत्थाप्यते, ततः पूर्वमेवायं विचारः प्रवर्तते, ततः पश्चाद्वेति विकल्प्य, आद्ये तु प्रकृतेः सामान्यतोऽप्यप्र-

---

प्रयाजादेरेवाकांक्षाया अभावात्, दीक्षणीयादिषु प्रयाजदर्शनेन इदम् कार्यमिति प्रतीते केनेदमिति करणाकांक्षावत्, कथमिदं कार्यमिति इतिकर्तव्यताकांक्षाऽपि स्वरसत एव समुत्पद्यते । तथा चाव्यक्तचोदितेषु प्रयाजादिषु सौमिकधर्मानतिदेशः । दीक्षणीयादिष्वैष्टिकधर्मातिदेशो युज्यत इति । यतो हि प्रयाजादीनां भवदुक्ताव्यक्तत्वं न । तेषु 'समिधस्समिधोऽग्न आज्यस्य व्यन्तु' इति मन्त्रवर्णेन देवतायाः प्राप्तत्वात् ।

यस्योत्पत्तिवाक्ये देवता नास्ति, तदव्यक्तमित्यपि नोपपद्यते । उपांशुयाजस्य अव्यक्त-त्वापत्तेः । तत्र शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्या–पुरोनुवाक्यादिमन्त्रवर्णेभ्यो देवताप्राप्तिरिति दशमे व्यवस्थापितत्वात् । यस्य तद्धितेन चतुर्थ्या, मन्त्रवर्णेभ्यो देवताऽस्ति, तदभावोऽव्यक्तमित्येव युक्तम् । अतः प्रयाजादीनामव्यक्तत्वाभावात्तत्र सौमिकधर्मतिदेशकथनं कुशकाशावलम्बनमेवेति ध्येयम् । अपि च कालभेदात्, तन्त्रमध्ये विधानाभावाच्च, तन्त्रेण, प्रसंगेन वाऽनुष्ठानासंभवाच्च न प्रयाजदिषु सौमिकधर्मातिदेश इत्यपि ज्ञेयम् । भाष्यविरोधोऽपि अन्वाचयहेतुर्बोध्यः । अतोऽवान्तरप्रकरणमस्ति ।

तदा प्रकृतिविशेषस्यैव निर्णीतत्वान्न चिन्तावसरः। न च पशौ च लिङ्गदर्शनादि' 'मी. द. ८. १. १२ त्यत्र पशोरपूर्वत्वनिराकरणेन पूर्ववत्त्वमेव लिङ्गदर्शनेन साध्यते। किमत्र कुतश्चिद्धर्म्माः अतिदिश्यन्ते, उत नेत्येतावदेव विचार्यत इति वाच्यम्। अष्टमे विशेषातिदेशचिन्ताधिकारात्। न चासौ समाप्ता, येन दर्विहोमवत्पूर्ववदपूर्वचिन्ता क्रियेत, तस्माद्विशेषातिदेश एव चिन्त्यते। तथा च भाष्यकारो विशेषातिदेशविचारमेव दर्शयति–पशौ किं दार्शपौर्णमासिको विध्यन्तः, उत सौमिक इति। सिद्धान्तेऽपि लिङ्गस्य प्रापकत्वमाक्षिप्य चोदनासामान्यादित्याह। स च सामान्येन विकृतित्वे सिद्धेऽवकल्पते, नान्यथा। अथैतद्दोषपरिहाराय लिङ्गदर्शनेन तावदितिकर्तव्यतामात्राकाङ्क्षा कल्प्यते, ततश्चोदनासामान्यादतिदेश इति, तर्हि प्रयाजादिष्वभिक्रमणाख्यलिङ्गोपदेशसामर्थ्यादाकाङ्क्षापरिकल्पनादव्यक्तत्वेन सौमिकविध्यन्तप्रसङ्ग इति समानः पर्यनुयोगः।

---

सक्ततया तद्विशेषविचारोऽनुपपन्न इत्याह–यदा तावदिति। पशुयागस्वरूपमात्रमिति। संनिधिपठितमपि प्रयाजादिकमनालोच्येति शेषः। द्वितीये तद्विशेषस्यैव निर्णीतत्वात् तदनुपपत्तिमाह–यदा त्विति।

ननु पशौ च लिङ्गदर्शनादित्यस्मिन् सिद्धान्तसूत्रे प्रयाजादिलिङ्गदर्शनस्य हेतुत्वोपन्यासात् तस्य चाकाङ्क्षोत्थापनहेतुत्वात् पशुः किं कस्यचित् विकृतिः, उत न विकृतिरिति विचार्येतिकर्तव्यताकाङ्क्षाभावात् न विकृतिरिति पूर्वः पक्षः। उत्थापकलिङ्गदर्शनात् आकाङ्क्षासंभवेन पशुयागो विकृतिरिति सिद्धान्तो वक्तव्यः। अतः प्रकृतिविशेषविचारो न भाष्यकाराभिप्रेत इत्याशङ्कामनूद्य परिहरति–न चेति। अपूर्वत्वम्-अविकृतित्वम्। पूर्ववत्वं-सप्रकृतित्वम्। कुत इत्यत्राह–अष्टम इति। अष्टमे हि प्रथमस्या विकृतेः तस्माद्वा प्रकृतिविशेषात् धर्मातिदेशः, अस्माद्वेति प्रकृतिविशेषचिन्ता प्रस्तुता। तन्मध्यगतत्वादस्य सूत्रस्य नात्र विकृतित्वाविकृतित्वविचारः सङ्गच्छत इत्यर्थः।

आदिका प्राथमिकी। दर्विहोमवदिति। दर्विहोमो नाम जुहोतिचोदनः स्वाहाकारप्रदानोऽग्निहोत्रनारिष्ठादिः। तें तु न केषांचित् प्रकृतयः, नापि विकृतयः। तेषां विकृतित्वाविकृतित्वचिन्ता कृताऽष्टमान्ते। तद्वदत्र न युज्यत इत्यर्थः। भाष्ये प्रकृतिविशेषविचारस्य स्पष्टत्वाच्च, न तस्यान्यथाभिप्रायो वर्णनीय इत्याह–तथा चेति।

भाष्यकारेणैव लिङ्गदर्शनादित्यस्य सूत्रस्यान्यथाभिप्रायश्च वर्णित इत्याह–सिद्धान्तेऽपीति। केवलस्य प्रयाजादिलिङ्गदर्शनस्य पशौ दर्शपूर्णमासधर्मप्रापकत्वमाक्षिप्य दर्शपूर्णमासेन सह द्रव्यदेवतादिचोदनासारूप्यमेव तद्धर्मप्रापकमित्याह—चोदनेति। अतस्तदेव सूत्रकारस्याभिप्रेतमिति वर्णितं भवतीत्यर्थः। भवतु प्रकृतिविशेषस्यैव विचारः तस्मिन्नधिकरणे ' ततः किम् ? तत्राह—स चेति। प्रथमपक्षाङ्गीकारे च सामान्येन विकृतित्वसिद्धिरेव न संभवतीत्याशयः।

द्वितीयं पक्षमाशङ्कते—अथेति। इतिकर्तव्यतामात्रेति। मात्रचा प्रकृतिविशेषसंबन्धीतिकर्तव्यताविशेषव्यावृत्तिः। अतिदेश इति। प्रकृतिविशेषगतधर्माणामिति शेषः। एवं तर्ह्यङ्गानां स्वारसिकाकाङ्क्षावादिनो मम यो दोषस्त्वयाऽऽपादितः, उत्थापिताकाङ्क्षावादिनोऽपि तव प्रयाजादिषु स एव दोषः प्रसजेदिति परिहरति—तर्हीति। अभिक्रमणादीति।

## भाष्यावलम्बनेनोक्तशङ्काया निरासमुखेन उभयपक्षपरिहारोपपादनम् ।

तदेतदावाभ्यामेवं परिहर्तव्यम् । न प्रयाजादीनामव्यक्तत्वम्, यस्य हि तद्धितेन चतुर्थ्या, मन्त्रवर्णेन वा देवता नास्ति, तदव्यक्तम् । प्रयाजादीनां तु मन्त्रवर्णादिभिर्देवतासंगतेर्नाव्यक्तत्वमिति । यदि तु यस्योत्पत्तिवाक्ये देवता नास्ति, तदव्यक्तम्, तत उपांशुयाजस्याप्यव्यक्तत्वप्रसङ्गः । तस्य हि 'तद्वच्च देवतायां स्यादि'ति 'विचार्यं विष्णुर्वा स्याद्धौत्राम्नानादि'मी. द. १०. ८, ५३ ति मन्त्रवर्णाद्देवतासंगतिं वक्ष्यति । ज्योतिष्टोमस्यापि 'तद्यैन्द्रवायवं गृह्णाती'ति तद्धितेनैव देवताभिधानान्नाव्यक्तत्वं स्यात् । न यागे देवता तद्धितेन विधीयते, किं तु ग्रहणे । तस्माददोषः ।

## प्रत्यक्षवचनविरोधात्समिदादिषु सौमिकधर्मातिदेशो न भवतीति कथनमुखेनाऽवान्तरप्रकरणसमर्थनस्योपसंहारः ।

किं चासंभवादपि न प्रयाजादिषु सौमिकधर्मातिदेशः । दर्शपूर्णमासयोर्हि साङ्गयोः पूर्वेद्युरुपक्रम्य, अपरेद्युः समापनं श्रुतम् । तत्रापि परिस्तरणादि, हस्तावनेजनादि च तन्त्रम् परेद्युरेव वोपक्रम्य समापनीयम् । तत्र यदि प्रयाजादिषु

---

यथा प्रयाजादिदर्शनेन श्रुतान्वयसिद्धचर्थमेव दीक्षणीयादिषु आकाङ्क्षोत्थापनं, तदभिक्रमणाद्यङ्गोपदेशेनापि प्रयाजादिषु भवतीत्यर्थः ।

यद्यङ्गानां स्वारसिकाकाङ्क्षा—तदभाववादिनोरावयोरयं दोषः समानः तर्हि उभयोरप्यनिष्टस्यास्य कथं परिहार इत्यत्राह—तदेतदिति । परिहारक्रममाह—न प्रयाजादीनामिति । नोत्पत्तिवाक्ये द्रव्यदेवतयोरप्रतीतत्वमात्रमव्यक्तिः । किं तु देवताया एवाप्रतीतिः । सा च नोत्पत्तिवाक्यमात्रात् । अपि तु देवताप्रापकैस्तद्धितादिभिस्त्रिभिरपीत्यङ्गीकारे तस्य दोषस्य परिहारो भवतीत्यर्थः । ''आग्नेयोऽष्टाकपाल' इत्यादिषु तद्धितेन 'अनुमत्यै चरुम्' इत्यादिषु चतुर्थ्या प्रयाजादिषु 'समिधो अग्न आज्यस्य व्यन्तु' इत्यादिमन्त्रैर्देवतायाः प्रतीतिः उत्पत्तिवाक्यादप्रतीतिरेवाव्यक्तिरित्यङ्गीकारे दोषमाह—यदीति । 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशो । उपांशुयाजमन्तरा यजति' तै. सं. २-६-६ इत्युपांशुयाजस्योत्पत्तिवाक्यम् । नात्र काचित् देवता श्रूयते । विष्णुः प्रजापतिरग्नीषोमौ च उपांशुयाजस्य वैकल्पिक्यो देवताः सम्प्राप्ताः । तासां प्राप्तिर्मन्त्रवर्णादेव । अतएव 'विष्णुरुपांशु यष्टव्यः, प्रजापतिरुपांशु यष्टव्यः, अग्नीषोमावुपांशु यष्टव्यौ' इति वाक्यानि मन्त्रवर्णिकदेवतानुवादकानीति स्थापितमुपांशुयाजाधिकरणे (पू. मी. १०-७-१८) । अतस्तस्याव्यक्तत्वेन सोमिकविध्यन्तप्रसङ्ग इत्यर्थः । वक्ष्यतीति । दशमाध्याये इति शेषः ।

ननु ज्योतिष्टोमस्याव्यक्तत्वे खलु तद्विकृतीनां तत्सादृश्येन तद्धर्मप्राप्तिः । उक्तेन प्रकारेणाव्यक्तत्वनिरूपणे तस्याप्यव्यक्तत्वं न स्यादिति शङ्कते—ज्योतिष्टोमस्यापीति । 'ऐन्द्रवायवं गृह्णाति' मै. सं. ४-५-८ 'मैत्रावरुणं गृह्णाति' इत्यादिभिर्न यागे देवता विधीयते । यागस्य तत्रानुपादानात्, किं तु संस्काररूपे सोमरसस्य तत्तत्पात्रेषु विभज्य ग्रहणे । एता एव देवता यागोद्देशेनाविहिता अपि पश्चात् स्वत एव यागदेवताः पर्यवस्यन्तीति, न ज्योतिष्टोमस्य व्यक्तत्वमित्यर्थः ।

---

१. क्रमेणोदाहरणं व्याख्याने वोध्यम् ।

सौमिकविध्यन्तः, दीक्षणीयादिरोदवसानीयान्तः प्रत्येकमतिदिश्येत, ततस्तस्मिन्प्रत्येकमनुष्ठीयमाने प्रधानस्य कालोत्कर्षः स्यात्। न च तन्त्रेण, प्रसङ्गेन वा सकृदनुष्ठानसम्भवः, कालभेदात्, तन्त्रमध्ये विधानाभावाच्च। पूर्वं हि प्रयाजाः प्रधानादनुष्ठीयन्ते, पश्चादनुयाजाः। ततोऽपि सूक्तवाकादिव्यवहिताः पत्नीसंयाजाः। न चैवं सति तन्त्रं भवति दीक्षणीयादिष्वैष्टिकविध्यन्तस्य। न च यावच्छक्ति कानिचिदङ्गानि विहाय कानि चिदनुतिष्ठेतेति विशेषापरिज्ञानाच्छक्यते अभिधातुम्। तस्मादनतिदेशः प्रयाजादिषु सौमिकविध्यन्तस्य। तस्मादस्त्येवाऽवान्तरप्रकरणम्।

## अवान्तरप्रकरणांगीकारे दोषापादनम्, तन्निराकरणञ्च।

कथं तर्हि विदेवनादीनामभिषेचनीयाङ्गत्वं नेष्यते, चोदकप्राप्तैरेव धर्मैराकाङ्क्षापरिपूरणेनाभिषेचनीयस्य प्रागेव पर्यवसानात्। विकृतयो हि क्लृप्तोपकाराकाङ्क्षाः

प्रत्यक्षवचनविरोधादपि न प्रयाजादिषु आनुमानिकसौमिकधर्मातिदेशः संभवतीत्याह—किंचेत्यादिना। वचनविरोधमेव दर्शयति—दर्शपूर्णमासयोरिति। प्रत्येकमतिदिश्येतेति। प्रयाजानूयाजाद्यङ्गेषु प्रत्येकं पृथक्पृथगित्यर्थः। प्रधानस्येत्युपलक्षणम्। प्राथमिकप्रयाजे सर्वेषु सौमिकधर्मेषु अतिदिष्टेषु तेषां सर्वेषां एकस्मिन्नेवाह्नि अनुष्ठानायोगात् तस्मिन्नेवाहनि अनुष्ठेयतया श्रुतानामङ्गान्तराणां, प्रधानस्य च श्रुतकालबाधः स्यादित्यर्थः।

तन्त्रेण, प्रसङ्गेन वेति। 'अनेकप्रधानोद्देशेन एकस्याङ्गस्य सकृदनुष्ठानं तन्त्रम्। एकप्रधानोद्देशेन सकृदनुष्ठितस्याप्यङ्गस्य प्रधानान्तरेण तत्प्रयुक्तिक्षमेणापि स्वार्थमपि उपजीवनं प्रसङ्गः। यद्यपि प्रयाजद्युद्देशेन सौमिकधर्माणां सर्वेषां सकृदनुष्ठानेऽपि श्रुतकालबाधः स्यादेव। तथाप्यत्यन्तकालविप्रकर्षाभावाय सकृदनुष्ठानमपि न संभवतीत्युक्तम्। तत्र हेतुमाह—कालभेदादिति। अव्यवधानेनानुष्ठानाभावादित्यर्थः। देशकालकर्त्रैक्ये तन्त्रता न तद्भेद इति वक्ष्यति। कालभेदं दर्शयति—पूर्वं हीति। उत्तरकाल इति। प्रधानादिति शेषः। कालभेदे सत्यन्यत्र तन्त्रानुष्ठानं न दृष्टमित्याह—न ह्येवमिति। यथा ज्योतिष्टोमाङ्गभूतासु दीक्षणीयाद्यनेकेष्टिषु प्रत्येकं दार्शपौर्णमासिकधर्मातिदेशे सति कालभेदात् सर्वार्थं न सकृदनुष्ठानम्। किंत्वावृत्त्या। तद्वदत्रापीत्यर्थः। एवं सति-कालभेदे सति। ननु प्रयाजादिषु प्रत्येकं सौमिकधर्मानुष्ठानेऽपि दर्शपूर्णमासप्रयोगस्य नित्यत्वेनाशक्याङ्गपरित्यागेनानुष्ठाने सति न विरोध इत्याह—नचेति। विशेषापरिज्ञानादिति। तत्र हेतुः इदमङ्गमनुष्ठेयम्, इदं त्याज्यमिति विशेषाप्रतीतेरित्यर्थः। मतं निगमयति—तस्मादिति। महाप्रकृतमुपसंहरति—तस्मादिति।

अवान्तरप्रकरणाङ्गीकारे दोषमाशङ्कते—कथं तर्हीति। राजसूये बहवः पश्विष्टिसोमयागा आम्नाताः ते। ते सर्वे समप्रधानतया करणभूताः। तत्राप्यभिषेचनीयो नाम

१. व्याख्याने तन्त्रप्रसंगयोस्स्वरूपवर्णनम्।

अवान्तरप्रकरणस्य स्वीकारे 'अक्षैर्दीव्यतीत्यादीनामभिषेचनीयनामकसोमयागांगत्वमिति नाशंकनीयम्। अभिषेचनीयस्य विकृतित्वेन क्लृप्तोपकारैः प्राकृतैः पदार्थैः समीपस्थमंगं विहाय प्रथमं संबन्ध इति गृहमेधीयाधिकरणे भाष्योक्तेः। विदेवनादिकमन्यत्रोत्पन्नं माहेन्द्रस्तोत्रकालेऽपकृष्यते। अतो राजसूयांगैस्सन्दष्टत्वेन सन्दंशोद्भूतेनावान्तरप्रकरणेन राजसूयांगत्वमेव, न त्वभिषेचनीयांगत्वमिति, अवान्तरप्रकरणाभ्युपगमे न कश्चिद्दोष इति बोध्यम्।

प्रथमं प्राकृतैरेव समीपस्थमङ्गं विहाय संबध्यन्त इति, गृहमेधीयाधिकरणे भाष्यकारो वक्ष्यति। एवं निर्ज्ञातपर्यवसानस्यापि विकारस्य समीपस्थाङ्गवशादपर्यवसानं कल्प-

---

सोमयाग। तदनन्तरं च तत्सन्निधौ विदेवनादीन्यभिषेकान्तानि अयागात्मकानि कानिचित्कर्माण्याम्नातानि। तानि च 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत' इति वचनादभिषेकान्तानि।

तान्यभिषेचनीययागाङ्गभूतमाहेन्द्रस्तोत्रकाले अवकृष्यानुष्ठीयन्ते। अभिषेचनीययागसंनिधिसमाम्नातान्यपि विदेवनादीनि नाभिषेचनीयमात्राङ्गानि। किंतु प्रकरणात् राजसूयाङ्गानीति स्थितिः।

तत्र यस्यावान्तरप्रकरणं नास्ति तस्य संनिधिप्रमाणेन विदेवनादीनामभिषेचनीययागाङ्गत्वे प्रसक्ते संनिधिप्रकरणयोः प्रकरणप्राबल्यात् राजसूयाङ्गत्वं भवति। यस्य तु अवान्तरप्रकरणमस्ति तस्य त्वभिषेचनीयावान्तरप्रकरणेन महाप्रकरणं बाधित्वा अभिषेचनीययाङ्गत्वमेव स्यादित्यर्थः। उत्तरमाह—चोदकेति। प्रधानस्येतिकर्तव्यताकाङ्क्षा खलु प्रकरणम्। तया विदेवनादीनामभिषेचनीयेन ग्रहणं नास्ति सोमविकृतित्वेन तदाकाङ्क्षाया आतिदेशिकैरेवाङ्गैरौपदेशिकविदेवनाद्यन्वयं विनैव ततः पूर्वमेव निवृत्तत्वात्। अतो नावान्तरप्रकरणेन विदेवनादीनामभिषेचनीयाङ्गत्वमित्यर्थः।

ननु विकृतिषु कथं संनिहितानामौपदेशिकाङ्गानां न प्रथममन्वयः। कथं वा व्यवहितानामातिदेशिकानां प्रथममन्वयेन तैरेवाकाङ्क्षोपशमः। कथंतमामौपदेशिकानां न प्रकरणग्रहणमित्याशङ्क्य तत्सर्वमुपपादयति—विकृतयो हीति। न हि विकृतिभावना प्रथममङ्गान्याकाङ्क्षति, किं तु इतिकर्तव्यतापरनामधेयमुपकारम्। तस्यां वेलायामौपदेशिकान्यङ्गानि संनिहितान्यप्यनाकाङ्क्षितत्वात् नान्वीयन्ते। यद्यपि प्रकृतावप्यङ्गानि न प्रथममाकाङ्क्षितानि। किं तु उपकार एव। तथापि तस्यासन्निहितत्वात् अक्लृप्तत्वाच्चागत्यानाकाङ्क्षितैरपि संनिनितैरङ्गैः प्रथममन्वये सति पश्चादुपकारकल्पनात् साप्याकाङ्क्षा निवर्तते। विकृतौ तु प्राकृतोपकारस्यासंनिहितत्वेऽपि क्लृप्तत्वात् आकाङ्क्षावशात् तेनैव प्रथममतिदेशात् तदन्वयः। पश्चात् तज्जनकपदार्थैः। एवं च विकृतेरितिकर्तव्यताकाङ्क्षाऽप्युपशाम्यति। शान्तायां च तस्यां पश्चादन्वीयमानानामौपदेशिकानां न प्रकरणेन ग्रहणमित्यर्थः। यदि विकृतिष्वौपदेशिकाङ्गानां न प्रकरणेनान्वयः, कथं तर्हि तेषामन्वयः ? तत्राह—एवमिति। संजातपर्यवसानस्य—निराकाङ्क्षस्य। विकारस्य—विकृतेः। अङ्गवशादिति। अङ्गभावनानां भाव्याकाङ्क्षावशात् तत्तदन्वयाय

---

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यांश्चाच्युतो भवती'त्यादिभिराग्नेयादयष्षड्यागा विहिताः सन्निपत्योपकारकारादुपकारकपदार्थवर्गश्चाम्नातः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इदमेव विध्युद्देशवाक्यम्, अत्र विषय—नियोज्यान्वितकार्यापरपर्यायापूर्वस्य प्रतीयमानत्वात्। इदञ्चापूर्वं कृत्युद्देश्यतया प्रधानम्। अत एवाधिकारापूर्वमिति गीयते, इदमेव वाक्यार्थे मुख्यविशेष्यतया अवभासते, इतरेषु सर्वेषु वाक्येषु प्रथमं साधिकारविधेरस्यैव सन्निहितत्वेन प्रत्यभिज्ञानात तदेवापूर्वं तत्तद्विधिप्रत्ययेनानूद्यते, तथा च विषयनियोज्यान्विते स्वयम् प्रयोजनीभूतेऽपूर्वे प्रतिपन्ने सति, तत्सन्निधिपठितस्यारादुपकारि-सन्निपातिपदार्थवर्गस्य स्वयमप्रयोजनतया प्रयोजनाकाङ्क्षायां प्रयोजनीभूतेनाधिकारापूर्वेणान्वययोग्यत्वे सति, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यधिकारवाक्यगतो लिङ्प्रत्ययः युगपत् कृत्स्नपदार्थान्वितं स्वार्थमभिधत्ते।

यितव्यम्, ततश्च क्रमो भवति। विकृतिष्वपि यत्प्राकृताङ्गमध्ये पठितम्—यथा आमनहोमः, तस्य प्रकरणेन ग्रहणम्। विदेवनादीनामपि तर्हि प्राकृताङ्गमध्ये माहेन्द्रस्तोत्रकालेऽनुष्ठीयमानानां प्रकरणेनाभिषेचनीयाङ्गत्वप्रसङ्गः। न तत्रैषामुत्पत्तिः। अन्यत्रोत्पन्नानां प्रकरणावगतराजसूयाङ्गभावानामपकर्षः स्तोत्रकाले विहित इति, नाभिषेचनीयाङ्गत्वम्। राजसूयभावनायास्तु पवित्रादारभ्य क्षत्रस्यधृतिपर्यन्तो यागगणः स्ववाक्यस्थेन यजिना तन्त्रेणोपादाय करणत्वेन समर्पित इति, यत्पवित्रस्य प्राकृतमङ्गम्,

---

निवृत्ताप्याकाङ्क्षा पुनरुत्थाप्यत इत्यर्थः। एवं चौपदेशिकानामितिकर्तव्यताकाङ्क्षारूपप्रकरणकल्पनेन विनियोगभावात् स्थानप्रमाणमेव विनियोजकमित्याह—ततश्चेति। क्रमः—स्थानप्रमाणम्। एवं चाभिषेचनीयस्य विकृतित्वेन प्रकरणाभावात् स्थानेन विदेवनादीनां तदन्वये प्राप्ते, तद्बाधेन प्रकरणात् राजसूयाङ्गत्वमेव भवतीति न कश्चित् दोष इति भावः।

इदानीं विकृतिष्वपि क्वचित् क्वचित् प्रकरणमस्तीत्याह—विकृतिष्वपीति। 'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः इति सांग्रहणीष्टिं विधाय 'ध्रुवोऽसि ध्रुवोऽहं सजातेषु भूयासमिति परिधीन् परिदधाति'तै. सं. २-३-५ इति प्रकृत एव परिधिपरिधाने मन्त्रं विधाय, तदनन्तरम् 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' तै. सं. २-३-९ इत्यादिना आमनहोमा विहिताः। एतेषां प्राकृतपरिधिपरिधानोत्तरकालीनत्वेन पश्चादनुष्ठेयप्राकृताङ्गसंभवेन च प्राकृताङ्गमध्यविहिततया तदङ्गविषयाकाङ्क्षयैव तेषामपि संदंशन्यायेन परिग्रहात् तत्र प्रकरणेनैव विनियोग इत्यर्थः।

नन्वेवं तर्हि विदेवनादीनामप्यभिषेचनीयप्राकृताङ्गमध्यगततया तदवान्तरप्रकरणेन तदङ्गत्वमेव स्यादिति शङ्कते—विदेवनादीनामिति। परिहरति—न तत्रेति। अयं भावः—उत्पत्ति-विनियोग-प्रयोगा हि पदार्थानां क्रमभाविनः। 'माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते'ति इति वचनेन त्वभिषेचनीयानन्तरमुत्पन्नानां विदेवनादीनामभिषेकान्तानामपकृष्य प्रयोग एव स्तोत्रकाले विधीयते। विनियोगस्तु तेषां पूर्वमेव निष्पन्नः। तस्यां तु वेलायां तेषामभिषेचनीयप्राकृताङ्गमध्यगतत्वाभावात् नावान्तरप्रकरणेन ग्रहणं संभवतीति संनिधिमात्रप्राप्ततदङ्गत्वबाधेन प्रकरणात् राजसूयाङ्गत्वमेव भवति। प्रयोगोत्तरकालं तु अभिषेचनीयप्राकृताङ्गसंबन्धेऽपि विनियोगस्य पूर्वमेव संजातत्वेन निराकाङ्क्षत्वात् विनियोगकालातिपत्तेश्च न

---

स चान्वयः पदार्थवर्गं प्रति ग्राहकैदमर्थ्यरूपः। लोके च 'देवदत्तः काष्ठैरोदनं पचती'त्यादौ प्रयोजनप्रयोजीनिभावेनान्वयो व्युत्पत्तिसिद्ध एव। अधिकारविधेः प्राधान्येन प्रयोजनवत्त्वम्, इतरपदार्थजातस्य तूपसर्जनत्वेनापूर्वीयत्वात् प्रयोजनित्वम्। स चान्वयः प्रजोजनप्रयोजनिभावरूपः। तस्मिन्नन्वये खलेकपोतन्याय उदाह्रियते,

इदञ्च ग्राहकग्रहणापरपर्यायमन्विताभिधानं सप्तमाद्ये व्युत्पादितं टीकाकृता। तथाहि-सप्ताद्ये एवं चिन्तितम्—सर्ववेदविहितास्सर्वे क्रतुधर्मास्सर्वत्र परिप्लवन्ते, अथवा प्रतिप्रकरणं व्यवतिष्ठन्त इति। तत्र सर्वे धर्मास्सर्वत्र पारिप्लवास्स्युः, अतः सर्वेषामपि क्रतूनां उपदेशेनैव धर्माः प्राप्नुवन्ति सर्वधर्मानुष्ठानाच्च सर्वत्र सांकर्यमिति पूर्वपक्षः कृतः। सिद्धान्तस्तु अधिकारवाक्यैः प्रत्येकम् विषय-नियोज्यघटिताधिकारापूर्वाणामवबोधनात्, अधिकारापूर्वाणाञ्च प्रत्येकम् यागकृतिसाध्यतयाऽवगतत्वात्, विषयस्याचाभिलषितफलकरणपूर्वकत्वात्, इतिकर्तव्यतासहितस्य करणत्वात् प्रकरणपठितैरेवाङ्गैरितिकर्तव्यताया अवगमात् प्रतिप्रकरणं धर्मा व्यवतिष्ठन्ते—इति।

यच्च क्षत्रस्यधृतेः, तत्सर्वं राजसूयस्य प्राकृतमङ्गम्। तन्मध्यवर्तीनि विदेवनादीनि भवन्ति प्रकरणस्य गोचरः। तस्मादवान्तरप्रकरणाभ्युपगमेऽपि न कश्चिद्दोषः—इति।

**भावनावाक्यार्थवादे प्रकरणं क्रियाया एव विनियोजकम्, न द्रव्यादीनामिति, श्रुत्याद्यपेक्षया प्रकरणस्य वैलक्षण्यमिति प्रकरणप्रमेयप्रतिपादनम्।**

द्विविधं प्रकरणम्। तच्च भावार्थानामेवारादुपकारिणां केवलं विनियोजकम्। न द्रव्यादीनाम्। नापि सन्निपातिनाम्। तेषां हि यथायथम् श्रुत्यादिभिरेव विनियोगः, प्रकरणं तु सहायमात्रम्। मन्त्राणामपि न स्वरूपेण प्रकरणग्रहणम्, तज्जन्यस्य तु वाक्यार्थप्रत्ययस्य क्रियारूपस्य, तदपि लिङ्गसाहित्येनेति मन्त्राधिकरणे 'वाक्यार्थप्रत्ययस्त्वकृतार्थः' तं वा. पृ. १५०। इत्यादिना दर्शितम्।

---

पुनरप्यवान्तरप्रकरणेन तेषां ग्रहणसंभवः। आमनहोमानां तु प्राकृताङ्गमध्य एवोत्पत्तेः प्रकरणग्रहणमिति।

ननु राजसूयस्यापि विकृतित्वेन प्रकरणासंभवात् न तेन विदेवनादीनां ग्रहणसंभव इत्याशङ्कयाह—**राजसूयेति**। अनेकेष्टि-पशु-सोमयागसंघत्वात् राजसूयस्य तेषां यागानां वा प्रत्येकं प्राकृताङ्गाकाङ्क्षा। सैव समुदिता राजसूयस्याकाङ्क्षा भवति। सा च प्रथमयागोत्पत्तिकाले तूत्पन्ना तथैवानुवर्तमाना चरमयागसमाप्तिकाले समाप्यत इति तन्मध्ये विहितानां विदेवनादीनामामनहोमन्यायेन प्राकृताङ्गाकाङ्क्षयैव परिग्रहात् प्रकरणेन विनियोः संभवतीत्यर्थः। स्ववाक्यस्थेन 'राजसूयेन स्वाराज्यकामो यजेत'। इत्येतद्वाक्यगतेन। तन्त्रेण युगपत्। करणत्वेन। स्वाराज्यलक्षणफलं प्रतीत्यर्थः। निगमयति—**तस्मादिति**। **न कश्चिदिति**। प्रयाजेषु सौमिकविध्यन्तप्रसङ्ग इत्यादिदोषाणां परिहृतत्वादित्यर्थः।

प्रकरणाख्यं प्रमाणमुपपाद्य, तत्प्रमेयमाह—**तच्चेति**। भावार्थानां—कियारूपाणाम्। प्रकरणाधीनत्वात् तेषां भाव्यान्वयस्येत्यर्थः। **श्रुत्यादिभिरिति**। तैरेव भाव्यस्य समर्पितत्वादित्यर्थः। **सहायमात्रमिति**। अपूर्वसाधनत्वलक्षणायास्तदधीनत्वादित्यर्थः। सन्निपातिष्वपि मन्त्रेषु प्रकरणव्यापारो नास्तीत्याह—**मन्त्राणामिति**। **न स्वरूपेणेति**। मन्त्रस्वरूपस्य शब्दात्मकत्वेनार्थप्रतीतिजननेन चरितार्थतया निराकाङ्क्षत्वादित्यर्थः। **वाक्यार्थप्रत्ययस्येति**। तस्य प्रयोजनान्तरार्थत्वाभावेनाकृतार्थत्वादित्यर्थः।

**लिङ्गसहितेनेति**। यथाकथञ्चित्—प्रकृतार्थप्रकाशकत्वसंभवरूपसामर्थ्यालोचनसहितेन। अतएव प्रकृतनिवेशित्वासंभवात् पूषानुमन्त्रणमन्त्रस्य न प्रकरणेन ग्रहणसंभव इत्युत्कर्ष इत्यर्थः।

---

तत्राधिकारवाक्यगतलिङ्प्रत्ययेन प्रतीयमानमपूर्वं प्रकरणित्वेन प्रधानतया प्रतीयते, तच्चग्राहकम्, विनियोजकम्, प्रयोजकञ्चेति क्रमेणाऽवस्थात्रयीमनुभवति प्रकरणपठितान् पदार्थान् स्वीयभावेन गृह्णत् ग्राहकमित्युच्यते। द्वारकार्ये विनियुञ्जानं सत् विनियोजकमिति गीयते, अनुष्ठापयत् सत् प्रयोजकमिति च कथ्यते, एवञ्चाधिकारविधेरेव ग्राहकत्वम्, विनियोजकत्वम्, प्रयोजकत्वञ्चेमिति ध्येयम्। तत्र चादौ सर्वेषां पदार्थानां प्रातिपदिकमात्राभिहितानामपूर्वीयत्वेनैवान्वयः। तदेवान्विताभिधानं ग्राहकग्रहणमिति च संकीर्त्यते। बहुकृत्वोऽपिपथ्यं वक्तव्यमित्यसकृदुक्तिर्न जामितादोषमावहति।

इदञ्च ग्राहकग्रहणं खलेकपोतवदन्योन्यान्वितैः कृत्स्नपदार्थैः प्रत्ययार्थे युगपदेव भवतीत्यवोचाभ। अयं भावः—यथा गगनतलात् समुत्पतन्तः कपोतवृद्धाः युवानः शिशवश्च

## कार्यं वाक्यार्थ इति प्राभाकरमते प्रयाजादीनां प्रकरणेनाङ्गत्वं न संभवतीत्यापादनम् ।

संविदन्ति तु ये कार्यमपूर्वं वाक्यगोचरम् ।
न दर्शाद्यङ्गता तेषां प्रयाजादेः प्रसिध्यति ॥ ४ ॥

कार्यभूतं प्रधानमपूर्वं लिङाद्यभिधेयमुपसर्जनीभूतसकलेतरपदार्थकम् वाक्येन प्रतिपाद्यत इति ये मन्यन्ते, तेषां मते प्रयाजादीनां दर्शाद्यङ्गता न स्यात् ।

## श्रुतिविरोधशंकया ग्राहकग्रहणाभावस्थलप्रदर्शनम् ।

कथम् ? आकाङ्क्षति प्रधानं हि न प्रधानान्तरान्वयम् ।
अङ्गापूर्वस्य येन स्यात्प्रधानापूर्वसंगतिः ॥ ५ ॥

'न कार्यमन्यार्थं भवती'ति न्यायात् प्रयाजापूर्वं स्वप्रधानभूतं न प्रयोजनान्तरमपेक्षते । अनपेक्षं च सन्निहितेनापि दर्शपूर्णमासापूर्वेण सङ्गन्तुं नार्हति ।

---

यद्यपि श्रुत्यादिभिरपि मन्त्राणां यथायथं विनियोगो युज्यते, तथापि पृथगाम्नानेन पृथगुत्पत्तिसंभवात् अविरोधाच्च प्रकरणेनापि ग्रहणं युज्यत इति भावः ।

भावनावाक्यार्थवादी स्वमते प्रकरणेन प्रयाजादीनां दर्शपूर्णमासाङ्गत्वमुपपाद्य, कार्यवाक्यार्थवादिनः प्रभाकरस्य मते तु तेषां तच्छेषत्वं न युज्यत इति प्रतिपादयितुमुपक्रमते—संविदन्तीत्यादिना । प्रयाजादेः—प्रयाजाद्यपूर्वाणाम् । श्लोकं व्याचष्टे—कार्यरूपमिति । कार्यत्वप्रधानत्वधर्मद्वयालिङ्गितमपूर्वं धर्मि लिङ्शब्दवाच्यमित्यर्थः । उपसर्जनीभूतेति । लिङ्शब्देनापूर्वस्य प्रधानतयैवाभिधानात्, तदितरे शब्दाः स्वस्वार्थं तदुपसर्जनतयोपस्थापयन्तीति, तादृशैश्च तैः सर्वैरन्वितमपूर्वमभिधीयते इति, सर्वप्रधानतया तदेव वाक्यार्थ इत्यर्थः ।

प्रतिज्ञातार्थमुपपादयितुमाकाङ्क्षामुत्थापयति—कथमिति । उपपादयति—आकाङ्क्षन्तीति । येनाकाङ्क्षाबलेन संगतिः स्यात्, तादृश्याकाङ्क्षा न संभवतीत्यर्थः । प्रधानवाक्य इव 'समिधो यजती'त्यादिष्वपि व्युत्पत्तिबलेन लिङ्शब्देन प्रधानकार्यस्यैवाभिधानात् तस्य च स्वतः कार्यतया प्रतिपादितत्वेन प्रयोजनापेक्षाभावाच्च न प्रधानान्तरान्वयः संभवति । तस्यानाकाङ्क्षितत्वादयोग्यत्वाच्च । एवमेव दर्शपूर्णमासापूर्वस्यापि नानेनान्वयः संभवति । अतो न तेषां दर्शपूर्णमासाङ्गत्वं, तस्याङ्गित्वं च सिध्यतीत्यर्थः ।

---

युगपत् खले, समुत्पतन्तः धान्यकणान् गृह्णन्ति । तथैव अपूर्वमपि प्रकरणपठितान् पदार्थान् स्वीयत्वेन गृह्णाति । तिरस्कृतविभक्तिप्रातिपदिकार्थानामेवान्वयो भवति । पश्चात्तु विभक्तिपर्यालोचनाया यथायोग्यद्वारा कार्यान्वय इति ।

एवञ्च—इदञ्च कार्यं मानान्तरागोचरत्वादपूर्वमिति, स्वात्मनि पुरुषं नियुञ्जानं सत् नियोग इति च गीयते, तदेवाधिकारापूर्वं स्वप्रकरणपठितं पदार्थजातं स्वशेषतया गृह्णत् ग्राहकमिति, गृहीतं पदार्थवर्गं श्रुत्यादिभिः द्वारशेषतया विनियुञ्जानं सत् विनियोजकमिति व्यवह्रियते, तदेव स्वशेषतया गृहीतं पश्चात् द्वारशेषतयाविनियुक्तमितिकर्तव्यताजातम्, कदाचित्करणञ्चानुष्टापयत् प्रयोजकमिति व्यपदिश्यते । एवञ्चाधिकारापूर्वस्यैव ग्राहकत्व-विनिप्रयोजकत्व—प्रयोजकत्वरूपा अवस्था भवन्ति, न त्वंगप्रधानोत्पत्त्यपूर्वाणामिति ।

## तन्मतेन तत्परिहारः ।

*यत्त्वत्र केन चिदुच्यते—साधिकारापूर्वसन्निधिसमाम्नातानि प्रयाजादिवाक्यानि न द्रागिवापूर्वान्तरमवगमयन्ति, अवघातादिवदनुवादकत्वसंभवात् किन्तु यागस्वरूपमेव स्वकारकविशिष्टमुपस्थापयन्ति। तच्चानन्यनिष्ठं स्वयं चाप्रयोजनीभूतं प्रयोजनरूपाधिकारविध्यन्वययोग्यमित्यधिकारवाक्यगत एव लिङ्शब्दस्तेन गुणभूतेनान्वितं स्वार्थमभिधत्ते, तेषां च तदङ्गत्वम् करणोपकारैकद्वारम्। स च संभूय सर्वैरङ्गैर्जन्यते। न च क्षणविशरारूणाम् तेषां स्वरूपेण संगतिः संभवतीत्यवान्तरव्यापाररूपाणामपूर्वाणामवश्या-

---

प्रयाजाद्यापूर्वाणां दर्शपूर्णमासापूर्वस्य च तदभिमतमन्वयमाशङ्कते—यत्त्वित्यादिना। न द्रागिति। हठात् प्रथमत एव साधिकारापूर्वात् अन्यत्—अपूर्वान्तरं न प्रत्याययन्तीत्यर्थः। तत्कथं? तत्राह—अवघातादिवदिति। 'अवहन्ती'त्यत्र हि प्रधानापूर्वप्रत्यभिज्ञानात् संनिहितं, तदेव लिङ्शब्देनानूदितम्। तद्वदत्रापि तस्यैवानुवादी भवेदिति शङ्कासंभवादित्यर्थः। तर्हि प्रयाजादिवाक्यानि किमवगमयन्तीत्यत्राह—किंत्विति। स्वकारकविशिष्टं—द्रव्यदेवताविशिष्टम्। अस्त्वेवम्। एतेषां प्रधानापूर्वाङ्गत्वे किमायातं तत्राह—तच्चेति। तत्—यागस्वरूपम्। अनन्यनिष्ठं तस्यां दशायां कार्यान्तरानङ्गभूतम्।

अप्रयोजनीभूतमिति। लोकतो वेदतोऽपि स्वतः कार्यत्वेनाप्रतीतेरप्रयोजनरूपम्। विध्यन्वययोग्यमिति। स्वतः कार्यतया प्रतिपन्नाधिकारनियोगान्वययोग्यम्। अधिकारापूर्वाकाङ्क्षायाश्च निरङ्कुशप्रसरत्वात् प्रयाजादियागानां च तदन्वययोग्यत्वात् सन्निहितत्वाच्च संनिपातिभिरिव तैरप्यन्वितं प्रधानापूर्वमभिधीयते। इदमेव ग्राहकग्रहणम् प्राभाकरमीमांसकानाम्। इदं च प्राकरणिककरणेतिकर्तव्यतारूपसमस्तपदार्थगोचरम्। अनेनैव संनिपातिवत् प्रयाजादीनामपि प्रधानापूर्वेदमर्थ्यं सिध्यतीति।

ननु भवत्वेवं प्रयाजादियागानां प्रधानापूर्वार्थत्वम्। तदपूर्वाणां तु प्रथममप्रतीतानां स्वरूपमेव कथं सिध्यति? कथं वा प्रधानापूर्वशेषत्वमित्याशङ्क्य, तदुभयमुपपादयितुमुपक्रमते—करणोपकारेति। प्रधानापूर्वं प्रति स्वपदोपात्तस्य विषयभूतस्य यागस्यैव करणतयान्वयात् तदवरोधेन प्रयाजादीनां तत्करणत्वायोगात् तेषां ग्राहकग्रहणावगतमपूर्वेदमर्थ्यं तत्करणोपकारद्वारा निर्वहतीति कल्पनीयमित्यर्थः। अस्त्वेवम्।

ततः किम्? तत्राह—स चेति। करणोपकारो नाम करणोत्पत्त्यपूर्वैः परमापूर्वे जनयितव्ये तेषामङ्गसाध्यसहायभावः। अयमेवाखण्डोपकार इत्यभिधीयते। स च ग्राहकगृहीतैः सर्वैरङ्गैर्युगपज्जायत इति वक्तव्यमित्यर्थः। अस्तु ततोऽपि किम्? तत्राह—न चेति। तेषां

---

प्रकरणोक्तमर्थं निरसितुं तदनुवदति—यस्त्वित्यादिना।

१—संभव इति मु. पु. पा.।

अत्रायं विशेषोऽवधेयः—प्राभाकरमीमांसकानां मते प्रधानान्वयपूर्वकः साक्षात्परंपरया कृत्स्नस्य पदार्थवर्गस्य द्वारान्वयः। भाट्टमीमांसकमते तु कृत्स्नस्यापि पदार्थवर्गस्य साक्षात्परंपरया वा द्वारान्वयपूर्वकः प्रधानान्वय इति परमगभीरेयं याज्ञिकमीमांसकानां सिद्धान्तसरणिरिति। भावनावाक्यार्थवादी स्वमते प्रयाजादीनां प्रकरणेन दर्शपूर्णमासांगत्वमुपपाद्य, कार्यवाक्यार्थवादिनां प्राभाकरमीमांसकानां मते प्रयाजादीनां मते तच्छेषत्वं न युज्यते इति मनसि

श्रवणीयत्वात्। योऽसौ लिङ्शब्दः प्रागनूद्यमानार्थतया शङ्कितः, स इदानीमपूर्वान्तरं ग्राहकग्रहणापादितप्रधानापूर्वैदमर्थ्ययागविषयथतया विहतप्राधान्यमधिकारापूर्वाङ्गत्वेनै-वाभिधत्ते, न स्वप्रधानं विषयविनियोगविरोधात्। एतदेवापूर्वमभिप्रेत्य भाष्यकारेणोक्तं न चाविहितमङ्गं भवतीति। विधिशून्यानां कर्मणां भङ्गुरत्वान्नाङ्गत्वं संभवतीत्यर्थः।

नन्वेवं सति 'यस्तु पुरुषप्रयत्नः, सोऽनुवादः' इत्यपि भाष्यमस्ति। सन्निपातिनि नैमित्तिके जञ्जभ्यमानमन्त्रवचने तदुक्तम्। तत्र हि कारकद्वारेणैवाङ्गत्वं विनाऽप्यपूर्वा-न्तरात्संभवतीत्यनुवाद एव लिङ्शब्दः। तत्सिद्ध प्रयाजादीनामङ्गत्वम्—इति।

---

साक्षात् तज्जनकत्वायोगात् द्वारेष्ववश्याश्रयणीयेषु सत्सु संनिपातिनां तत्तत्कारकसंस्कारमुखेन करणशरीरनिर्वृत्तिरेव द्वारं लभ्यते। प्रयाजादिषु तदसंभवात् तदपूर्वाण्येव द्वारतयाऽऽश्रयणी-यानीत्यर्थः। तानि किमनुपपत्त्या कल्प्यन्ते? नेत्याह—योऽसाविति। अपूर्वान्तरमभिधत्त इत्यन्वयः। एवंविधविमर्शनसनाथात् लिङ्शब्दादेव तेषां प्रतीतिरित्यर्थः।

नन्वेवमस्तु प्रयाजाद्यपूर्वाणां स्वरूपसिद्धिः। प्रधानापूर्वाङ्गत्वं तु कुत इत्याशङ्क्य, तथैवाभिधानात् सिध्यतीत्याह–अधिकारेति। ननु प्रधानापूर्वे व्युत्पन्नेन लिङ्शब्देन कथमङ्गतया-भिधानम्। तत्राह—ग्राहकग्रहणेति। ग्राहकग्रहणेन आपादितं संपादितं प्रधानापूर्वैदमर्थ्यं यस्य यागस्य, तादृशः। तादृशश्च यागो विषयो यस्यापूर्वान्तरस्य तत्तादृशं तस्य भावस्तत्ता तयेत्यर्थः। प्रधानान्तरशेषत्वेन प्रतिपादितस्य प्रधानान्तरशेषत्वं न युज्यते, विरोधात्। तच्छेषत्वं तु तन्निर्वाहकतया युज्यत एव। ततश्च प्रधानापूर्वशेषत्वेनावगतप्रयाजादिविषयस्यापूर्वस्य प्रधानापूर्वशेषत्वमवश्याश्रयणीयमित्यनुपपत्तिवलात् लक्षणया लिङ्शब्देन गुणीभूतापूर्वा-भिधानमिति भावः।

तदेव व्यतिरेकमुखेनाह—स्वप्रधानमिति। प्रयाजाद्यपूर्वविषयस्य प्रधानापूर्वशेषतया विनियोगो-विषयविनियोगः।

भाष्यकारवचनमप्यस्मदुक्तानुगुणमित्याह–एतदेवेति। विधिशून्यानां–अपूर्वशून्यानाम्। नाङ्गत्वं संभवति–ग्राहकग्रहणावगतं प्रधानापूर्वाङ्गत्वं न निर्वहतीत्यर्थः। अयं च ग्रन्थः कर्त्रधि-करणगतत्वेनारादुपकारकभूतानृतवचनप्रतिषेधविषयत्वादारादुपकारिमात्रविषय इति भावः।

भाष्यान्तरमपि अस्मन्मत एव युज्यत इत्याह—यस्तु पुरुषेति। संनिपातिनीति। 'तस्माज्जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू इति' तै. सं. २-६. इति विहितस्य मन्त्रस्य कर्तृसंस्कारतया सन्निपातित्वम्। तत्र हीति। सन्निपातिषु वाक्येषु कारकद्वारेण करणादि-निर्वृत्तेरेव द्वारस्य लब्धत्वात् नापूर्वान्तरमभिधातव्यमिति तद्गतैर्लिङादिप्रत्ययैः प्रधान-कार्यमेवानूद्यते। कार्यानुवादे च कृतिरप्यनूद्यत इति पुरुषप्रयत्नानुवादभाष्यं सङ्गच्छत इति भावः। निगमयति—तत्सिद्धमिति।

---

निधायाह—संविदन्ति, इति। प्रकरणस्यारादुपकारकेष्वेव व्यापारः, प्रयाजादीनां करणैदमर्थ्यस्य प्रमाणान्तरेणालाभात्। सन्निपातिनान्तु सप्तमाद्ये व्युत्पाद्यं सर्वेषां पदार्थानां प्रधानापूर्वेण प्रयोजन–प्रयोजनिभावेनान्विताभिधानरूपम् यत् ग्राहकग्रहणाख्यं प्रमाणम्, तेनापूर्वार्थत्वमिति पूर्वमुक्तम्। इदञ्च प्राकरणिककरणेकर्तव्यतारूपसमस्तपदार्थगोचरमिति च।

इदमनुपपन्नम्। अत्रेदमाकूतम्। तथाहि–यद्यपि सन्निपत्योपकारकेषु, आरादुपकारकेषु धात्वर्थस्यापुरुषार्थतया भाव्यत्वं नोपपद्यते, तथाप्यारादुपकारकेषु प्रयाजादिषु त्वसंयुक्ततया

### तन्मतनिरासः

तदेतत्प्रक्रियामात्रं श्रद्धालुभ्योऽभिरोचते।
प्रमाणपरतन्त्रेभ्यो नैतद्रोचितुमर्हति ॥ ६ ॥
'तथा हि—स्वप्रधानं श्रुतं कार्यं तदबाधे विनिश्चिते।
वाक्यान्तरेण संबन्धो न बाधे नापि संशये ॥ ७ ॥
द्वयोः सद्भावसन्देहात्प्रकृतौ यजमानयोः।
मा युवं हि स्थ इत्येषा प्रतिपत्प्रकृतिं गमत् ॥ ८ ॥

साधिकारवाक्येषु तावदमी लिङादयो विदितनिरपेक्षकार्याभिधानशक्तयो न समिदादिवाक्येष्वन्यनिष्ठं कार्यमभिधातुमीशते। लक्षणया अभिदधतीति चेत्? न

उक्तप्रकारेण प्रयाजादीनां प्रधानापूर्वाङ्गत्वं प्रमाणविरुद्धमिति दूषयति—तदेतदिति। विरुद्धत्वमेवोपपादयितुमुपक्रमते—तथाहीत्यादिना। प्रयाजादिषु लिङ्श्रुत्या प्रधानं कार्यं तावत् प्रतीयते। प्रयाजादियागानामधिकारवाक्यावगतप्रधानापूर्वान्वयेन ग्राहकग्रहणे यदि तस्याः श्रुतेर्विरोधो न स्यात्, तदा ग्राहकग्रहणमुपपद्यते। न तु तस्याः श्रुतेर्विरोधे, नापि तद्विरोधसंशये। अत्र तु ग्राहकग्रहणे सति भवदुक्तरीत्या लिङ्श्रुतेर्मुख्यार्थपरित्यागेन लक्षणया गुणीभूताभिधानप्रसङ्गात् श्रुतिविरोधो भवेदिति तच्छङ्कया, प्रथमं ग्राहकग्रहणमेव न प्रयाजादियागानामुपपद्यते। प्रयाजाद्यपूर्वाणांप्रधानापूर्वाङ्गत्वं तु दूरत इत्यर्थः। श्रुतं—श्रुत्वा प्रतिपन्नम्। तदबाधे—तस्याः श्रुतेरविरोधे। वाक्यान्तरेण—अधिकारवाक्येन। सम्बन्धः सम्भवेदिति शेषः।

श्रुतिविरोधशङ्कया ग्राहकग्रहणाभावस्थलमुदाहरति—द्वयोरिति। ज्योतिष्टोमे 'युवं हि स्थः स्वःपती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्'। 'एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य' इति प्रतिपन्मन्त्रद्वयमाम्नातम्। अत्र हि मन्त्रयोर्वाक्येन द्विबहुयजमानशेषतया विनियोगात् प्रकृतौ च यजमानद्वित्वाद्यनवगमे संदेहेन वाक्यविरोधशङ्कया यथा तयोर्ग्राहकग्रहणं न संभवतीति, द्विबहुयजमानकेषु विकृतिकर्मसु उत्कर्षान्न प्रकृत्यङ्गत्वम्। एवं प्रयाजादिष्वपि श्रुतिविरोधशङ्कया ग्राहकग्रहणासंभवात् न दर्शपूर्णमासाङ्गत्वमित्यर्थः।

श्लोकद्वयं तात्पर्यतो व्याचष्टे—साधिकारेत्यादिना। निरपेक्षकार्य—प्रधानकार्यम्। **अभिधानशक्तय इति।** वैदिकलिङादिशब्दानामलौकिकप्रधानकार्ये एव व्युत्पत्तेरित्यर्थः। अन्यनिष्ठं—अन्यशेषभूतम्। यद्यपि प्रधानकार्य एव व्युत्पत्तिः, तथापि अत्रानुपपत्तिबलात् लक्षणया गुणीभूताभिधानं स्यात् इति शङ्कते—लक्षणयेति। कारणाभावादेव लक्षणा न

समीहितं भाव्यरूपमेवाकांक्षितम्, सन्निपत्योपकारकेषु संयुक्तानाम् व्रीह्यादीनां समीहितत्व-सिद्ध्यर्थमाकांक्षा जायत इत्युभयोर्विधिबलात् प्रकरणेन ग्रहणं संभवति। एवञ्च व्रीहिद्वाराऽपूर्व-शेषत्वं व्रीह्यपूर्वमध्यगततण्डुलादिसर्वशेषत्वमन्तरेण न सिद्ध्यतीति, तत् सर्वं श्रुत्यैवावगम्यते, तन्मध्यस्थेषु च करणत्वमेकमिति, तच्छेषत्वे श्रुतिरेव प्रमाणम्। तदर्थं न प्रमाणान्तरमेपित-व्यम्। उपादानप्रमाणमग्रे निरसिष्यते। वैदिकलिङादेरलौकिकेऽधिकारापूर्वे एव शक्तिः, तथापि तत्रानुपपत्तिबलात् लक्षणया गुणीभूतं कार्यं वाच्यं स्यात्। लक्षणाबीजस्यान्वयानुपपत्तेः, तात्पर्यानुपपत्तेर्वाऽभावात्। अतः स्वपदोपस्थापितम् सन्निहितमपूर्वं परित्यज्य प्रयाजाद्यंगानां

१—तथाचेति मु. पु वा.।

लक्षणायां प्रमाणमस्ति। विनियुक्तविषयत्वं प्रमाणमिति चेत् ? न। मिथ्याविनियोगस्यैवासंभावनीयत्वात्। न खलु स्वपदावगतप्रधानकार्यबाधेन ग्राहकग्रहणसंभवः। प्रत्यभिज्ञाशङ्कया न द्रागित्यपूर्वान्तरं प्रतीयत इति चेत्। एतदेव तर्हि प्रथमं निरूपयितव्यम्। अनेन तावत्कार्यमभिधीयते। तत्किं प्रकृतमेवाधिकारापूर्वम्, उतान्यदिति। तत्र यदि कारकद्वारेण तद्विषयानुप्रवेशं संभावयेत्, ततः प्रत्यभिज्ञानसामर्थ्याद्विषयस्य विनियोगमवघातवदनुमन्यते। अथ तु प्रयत्नेन मृगयमाणो न तद्विषयानुप्रवेशद्वारं पश्यति, ततः प्रत्यभिज्ञाबाधेन नियोगान्तरमेव प्रधानभूतं समिद्यागविषयमध्यवस्यति,

---

युक्तेति परिहरति —नेति। स्वविषयस्य ग्राहकग्रहणमेव लक्षणायां कारणमिति शङ्कते— विनियुक्तेति। तदेव हि ग्राहकग्रहणं न युज्यत इति परिहरति —मिथ्येति तदुपपादयति— न खल्विति। स्वपदोपस्थापितं संनिहितमपूर्वं परित्यज्य, प्रयाजादियागानां व्यवहितेन ग्राहकेणान्वय एव न सिध्यति। तदन्वयोत्तरकालं तु संनिहितेनापूर्वेण विषयताऽन्वय इति तु दूरे। तदन्वयबलाच्च लिङो मुख्यार्थत्वासंभव इति तु दूरतर इति भावः। कार्यबाधेन— कार्यान्वयपरित्यागेन।

ननु प्रयाजादिषु यदि प्रथमत एवापूर्वान्तरं निश्चीयते, ततः संनिहितपरित्यागेन प्रयाजादीनां व्यवहितग्राहकान्वयो न स्यात्। तस्यैवानिर्णयाद्धुवत्येव ग्राहकग्रहणमिति शङ्कते— प्रत्यभिज्ञेति। प्रयाजादिषु व्युत्पत्तिबलादपूर्वं तावदभिधीयते। तद्यथा प्रथममपूर्वान्तरमिति न निर्णीतं, तद्वत् प्रधानापूर्वमित्यप्यनिर्णीतम्। इदं वा, अन्यद्वेति। किंच शङ्कितमेव तदानीमवतिष्ठते, उत प्रधानापूर्वमेवेदमिति निर्णीतं, उतापूर्वान्तरमिति विकल्प्य द्वितीयं पक्षमुत्तरत्र तत्रेत्यादिनाऽसंभवेन दूषयिष्यन् प्रथमं पक्षमपूर्वान्तरवत् ग्राहकस्यापि अनिर्णीतत्वेन न तेनान्वय उपपद्यत इति बहिरेव दूषयित्वा, विमर्शोत्तरकालं तृतीयपक्षे प्रधाननियोगविषयानुप्रवेशाभावेनापूर्वान्तरमेवेति निर्णीयत इति सुतरां ग्राहकग्रहणं नोपपद्यत इत्याशयेनाह—तदेव तर्हीत्यादिना। तदेव—अपूर्वमेव। निरूपयितव्यं—विमर्शयितव्यम्। विषयानुप्रवेशं—विषयनिर्वर्तकत्वम्। विषयविनियोगं—विषयस्य ग्राहकेण ग्रहणम्। अनुमन्यत इति। निश्चिनोति वाक्यार्थनिर्णयाय प्रवृत्तः पुमान्। स एव तु विनियोगो न संभवतीति शेषः।

अथेति। तृतीयपक्षे विषयानुप्रवेशद्वारादर्शनेन नियोगान्तरनिर्णयात् ग्राहकग्रहणं न संभवतीत्यर्थः। ननु ग्राहकस्य प्रयाजादिवाक्यगतलिङर्थतया निर्णयाभावेऽपि अधिकारवाक्यगतलिङ्शब्दनिर्णीततया तेन प्रयाजादीनामन्वयात् ग्राहकग्रहणं युज्यत इत्याशङ्क्य, तदपि

---

व्यवहितेन ग्राहकेणान्वय इति न सिद्ध्यति, तदन्वयोत्तरकालं सन्निहितेनापूर्वेण विषयतयाऽन्वय इति दूरे। तदन्वयबलाच्च लिङादेर्मुख्यार्थत्वासंभवः, ततो लक्षणेत्यादिकन्तु सुदूरपराहतं स्यात्।

अपि च प्रयाजादिषु व्युत्पत्तिबलादपूर्वं तावदभिधीयते। तत् यथा प्रथममपूर्वान्तरमिति नावधारितम्, तथा प्रधानापूर्वमित्यपि न निर्णीतम् किञ्च इदम् तद्वेति शंकितमेव तदानीमवतिष्ठते, अथवा प्रधानापूर्वमेवेदमिति निर्णीतम्, अथवा, अपूर्वान्तरमिति त्रेधा विकल्पः। तत्राद्यः पक्षो नोपपद्यते-अपूर्वान्तरवत् ग्राहकस्याप्यनिर्णीतत्वात् तेनान्वयो नोपपद्यते—इति। न द्वितीयः— असंभवेन पराहतत्वात्। न तृतीयः—प्रधाननियोगविषयानुप्रवेशाभावेनापूर्वान्तरमेवेति निर्णीयते इति, सुतरां ग्राहकग्रहणं नोपपद्यत इति च ध्येयम्।

इतरथा श्रुतिबाधप्रसङ्गात् । परिहृत्य हि श्रुतिबाधं वाक्यबाधं च ग्राहको गृह्णाति । न तद्बाधे, नापि विरोधाशङ्कायाम् । अत्र च श्रुत्या प्रथमं तावद् ग्राहकस्य विरोधः शङ्क्यते । विषयानुप्रवेशसंभवे श्रुति-ग्राहकयोरविरोधः । असंभवे तु श्रुत्या ग्राहकस्य विरोधः स्यात् । लक्षणाप्रसङ्गात् । न चैवं विरोधे शङ्क्यमाने ग्राहको ग्रहीतुमीष्टे । मा ग्रहीष्ट ज्योतिष्टोमो यजमानद्वयसंयुक्तां 'युवं हि स्थः ता. ब्रा. ६-१९-६-९ इत्येतां प्रतिपदम् ।

## श्रुतिविरोधशंका–परिहारौ ।

तत्रापि हि प्रथमं तावदस्त्येव संदेहः । किं कथञ्चित्प्रकृतावेव यजमानद्वयं संभवति, ततश्चाविरोधः श्रुति–प्रकरणयोः, । अथ वाऽसंभवाद्विरोध इति । तदेवं सति यदि 'समिधो यजती'त्यत्र प्रधानापूर्वशङ्कया विरोधस्यानिश्चयात्प्रकृतसंबन्ध एव भवति । तस्मिंश्च सति तद्बलेनैव लिङ्शब्दस्य लक्षणाश्रयणमित्युच्यते । ततो यजमान-

---

स्ववाक्यगतलिङ्श्रुतिविरोधात् न युज्यत इत्याह—इतरथेति । इतरथा–अर्थविशेषनिर्णयात् पूर्वमेव ग्राहकग्रहणे । ननु प्रयाजादिवाक्यगतलिङ्श्रुतेः कथं विरोधः ? तदर्थस्यानिर्णीतत्वात् । तद्विरोधे वा कथं ग्राहकग्रहणानुपपत्तिरित्याशङ्क्य, तदुभयमुपपादयितुं सामान्यन्यायमाह—परिहृत्येति । ग्राहकान्वयस्य द्वारान्वयनिर्वाह्यत्वात्, द्वारान्वयस्य च श्रुत्याद्यधीनत्वात् तद्विरोधे ग्राहकान्वय एव न सिध्यतीत्यर्थः । तद्बाधे–तद्विरोधनिर्णये । प्रकृते तु विरोधशङ्कया ग्राहकग्रहणं नोपपद्यत इत्याह—अत्रेत्यादिना । व्युत्पत्तिबलात् प्रधाननियोगोऽयमित्येतावन्मात्रं प्रथममेव निर्णीतम् । प्रयाजादीनां तदन्वयश्च निर्णीत एव । तत्र नियोगो यदि ग्राहकः स्यात्, तदा न कश्चित् विरोधः । यदि नियोगान्तरं, तदा एकस्य युगपत् प्रधानद्वयान्वयायोगात् प्रयाजादीनां ग्राहकान्वयो वा परित्याज्यः, नियोगान्तरान्वयो वा । लिङ्शब्दस्य मुख्यार्थत्यागेन तस्य प्राधान्यं वा परित्याज्यमिति विरोधोऽस्त्येव । तत्र यद्यपि नियोगान्तरमिदमिति प्रथमत एव निर्णयाभावात् तदानीं श्रुतिविरोधो ग्राहकस्य न निर्णीतः । तथापि नियोगान्तरकोटेरपि शङ्कितत्वात् विरोधशङ्कास्ति । एतावतापि ग्राहकग्रहणं न युज्यते इत्यर्थः । विषयानुप्रवेशेति । विषयानुप्रवेशे सत्यवघातादिष्विव स एव ग्राहक इति न कश्चिद्विरोध इत्यर्थः ।

ननु प्रथमं श्रुतिविरोधशङ्कायामपि तन्निर्णयाभावात् ग्राहकग्रहणं स्यात् । तस्मिंश्च निर्वृत्ते पश्चात् तद्बलेन श्रुतिबाधोऽपि स्यादित्याशङ्क्य, विरोधशङ्कायां ग्राहकग्रहणाभावस्थलमुदाहरति—मा ग्रहीष्टेति । दृष्टान्तेऽपि प्रथमं न तद्विरोधनिर्णयः । किंतु तच्छङ्कयैव ग्राहकग्रहणाभाव इत्युपपादयति—तत्रापीति । न्यायसाम्यात् दृष्टान्ते दोषमापादयितुं प्रकृते

---

किञ्च ग्राहकान्वयस्य द्वारान्वयनिर्वाह्यत्वात्, द्वारान्वयस्य श्रुत्यधीनत्वात्, तद्विरोधे ग्राहकान्वय एव न सिद्ध्यति ।' विनियोगाभिप्रायम् विध्यभिधानमित्यादिग्रन्थसन्दर्भस्य अयमाशयः । तथाहि–विधेश्चत्वारि प्रमेयानि क्रमभावीनि–उत्पत्ति–विनियोगाधिकारप्रयोगाख्यानि भवन्ति । तत्रोत्पत्ति-विनियोगौ सन्निपत्योपकारकाणाम्, आरादुपकारकाणाञ्च स्वस्वविधिभिरेव भवतः तस्यां वेलायामंगविधयो विधायका इत्यभिधीयन्ते, तदभिप्रायेण 'न चाविहितमंगं भवती'ति भाष्यम् । अधिकार–प्रयोगयोस्तु प्रधानविधिनैव सिद्धत्वात् तस्यामवस्थायामनुवादका इत्युच्यन्ते, पुरुषप्रयत्नैः अनुवाद इति भाष्यञ्चेति सर्वांगविषयतया व्याख्येयमिति ।

द्वित्वसंभवाशङ्कया श्रुतिविरोधस्यानिश्चयाद्ग्राहकग्रहणे प्रतिपदः संजाते, तद्बलेनैव द्वित्वश्रुतेर्लक्षणयैकत्वप्रतिपादकत्वम्, पत्न्यभिप्रायकत्वं वा प्रसज्येत। विरोध एव तत्र निश्चितः, न शङ्कामात्रमिति चेत्। कथं तह्यधिकरणारम्भः। न हि निर्णीते न्यायेन विचारः संभवति, सत्यपि संदेहे पश्चाद्विरोधनिर्णयः प्रतिपदीव समिद्यागेऽपि भवति।

यदि मन्येत न समिदादिषु प्रथमं सन्देहः। किन्तर्हि सन्निधानात्प्रकृतापूर्वमेवेदमिति भ्रान्तिर्भवति। ततश्चाविरोधाद् ग्राहकग्रहणमिति। तथाऽपि पश्चाद्विरोधदर्शनेन तद्व्यावर्तते, यथा पूर्वपक्षन्यायेन निश्चिते प्रतिपदः प्रकरणग्रहणे, सिद्धान्तन्यायेन श्रुतिविरोधप्रतिभासे सति तादृश्यं व्यावर्तते।

## स्वाभ्युपगमविरोधेन तन्मते दोषोद्भावनम्।

किञ्च यदि नियोगान्तरमवघातादिवदप्रतिपन्नम्, ततस्तद्वाक्यगामिनामवहन्त्यादिशब्दानामिव प्रयाजादिवाक्यगतानामपि यज्यादिशब्दानां प्रधानापूर्वान्वितस्वार्थाभिधायकत्वं किं नाभ्युपगम्यते। एषा हि तत्र युक्तिः-यद्येषां प्रधानापूर्वान्वितस्वार्थो-

---

तदुपपादनक्रमनुवदति—तदेवमिति। तमापादयति—तत इति। पत्न्यभिप्रायमिति। यजमानश्च यजमाना च यजमानौ, तयोरित्येकशेषेण पत्नीयजमानगतद्वित्वाभिधानात् द्विवचनोपपत्तिः। लक्षणयेति। यजमानयोरिति कर्तृगतद्वित्वस्यैवाभिधानात् पत्नीयजमानयोश्च कर्तृत्वस्यैकत्वात् तदवयवभूतयोस्तयोर्द्वित्वमवयविगतद्वित्ववाचकेन द्विवचनेन लक्षणयैव प्रतिपाद्यमित्यर्थः।

ननु दृष्टान्ते प्रथममेव श्रुतिविरोधनिर्णयात् न ग्राहकग्रहणम्। प्रकृते तु विरोधानिर्णयात् तच्छङ्कायामपि ग्राहकग्रहणं स्यादिति विशेषं शङ्कते—विरोध एवेति। एवं तर्हि प्रतिपदधिकरणारम्भ एव व्यर्थः स्यादिति दूषयति—कथं तर्हीति। ननु प्रथमं विरोधसंशयेऽप्यधिकरणविचारोत्तरकालं पश्चात् श्रुतिविरोधनिर्णयात् न प्रतिपदो ग्राहकग्रहणमित्याशङ्क्य, अत्रापि विचार्यमाणे प्रयाजादीनां ग्राहकविषयानुप्रवेशासंभवेनापूर्वान्तरस्यैव निर्णीततया पश्चात् श्रुतिविरोधनिर्णयात् ग्राहकग्रहणानुपपत्तिः समानैवेत्याह—सत्यपीति।

ननु प्रयाजादिवाक्यगतलिङर्थस्यानिर्णये खलु श्रुतिविरोधशङ्का। स तु ग्राहक एवेति प्रथममेव निर्णीयते। अतो न विरोध इति शङ्कते—यदि मन्येतेति। एवं भवेन्नाम ग्राहकग्रहणम्। अथापि तन्मूलस्य ग्राहक एवायमिति प्राथमिकनिर्णयस्य भ्रान्तिज्ञानत्वेन पाश्चात्येनापूर्वान्तरमिति सम्यङ्निर्णयेन बाधात्, तन्मूलस्य ग्राहकग्रहणस्यापि तेनैव बाधः स्यात्। न तु भ्रान्तिमूलेन ग्राहकग्रहणेन श्रुतेर्मुख्यार्थबाधो युज्यत इति परिहरति—तथापीति। उपपादितेऽर्थे दृष्टान्तमप्याह—यथेति।

प्रथमं नियोगान्तरं न निर्णीयते। नापि शङ्क्यते। अपि तु ग्राहकमेवेदमिति निर्णीयत इत्ययं पक्षः स्वाभ्युपगमविरुद्धश्चेत्याह—किंचेति। एवं हि तस्याभ्युपगमः। संनिपातिनां ग्राहक-

---

विधिर्हि समीहितसाधनत्वं बोधयन्निष्ठापयति, अंगानां साध्यत्वनिर्वाहः फलभावनासंबन्धोत्तरमेव, तदा तद्वारांगानां प्रधानविध्यन्वयात् तेनैवानुष्ठानं सिद्ध्यतीत्याद्यभागस्य तात्पर्यम्। करणेषु, अंगेषु, च यथा यथा प्रधानविधिरवतरति, तथा तथा तेषु प्रधानभावनाप्यवतरतीति, तथैवानुष्ठानसिद्धेः साऽप्यनूद्यत इति द्वितीयभागस्य तात्पर्यमिति निर्गलि-

भिधायित्वं स्यात्, तथा सत्युत्पत्तावेवान्यतिरश्चीनतयाऽवगतस्य नियोगान्तरविषयता न स्यात्, कार्यद्वये संबन्धानुपपत्तेः। न ह्येकं वस्तु युगपत् कार्यद्वयसंबन्धि प्रत्येतुं शक्यमिति। इदं च प्रतीते नियोगान्तरे शक्यमभिधातुम, नाऽप्रतीते। तेन यदि नियोगान्तरमप्रतिपन्नम्, ततो विरोधाभावाद्यजिशब्दस्य प्रधानापूर्वान्वितस्वार्थाभिधायित्वमवहन्त्यादिवत्स्यात्।

## पक्षद्वयेऽपि प्राधान्येन दूषणद्वयस्य प्रदर्शनेनोक्तार्थस्य निगमनम्।

अथ प्रतिपन्नम्, ततः श्रुतिविरोधे ग्राहकग्रहणानुपपत्तिरिति सेयमुभयतः पाशा रज्जुरिति। अथ प्रथममप्रतिपन्नेऽपूर्वान्तरे यजेरेवाधिकारापूर्वान्वितस्वार्थाभिधायित्वमवगतमपि पश्चान्नियोगान्तरावगत्या बाध्यते। ततो ग्राहकग्रहणमपि श्रुतिविरोधाद्बाधितव्यम्। तस्मान्न कथं चिदपि प्रयाजादीनामङ्गत्वं संभवति।

---

विषयानुप्रवेशसंभवेन तद्वाक्येषु लिङर्थस्य ग्राहकमेवेदमिति निर्णयात् अन्योन्यान्विताभिधानं भवति। प्रयाजादीनां तद्विषयानुप्रवेशासंभवेनापूर्वान्तिरस्यापि शङ्कितत्वात्, न तत्र यजतिशब्देन ग्राहकान्वितस्वार्थोऽभिधीयते। किंतु स्वार्थमात्रमुपस्थाप्यते। तस्मिन्नुपस्थिते ग्राहकमेव तदन्वितं स्वशब्देनाभिधीयते। ग्राहकेण सहान्योन्यान्विताभिधाने पश्चादपूर्वान्तरविषयत्वायोगादिति। अस्मिंस्तु पक्षे संनिपातिष्वित्राणां ग्राहकमेवेदमिति निर्णयात् तद्वदेवान्योन्यान्विताभिधानं स्यादित्याह–तथा सतीति।

यत्तु प्रथमगन्यशेषभूतं प्रतीयते, तस्य संनिहितैर्योग्यैरनेकैरपि शेषिभिरन्वय उपपद्यते। यस्य तु किंचिच्छेषतयैव प्रतीतिः, तस्यान्यशेषत्वं न युज्यत इति स्थितिः। अत्र 'समिधो यजतीत्या'दिषु यदि यागस्वरूपमेवोपस्थाप्यते, तदा तस्य ग्राहकान्तरान्वयः, अपूर्वान्तरान्वयश्चोपपद्यते। यदि तु ग्राहकान्वित एव स्वार्थोऽभिधीयेत, तदा पश्चान्नियोगान्तरविषयतयान्वयो नोपपद्यत इत्यर्थः।

ननु प्रथमत एव ग्राहक–नियोगान्तराभ्यामन्वित एव स्वार्थो यजतिनाऽभिधीयतामित्याशङ्क्याह–कार्यद्वयेति। अनुपपत्तिमेवाह–न हीति। इत्थं तदभ्युपगमक्रममुक्त्वा प्रकृतपक्षस्य तद्विरोधमाह–इदं चेति। नियोगान्तरप्रतीतिर्नास्तीति खलु प्रकृतः पक्ष इत्यर्थः। एवं नानाविधचर्चया पक्षद्वये दूषणद्वयं प्राधान्येन फलितमित्याह–तेन यदीति। अथ प्रतिपन्नमिति। संशयेन वा, निश्चयेन वेति शेषः। अपूर्वान्तराप्रतिपत्तिपक्षे प्रथमं यजतिशब्देन ग्राहकान्वितस्वार्थाभिधानमङ्गीकृत्यैव पश्चान्नियोगान्तरनिर्णयेन प्रथमनिर्वृत्तस्यापि तस्य बाधाद्, यागस्य नियोगान्तरान्वयोऽप्युपपद्यत इति शङ्कते–अथ प्रथममिति। एवं तर्हि यथा यजतेर्ग्राहकान्वितस्वार्थाभिधानस्य नियोगान्तरनिर्णयेन बाधः, तद्वत्–ग्राहकस्यापि एतदन्वितस्वार्थाभिधानं तेनैव बाध्येतेति परिहरति–तत इति। निगमयति तस्मादिति।

---

तोऽर्थः—इति। तथा चोक्तं ग्रन्थकृता विनियोगाभिप्रायं विध्यभिधानम्, इतरच्च प्रयोगाभिप्रायमित्येतत् व्याख्येयमिति। इदञ्च प्रकरणपञ्चिकायाः पृ० सं० ४६२–४६३ खण्डनमिति बोध्यम्।

तदपि विनियोगे प्रमाणान्तरमस्तीति वक्तुमन्यत इत्यर्थः। अत्रेदं बोध्यम्-प्राभाकरमीमांसका मन्यन्ते-शेषत्वं द्विविधं वैनियोगिकम्, औपादानिकञ्चेति। तत्र वैनियोगिकम् शेषत्वं

## भाष्यसन्दर्भद्वयस्य आरादुपकारक-सन्निपत्योपकारकविषयव्यवस्थया प्राभाकरीयव्याख्यानस्यानुवादः।

यदपि च-'न चाविहितमङ्गं भवती'त्येतदनूतवदनप्रतिषेधमधिकृत्याभिहितमारादुपकारकविषयकम्। अनुवादाभिधानं तु जञ्जभ्यमानमन्त्रवचनाधिकारात्सन्निपातिविषयम्—इति। तत् तावन्मात्रालोचनेनोक्तम्। अन्यथा कथं तदुत्सर्गे कर्माणीत्यत्रा-मी. द. ४-१-३ रादुपकारकमेवाभिप्रेत्य पुरुषप्रयत्नोऽनुवाद इति वदत्येव भाष्यकार इति, नैवं व्याख्यातुं शक्यते।

## उत्पत्ति—विनियोग—प्रयोगाधिकारेष्वाद्यद्वयं सन्निपातिनाम्, आरादुपकारिणाञ्च स्वविधिभिरेव भवति, अधिकार—प्रयोगौ तु प्रधानविधिनेत्याशयेनाऽनुवाद इति भाष्यद्वयस्य सर्वांगविषयतया व्याख्यानेन तन्निरासः।

कथं तर्हि व्याख्यानम्? विनियोगाभिप्रायं विध्यभिधानम्, इतरच्च प्रयोगाभिप्रायमित्येवमेतत् व्याख्येयम्। न ह्यसति विधौ समिदादीनामङ्गत्वं सिध्यति। ननु प्रकरणेनैवान्तरेणापि विधिं श्रुत्यैव समिदादीनां सोमादीनामिवाङ्गत्वं सिध्यति। यथा

---

विषयव्यवस्थया यद्भाष्यकारवाक्यद्वयस्य स्वमतानुकूल्यमुक्तं तदपि दूषयितुमनुवदति—यद्पि चेति। दूषयति—तदिति। प्रदेशान्तरे भाष्यकारेणैवारादुपकारकविषयेऽपि पुरुषप्रयत्नानुवादवचनात् विषयव्यवस्थैव न युज्यत इत्यर्थः। स्वमतेन भाष्यद्वयं व्याख्यातुमाकाङ्क्षामुत्थापयति—कथं तर्हीति। उत्तरमाह विनियोगेति। उत्पत्तिविनियोगाधिकारप्रयोगाश्चत्वारोऽपि क्रमिका विधिप्रमेयाः। तत्रोत्पत्ति-विनियोगावारादुपकारिणां, संनिपातिनांच्च सर्वेषामप्यङ्गानां स्वस्वविधिभिरेव भवत इति, तस्यां वेलायामङ्गविधयो विधायका इत्युच्यन्ते। अधिकार—प्रयोगयोस्तु प्रधानविधिनैव सिद्धत्वात्, तस्यां दशायामनुवादका इत्यभिधीयन्ते। तत्परं च भाष्यद्वयमिति सर्वाङ्गविषयतया व्याख्येयमित्यर्थः। तत्र प्रथमभाष्यस्यार्थं विविच्य कथयति—नह्यसतीति। समिदादीनामित्यादिशब्देन संनिपातिनामपि परिग्रहः।

नन्वङ्गानां विनियोगस्यापि प्रधानविधिनैव सिद्धेरङ्गविधीनां प्रयोजकत्ववत्, विनियोजकत्वमपि नोपपद्यत इति शङ्कते—नन्विति। समिदादीनामङ्गत्वं सिध्यतीत्यन्वयः। तत्र दृष्टान्तः—श्रुत्यैवेति। ननु विध्यभावे प्रकरणमात्रेण कथमङ्गानां विनियोगः। विनियोगस्य विधिप्रमेयत्वादित्याशङ्क्य, प्रकरणेन प्रधानभावनाविशेषणतया विधेयविशेषणसमर्पणमुखेन प्रधानविधेरेव साहाय्यकरणादङ्गानां पृथग्विध्यभावेऽपि तेनैव विनियोगः सिध्यतीति दृष्टान्तमुखेन प्रतिपादयति—यथेति। अङ्गानां पृथग्विध्यभावे प्रकरणविनियोगस्यैवासिद्धेः, प्रधानभावनाविशेषणत्वं

---

श्रुत्यादिप्रमाणषट्कसहितं तृतीयेऽध्याये निरूप्यते, यत्तु स्वसिद्ध्यर्थमुपादीयते, तदपि विधेयमिति तन्त्रे व्यवहारः' बृ० टी० पृ ३७। उपादीयते—आक्षिप्यते इति तदर्थः। इदमेवाक्षेपापर्यायम्। तेन चोपादानाख्येन प्रमाणेन शेषत्वम्, उत्पत्तिः, विनियोगः, अधिकारः प्रयुक्तिरिति चतुर्विधं प्रमेयमवगम्यते। यथोक्तं शालिकाचार्येण, अत्राधिकरणे उपादानलक्षणो विधिव्यापारः प्रमाणान्तरभूतः क्वचिदैदमर्थ्ये, क्वचिदनुष्ठाने, क्वचिदधिकारे, क्वचिदुत्पत्तौ विद्यत इति प्रतिपाद्यते। यथा प्रोक्षणादीनामन्विताभिधानतः प्रतिपन्ननियोगैदमर्थ्यानां पश्चादौपादानिकं तदुभय-

'सोमेन यजेते'ति यजिविध्यतिरेकेण सोमस्य विध्यभावेऽपि तृतीयया विनियुक्तस्य प्रधानविधिनैव विधानम्। एवं प्रयाजादीनामपि प्रकरणेन दर्शपूर्णमासयोर्विनियोगे सति विशिष्टप्रधानविधेरेव विशेषणभूतानां प्रयाजादीनां विधिसिद्धेः, नार्थः पृथग्विधानेनेति चेत्। सत्यम्, विशिष्टविधिर्विशेषणमास्कन्दति। विशेषणत्वन्तु नर्ते विधानात्सिध्यति सिध्यति प्रकरणेनेति चेत्। न। तस्यैव विध्यधीनत्वात्। साकाङ्क्षस्य हि साकाङ्क्षे विनियोगः प्रकरणार्थः। न च विधिविधुराणामङ्गानां प्रयोजनापेक्षाऽस्ति, समानपदोपनीतं धात्वर्थमेव भाव्यं समासाद्य भावनायाः परितुष्टत्वात्। विध्युपहिता तु न तावन्मात्रेण परितुष्यतीति, भवति प्रयोजनापेक्षा। सत्यां च तस्याम्, प्रकरणेन दर्शपूर्णमासयोर्विनियोगादङ्गत्वं प्रयाजादीनां सिध्यति। तस्मादङ्गत्वसिद्ध्यर्थमेव समिदादिषु विधिना भवितव्यमिति। एवमङ्गभूतेषु तेषु विशिष्टप्रधानविधिनैव प्रयोगसिद्धेः, तस्मिन्नंशेऽङ्गविधिरनुवादोऽभिधीयते। तस्मादुभयमुपपन्नमिति सर्वमवदातम्। तत्प्रकरणमेव प्रयाजादीनां विनियोजकमिति।

---

न सिध्यतीति, तद्द्वारा प्रधानविधिसंक्रमायोगात् न तेन तेषां विनियोग इति परिहरति—**सत्यमिति**। प्रकरणस्य विध्यधीनत्वमुपपादयितुं तच्छब्दार्थमाह—**साकाङ्क्षस्य हीति**। भाव्यापेक्षिणीष्वितरभावनासु फलभावनाया इतिकर्तव्यताकाङ्क्षा प्रकरणमित्यर्थः।

प्रकरणस्य विध्यधीनत्वं व्यतिरेकमुखेनोपपादयति—**न चेति**। भावनायाः स्वस्वभावात् भाव्यमात्रमेवाकाङ्क्षितम्। समीहितरूपभाव्याकाङ्क्षा तु प्रवर्तनारूपविध्यन्वयबललभ्या। विध्यन्वयाभावे त्वपुरुषार्थोऽपि धात्वर्थः संनिहिततया भाव्यः स्यादिति समीहितभाव्याकाङ्क्षा नास्तीति, नान्योन्याकाङ्क्षालक्षणं प्रकरणं संभवतीत्यर्थः। न केवलमितिकर्तव्यताकाङ्क्षामात्रं प्रकरणम्। किंतु पृथग्विधिसंभवे प्रकरणं संभवति। तेन तु विनियोगः सिध्यतीत्याह—**विध्युपहितेति**। आरादुपकारिषु संनिपातिषु चोभयत्रापि धात्वर्थस्यापुरुषार्थतया भाव्यत्वानुपपत्तिः समाना। आरादुपकारिषु तु असंयुक्ततया समीहितं भाव्यरूपमेवाकाङ्क्षितम्। संनिपातिषु तु संयुक्तानां व्रीह्यादीनां समीहितत्वसिद्ध्यर्थमाकाङ्क्षोदेतीत्युभयोरपि विधिबलात् प्रकरणेन ग्रहणं संभवतीत्यर्थः।

स्वमतेन 'नचाविहितमि'ति भाष्यव्याख्यानं निगमयति—**तस्मादिति**। द्वितीयभाष्यार्थमाह—**एवमिति**। **प्रधानविधिनैवेति**। विधिर्हि समीहितसाधनत्वं बोधयन्ननुष्ठापयति। अङ्गानां च तत्साधनत्वनिर्वाहः फलभावनासंबन्धोत्तरकालमेव। तदानीं तु तद्द्वारा अङ्गानां प्रधानविध्यन्वयात् तेनैवानुष्ठानं सिध्यतीत्यर्थः। **अनुवाद इति**। करणेष्वङ्गेषु यथा यथा प्रधानविधिरवतरति, तथा तथा तेषु प्रधानभावनाप्यवतरतीति तयैवानुष्ठानसिद्धे- साप्यनूद्यत इत्युच्यत इति पुरुषप्रयत्नोऽनुवाद इति भाष्यमुपपद्यत इत्यर्थः। स्वमतेन भाष्यद्वयव्याख्यानं निगमयति—**तस्मादिति**। महाप्रकृतं निगमयति—**तत्प्रकरणमिति**।

---

प्रतीतिनिर्वाहकं द्वारैदमर्थ्यसाध्यं करणैदमर्थ्यम्। सचायमुपादानलक्षणो विधिव्यापारः श्रुत्यादिप्रमाणषट्कातिरेकी' ऋ० वि० पृ० ९५३ इति। एवञ्च तन्मते यस्त्वंगग्राहकस्साधिकारः प्रधानविधिरेव विनियोजकः प्रयोजकश्च, स हि यत्रोत्पत्तिविनियोग-प्रयोगा अन्यतोऽसिद्धाः, तत्र स्वयमेव स्वसामर्थ्यात् तत् कल्पयति।

## क्रम-समाख्ययोः प्रतिपादनम् ।

क्रमस्तु देशसामान्यलक्षणः । स च द्विविधः-पाठसादेश्यम्, अनुष्ठानसादेश्यमिति । पूर्वं तावद्यत्राङ्गाङ्गिनोः समानदेशे पाठः । यथा दब्धिमन्त्रस्य, उपांशुयाजस्य च । उत्तरमपि यत्र समानदेशेऽनुष्ठानं शेष-शेषिणोर्भवति । यथा दैक्षस्य पशोः, पशुधर्माणाञ्च । द्विविधेनापि सादेश्येन दब्धिमन्त्रस्य, पशुधर्माणाञ्चोपांशुयाजे अग्नीषोमीये च विनियोगः भवति ।

समाख्या नाम यौगिकी संज्ञा । सा च लौकिकी, वैदिकी च । यथा होतृचमस इति, यथा वाऽऽध्वर्यवमिति । तया चमसभक्षे होतुः, पदार्थकरणे चाध्वर्योर्विनियोग इति ।

### विनियोजकमेतावदिति श्लोकशेषस्याभिप्रायवर्णनाय प्राभाकरसम्मतस्योपादानाख्यप्रमाणस्योपन्यासः प्रमेयाभावेन तन्निरासश्च ।

[1]यस्तु विधिव्यापारमुपादानाभिधानं सप्तमं प्रमाणं विनियोगे मन्यते, तस्योत्तरं विनियोजकमेतावदिति । न खलूपादानं नाम शेषप्रमाणं संभवति, प्रमेयासंभवात् ।

---

प्रकरणं परिसमाप्य, क्रमप्राप्तस्य स्थानप्रमाणस्य स्वरूपमाह-क्रम इति । तं विभजते-द्विविध इति । तत्र प्रथमस्य स्वरूपमाह—पूर्वं तावदिति । उदाहरति यथेति । यस्मिन् क्रमे उपांशुयाजयाग आम्नातः । तस्मिन्नेव क्रमे मन्त्रोऽयं पठित इत्यर्थः । द्वितीयस्य स्वरूपम् उदाहरणं चाह—उत्तरमपीति । दैक्षस्य पशोरिति । यस्मिन्नहनि अग्नीषोमीयपशोः अनुष्ठानमाम्नातम् तस्मिन्नेवाहनि अनुष्ठेयतया पशुधर्मा आम्नाता इत्यर्थः । उभयोरपि स्वरूपमुक्त्वा, विनियोजकत्वमाह—द्विविधेनेति ।

समाख्यास्वरूपमाह समाख्येति । विभजति—सा चेति । उदाहरति—यथेति । होतृचमसं, मैत्रावरुणचमसं चेति वेदवाक्यसिद्धा होतृचमसादिसमाख्या वैदिक्य इत्यर्थः । आध्वर्यवम्, औद्गात्रं हौत्रमित्यादिसमाख्यास्तु याज्ञिकप्रसिद्धिमात्रसिद्धाः पौरुषेय्य इत्यर्थः । विनियोजकत्वमाह—तयेति । पदार्थकरणे-कर्मणामनुष्ठाने ।

विनियोजकमेतावदिति श्लोकशेषस्याभिप्रायमाह—यस्त्विति । तस्मिन्मते यस्त्वङ्गग्राहकः साधिकारः प्रधानविधिरेव विनियोजकः प्रयोजकश्च । स हि यत्रोत्पत्ति-विनियोगप्रयोगा अन्यतः सिद्धाः तत्र तानेवोपजीवति । यत्र त्वेते नान्यतः सिद्धाः तत्र स्वयमेव स्वसामर्थ्यात् तत्कल्पयति । ततश्च विधिव्यापारो विनियोजक इति, तदपि विनियोगे प्रमाणान्तरमस्तीति मन्यत इत्यर्थः । तस्योत्तरं तन्निराकरणार्थमुक्तम् ।

---

१. प्राभाकरमीमांसकाः उपादानाख्यं शेषत्वप्रतिपादनायाऽभ्युपगच्छन्ति, तेषामपमाशयः । तथाहि—तृतीये अध्याये श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्यानैश्शेषविनियोगलक्षणमुक्तं भाष्ये । तेन च श्रुत्यादिव्यतिरिक्तमुपादानाख्यं शेषत्वे प्रमाणान्तरमस्तीत्यवगम्यते । तेन प्रमाणेन शेषत्व-प्रयुक्ति-अधिकारोत्पत्त्याख्यं चतुष्टयमध्यायार्थः । तदेवानूद्य प्रमेयाभावादत्र निराकरोति । अतएवोक्तं सोमनाथेनयस्त्विति ये उपादानप्रमाणनिरासाय न्यायरत्नमालादौ प्रपञ्चनादिह दिङ्मात्रमुक्तम्' म. मा. पृ. ३४७ इति ।

यदप्युच्यते । तत्कृतञ्च प्रोक्षणादेः क्रत्वर्थत्वमिति । तदप्ययुक्तम् । श्रुत्यैवापूर्वसाधनरूपे विनियोगात् । एतदेव हि तत्साधनरूपशेषत्वम्, यद्द्वारेणापूर्वशेषत्वम् । तथाऽपि कथं क्रत्वर्थत्वम् ? उच्यते । व्रीहीणां तण्डुल-पेषण-पिष्ट पुरोडाशादियागप्रणालिकयाऽपूर्वसाधनत्वम् । तथाविधांश्चोद्दिश्य विधीयमानं प्रोक्षणं सर्वस्य द्वार-द्वारिभावावस्थितस्याङ्गं भवति । कथं चोपादानेन क्रत्वर्थत्वं प्रोक्षणादेः । यदि मतं नियोगेदमर्थ्यं तावद् ग्राहकग्रहणेनव प्रोक्षणादेरवगतम्, तच्च करणतया न संभवति, स्ववाक्यगतकरणावरोधादिति पारिशेष्यात्करणोपकारकत्वेनैव तादर्थ्यं निर्वहतीति, नियोग एव तदन्वितः प्रतिपन्नस्तस्य करणोपकारकतां कल्पयन्करणैदमर्थ्यमाक्षिपतीति ।

---

तन्मतं निराकरोति—न खल्विति । उपादानस्य प्रमेयमाशङ्कते— तत्कृतमिति । संनिपातिनामपूर्वशेषत्वं ग्राहकग्रहणेन भवति । व्रीह्यादिद्वारशेषत्वं तु श्रुत्यादिभिः । करणशेषत्वं तु नान्यतः सिद्धमिति, उपादानमेव तेषां तच्छेषतया विनियोजकमाश्रयणीयमित्यर्थः । द्वारशेषत्ववत् करणशेषत्वमपि तेषां श्रुत्यादिभिरेव सिध्यतीति नोपादानमाश्रयणीयमिति परिहरति तदप्ययुक्तमिति । अस्तु श्रुत्यैवापूर्वसाधनेषु विनियोगः कथं तया करणशेषत्वम् । तत्राह—एतदेवेति । अस्तु व्रीहिद्वारेणापूर्वशेषत्वमपि श्रुत्यैव । तया करणशेषत्वासिद्धिस्तु तदवस्थैवेति शङ्कते—तथापीति ।

व्रीहिद्वाराऽपूर्वशेषत्वं व्रीह्यपूर्वमध्यगततण्डुलादिसर्वशेषत्वमन्तरेण न सिध्यतीति तत्सर्वं श्रुत्यैवावगम्यते । तन्मध्यस्थेषु च करणमप्येकमिति, तच्छेषत्वेऽपि श्रुतिरेव प्रमाणमिति न प्रमाणान्तरमाश्रयणीयमिति परिहरति—उच्यत इति । तथाविधान् व्रीहीनिति शेषः । संनिपातिनां श्रुत्यैव करणशेषत्वमुपपाद्य, उपादानात्तदभिमतं तच्छेषत्वं दूषयितुं तत्प्रतिपादनक्रमं पृच्छति—कथं चेति ।

परस्य सिद्धान्तसिद्धं उपादानमाशङ्कते—यदि मतमिति । तादर्थ्यम्, अपूर्वैदमर्थ्यम् । तदन्वितः-प्रोक्षणाद्यन्वितः । तस्य-प्रोक्षणादेः । अयं भावः—संनिपातिनां प्रथमं ग्राहकग्रहणेन

---

इदञ्चोपादानं विध्याक्षेपरूपविधिव्यापारात्मकं शब्दप्रमाणान्तरमेव, न तु भाट्टसम्मतश्रुतार्थापत्तिवच्छाब्दप्रमोपजीवि तदनन्तरप्रवर्तमानं प्रमाणान्तरमिति गुरुतन्त्ररहस्यम् । अत एव 'यत्तु स्वसिद्धयर्थमुपादीयते, तदपि विधेयमि'ति टीकासन्दर्भस्य प्रथमारब्धग्राहकग्रहणनिर्वाहाय यत्किञ्चिद्द्वारेण विध्यन्वयितया शब्दबोध्यमिति. क. परि. पृ. ११० त्यर्थो दीक्षितेन्द्रैः कल्पतरुपरिमले विव्रियते स्म । विस्तरस्तु तत्रैव द्रष्टव्यः ।

ततश्च विधिव्यापारो विनियोजक इति । तत् करणतया न संभवति, तत्र स्ववाक्यगतकरणान्तरावरोधात् । अतः पारिशेष्यात् करणोपकारकत्वेनैव निर्वहति, तेन नियोग एव तदन्वितः प्रतीयमानः करणोपकारं कल्पयन् करणैदमर्थ्यमाक्षिपति, तत् उपादानाख्यप्रमाणेन क्रत्वर्थत्वम् । तत्र च द्वारापेक्षायां यथायथं श्रुत्यादिभिस्त्रिभिः प्रमाणैः व्रीह्यादिद्वारैदमर्थ्यञ्चावगम्यते । एवञ्च ( १ ) ग्राहकैदमर्थ्य ( २ ) द्वारैदमर्थ्य ( ३ ) करणैदमर्थ्यरूपस्यार्थत्रयस्याप्यन्यत एवावगमेन प्रकरणस्य सन्निपत्योपकारकेषु व्यापारो नास्तीति तन्मतपरिस्थितिः ।

यथोक्तं तृतीये श्रुति-लिंग-वाक्य-प्रकरण-स्थान समाख्यानैःशेषविनियोगलक्षणमुक्तप्रमाणान्तरसद्भावगमकं भाष्यम् ।

यद्येवं प्रकरणमेवेदमभिधानान्तरेणोक्तम् । तस्यापि ह्येतदेव रूपम्, भवत्पक्षे । प्रयाजादीनां ग्राहकग्रहणापादितापूर्वैदमर्थ्यनिर्वाहार्थं [1]करणतया तदसंभवात्करणोपकारद्वारकल्पनमिति [2]उपकारद्वारस्वरूपमेव प्राकरणिकम् । तज्जनकत्वं तु प्रयाजादीनामर्थ्यौपादानिकमेवेति चेन् । न तर्हि[3] प्रयाजादेर्विनियोगः प्राकरणिकः स्यात् । न हि प्रकरणकल्पितोपकारजननमात्रेण प्रकरणविनियोगः सिध्यति । सर्वेषामेव सन्निपातिनाम् । अनारभ्याधीतानाञ्चाङ्गानाम् तज्जनकत्वेन प्रकरणविनियोगप्रसङ्गात् अतःप्राकरणिकमेव प्रोक्षणादेरङ्गत्वम् ।

---

ग्राहकैदमर्थ्ये संजाते, तन्निर्वाहाय स एव ग्राहकः स्वयमेव स्वकरणोपकारद्वारपरिकल्पनेन करणैदमर्थ्यमाक्षिप्य, तन्निर्वाहार्थं श्रुत्यादिप्रतिपन्नद्वारैदमर्थ्यमुपजीवतीति । एवं तर्हि इदं प्रकरणमेव स्यात् । न पृथक् प्रमाणमिति परिहरति—यद्येवमिति । आरादुपकारिणां ग्राहकैदमर्थ्यनिर्वाहाय करणोपकाररूपद्वारपरिकल्पकं प्रकरणमिति हि भवन्मतम् । एतदेव संनिपातिष्वपि ग्राहकार्थत्वनिर्वाहाय तदेव द्वारं परिकल्पयेदिति, न तेषु तद्द्वारपरिकल्पनाय प्रमाणान्तरमाश्रयणीयमिति भावः ।

ननु श्रुत्यादिभिः द्वारेष्वसमर्पितेषु यत्करणोपकारमेव द्वारतया कल्पयति तत् प्रकरणम् । यत्तु तैः समर्पितेष्वपि द्वारेषु ग्राहकान्वयबलात्करणोपकारं, तज्जनकत्वं च कल्पयति, तदुपादानमिति प्रमेयभेदात् प्रमाणयोरपि भेदः संभवतीत्याशयेन शङ्कते—उपकारेति । एवं सति करणोपकारस्याखण्डत्वेन निरंशत्वात्, तस्य च प्रकरणेनैव प्रतीतत्वात्, उपादानप्रमेयांशासंभवेन प्रमेयभेदो न संभवति । तज्जनकत्वं च सर्वेषामङ्गानामविशिष्टमिति सर्वेषां प्रकरणविनियोग एव स्यात् ।

अथवा सर्वेषामपि न स्यात् । प्रयाजादीनामेव प्रकरणेन विनियोगः । संनिपातिनां तु उपादानेनेति भवदभिमतो नियमो न सिध्यत्येवेति परिहरति—न तर्हीति । एवमुपादानप्रकरणयोर्भेदस्यानिरूपणादारादुपकारिष्विव संनिपातिष्वपि प्रकरणमेव विनियोजकं फलितमित्याह—अत इति ।

---

तन्निरासायाह—विनियोजकमेतावदेव, नान्यत्किञ्चन प्रमाणमस्तीति । अस्यायमभिप्रायः । तथाहि—सर्वत्र प्रमेयपरिज्ञानाय प्रमाणान्यास्थीयन्ते, प्रकृते उपादानप्रमेयस्याभावेनोपादानाख्यं प्रमाणं नाभ्युपगममर्हतीति, किञ्चारादुपकारकेष्वेवाङ्गेषु प्रकरणस्य व्यापारः, न सन्निपत्योपकारकेषु । तेषु सप्तमाद्यव्युत्पाद्यं सर्वेषामपि पदार्थानां प्रधानापूर्वेण प्रयोजन-प्रयोजनिभावेन अन्विताभिधानरूपं यद्ग्राहकग्रहणाख्यं प्रमाणम् । इदञ्च विवेचितमस्माभिः प्रागेव ।

अत्र नेयं व्यवस्थोपपद्यते । यथा श्रुत्यादिभिर्व्रीह्यादिद्वारैदमर्थ्यम् भवति, तथा करणैदमर्थ्यमपि श्रुत्यादिभिरेव सिद्धयतीति, नोपादानाख्यं प्रमाणमाश्रयणीयम् ।

१ करणतदसंभवादिति मु. पु. पा. ।

२ उपकारस्वरूपमिति मु. पु. पा. ।

३ न तर्हि मु. पु. पा. ।

नन्वसंयुक्तं प्रकरणेन विनियुज्यते, संयुक्तञ्च प्रोक्षणमिति । नैष दोषः । 'संयुक्तानामपि द्वारापेक्षत्वात् तन्निबन्धनत्वाच्च करणोपकारद्वारपरिकल्पनस्य प्रयाजादिष्विव । [2]तदेवं प्रकरणशरीराविशेषेऽपि संयुक्तानां द्वारपरिकल्पकमुपादानम् । असंयुक्तानां च प्रकरणमिति समयमात्रम् । पश्वेकत्वादीनामपि श्रुत्यैव विनियोगः, ज्योतिष्टोमादीनामपि फलार्थत्वम् वाक्यादिभिरिति प्रागेव चर्चितम् । तस्मादुक्तान्येवाङ्गत्वे प्रमाणानीति ।

इति महमहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां न्यायरत्नमालाया-मङ्गनिर्णये द्वितीयः परिच्छेदः समाप्तः ।



---

ननु यद्यपि प्रमेयभेदो न संभवति । उभाभ्यामपि कल्पनीयस्यैकत्वात् । तथापि विनियोज्येष्वङ्गेषु द्वाराकाङ्क्षिषु सत्सु प्रधानस्येतिकर्तव्यताकाङ्क्षायामन्योन्याकाङ्क्षया द्वारपरिकल्पकं खलु प्रकरणम् । एतच्चारादुपकारिणामेव । तेषां श्रुत्यादिभिर्द्वारसंयोगालाभेन द्वाराकाङ्क्षाया अप्रतिहतत्वात् । संनिपातिनां तु श्रुत्यादिभिः द्वारलाभेन द्वाराकाङ्क्षापरिपूरणात् केवलं प्रधानाकाङ्क्षामात्रेण करणोपकारद्वारं परिकल्पनीयमिति नात्र प्रकरणं संभवति । किं तु उपादानमेवेति शङ्कते —नन्विति ।

संनिपातिष्वपि श्रुत्यादिभिः व्रीह्यादिद्वारलाभेऽपि तावन्मात्रेण ग्राहकान्वयानिर्वाहात् अतिरिक्तद्वाराकाङ्क्षायां करणोपकारद्वारं परिकल्प्यत इत्यन्योन्याकाङ्क्षालक्षणं प्रकरणं तत्राप्यव्याहतमिति परिहरपि—नैष दोष इति । एवं प्रमाणयोः प्रमेयभेदस्य, स्वरूपभेदस्य चासंभवे वैषम्यमात्रेण भेदकथनं न युक्तमिति निगमयति—तदेवमिति । समयमात्रं-स्वसिद्धान्तसंकेतमात्रमित्यर्थः ।

उपादानस्य प्रमेयान्तरमपि निराकरोति—पश्वेकत्वादीनामिति । आरुण्यादिवत् तृतीयाश्रुत्या क्रियया प्रथममन्वितयोरेकत्व पुंस्त्वयोर्द्रव्यान्वयस्तद्वदेव पार्ष्ठिक इति पूर्वमेव प्रतिपादनादित्यर्थः । भवदभिमतं प्रमेयान्तरमप्यन्यतः सिद्धमिति प्रागेवोपपादितमित्याह—ज्योतिष्टोमादीनामपि । विनियोजकप्रमाणनिरूपणमुपसंहरति—तस्मादिति ।

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने अंगनिर्णयेद्वितीयः परिच्छेदः ॥



---

अयं भावः—सन्निपत्योपकारकाणां प्रथमं ग्राहकग्रहणेन ग्राहकैदमर्थ्यं, तन्निर्वाहाय स ग्राहकः स्वयमेव स्वकरणोपकारकल्पनेन करणैदमर्थ्यमाक्षिप्य, तन्निर्वाहार्थं श्रुत्यादिप्रतिपन्नद्वारैदमर्थ्यमुपजीवति, अतः प्रकरणमेवेदम्, न पृथक् प्रमाणम्, तस्मादुपादान-प्रकरणयोर्भेदस्यानिरूपणात् आरादुपकारकेष्विव सन्निपत्योपकारकेष्वपि प्रकरणमेव विनियोजकमिति युक्तम् । एतेनासंयुक्तम् प्रकरणेन विनियुज्यते, संयुक्तं प्रोक्षणादिकन्तूपादानेनेति प्रत्याख्यातम् । एवञ्च प्रकरणोपादानयोः प्रमेयभेदस्य, स्वरूपभेदस्य चासंभवेन वैलक्षण्यं नोपपद्यते ।
तस्मात् सुष्ठूक्तं—

'विनियोजकमेतावदिति भाष्यविदो विदुः' इति ।

अंगनिर्णये द्वितीयपरिच्छेदस्य टिप्पणी समाप्ता ।

१ द्वारान्तरे ति. मु. पु. पा. । २ प्रमाणेति ब. पु. भा ।

# अथ अङ्गनिर्णये तृतीयः परिच्छेदः

## चतुर्थाध्यायप्रतिपाद्यार्थः।

### प्रयोगस्य विध्यधीनत्वप्रतिपादनम्।

एवं श्रुत्यादिभिरुपनीतेंऽशत्रयेऽनुष्ठानयोग्या भावना संजाता विधीयते अनुष्ठाप्यत इत्यर्थः। अनुष्ठापकत्वमेव हि विधेः स्वरूपम्। अवगते च फले तत एवानुष्ठानसिद्धेर्नार्थो विधिनेति चेत्। न। साधनत्वावगतिमात्रेण प्रवृत्त्यसंभवात्। साधनत्वमात्रं हि यागस्य फलं प्रत्यवगम्यते। तत्किं दैवनिर्मितस्येव निदाघसमयवर्तिमध्यंदिनतपनातपसंतप्ततनोरिव मेघपुष्पगर्भमेघसंघस्य संतापस्योत्सादकत्वं कर्मणः फलजनकत्वम्, उताऽन्यकृतस्य[1] प्रपादिवत्, भोजनादिवद्वा स्वयं कृतस्येति विशेषानवगमान्न प्रवर्तेत। विधिस्तु प्रवर्तकस्वभावात्कर्तु रेवेदं फलं साधयतीति कल्पयतीति, भवत्यनुष्ठापकः।

---

नायकरत्नम्।

एवं तृतीयाध्यायप्रतिपाद्यां सप्रमाणां त्रिनियोगचिन्तां परिसमाप्य, विनियोगोत्तरकालत्वात् प्रयोगस्य तदनन्तरं चतुर्थपञ्चमयोस्तच्चिन्ता संगतेति वदन् तच्चिन्तां प्रस्तौति—एवमिति। यद्यपि भावना प्रथममेव प्रत्ययश्रुतिबलात् प्रवर्तनैकरसेन विधिना संबध्यते, तथापि प्रयत्नमात्ररूपायास्तस्याः स्वरूपेणानुष्ठातुमयोग्यतया न तत्र तदानीमेव पुरुषं प्रवर्तयति। श्रुत्यादिभिस्त्वंशत्रये समर्पिते सा अनुष्ठानयोग्या संजायते। तथाऽनुष्ठाप्यत इत्यर्थः। अस्मिश्च प्रयोगविधिरेवान्यानपेक्षः प्रमाणमित्याह—अनुष्ठापकत्वमिति। विनियोगे तु श्रुत्यादिसहायो विधिः प्रमाणम्। प्रयोगे तु स्वयमेवेत्यर्थः।

ननु विधिरपि न वाय्वादिवत् बलात् पुरुषं प्रेरयति। किं तु फलसाधनत्वं भावनाया अवगमय्य पुरुषं प्रवर्तयतीति वक्तव्यम्। ततश्च भाव्यान्वयेन फलसाधनत्वे तस्य अवगते पश्चात् फलत एव रागाद्विधिमन्तरेणापि प्रवृत्तिः स्यादिति शङ्कते—अवगते चेति। विधिमन्तरेण फलसाधनत्वावगतिमात्रात् प्रवृत्तिनियमो न सिध्यतीति सदृष्टान्तं परिहरति—नेति। दैवनिर्मितस्येत्येतन्मेघविशेषणम्। मेघपुष्पं—जलम्। संतापस्येति। संतप्ततनोः पुरुषस्य यः संतापः, तस्येत्यर्थः प्रपा—पानीयशाला। अन्यसंपादितमेव प्रपाजलमन्यस्य संतापोपशामकमित्यर्थः।

एवं फलसाधनत्वमात्रस्य प्रवर्तकत्वे प्रवृत्त्यनियममुपपाद्य, विधेः प्रवर्तकत्वे तु तस्य प्रवर्तनैकरसत्वेन प्रवृत्तस्यैव पुरुषस्य फलमित्यवगमात् प्रवृत्तिनियमः सिध्यतीत्याह—विधिस्त्वति। ननु यदि विधिरेवानुष्ठापकः, तर्हि तस्य साक्षात् भावनयैवान्वयात् तस्या

---

१—विनियोगे श्रुत्यादिसहायं विधिं निरूप्य, प्रयोगविधिविषयभूतां प्रयुक्तिम् निरूपयति चतुर्थे। अर्थात् शेषशेषिभावे सिद्धे किमंगि कस्यांगस्य प्रयोजकम् ( अनुष्टापकम् ) इति कोष्ठशोधनिकार्थं चतुर्थस्याध्यायस्योपक्रम इति।

१—अन्यजनकत्वम्, अन्यकृतत्वमिति ख. पु. पा.

विशिष्टानुष्ठानं च विशेषणानुष्ठानमन्तरेणानुपपन्नमिति विशेषणेष्वप्यनुष्ठापकोऽर्थाद्भवति।

## प्रयोगविशेषविवेचनम्।

तत्र केषां केन प्रकारेणानुष्ठापको भवतीत्येतच्चतुर्थे चिन्त्यते। तत्र फलांशे तावत्पुरुषस्य स्वयमेव प्रवृत्तत्वान्न विधिरनुष्ठापको भवति। कथम् तर्हि लक्ष्यमाणत्वमुभयोरिश्लो. वा. २ सू. श्लो. २२१ ति साध्यांशस्यापि साधनांशवच्चोदनालक्षणत्वमुच्यते ?

## फलस्य विधेयत्वशंकानिरासः, चोदनालक्षणत्व-विधेयत्वयोर्भेदनिर्देशेन भाष्यविरोधपरिहारश्च।

नैष दोषः। चोदनाप्रमेयं हि तल्लक्षणम्। तत्र ज्योतिष्टोमादेः प्रमाणान्तरागम्यमानस्यापि यथा फलसाधकत्वं विधिप्रमाणकमिति, तल्लक्षणत्वम्, एवं फलस्यापि तत्-

---

एवानुष्ठापकः स्यात्, न तु तदंशानामित्याशङ्कयाह–विशिष्टेति। केवलाया भावनाया अनुष्ठातुमयोग्यतया सर्वांशविशिष्टभावनागोचरो विधिरिति पूर्वमेव प्रतिपादितम्। ततश्च विशेषणानामप्यङ्गानामनुष्ठानं सिध्यतीत्यर्थः।

एवं प्रयोगस्य विध्यधीनत्वमुपपाद्य, चतुर्थाध्यायप्रतिपाद्यं प्रयोगविशेषविचारमवतारयति–तत्र केषामिति। केषामङ्गानां केन प्रकारेण–क्रत्वर्थतया, फलार्थतया, उभयार्थतया वा। क्रत्वर्थत्वेऽपि किमेतत्कत्वर्थतया उत क्रत्वन्तरार्थतया वेत्येवमादिरूपेणेत्यर्थः। भावनाया एव साक्षात् विधिना संबन्धः, तदंशानां तु तद्द्वारा विधेयत्वमित्युक्तम्। तत्र फलांशस्य न विधेयत्वमित्याह–तत्रेति। स्वयमेव–रागादेवेत्यर्थः।

फलस्याविधेयत्वे भाष्यवचनविरोधमाशङ्कते–कथं तर्हीति। लक्ष्यमाणत्वं–चोदनया लक्ष्यमाणत्वम्। चोदना नाम विध्युद्देशवाक्यम्। ततश्च यद्विधेयं, तदेव तत्प्रतिपाद्यमिति फलस्याविधेयत्वे तत्प्रतिपाद्यत्वोक्तिर्न घटत इत्यर्थः। विधिप्रतिपाद्यं-चोदनालक्षणम्, विध्यनुष्ठाप्यं यु विधेयमिति लक्षणभेदात् फलस्याविधेयत्वेऽपि चोदनालक्षणत्वमुपपद्यत इति न भाष्यविरोध इति परिहरति–नैष दोष इति। चोदनाप्रमेयमिति। चोदनावाक्ये विधेरेव प्रधानत्वात् तद्वाक्यप्रमेयं विधिप्रमेयमित्यर्थः। फलस्य विधिप्रमेयत्वं सदृष्टान्तमुपपादयति–तत्रेति। वाक्यं हि प्रमाणान्तरानधिगतमधिगतमप्यर्थं व्युत्पत्तिबलात् बोधयति। विधिस्तु मानान्तराप्राप्तमेवार्थम्। एवं च प्रमाणान्तराधिगतयोरपि ज्योतिष्टोमस्वर्गयोः साध्यसाधन-

---

यथोक्तं शास्त्रदीपिकायां मिश्रैः–

प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते शा. दी. पृ. ३४५ इति। 'एवं प्रयोजकाप्रयोजकत्वे चिन्तिते' इति पञ्चमप्रतिपाद्यविषयोपक्रमे च वक्ष्यति। अस्यायमर्थः— तृतीयाध्याये शेषशेषिभावे सति, अयं पदार्थोऽनेन अनुष्ठाप्यते, अयमनेनेत्येवमस्मिन्नध्यायेऽनुष्ठापनापरपर्याया प्रयुक्तिरभिधीयते, नतु प्रयोज्यत्वम्।

एतेन 'शेषिनिरूपितं शेषत्वं तृतीये, प्रयोजकनिरूपितं प्रयोज्यत्वञ्चतुर्थे निरूप्यत' इति भाट्टदीपिकावाक्यं चिन्त्यम्, 'शेष-शेषित्वम्, प्रयोजकाप्रयोजकत्वलक्षणमुक्तमि'ति च भाष्यवार्तिक-शास्त्रदीपिकादिबहुग्रन्थविरोधादिति।

साध्यत्वमन्यतोऽनवगतमिति, विधेरेवावगम्यत इति, भवति तदपि तल्लक्षणम्। न चैतावता विधेयत्वम्। नह्यज्ञातज्ञापनं विधिः, येन तद्विषयतया फलस्य विधेयत्वं स्यात्, किन्त्वप्रवृत्तप्रवर्तनम्, तेन यत्र पूर्वमप्रवृत्तः पुरुषो विधिवशात्प्रवर्तते, तद्विधेयम्। फले च पूर्वमेव प्रवृत्तिर्मानसी संजाता। ज्योतिष्टोमसाध्यत्वावगमेऽपि तत्र तावत्येव प्रवृत्तिः। न हि काय-वचन-चेष्टाः फलमवगाहन्ते। साधनत्वे तु तत्त्वतो ज्ञाते सति, पूर्वमप्रवृत्त एव प्रवर्तते। तस्मात्तद्विधेयम्, न फलमिति।

## प्रसंगात्फलस्याविधेयत्वमुपपाद्य, साक्षाच्चतुर्थाध्यायप्रमेमप्रतिपादनम्।

एवमङ्गानामपि दध्यानयनादीनामामिक्षाद्यर्थमेवानुष्ठापनम्, न वाजिनाद्यर्थतया। प्रतिपत्त्यर्थञ्च प्रतिपाद्यं द्रव्यं नानुष्ठापयति। न हि शेषार्थम् शेष्यनुष्ठानम्।

---

भावांशो मानान्तरागोचरतया विधिप्रतिपाद्य इत्याश्रयणीय इति, उभयोरपि चोदनालक्षणत्वं युज्यत इत्यर्थः। यद्यप्यप्रवृत्तप्रवर्तकस्वभावो विधिरफलसाधने पुरुषस्य प्रवर्तयितुमशक्यतया स्वविषयस्य फलसाधनत्वमेव साक्षादवगमयति। अथापि तस्य फलस्यैतदसाध्यत्वे साधनत्वमेव तस्य बोधयितुमशक्यमिति, तदप्यवगमयतीति भावः। एवं फलस्य चोदनालक्षणत्वमुपपाद्य, विधेयत्वस्य ततो भिन्नत्वेन तत्तस्य नास्तीति प्रतिपादयति—न चैतावतेति। यद्यप्यज्ञातज्ञापनमप्रवृत्तप्रवर्तनमित्युभयमपि विधिकृत्यमेव, तथापि प्रथमेनांशेन चोदनालक्षणत्वमेव भवति। न तु तेन विधायकत्वं विधेयत्वं वा। द्वितीयेन तु विधेः विधायकत्वं तद्विषयस्य विधेयत्वं च भवतीति, चोदनालक्षणत्वादन्यत्। विधेयत्वमित्यर्थः। विधेयत्वस्य लक्षणमुक्त्वा, फलस्य तादृशविधेयत्वाभावमुपपादयति-फले चेति। पूर्वमेव रागादिति शेषः। साध्यत्वावगमेऽपीति। विधिवलादित्यर्थः। तावत्येव—मानस्येव। कायवचनचेष्टेत्यत्र वचनशब्दः संपातायातः। फलस्यापि वचनचेष्टाविषयत्वात्। साधनस्य तु विधेयत्वलक्षणमस्तीत्याह—साधनत्व इति। उक्तप्रकारेण भावनांशेष्वंशद्वयस्य विधेयत्वम्। तच्च सिद्धमिति निगमयति—तस्मादिति।

प्रसङ्गात् फलांशस्याविधेयत्वमुपपाद्य, साक्षात् चतुर्थाध्यायप्रतिपाद्यं प्रमेयमाह—एवमिति। एवं स्थिते चतुर्थाध्यायविचारः प्रवर्तत इत्यर्थः। अनुष्ठापनं चातुर्मास्यप्रयोगविधिनेति शेषः। अयं भावः—दध्यानयनस्य शेषिभूत आमिक्षायागः। वाजिनयागस्तु उपकार्यमात्रम्। ततश्च शेष्युपकार्ययोर्मध्ये शेष्यर्थमेव शेषमनुष्ठापयत्ति विधिः। न तूपकार्यार्थमिति आमिक्षाप्रयुक्तमेव दध्यानयनं न वाजिनप्रयुक्तम्। ततश्चामिक्षापचारे पुनर्दध्यानयनं कृत्वा आमिक्षां संपाद्य यागः कार्यो भवति। वाजिनस्य तु अनुनिष्पादितया तदपचारे वाजिनयाग एव लुप्यते। न तु पुनर्दध्यानयनेन वाजिनद्रव्यसंपादनं भवतीति उपकार्यस्याप्रयोजकत्वमभिधाय प्रतिपत्तेरपि अप्रयोजत्वमाह—प्रतिपत्त्यर्थमिति।

प्रतिपत्तिर्नाम कार्यान्तरोपयुक्तद्रव्यसंस्कारकं कर्म। यथा कण्डूयनोपयुक्तायाः कृष्णविषाणायाश्चात्वालप्रासनम्। प्रतिपाद्यं—प्रतिपत्तिकर्मणा संस्कार्यम्। ततश्च द्रव्यापचारे

---

१—अज्ञातज्ञापनम्, अप्रवृत्तप्रवर्तनमित्युभयमपि विधिकृत्यमेव, तथापि प्रथमेनांऽशेन चोदनालक्षणत्वमेव, नतु तेन विधायकत्वम्, विधेयत्वं वा। द्वितीयेन विधेर्विधायकत्वम्, तद्विषयस्य विधेयत्वञ्च भवति। अतश्चोदनालक्षणत्वेऽपि फलस्य विधेयत्वन्नास्तीत्युक्तं द्वितीयाधिकरणे।

शेष्यर्थं तु शेषानुष्ठानम्। शेषिणोऽपि यत्रान्यसाधनस्यैवान्यत्र विनियोगः, यथा पुरोडाशकपालस्य तुषोपवापे, तत्रापि परप्रयुक्तस्यैव साधनत्वान्न स्वयं प्रयोजकत्वम्।

**उदाहरणविशेषे प्रयाजशेषाभिघारणे प्रतिपत्तित्वाक्षेपमुखेनाधिकरणस्य पूर्वोत्तरपक्षयोः फलकथनञ्च।**

किमर्थं तर्हि प्रयाजशेषाभिघारणस्य प्रतिपत्तित्वप्रतिपादनम्? शेषस्यापि प्रयाजशेषस्य तत्प्रयुक्तस्यैव विनियोगान्नाभिघारणेन प्रयुक्तिसंभवः। सत्यम्। शेषत्वेऽपि प्रयाजशेषस्य न द्रव्यप्रयोजकत्वमभिघारणस्य संभवति, धारणस्य तु प्रयोजकं स्यात्। ततश्च वाजपेये प्राजापत्यवपाभिघारणार्थं प्रयाजशेषं धारयितुं पात्रान्तरमुत्पाद्यं स्यात्। तन्निवृत्त्यर्थं प्रयाजशेषस्य प्रतिपाद्यत्वं संपाद्यते।

---

प्रतिपत्तिर्लुप्यते। न तु प्रतिपत्त्यनुष्ठानार्थं पुनर्द्रव्यं संपाद्यमिति भावः। तदेवोपपादयति—न हीति। शेषिणोऽपि सर्वस्य नानुष्ठापकत्वमित्याह—शेषिणोऽपीति। 'पुरोडाशकपालेन तुषानुपवपति' आप श्रौ. अ. ख. सू। इति तृतीयाश्रुत्या कपालस्य तुषोपवापशेषत्वेऽपि पुरोडाशकपालस्य पुरोडाशसाधनत्वेनोपपन्नस्यैव विनियोगात् न तुषोपवापप्रयुक्तत्वं तस्येत्यर्थः।

'प्रयाजशेषेण हवींष्यभिघारयति' मै. सं. २-२-२। इति प्रयाजशेषाज्येन हविरन्तराभिधारणं विहितम्। तच्च किमुत्तरहविःसंस्कारकं, ततश्च तच्छेषः। अथवा प्रयाजाङ्गोपयुक्तस्य तच्छेषस्य प्रतिपत्तिकर्मेति विचार्य, तृतीयाश्रुत्याऽभिधारशेषत्वमाशङ्क्य, प्रतिपत्तित्वे दृष्टार्थलाभात प्रतिपत्तित्वमेव राद्धान्तितम्। तत्राभिघारणशेषत्वे प्रयाजशेषस्य तदपचारेऽपि अभिधारणसिद्ध्यर्थं पुनः संपादनं स्यात्। प्रतिपत्तित्वे तु द्रव्याप्रयोजकत्वं भवतीति, तदर्थं प्रतिपत्तित्वप्रतिपादनं तस्येति वक्तव्यम्। तत्तु व्यर्थम्। अभिधारणं प्रति शेषत्वेऽपि तस्य पुरोडाशकपालस्य तुषोपवापेनेव अभिधारणेन प्रयुक्तत्वासंभवादिति शङ्कते—किमर्थमिति। शेषस्य अभिघारणं प्रतीति शेषः। तत्प्रयुक्तस्य—प्रयाजप्रयुक्तस्य। विनियोगादभिधारणशेषतयेति शेषः।

यद्यप्यभिघारणशेषत्वे प्रयाजशेषस्य तदपचारे सति, पुनस्तदर्थं द्रव्यान्तरप्रयुक्तिर्न सिध्यति, अथापि प्रयाजशेषद्रव्यसंभवे हविःसंस्काराविलोपार्थं तद्धारणस्य तेन प्रयुक्तिः स्यात्। ततश्च तद्धारणप्रयोजकत्वार्थं प्रतिपत्तित्वप्रतिपादनं सार्थकमिति परिहरति—सत्यमिति। शेषत्वेऽपि—अभिधारणशेषत्वेऽपि। अस्तु धारणस्याभिधारणेन प्रयुक्तिः। अनुष्ठाने तु को लाभः, तत्राह—ततश्चेति। वाजपेये अग्नीषोमीयादीनां क्रतुपशूनां प्राजापत्यपशूनां च सहैव पर्यग्निकरणान्ते कर्मणि कृते, प्राजापत्यानामुत्कर्षो विधीयते। 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति। ततश्च ये पर्यग्निकरणात् पूर्वभावितया 'तिष्ठन्तं पशुं प्रयजन्ति' इति विहिताः प्रयाजादयः आरादुपकारिणः, ते सर्वेषां पशूनां तन्त्रेण पूर्वमेवानुष्ठीयन्ते। तत्र यः पूर्वकृतप्रयाजानामाज्यशेषः, तस्य हविरभिधारणशेषत्वे प्राजापत्यवपानां संस्कारापेक्षत्वेन तदभिधारणार्थं धारणं स्यात्। तद्धारणार्थं च जुह्वा अन्यत्र व्यापृतत्वात् पात्रान्तरमुत्पाद्यं स्यात्। प्रतिपत्तित्वे तु न धारणं भवतीति, तदभावाय प्रतिपत्तित्वोपपादनं सार्थकमित्यर्थः। संपाद्यते—उपपाद्यत इत्यर्थः।

नन्वभिधारणस्य प्रयाजशेषप्रतिपत्तित्वेऽपि तद्धारणं स्यादेव। तथाहि प्रतिपत्तिकर्माण्युपयुक्तद्रव्यसंस्कारतया द्रव्येष्वतिशयं कुर्वन्ति सन्ति तद्द्वारा कर्मण्यतिशयमादधते। उपयुक्तद्रव्य-

ननु प्रतिपत्तिरपि धारणं प्रयुङ्क्त एव, अन्यथा वैगुण्यप्रसङ्गात्, तस्य चान्याय्यत्वात्। अत एव सत्रे साधारणपात्रोत्पादनम्। तद्धेयवमर्थम्—यदि कस्यचिद्यजमानस्य पात्रैः प्रयोगः प्रारभ्यते, ततः कदा चित्तेषु प्रयुक्तेषु तस्य यजमानस्य प्रायणसंभवे पात्राणां परिधानीये कर्मणि विहिता प्रतिपत्तिर्लुप्येत, ततश्च वैगुण्यं स्यात्-इति। यदि प्रतिपत्तिर्न धारणस्य प्रयोजिका, ततः प्रतिपत्तिलोपमनादृत्य, कस्य चिदेकस्य पात्रैः प्रयोगः स्यात्। तस्मादनर्थकं प्रयाजशेषप्रतिपाद्यत्वाभिधानमिति।

## प्रयाजशेषाभिधारणस्य प्रतिपत्तित्वसमर्थनेन न धारणप्रयोजकतेति निरूपणम्।

सत्यमुक्तं श्रुतवता। किं त्वत्र प्रयाजशेषस्य क्रतुपशुवपाभिघारणेन प्रतिपत्तिः सिद्धेति, न धारणमर्थवत्। हविषान्तु प्राधान्ये प्राजापत्यवपानामवैगुण्यार्थं धारणं भवेदिति, युक्तमेव प्रतिपत्तित्वाभिधानम्।

---

विनाशे तु द्रव्यान्तरे प्रतिपत्त्यनुष्ठानेऽपि पूर्वद्रव्यसंपादिते कर्मण्यतिशयासिद्धेर्लुप्यत एव प्रतिपत्ति। द्रव्यसंभवे तु द्रव्यस्य संस्कारापेक्षितत्वात् तत्सिद्ध्यर्थं तत् द्रव्यमाप्रतिपत्ति धारयितव्यम्। अन्यथा द्रव्यसंस्काराभावेन क्रतोर्वैगुण्यप्रसङ्गात् एवं च प्रतिपत्तित्वेऽपि धारणप्रसङ्गात् तत्प्रतिपादनस्य वैयर्थ्यं तदवस्थमेवेति शङ्कते—नन्विति।

प्रतिपत्तेर्द्रव्यधारणाप्रयोजकत्वे षष्ठाध्यायाधिकरण—( पू. मी. ६-६-६ ) विरोधं वक्तुं तदधिकरणसिद्धान्तमाह—अत एवेति। अतः प्रतिपत्तेरपि धारणप्रयोजकत्वात्। सत्रयागो बहुयजमानकः। तत्र सर्वेषां यजमानानां पृथक् पृथक् यज्ञपात्रसंभवेऽपि साधारणानि पात्रान्तराणि संपाद्य तत्र प्रयोग आरभ्यत इत्यर्थः। पात्रान्तरसंपादनस्य प्रयोजनमाह—तद्धीति। प्रयुक्तेषु सत्रयाग इति शेषः। प्रायणं—मरणम्। परिधानीयं कर्म अन्त्येष्टिः। अन्त्येष्टौ हि 'दक्षिणे हस्ते जुहूमासादयति' इत्यादिभिः पात्राणां प्रतिपत्तिर्विहिता। यस्य यजमानस्य पात्रैः सत्रप्रयोग आरब्धः तस्मिन् मृते तत्पात्राणां यागे व्यापृतत्वेनैतादृशप्रतिपत्तिलक्षणसंस्कारासिद्धेस्तत्संपादितेषु कर्मसु किंचित् वैगुण्यं स्यात् तस्मात् प्रतिपत्तिसिद्ध्यर्थं सर्वेषां पात्राणि पृथक् पृथगेव धार्याणि। साधारणपात्रैस्तु सत्रयाग आरब्धव्य इति, तत्र प्रतिपादितमित्यर्थः।

एवं तदधिकरणसिद्धान्तमुक्त्वा प्रतिपत्तेर्धारणाप्रयोजकत्वे तद्विरोधमाह—यदीति। पूर्वपक्षं निगमयति—तस्मादिति। सत्रे पात्राणां पृथग्धारणाभावे तेषां विहिता प्रतिपत्तिरेव न सिध्यतीति, धारणं भवति। प्रयाजशेषस्य तु धारणं विनाऽपि पूर्वमेव प्रतिपत्तिसिद्धेर्न धारणं सिध्यतीति परिहरति—सत्यमिति। अभिधारणस्योत्तरहविःसंस्कारत्वे तु धारणं स्यादित्याह—हविषामिति। एवमधिकरणस्य सार्थकत्वं निगमयति—युक्तमेवेति।

---

यथोक्तम्—'फलांशे भावनायाश्च प्रत्ययो न विधायकः' इति।

१—प्रमादेति मु. पु. पा.

## विचारान्तराणां तत्रासंगतिमाशंक्य, तेषामपि प्रयुक्तिविशेष-विचाररूपत्वेन संगतिनिरूपणम् ।

यदि प्रयोजकाप्रयोजकत्वचिन्ता चतुर्थे, कथं तर्हि क्रत्वर्थपुरुषार्थत्वयज्ञाङ्गत्वा-यज्ञाङ्गत्वापूर्वसदसद्भाव-नियमविधिव्युत्पादन- फलविध्यर्थवादत्वफलवत्त्व-कालार्थाङ्ग - प्रधानार्थत्व-समप्रधानत्व-गुणप्रधानत्वादीनि चिन्त्यन्ते ? प्रयोजकाप्रयोजकत्वसिद्ध्यर्थ-मेव तत् । तथा हि-क्रत्वर्थत्वे गोदोहनादेः क्रतुविधिप्रयोज्यत्वम्, नान्यथा । तथैकत्वा-देर्यज्ञार्थत्वे तत्प्रयुक्तम् । स्विष्टकृत्यपूर्वसद्भावे त्यागांशस्यापूर्वं प्रयोजकम् । एवं तर्हि हविर्विनाशेऽपि हविरन्तरमुत्पाद्यादृष्टसिद्ध्यर्थं स्विष्टकृद्यागः कर्तव्यः स्यात् । नैत-देवम् । यद्यप्यपूर्वं यागस्य प्रयोजकम् । यागस्तु न द्रव्यस्य प्रयोजकः, एकदेशद्रव्य-त्वात् । तस्माददोषः ।

---

प्रयुक्तिविषयश्चतुर्थाध्याय इत्युक्तम् । तदयुक्तम् । प्रायशो विचारान्तराणामपि तत्र प्रवृत्तत्वादित्याक्षिपति–यदीति । विचारान्तराणामपि प्रयुक्तिविशेषविचारार्थत्वात् स एव तत्र प्राधान्येन क्रियत इति परिहरति प्रयोजकेति । विचारान्तराणां तदर्थत्वं क्रमेणोपपादयितुमुप-क्रमते–तथा हीत्यादिना । लिप्सासूत्रे ( जै. ४-२ ) तृतीयवर्णके 'गोदोहनेन पशुकामस्य प्रणयेत्' तै. ब्रा २-१-५-६ इति विहितस्य गोदोहनादेः पुरुषार्थत्वमेव, उत क्रत्वर्थत्वं पुरुषार्थत्वं चेति विचार्य, पशुकामस्येति षष्ठीश्रुत्या पुरुषार्थत्वं, क्रतूपकारकत्वात् क्रत्वर्थत्वं चेति उभयार्थत्व-माशङ्क्य उपकारलक्षणशेषत्वस्य तृतीये निराकृतत्वात् षष्ठीश्रुत्या पुरुषार्थत्वमेव । पुरुषार्थेन तेनैव क्रतूपकारोऽपि क्रियत इति निर्णीतम् । अयं विचारः प्रयुक्तिविशेषविचारोपयोगितया तत्र कृत इत्यर्थः ।

तथैकत्वादेरिति । पशुना यजेतेत्यत्र विभक्त्युपात्ता एकत्वसंख्या किं यागाङ्गं, उत नेति विचार्य, तृतीयया पशुगतकरणत्वस्यैवाभिधानादेकत्वस्याकारकत्वेन क्रियान्वयायोगात् स्वपदोपात्तपशुपरित्यागेन पदान्तरोपात्तयागान्वयासंभवाच्च न यागाङ्गत्वमित्याशङ्क्य, एकत्वस्य प्रकृत्युपात्तात् पशोरपि संनिहितेन प्रत्ययोपात्तेन करणत्वेनैवान्वयात् अरुणैकहायनीन्यायेनैकत्व-पशुत्वयोः प्रथमं क्रियान्वये सति पश्चादन्योन्यान्वयात् एकत्वस्य यज्ञाङ्गत्वमिति निर्णीतम् ।

स्विष्टकृतीति । स्विष्टकृद्यागः स्वाहाकारप्रयाजश्च प्रक्षेपांशेन मन्त्रेण च पूर्वविनियुक्त-द्रव्यदेवताप्रतिपत्तिं दृष्टं कुर्वन् किं दृष्टार्थ एव उतादृष्टार्थोऽपीति विचार्यैकस्य कर्मणो नाना-प्रयोजनायोगात्, दृष्टे संभवत्यदृष्टकल्पनायोगाच्च दृष्टार्थ एवेत्याशङ्क्य, प्रक्षेपांशेन द्रव्यप्रतिपत्तौ मन्त्रेण च देवताप्रतिपत्तौ प्रयोजने सत्यपि, मानसत्यागांशस्य यागस्य दृष्टप्रयोजनाभावेना-दृष्टकल्पनावश्यंभावात् उभयार्थ इति निश्चितम् । ननु यदि स्विष्टकृद्यागः प्रतिपत्तिरेव स्यात् तदा द्रव्याप्रयोजकत्वात् द्रव्यविनाशे लुप्यत एव । यद्यपूर्वार्थोऽपि, तथा सति अपूर्वार्थं हविरन्तरं उत्पाद्य स्विष्टकृद्यागः कर्तव्यः स्यादिति शङ्कते–एवं तर्हीति । परिहरति–यद्यपीति । एकदेश-द्रव्यत्वम्–अन्यार्थसंपादितद्रव्यैकदेशाश्रितत्वम् । 'अग्नये जुष्टं निर्वपामि' इति सर्वोऽपि पुरोडा-शोऽग्न्यर्थः । स्विष्टकृद्यागस्तु 'उत्तरार्धात् स्विष्टकृतेऽवद्यति' इति वचनात् तदेकदेशाश्रितः । अतोऽदृष्टार्थत्वेऽपि द्रव्याप्रयोजकत्वाद्धविर्नाशे लुप्यत इत्यर्थः ।

## साक्षादेव प्रयुक्तिविचारः ।

एवम्-'अर्थे समवैषम्यम्' मी. द. ४-१-२१ इत्यतः पूर्वं शेषशेषित्वविचारेण प्रयोजकाप्रयोजकत्वं निरूपितम्। अत एवोक्तम्-अतिक्रान्तस्तृतीयविषयः शा. भा' इति। ततस्साक्षादेव लक्षणार्थनिरूपणम् सोमलिप्तानां तु प्रतिपाद्यत्वं कृष्णविषाणाप्रसङ्गेनोक्तम्।

## व्रीहिभिर्यजेतेत्यादीनामनुवादत्वमाशंक्य नियमविधित्वव्युत्पादनम्, तस्य फलनिर्देशश्च ।

तथा-कर्तृ-देश-काल-गुण-द्रव्य, संस्काराणां दृष्टार्थानामर्थप्राप्तत्वान्न विधानं संभवति, देशान्तरादिनिवृत्त्यर्थत्वेऽपि परिसंख्या स्यात् । न चान्यो विधिप्रकारः संभवति, तस्मादनुवाद इत्याशङ्क्य, अस्त्यन्यः विधिप्रकारः नियमो नाम-यत्पाक्षि'क-

---

एवं चतुर्थेऽध्याये प्रथमतो 'अर्थे समवैषम्यमतो द्रव्यकर्मणाम्' इत्यस्मात् सूत्रात् पूर्वमधिकरणषट्केन प्रयुक्तिविशेषनिर्णयार्थं तृतीयाध्यायप्रतिपादनात् शेषशेषिभाव एव विचारित इत्याह-एवमिति। अत एवोक्तमिति । भाष्यकारेणेति शेषः । ततः साक्षादिति। प्रथमपादशेषेण द्वितीयपादेऽपि 'कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात्' ( जै. ४-२-२३ ) इत्यस्मात् पूर्वमित्यर्थः। 'वारुणेनैककपालेनावभृथं यन्ति' श. ब्रा. २-४-३-६ इति विधायाम्नायते 'यत् किंचित् सोमलिप्तं, तेनावभृथं यन्ति इति । अत्र किमवभृथेष्टेर्हविः सोमलिप्तम्, उत नेति विचार्य, अवभृथशब्देनेष्टेरभिधानात् तृतीयया तत्साधनत्वेन सोमलिप्तविधानात् सोमलिप्तमेव तस्या हविरित्याशङ्क्य, उत्पत्तिशिष्टैककपालपुरोडाशावरुद्धे यागे सोमलिप्तानानुप्रवेशादवभृथशब्देनावभृथदेशं लक्षयित्वा, तत्र सोमलिप्तैः सह यानं गमनमेव विधीयते तत्र प्रक्षेपार्थम्। अतो नावभृथाङ्गं सोमलिप्तमिति शेषत्वाशेषत्वविचार एव कृतः। स कथं संगच्छत इत्याशङ्क्य, प्रासङ्गिक इत्याह-सोमलिप्तानामिति। कृष्णविषाणाप्रसङ्गेनेति। तस्याः कण्डूयनमेव प्रयोजनम्। प्रासनं तु प्रतिपत्तिरिति प्रतिपादितं पूर्वाधिकरणे। तत्प्रसङ्गात् सोमलिप्तानामपि अवभृथदेशप्रक्षेपः प्रतिपत्तिरिति।

अतः परं द्वितीयपादशेषेण नियमविधिर्व्युत्पादितः। सोऽपि प्रयुक्तिविशेषविचारार्थं इति प्रतिपादयन्, प्रथमं तत्र पूर्वपक्षमाह-तथेति। 'राजा राजसूयेन यजेत' इति राजादिः कर्ता 'समे यजेत'-इति समादिर्देशः पौर्णमास्यादिः कालः, आरुण्यादिर्गुणः, व्रीह्यादिर्द्रव्यम्, अवघातादिः संस्कारः। तत्र कर्त्रादिस्वरूपं वा विधेयं, कर्त्रन्तरादिनिवृत्तिर्वेति विकल्प्य प्रथमं दूषयति-अर्थप्राप्तत्वादिति। कर्त्रादिकमन्तरेण क्रियास्वरूपस्य यागस्य संपादयितुमशक्यतया कर्त्रादिस्वरूपं तेनैवाक्षिप्यत इत्यर्थः।

द्वितीयं दूषयति-देशान्तरेति। ततश्च श्रुतहान्यश्रुतस्वीकारप्राप्तबाधलक्षणदोषत्रयं प्रसज्येतेत्यर्थः। अनुवाद इति। यागाक्षिप्तकर्त्राद्यनुवादपराणि राजादिपदानीत्यर्थः। श्रुतानां कर्त्रादीनां क्रियाक्षेपेण कदाचित् प्राप्तावपि कदाचिदप्राप्तेरपि संभवात् तस्मिन्नंशे विधिः सार्थकः

---

१-अत्रेदं बोध्यम्-एकनिष्पत्तेस्सर्वं समं स्यादि मी. द. ४-१ २२ ति समारभ्य कतिपयेष्वधिकरणेषु प्रयुक्तिर्विचार्यते, अन्यत्र च सर्वत्र क्रत्वर्थपुरुषार्थत्व-यज्ञांगत्वानंगत्वादिविचाराः क्रियन्ते, तत् कथं प्रयुक्तेरध्यायार्थत्वमिति शंका ।

प्राप्तस्याप्राप्तांशपरिपूरणमिति यावत्। तस्माद्विधिरिति। यदिदं नियमविधिव्युत्पादनम्, तदपि दर्शपूर्णमासादिविधीनां नियमेन समादिप्रयोजकत्वसिद्ध्यर्थम्।

## अपापश्लोकश्रवणादीनामर्थवादत्वे क्रत्वर्थत्वम्, विश्वजितः फलस्य सत्त्वे पुरुषार्थत्वकथनञ्च।

तथा–अपापश्लोकश्रवणादीनामर्थवादत्वे पर्णमयीत्वादीनां क्रतुविधिप्रयुक्तिः, न फलविधित्वे। विश्वजिदादीनामफलत्वे प्रयोजकत्वमेव विधेः दुर्लभम्, फलवत्त्वे तु तद्भवति। तत. फलगतविशेषानुसंधानं प्रागङ्गप्रयोजनसंबन्धविचारात्।

## क्वचिदङ्गांगिभावसंबन्धप्रतिपादनमुखेन, क्वचित्कालार्थप्रतिपादनमुखेन प्रयुक्तिरेव विचार्यते इति कथनम्।

तथा–'अग्निं चित्वा सौत्रामण्या यजेते' त्यादीनामङ्गप्रयोजनसंबन्धपरत्वे

---

नापि कश्चिद्दोष इति सिद्धान्तमाह–अस्त्यन्य इति। परिपूरणमिति। तस्मिन्नप्यंशे अस्य प्राप्तिसंपादनमित्यर्थः। अधिकरणमुक्त्वा तस्य लक्षणसंगतिमाह–यदिदमिति। समादिप्रयोजकत्वं समदेशादिप्रयोजकत्वम्।

तृतीयपादे प्रथमेऽधिकरणे 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति विहितं पर्णमयीत्वं क्रत्वर्थमेव उत उभयार्थमिति विचार्य क्रतुसंबन्धिजुहूसंबन्धात् फलश्रवणाच्चोभयार्थमित्याशङ्क्य, एकस्य पर्णमयत्वस्य क्रतुफलाभ्यां संबन्धे वाक्यभेदप्रसङ्गात् फलश्रवणमर्थवाद इति क्रत्वर्थमेवेति निर्णीतम्। एवम् उत्तराधिकरणैरपि क्रत्वर्थपुरुषार्थविचार एव कृतः। तस्य लक्षणसंगतिमाह–तथाऽपापेति।

'विश्वजिता यजेत'इत्यादिष्वश्रुतफलकेषु किं फलमस्ति नेति विचार्य, तस्याश्रुतत्वादलौकिकविषयेषु पुरुषबुद्ध्यनुसारेण कल्पनायोगात् भाव्याकाङ्क्षायाश्च समानपदोपात्तधात्वर्थेनैव पूरणात् न फलस्याध्याहार इति निष्फलत्वमाशङ्क्य, विधिप्रयुक्तायां भावनायामपुरुषार्थस्य भाव्यतयाऽन्वयायोगेन पुरुषार्थभाव्यापेक्षायां कल्प्यमानस्य फलस्य वेदाकाङ्क्षामूलतया वैदिकत्वादश्रुतमपि फलमध्याहार्यमित्युक्तम्। तस्य प्रकृते संगतिमाह–विश्वजिदादीति। दुर्लभमिति। प्रवर्तकस्वभावेनापि विधिना निष्फले परीक्षकस्य पुरुषस्य प्रवर्तयितुमशक्यत्वात् विधेः प्रयुक्तिशक्तिरेव लुप्यत इत्यर्थः।

तदनन्तरं विश्वजित् किं सर्वफलार्थः, उत एकफलार्थः। एकफलार्थत्वे तच्च फलं स्वर्गः, उत अन्यद्वा। तथा रात्रिसत्रे अर्थवादावगता प्रतिष्ठा वा फलं, स्वर्गो वेत्यादिविचारः प्रवृत्तः। सोऽपि तत्तत्फलविशेषप्रयुक्तिसिद्ध्यर्थतया लक्षणेन संगत इत्याह–ततः फलगतेति। अङ्गप्रयोजनसंबन्धविचारादिति।

'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' 'अग्निं चित्वा सौत्रामण्या यजेत' इत्यादिषु अग्निचयनादेः सौत्रामण्यादेश्च किमङ्गप्रधानार्थः संबन्धः, उत कालार्थ इत्येवंविधविचारात्

---

'अर्थे समवैषम्यमतो द्रव्यकर्मणामि'त्यतः पूर्वमधिकरणषट्केण शेषशेषित्वविचारेण प्रयोजकाप्रयोजकत्वं निरूपितम्। ततो द्वितीयपादे कर्तृ देश-कालानामचोदनं प्रयोगे नित्यसमवायादि. मी. द. ४–२–२३ त्यस्मात्पूर्वं प्रथमपादे, शेषेण साक्षादेव लक्षणार्थनिरूपणमित्यर्थः। क्रत्वर्थ-पुरुषार्थविचारोऽपि प्रयोजकाप्रयोजकत्वसिद्ध्यर्थमेवेति बोध्यम्।

अग्निविधिप्रयुक्तिः सौत्रामण्यादीनाम्। कालार्थत्वे दर्शपूर्णमासयोः सोमप्रयोजकत्वं च न भवति।

## जातेष्टिविचारप्रसंगे तृतीयाधिकरणस्य लक्षणे संगतिः, तृतीयस्यशेषो द्वितीयमधिकरणम्। द्वितीयस्य शेषः प्रथमाधिकरणमिति प्रयुक्तिलक्षणे संगतिकथनम्।

तथा जातेष्टेः शेषिविरोधेन निमित्तानन्तर्यबाधमभिधाय शौचकालप्रयोजकत्वमुक्तम्। तदुपोद्घातत्वेन च पुत्रगामिफलप्रतिपादनम्। पुत्रफलत्वे हि शेषिविरोधः

---

प्रागित्यर्थः। अङ्गप्रयोजनसंबन्धविचारस्य वा कथं लक्षणसंगतिः तत्राह—तथाग्निं चित्वेति। एवमेव विचार्याग्निचयनादीनां सौत्रामण्यादीनां च पृथक्फलार्थतया नान्योन्याङ्गाङ्गिभावः संभवतीति सौत्रामण्यादिशेषतया चयनाद्यनन्तरकालो विधीयत इत्याशङ्क्यानयोर्वाक्ययोश्चयनादिप्रकरणगततया तत्प्रकरणे प्रसिद्धसौत्रामण्यङ्गविधानायोगात् दूरस्थसौत्रामण्यादिकर्मोद्देशेनानुपादेयकालविधानायोगाच्चाग्निचयनाद्यनन्तरकाले तदङ्गतया प्रसिद्धसौत्रामण्यादिभ्यो भिन्नं तन्नामकं कर्मान्तरमेव विधीयत इति निश्चितम्। तदपि प्रयुक्त्युपयोगीत्यर्थः।

दर्शपूर्णमासयोरिति। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्राप्यनेनैव न्यायेन दर्शपूर्णमासानन्तरकाले तदङ्गतया सोमो विधीयत इत्याशङ्क्य, अस्य वाक्यस्य ज्योतिष्टोमप्रकरणगततया तदङ्गतया विधानायोगात् तत्र च सोमयागस्य संनिहितत्वात् संनिहितोद्देशेनानुपादेयस्यापि कालस्य विधानसंभवात् दर्शपूर्णमासोत्तरकालः सोमशेषतया विधीयत इति सिद्धान्तितम्। तदपि लक्षणसंगतमेवेत्यर्थः।

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति पुत्रजननिमित्तेष्टिं विधाय 'यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' तै. सं. २-२-५ इति विहितं पूतत्वादिफलं पितुरेव, उत पुत्रस्येति विचार्य, अन्यगतफलसाधनस्यान्येनानुष्ठानायोगात् शास्त्रफलं प्रयोक्तरीति न्यायेन इष्टिकर्तुः पितुरेव फलमित्याशङ्क्य, यस्मिन् जाते निर्वपति स पूतो भवतीति पुत्रगतस्य फलस्य वाक्यादेव प्रतिपन्नत्वात्, पुत्रफलस्यापि पितुरिष्टत्वेन, तदर्थमनुष्ठानसंभवाच्च, पुत्रस्यैव फलमित्युक्त्वा।

किमियमिष्टिः पुत्रजन्मोत्तरकालमेव कर्तव्या, उत कृते जातकर्मणीति विचार्य, नैमित्तिकस्य निमित्तानन्तरतया जन्मोत्तरकालमेवेत्याशङ्क्य, स्तन्यपानस्य जातकर्मोत्तरकालत्वात् प्रथममिष्टिं कृत्वा जातकर्मणि कृते, पश्चात् स्तनपाने कर्तव्ये, तस्य बहुकालव्यवधानेन पुत्रविपत्तिप्रसङ्गेन तद्गतफलसाधनस्येष्टेरेव वैयर्थ्यप्रसङ्गात् पुत्रगतफलरूपशेषिविरोधात्, न निमित्तानन्तरं, किं तु कृते जातकर्मणीत्यभिधाय।

पुनरपि किमियमिष्टिर्जातकर्मानन्तरमेव उत आशौचापगमे पर्वकाले वाऽऽगत इति विचार्य, शेषिविरोधात् खलु निमित्तानन्तर्यं बाधितम्। नात्र किंचित् बोधकमस्ति। नैमित्तिक-

---

१—यत्पाक्षिकप्राप्तस्य नियतत्वकरणमप्राप्तांशपरिपूरणमित्यधिकः पाठो २ पु० दृश्यते।

२—पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति, इत्यत्र संवलिताधिकारत्वम्—अनेकेषां पुरुषार्थानां व्यासज्यवृत्तिफलत्वमित्यर्थः।

शक्यते वक्तुं, न पितृफलत्व इति। ततोऽङ्गभूतानामपि सौत्रामण्यादीनां स्वकाल-प्रयोजकत्वमुक्तम्।

## राजसूयेऽनुमत्यादीनां समप्राधान्ये फलप्रयुक्तिनिर्देशेन अङ्गप्रधानानाञ्च विधिप्रयुक्तत्वसिद्धान्तनिर्देशः।

तथा–अनुमत्यादीनाम्, विदेवनादीनाञ्च समप्राधान्ये सर्वेषां फलमेव प्रयोजकं स्यात्। गुणप्रधानभावे त्वनियोज्यानां क्रतुप्रयुक्तत्वमिति।

## विधिमन्तरेण फलमात्रानुष्ठाप्यत्वं फलप्रयुक्तत्वमिति प्राभाकरमतनिरसनम्।

ननु प्रधानेषु विधिरेव प्रयोजकः, न फलम्। तत्कथं प्रधानेषु फलं प्रयोजकम्, अङ्गेषु विधिरिति बालिश्यमेकदेशिवदाचर्यते। नैवास्माभिः प्रधानेषु विधेरप्रयोजकत्व-

---

त्वाच्च शौचकालादिरूपकतिपयाङ्गपरित्यागेऽपि न विरोधः। अतो जातकर्मोत्तरकालमेवेत्याशङ्क्य, येन केनापि प्रकारेण स्वरसप्राप्तनिमित्तानन्तर्यबाधे सति सर्वाङ्गोपसंहारस्यापेक्षितत्वादाशौचापगमे पर्वण्येव कर्तव्येति निर्णीतम्।

अत्र तृतीयाधिकरणस्य लक्षणसंगतिः। द्वितीयं तु तच्छेषभूतमित्याह—तथेति। प्रथमं द्वितीयस्यापि शेषभूतमित्याह—तदुपोद्घातत्वेनेति। तदेवोपपादयति—पुत्रफलत्वे हीति।

ततः किमग्निचयनोत्तरकालमेव कर्तव्या सौत्रामणी, उत स्वकाले समागत इति, तथा वाजपेयानन्तरं तदङ्गभूतो बृहस्पतिसवोऽपि प्रधानकाले शरद्येव, उत अतिदेशप्राप्तवसन्तकाल एवेति विचार्य, सौत्रामण्यादीनां चयनाद्यङ्गतया तेन सहैकप्रयोगत्वात् तत्काल एवेत्याशङ्क्य, क्त्वाप्रत्ययेन तत्प्रयोगं परिसमाप्य, तदनन्तरं कर्तव्यत्वाभिधानेन तत्प्रयोगबहिर्भावादतिदेशादिप्राप्तकालाबाधेन स्वकाल एव कर्तव्य इत्युक्तम् तदपि संगतमित्याह—ततोऽङ्गेति।

तथा चतुर्थपादे प्रथमाधिकरणे चिन्तितं राजसूये 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' इत्यादिना विहितानि यागात्मकानि कानिचित्कर्माणि। तथा विदेवनादीन्ययागात्मकानि चाधिकृत्याम्नायते–'राजसूयेन स्वाराज्यकामो यजेत' आप. श्रौ. सू. १८-८-१४ इति। तत्र संशयः—किं सर्वाणि समप्रधानानि फलार्थानि, उतायागात्मकानि क्रत्वर्थानीति। तत्र सर्वेषां कर्मणां प्रकृतत्वात् राजसूयपदेन च विशेषानवगमात् छत्रिन्यायेन यागायागात्मकेषु कर्मसु यजेर्वृत्तिसंभवाच्च सर्वेषां फलान्वयात् सर्वाणि समप्रधानानीत्याशङ्क्य, अप्रसिद्धनाम्नाख्यातपरतन्त्रत्वेन राजसूयपदस्याख्यातोपात्तयागमात्रे संकोचात् यागानामेव प्राधान्यम्। इतरेषां तु तदङ्गत्वमिति प्रतिपादितम्। तस्य लक्षणान्वयमाह—तथेति।

ननु क्रतुप्रयुक्तत्वं नाम क्रतुविधिप्रयुक्तत्वं। फलप्रयुक्तत्वं तु विधिमन्तरेण फलमात्रानुष्ठाप्यत्वम्। ततश्चानेन वचनेनाङ्गानां विधिप्रयुक्तत्वं, करणस्य तु फलप्रयुक्तत्वमित्येवमुक्तं स्यात्। इदं तु गुरोरेव मतम्। आचार्यमते तु सर्वेषां विधिप्रयुक्तत्वादेतत्तन्मतविरुद्धमिति शङ्कते—नन्विति। नास्मद्वचनतात्पर्यं वेद भवानित्याशयेन स्ववचनाभिप्रायं व्यक्तीकरोति—नैवास्माभिरित्यादिना। अयं भावः—विधिरेव सर्वेषामनुष्ठापकः। स चानुष्ठापयन् कस्यचित् प्रयोजनस्य सिद्ध्यर्थं तत्साधनमनुष्ठापयतीति, तदपि प्रयोजनं विधिव्यापाररूपप्रयुक्तिनिर्वाहकत्वात् स्वयमपि प्रयोजकमित्युच्यते। तद्विशेषविचारमुखेन विधेः प्रयुक्तिलक्षणव्यापारविशेष एव चतुर्थे चिन्त्यते। एवं च न सिद्धान्तविरोध इति।

मुच्यते, किं तर्हि, प्रयुक्तिविशेषचिन्ता क्रियत इति। यथा चातुर्मास्यप्रयोगविधिर्दध्यानयनप्रयोजकोऽपि किमामिक्षार्थं प्रयुंक्ते, उतवाजिनार्थमपीति विचार्यते। यदर्थं च प्रयुङ्क्ते, तत्प्रयोजकमित्युच्यते। आमिक्षा प्रयोजिका, न वाजिनमिति।

तथाऽत्रापि किं विदेवनादीनां फलं प्रयोजकम्, उत क्रतुरित्यस्यायमेवार्थः—किं फलसिद्ध्यर्थं प्रयुज्यन्ते, उत क्रतूपकारसिद्ध्यर्थमिति। एवमुत्तरत्रापि विदेवनादीनां शेषिविशेषविचारेण प्रयुक्तिविशेषचिन्तैव क्रियते।

---

तथा विदेवनादीनां किमभिषेचनीययागाङ्गत्वं, उत राजसूयाङ्गत्वमिति विचार्य, माहेन्द्रस्तोत्रं प्रत्यभिषिच्यत। इति वचनेनाभिषेचनीयप्राकृताङ्गमध्ये माहेन्द्रस्तोत्रकाले तेषामनुष्ठानात् तदङ्गत्वमित्याशङ्क्य, अन्यत्रोत्पन्नानां प्रकरणावगतराजसूयाङ्गभावानां तदीयमाहेन्द्रस्तोत्रकाले अपकृष्यानुष्ठानमात्रविधानात् न तदङ्गत्वम्। किं तु राजसूयमात्राङ्गतेति। तथा च राजसूय एव 'सौम्यं चरुं बभ्रुर्दक्षिणा' इति विधायाम्नायते 'पुरस्तादुपसदां सौम्येन चरन्ति' तै. आ. २-६ इति। किं सौम्येष्टिरुपसदङ्गं, उत यागान्तरवत् राजसूयाङ्गमिति विचार्य, विशेषवचनात् उपसदङ्गत्वमाशङ्क्य, वचनस्यानुष्ठानकालमात्रविधाने तात्पर्यान्न तदङ्गत्वमिति प्रतिपादितम्। अनयोरपि विचारयोः प्रकृतान्वयमाह—एवमुत्तरत्रेति।

---

समुन्मिषति। तस्येदं समाधानम्—क्रत्वर्थत्वे क्रतुप्रयुक्तत्वम्, पुरुषार्थत्वे तत्प्रयुक्तत्वम्, एकत्वादेर्यज्ञांगत्वे, तत्प्रयुक्तत्वम्, स्विष्टकृदादौ त्यागांशेऽपूर्वसद्भावेनतत्प्रयुक्तत्वम्, 'समे यजेते' त्यादौ नियमविधौ सति दर्शादिर्नियमेन समदेशादिप्रयोजकत्वम्, 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती'त्यत्रापापश्लोकश्रवणादीनां फलविधित्वम्, पर्णमयीत्वादीनां फलप्रयुक्तत्वम्, अर्थवादत्वे क्रतुप्रयुक्तत्वम्। विश्वजिदादीनामफलत्वे प्रयुक्तिरेव दुर्लभा, फलवत्त्वे तत्प्रयुक्तत्वम्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'त्यस्य कालार्थत्वेन सोमयागस्य दर्शपूर्णमासप्रयुक्तत्वम्। सौत्रामण्यादेश्चयागांगत्वे तत्प्रयुक्तत्वम्, अनुमत्यादीनाम्, विदेवनादीनञ्च समप्राधान्ये सर्वेषां फलमेव प्रयोजकम्, विदेवनादीनामंगत्वे क्रतुप्रयुक्तत्वमित्यादिविशेषरूपेण समग्रेऽप्यध्याये प्रयुक्तिरेव विचार्यत इत्याशयं मनसि निधायाह—यदीत्यादिना सिद्ध्यर्थमित्यन्तेन।

३—अथवा प्रायेण पुरुषार्थः प्रयोजक इति, पुरुषार्थशब्देन प्रयोजकः लक्ष्यते, क्रत्वर्थशब्देन तत्प्रतिपक्षवाचकेनाऽप्रयोजको लक्ष्यते इति। यथोक्तमभियुक्तैः—

'क्वचिदेतद्विचारेण क्वचित्फलविधेर्वशात्।
क्वचित्साक्षादिहाध्याये प्रयुक्तिर्बहुधोच्यते'॥ इति।

४—अत्रेदमाकूतम्—क्रतुप्रयुक्तत्वं, नाम क्रतुविधिप्रयुक्तत्वम्। फलप्रयुक्तत्वञ्च विधिमन्तरेण फलमात्रानुष्ठाप्यत्वम्, एवञ्चांगानां विधिप्रयुक्तत्वम्, करणस्य फलप्रयुक्तत्वम्। यथोक्तं 'काम्येषु कर्मसु कामनावशादेव प्रवृत्तिः, अंगेषु विधिनाप्रवृत्तिरिति, इदन्तु गुरुमतम्। आचार्यमते तु सर्वेषां विधिप्रयुक्तत्वमेव। तस्यायमाशयः। तथाहि—प्रवर्तनैकरसो विधिरेव सर्वेषामनुष्ठापकः। सर्वाननुष्ठापयन् कस्यचित्प्रयोजनस्य सिद्ध्यर्थं तत्साधनमनुष्ठापयति, तदपि प्रयोजनं विधिव्यापाररूपप्रयुक्तिनिर्वाहकत्वात् स्वयमपि प्रयोजकमित्यभिधीयते, तद्विशेषविचारमुखेन विधिप्रयुक्तिलक्षणव्यापारविशेष एव चतुर्थे चिन्त्यत इति सर्वं मनसि समाकलय्याह 'तत् कथम्—बालिश्यमेकदेशिवदाचार्यत इत्यन्तेन परपक्षं प्रतिक्षिपन् स्वपक्षस्थापनेन—इति।

तथा दधिग्रहस्य नित्यत्वान्नित्यवज्ज्योतिष्टोमादिप्रयुक्तिः, वैश्वानरादेस्तु नैमित्तिकत्वान्न नित्यवत्प्रयुक्तिः, पितृयज्ञस्यानङ्गत्वान्न दर्शपूर्णमासप्रयुक्तिः। तथा स्वरु-रशनयोः पशु-यूपप्रयुक्तत्वम्। सांग्रहणी-दर्शपूर्णमास-ज्योतिष्टोमविचारा राजसूयवद्द्रष्टव्याः—इति।

इति चतुर्थोऽध्यायार्थस्समाप्तः।



---

तथा ज्योतिष्टोमे 'यां वै काञ्चिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्चेते प्राजापत्यं दधिग्रहं गृह्णीयात्' इति विधिविहितो दधिग्रहः किं नित्यः, उत देवतान्तरायनिमित्त इति विचार्य, निमित्तश्रवणात् नैमित्तिक इत्याशङ्क्य 'ज्येष्ठो वा एष ग्रहणाम्' इति तस्य प्राथम्याभिधानात् नैमित्तिकस्य निमित्ते सत्यनुष्ठीयमानस्य प्राथम्यायोगात् यदिशब्दाद्यभावात् यच्छब्दस्य च कर्तृसमानाधिकरणत्वाभावेन निमित्तप्रतिपादकत्वायोगाच्च नित्य एव। देवतान्तरायश्रवणन्त्वर्थवाद एवेति निर्णीतम्।

तथा 'यो वै संवत्सरमुख्यमभृत्वा अग्निं चिनुते, यथा सामि गर्भोऽवपद्यते, तादृगेव तदार्तिमार्च्छेत्। वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्' इति विहितो वैश्वानरो नित्यो नैमित्तिको वेति विचार्य, दधिग्रहन्यायेन नित्यत्वमाशङ्क्य कर्तृसमानाधिकरणेन यच्छब्देन निमित्तत्वप्रतिपादनात् नैमित्तिकमेवेति राद्धान्तितम्। एतयोरपि विचारयोः लक्षणसंगतिमाह—**तथा दधिग्रहस्येति।**

**पितृयज्ञस्येति।** 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति अनारभ्यविहितः पितृयज्ञः किं दर्शयागाङ्गं, उत पुरुषार्थ इति विचार्य, कर्मवाच्यमावास्याशब्दयोगात् फलकल्पनागौरवाच्च दर्शाङ्गत्वमित्याशङ्क्य, अपराह्णशब्दयोगात् अमावास्याशब्दः कालपरः। अतो न दर्शाङ्गं, किंतु पुरुषार्थ इत्युपपादितमित्यर्थः।

**स्वरुरशनयोरिति।** स्वरुर्यूपशकलं 'यूपस्य स्वरुं करोति' 'स्वरुणा पशुमनक्ति' इति विहितः स्वरुः किं यूपार्थः, उत पश्वञ्जनार्थः इति विचार्य, यूपस्येति षष्ठ्या यूपशेषत्वं स्वरोः। तस्य च पश्वञ्जनं प्रतिपत्तिरित्याशङ्क्य, स्वरुणेति तृतीयाश्रुत्या स्वरोः पश्वञ्जनशेषत्वं, तस्य तु यूपादुपादानं विधीयते। षष्ठी चावयवावयविलक्षणसंबन्धे द्रष्टव्येति समर्थितम्।

तथा 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' श. ब्रा. २-४. ४-१२ इति विहिता या त्रिवृद्रशना, सा किं पशुबन्धनार्था, उत यूपसंस्कारार्थेति विशये यूपार्थत्वेऽदृष्टार्थत्वप्रसङ्गात् पशुबन्धनार्थत्वे तु तदनपक्रमणरूपदृष्टप्रयोजनलाभात् पश्वर्थेत्याशङ्क्य, यूपमिति द्वितीयाश्रुत्या परिव्याणस्य यूपार्थत्वप्रतीतेः, तदर्थत्वेऽपि तद्दार्ढ्यजननेन दृष्टार्थत्वसिद्धेर्यूपार्था रशनेति निश्चितम्। तदुभयमपि प्रयुक्तिचिन्तोपयोगितया कृतमित्यर्थः।

'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकाम' तै. सं. २-३-९ इति विधाय 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति विहितो होमः किं ग्रामकामपदानुषङ्गेण पुरुषार्थः, उत वैश्वदेव्यङ्गमिति संशये सांग्रहण्याः प्राकृताङ्गनिराकाङ्क्षत्वेनाङ्गापेक्षाभावात् संभवति प्राधान्ये, आमनहोमानामङ्गत्वायोगात् कामपदानुषङ्गेण पुरुषार्थत्वमित्याशङ्क्य, अनुषङ्गस्यैव दोषत्वात्

'ध्रुवोऽसि ध्रुवोऽहं सजातेषु भूयासमिति परिधीन् परिदधाति'। इति परिधिमन्त्रव्यवायेनानुषङ्गायोगाच्चामनहोमानां प्राकृताङ्गमध्यपठितत्वेन प्रकरणेन सांग्रहण्यङ्गत्वमित्युपपादितं।

तथा दर्शपूर्णमासयोराग्नेयादिषड्यागान् प्रयाजाज्यभागाननूयाजांश्च विधायाम्नायते— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' श. ब्रा. २-६-१७ इति। अत्र किं सर्वेषां यागानां प्राधान्यं, उत काल्योगिनां षण्णामेवेति विचिन्त्य, नामपदानामाख्यातपारतन्त्र्यस्य राजसूयाधिकरणे निर्णीतत्वात् यजिना च प्रकृतसर्वयागानुवादसंभवात् सर्वेषामपि प्राधान्यं—दर्शपूर्णमासपदं तु द्विवचनान्तप्रतिरूपकं नामधेयमित्याशङ्क्य, राजसूयपदस्याप्रसिद्धार्थत्वेन संभवत्याख्यातपारतन्त्र्यम्। इदं तु नाम प्रसिद्धार्थम्। आग्नेयादिषु कालसंबन्धेन प्रकृत्यर्थप्रसिद्धेः 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत तै. सं. १-६' इति विद्वद्वाक्याभ्यां समुदायसंपादनेन द्विवचनस्यापि प्रसिद्धेः षण्णामेव प्राधान्यमिति निश्चितम्।

तथा दीक्षणीयादीष्टियागानग्नीषोमीयादीन् पशुयागान् सोमयागं च प्रकृत्याम्नायते— 'ज्योतिष्टोमेन स्वर्गकामो यजेत' आप. श्रौ. इति। अत्र किं सर्वेषां यागानां प्राधान्यं, उत सोमस्यैव, इतरस्य तदङ्गत्वमिति विचार्य, ज्योतिष्टोमपदस्याप्रसिद्धार्थत्वेनाख्यातपारतन्त्र्यात् सर्वयागप्राधान्यमाशङ्क्य 'त्रिवृत्पञ्चदशः सप्तदश एकविंशा एतानि वाव तानि ज्योतींषि य एतस्य स्तोमा तै. सं" इत्यनेन वचनेन स्तोत्रसाधनभूतानामृचां त्रिवृदादिसंख्याचतुष्टये हि ज्योतिष्टोमशब्दः प्रसिद्धः। स्तोत्राणां सोमयागस्य चान्योन्यसंबन्धो 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' तै. सं. इति वचनेन प्रसिद्धः। ततश्च ज्योतिष्टोमशब्दस्य सोमयाग एव प्रसिद्धिसंभवात् तस्यैव प्राधान्यम्। इतरेषां तु तदङ्गत्वमिति समर्थितम्। एतच्च विचारत्रयं किं सर्वेषां फलमेव प्रयोजकं, उत केषांचित् क्रतुरित्येवं प्रयुक्तिविचारविशेषत्वात् लक्षणे संगतमित्याह सांग्रहणीति।

इति चतुर्थाध्यायार्थः।



## अथ पञ्चमाध्यायार्थः

एवं प्रयोजकाप्रयोजकत्वे चिन्तिते सत्येकप्रयोगविधिविधेयानां बहूनामङ्गप्रधानानामेककर्तृकाणामवश्यंभाविनि क्रमे सति, तद्विशेषः पञ्चमे चिन्त्यते।

### क्रमस्य विधेयत्वविषये प्राभाकरमतोन्यासः-

### आदौ विवरणमतेन पूर्वपक्षवर्णनम्।

नन्वयमनारम्भणीय एव क्रमविचारः, क्रमस्याविधेयत्वेनानङ्गत्वात्। अनङ्गलोपे च प्रधानस्यावैगुण्यात्। कथं पुनः क्रमस्याविधेयत्वम्?

तदुच्यते– स्वरूपेणाविधेयः सन् विधेयस्याविशेषणम्।
अभिधाविधुरत्वेन ग्राहकेणावधीरितः॥ १॥
विध्यङ्गभावविधुरो विध्याक्षेपबहिष्कृतः।
क्रमः केन प्रकारेण वैधानीयकमृच्छति॥ २॥

---

इदानीं पञ्चमाध्यायार्थं निरूपयिष्यन् चतुर्थ–पञ्चमयोः सङ्गतिमाह–एवमिति। चतुर्थे प्रयोगश्चिन्तितः। पञ्चमे तु तदङ्गभूतः क्रमश्चिन्त्यत इति लक्षणद्वयं बद्धक्रममित्यर्थः। प्रयोगविधिः–साधिकारः प्रधानविधिः। स एव साङ्गप्रधानानुष्ठापकः। तद्विशेषः श्रुत्यादिप्रमाणविशेषाद्वा, अनुष्ठेयपदार्थगतपौर्वापर्यविशेषाद्वा क्रमस्य विशेषः प्रयोगविध्यवगम्य इति शेषः।

नन्वननुष्ठेयत्वादप्रयोज्यस्य क्रमस्य कथं प्रयोगविधिविधेयत्वमित्याशङ्क्य, पदार्थानां विधेयत्वात् तदाक्षिप्तस्य क्रमस्यापि विधेयत्वं भविष्यतीत्याह–एकप्रयोगेति। एककर्तृकाणामिति। यद्यपि दर्शपूर्णमासादिषु बहवः कर्तारोऽधिगताः। तथापि यावतां कर्मणाम् एककर्तृकत्वमधिगतं, तावतामेकेन कर्त्राऽनुष्ठानं विदधत् प्रयोगविधिस्तेषां क्रममन्तरेणानुष्ठानासंभवात् क्रमविशेषमाकाङ्क्षते। स च श्रुत्यादिभिरुपस्थाप्यते। ततश्च तदुपस्थापितक्रमविशेषितपदार्थानुष्ठानं विधत्त इति, पदार्थविशेषणतया क्रमस्याननुष्ठेयस्यापि प्रयोगविधिविधेयत्वं संभवतीति भावः।

पञ्चमे प्रथमाधिकरणे क्रमविचार आरम्भणीयः, उत अनारम्भणीयो वेति विचारितः। तत्र प्राभाकरमतेन पूर्वोत्तरपक्षावारचयति–नन्वयमिति। नन्वनङ्गत्वेऽपि क्रमविशेषितप्रयोगसाध्यत्वात् प्रयोगविधेस्तदारम्भः स्यादित्यत्राह–अनङ्गलोपे चेति। यदङ्गं, तदेव प्रयोगविधिः स्ववैगुण्यपरिहारार्थं प्रयुङ्क्ते। नत्वनङ्गम्। तल्लोपेऽपि स्वस्यावैगुण्यात्। अतो न तदादर इत्यर्थः। प्रश्नोत्तरमुखेन क्रमस्याविधेयत्वमुपपादयितुमुपक्रमते–कथमिति।

तत्र प्रथमं विवरणकारमतेन पूर्वपक्षमाह–स्वरूपेणेति। स तु वस्तुबलवादितया वस्तुस्वभावपर्यालोचनेन सर्वस्यापि क्रमस्याविधेयत्वं मन्यते। निबन्धनमतेन पूर्वपक्षमाह–अभिधेति।

## श्लोकेन संक्षेपेणोक्तस्यार्थस्य

## विवरणकारमतेन पूर्वपक्षवर्णनस्योपपादनम्,

न तावत् क्रमः स्वरूपेण विधातुं शक्यते, अननुष्ठेयत्वात्। न हि स्वतन्त्रः क्रमोऽनुष्ठातुं शक्यते। द्रव्यादिवदिति चेत्। न। अतद्विशेषणत्वात्। अथापि स्यात्, यथा द्रव्यादीनां स्वतोऽननुष्ठेयानामप्यनुष्ठेयभावार्थविशेषणतया विधिगोचरत्वम्, एवं क्रमस्यापि भविष्यतीति। तन्न अविधेयविशेषणत्वात्। द्रव्यादयो हि विधेयभूतभावार्थ-विशेषणभूताः इति युक्तम्–यद्विधीयन्त इति क्रमस्तु न तथा, संघातविशेषणत्वात्। तस्य चाविधेयत्वात्। न हि संघातो विधीयते, पदार्थास्तु विधीयन्ते। न च ते क्रमस्य भूमयः। नह्येकैकत्र क्रमः संभवति। तस्मादविधेय इति।

संख्यावदिति चेत्। न। उपलक्षणत्वात्। तत्रैतत्स्यात्। 'एकादश प्रयाजान्य-जती'ति यथा संघातवर्तिन्यपि संख्या विधीयते, तद्वत्क्रमोऽपीति। तन्न : उपलक्षणत्वा-त्संख्यायाः। न हि तत्रैकादशसंख्या विधीयते। संख्योपलक्षितास्त्वभ्यासाः विधीयन्ते। ते च क्रियात्मका एवेति, युक्तमेव विधीयन्त इति। तस्मात्सर्व एव तार्तीयः, पाञ्चमिकश्च क्रमो न विधेयः—'इति विवरणकारः।

---

वैधानीयकं विधेयत्वम्। तत्र प्रथममर्धं व्याचष्टे–न तावदिति। स्वरूपेण–स्वातन्त्र्येण। अननुष्ठेयत्वात्–अनुष्ठातुमयोग्यत्वात्। न हि क्रमः स्वातन्त्र्येणानुष्ठीयते। पदार्थेष्वनुष्ठीय-मानेषु स्वयमवर्जनीयतया निष्पद्यत इति, न विधिगोचरत्वमश्नुत इत्यर्थः।

शङ्कते–द्रव्यादिवदिति। यथा 'दध्ना जुहोती'त्यत्र सिद्धरूपस्यापि दध्नः होमोपरञ्ज-नाद्विधेयत्वं, तथाऽत्रापि स्यादिति भावः। न हि संघातो विधीयत इति युगपदनेकपदार्थ-संघातगोचरो विधिर्न क्वचिदपि दृष्टचरः। विशिष्टविधिरपि नानाविशेषणविशिष्टैकपदार्थ-गोचरः। न तु संघातगोचरः। अतो यः क्रमाश्रयः, नासौ विधेयः। यस्तु विधेयः, नासौ तदाश्रय इति भावः।

संघातविशेषणतया विधेयत्वं दृष्टान्तावष्टम्भेन शङ्कते—संख्यादिवदिति। नामो-पात्तायाः संख्यायास्तत्र विधेयत्वमेव नास्तीति परिहरति—तन्नेति। एवंलक्षणत्वात् एवंस्व-भावत्वादित्यर्थः। न हि तत्र पञ्चप्रयाजानुद्दिश्य एकादशत्वं विधातुं शक्यते। पञ्चानामेका-दशत्वायोगात्। किंतु संख्यया अभ्यासमुपलक्ष्य, स विधीयते। ततश्चाभ्यासे क्रियमाणे श्रुतमेकादशत्वं स्वयमेव संपद्यत इति, न विधेयत्वं तस्येत्यर्थः। पूर्वपक्षमुपसंहरति–तस्मादिति।

---

१—विवरणकार इति—अत्रेत्थं विषयपरिशुद्धिः—प्रभाकरमिश्रेण शाबरभाष्यस्योपरि प्रथमं वस्तुबलानुसारेण विवरणं नाम टीका कृता। सैव टीका लघ्वी टीकेत्यपि संप्रदाये प्रसिद्धा। तेन तत्रोपपादितोऽयमर्थः—'वषट्कर्तुः प्रथमभक्षः' इत्यादिषु प्रथमादिशब्दप्रतिपाद्यः पदार्थद्वयाश्रयः एकपदार्थप्रतियोगिकापरपदार्थानुयोगिकः पौर्वापर्यलक्षणस्तार्तीयः क्रमः। पाञ्च-मिकस्तु बहुपदार्थाश्रयो विततिलक्षणश्शब्दानभिधेयः। उभयस्याप्यभिधेयत्वानभिधेयत्वरूपवैष-म्यसत्त्वेऽपि, वस्तुसामर्थ्यपर्यालोचनायां न विधेयत्वमिति विवरणकारः मन्यते स्म, यथोक्तं न्यायकणिकायां अननुष्ठेयत्वादिति विधिविवेकोक्तं हेतुं व्याचक्षाणैः मिश्रैः—तत्र विवरणकृतो हेतुमाह—अननुष्ठेयत्वात् न्या. क. पृ. ४१३ इति।

## निबन्धनमतेन पूर्वपक्षप्रतिपादनम् ।

'निबन्धकारस्त्वाह-भवतु तार्तीयक्रमस्य, संख्यायाश्च[1] कादशादिकायाः अभिधानसंभवाद् ग्राहकग्रहणेन विध्यैदमर्थ्ये सति विध्याक्षिप्तानुष्ठानतया विधेयत्वम् । न त्वेवं पाञ्चमिकस्य क्रमस्य संभवति । न हि तस्य किंचिदभिधानमस्ति । अनभिहितश्च न ग्राहको ग्रहीतुमीष्टे । साधिकारस्य विधेः प्रयोजनरूपस्य सन्निधिसमाम्नातैः स्वयमप्रयोजनभूतैः प्रयोजन—प्रयोजनिभावेनान्विताभिधानं ग्राहकग्रहणमभिधीयते । यश्च नाभिधीयते, न तस्यैवंरूपं ग्राहकग्रहणं संभवति । तदगृहीतस्य च न विध्यैदमर्थ्ये प्रमाणमस्ति । तादर्थ्यशून्यस्य च न विधिरनुष्ठानमाक्षिपति । अतदाक्षिप्तानुष्ठानस्य च न विधेयत्वसंभवः । यथाऽऽहुः-यत्तु तत्सिद्ध्यर्थमुपादीयते, तद्विधेयमिति बृ टी. पृ. ३७ ति ।

## पाञ्चमिकक्रमस्याभिधानमाशंक्य तन्निरसनम् ।

कथं पुनः क्रमस्याभिधानं, नास्ति, क्त्वाप्रत्ययो हि पूर्वकालताभिधायी 'अध्वर्युर्गृहपतिं दीक्षयित्वे'ति । न क्त्वाप्रत्ययः पूर्वकालताभिधत्ते । 'मुखं व्यादाय स्वपि-

---

तार्तीयः पाञ्चमिकश्चेति । 'वषट्कर्तुः प्रथमभक्ष' इत्यादिषु प्रथमादिशब्दावगम्यः पदार्थद्वयाश्रयः पौर्वापर्यलक्षणस्तार्तीयक्रमः । पाञ्चमिकस्तु बहुपदार्थाश्रयः विततिलक्षणः शब्दानभिधेयः । उभयस्याप्यभिधेयत्वानभिधेयत्वलक्षणवैषम्यसद्भावेऽपि, वस्तुस्वभावपर्यालोचनायां न विधेयत्वमित्यर्थः । विवरणं नाम प्रथमं गुरुणा प्रणीता लघ्वी टीकेति तत्संप्रदायः ।

निबन्धनं नाम पश्चात् गुरुणैव प्रणीता बृहती टीका । तन्मतेनेदानीं पूर्वपक्षमाह—निबन्धनकारस्त्विति । स तु शब्दबलवादितया शब्दस्वभावपर्यालोचनेनाभिधेयस्य क्रमस्य, संख्यायाश्च विधेयत्वमङ्गीचकारेत्यर्थः । ग्राहकग्रहणेनेति । प्रथमं ग्राहकग्रहणं, तदनु ग्राहकशेषत्वं, तदनन्तरं करणशेषत्वम्, पश्चात्तु तद्वारशेषत्वम् । ततः प्रयोगविध्यनुष्ठाप्यत्वम् । तदेव च विधेयत्वमिति तन्मतपरिपाटी । तार्तीयक्रमस्य संख्यायाश्चाभिधानसंभवात् तत्सर्वं संभवतीत्यर्थः ।

पाञ्चमिकस्य तु तद्वैपरीत्याह—नत्वेवमिति । तदेवोपपादयति—नहीत्यादिना । प्रकृते ग्राहकग्रहणाभावं प्रतिपादयितुं ग्राहकग्रहणस्वरूपमाह—साधिकारेति । प्रयोजनरूपस्य स्वतः साध्यतया स्वयं प्रयोजनस्य । समाम्नातैः पदार्थवर्गैः ।

पाञ्चमिकक्रमस्याभिधानमाशङ्कते—कथं पुनरिति । 'समानकर्तृकयोः पूर्वकाले' अ. पा. सू. इति समानकर्तृकयोः धात्वोः पूर्वकाले वर्तमानाद्धातोः क्त्वाप्रत्ययस्य विधानात् । क्त्वाप्रत्ययः पूर्वकालवाचीत्यर्थः । व्यभिचारान्न पूर्वकालत्वमर्थः । तदभावात्तु समानकर्तृकत्वमेव तदर्थ इति परिहरति—न क्त्वाप्रत्यय इति । व्यादाय स्वपिति-सुप्त्वा व्यददातीत्यर्थः ।

---

१—निबन्धनकारस्त्विति । निबन्धनं नाम पश्चात् प्रभाकरमिश्रेण प्रणीता टीका, या बृहतीम्ना प्रसिद्धा वरीवर्ति । स तु शब्दसामर्थ्यानुसारेण शब्दबलवादितया शब्दस्वभावपर्यालोचनेनाभिधेयक्रमस्य, संख्यायाश्च विधेयत्वमूरीकरोति स्म, तस्मादुभयमतेनापि क्रमस्यानंगत्वात्, तदभावेऽपि वैगुण्याभावात् अनर्थकोऽयं क्रमविचार इतिपूर्वपक्षसंक्षेपः— इति ।

ती'त्यादिषु व्यभिचारात्। समानकर्तृकत्वमेवाव्यभिचारात् क्त्वार्थः। कथन्तर्हि भुक्त्वेति पूर्वकालतावगतिः। उच्यते। क्त्वाप्रत्ययो हि समानकर्तृकार्थवाचिनोर्द्धात्वोर्य एव पूर्वं प्रयुज्यते, तत एव विधीयते, ततश्च क्त्वाप्रत्ययश्रवणात्पूर्वप्रयोज्यत्वावगमे सति यथाप्रयोगमर्थावगमः, यथावगमं चानुष्ठानमित्यनुष्ठानक्रमः प्रतीयते, न तु पूर्वकालत्वाभिधानात्। स्याच्च तावच्छ्रुतिक्रमेऽभिधानाशङ्का, अर्थादिषु तु दूरापास्तैव सा। तस्मादनभिधेयत्वेन क्रमस्यानङ्गत्वात्, तद्धानावपि वैगुण्याभावादनर्थकः क्रमविचारः—इति।

## मतद्वयसाधारण्येन सिद्धान्तप्रतिपादनम्।

तत्राहुः—'क्रमस्यानङ्गभावेऽपि नैवानादरणीयता।
तदभावे विशिष्टस्य प्रयोगस्याप्रसिद्धितः'॥ इति

सत्यमनङ्गमेव क्रमः, तथाऽपि नानारम्भणीयः क्रमविचारः, अनङ्गस्यापि तस्यादरणीयत्वात्। श्रुत्याद्यवगतक्रमविशेषसमालिङ्गितप्रयोगविशेषसाध्यो हि प्रयोगविधिरवसीयते। तेन यद्यपि प्रयोगविधिः क्रमस्यानुष्ठानं नाक्षिपति, प्रयोगविशेषं त्वाक्षिपत्येव, स च नर्त्ते क्रमविशेषात् सिध्यतीति तदादरः। तेनारभ्यं क्रमलक्षणमिति।

## न्यायविरोधात् सूत्र-भाष्यविरोधाच्च तन्मतस्य निरासः।

इदन्तु नानुमन्यन्ते युक्ति-ग्रन्थ-विरोधतः।
अननुष्ठेयरूपोऽपि तद्विशेषणभावतः॥ ३॥
विधेयत्वं कथंकारं क्रमो न प्रतिपद्यते।
अभिधाविधुरोऽप्येष कथंचिद्बुद्धिमागतः॥ ४॥

---

तर्हि क्त्वाप्रयोगे कथं पूर्वकालत्वप्रतीतिरिति शङ्कते—कथं तर्हीति। प्रथमप्रयुक्तधातोः क्त्वाप्रत्ययविधानात् प्रयोगप्राथम्येनैव पूर्वकालताप्रतीतौ तत्र तस्य वाचकत्वकल्पनमयुक्तमिति परिहरति—उच्यत इति। अर्थ-पठन-स्थान-मुख्य-प्रवृत्त्यवगम्येषु क्रमेषु तु क्त्वाप्रत्ययस्याप्यभावादभिधानशङ्कैव नास्तीत्याह—स्याच्चेति। निबन्धनपूर्वपक्षमुपसंहरति—तस्मादिति।

मतद्वयेऽपि साधारणं सिद्धान्तमाह—अत्राहुरिति। यद्यप्यनङ्गं क्रमः, तथापि विध्यपेक्षितत्वादादरणीय एवेत्यर्थः। तदेवोपपादयति—श्रुत्यादीति। नहि यथा तथा वा प्रयोगसाध्यो विधिः, विनियोगविधिविरोधात्। आपाततः श्रुत्याद्यवगतक्रमप्रतीतिविरोधाच्च। किं तु प्रयोगविशेषसाध्यः। स च विशेषः क्रमविशेषाधीनः। अतस्तदादरणं युक्तमित्यर्थः। अस्त्वेवम्, अथापि प्रयोगविध्यनङ्गतया तत्प्रयुक्तिः कथं स्यादित्यत्राह—तेनेति। परस्परमङ्गाङ्गिभावापन्नानेककर्तृकान् नानापदार्थान् क्रमेण प्रयुञ्जानो विधिरवर्जनीयतया क्रममपि प्रयुङ्क्त इति, तत्प्रयुक्तिरार्थिकीति, क्रमलक्षणमारम्भणीयमित्यर्थः।

---

१ – मतद्वयसाधारणं सिद्धान्तमाह—क्रमस्येत्यादिना। अस्यायं भावः-यद्यप्यनंगं क्रमः तथापि विध्यपेक्षितत्वादादरणीय इति। आचार्यमते तु क्रमस्य साक्षादविधेयत्वेपि पदार्थविशेषणतया विधेयत्वं सूत्रभाष्यानुमतम्। अतस्तद्विचाराय पञ्चमोऽध्याय उपक्रम्यत इत्यर्थो बोध्य। शेषमतिरोहितार्थम्।

आकाङ्क्षा-योग्यतायुक्तः पितृयज्ञादिकर्तृवत् ।
ग्राहकग्रहणं गच्छेत्तद्धयन्यत्रापि कारणम् ॥ ५ ॥
वदेत्स्मृति-प्रयोगाभ्यां क्त्वाश्रुतिः पूर्वकालताम् ।
प्रयोगनियमाभावात्प्रतिपत्तिश्च नान्यथा ॥ ६ ॥
श्रुतिलक्षणमित्येतद्विधत्ते क्रममित्यपि ।
न सूत्रं न च भाष्यं स्यात्तस्मादेतददर्शनम् ॥ ७ ॥

यत्तावत्स्वरूपेण क्रमो न विधेय इति, तदनुमन्यामहे । विधेयरूपप्रयोगविशेषणत्वेन तु अस्य विधेयत्वं निवारयितुं न शक्यते कालादिवत् । यथा हि–कालः प्रयोगानुबन्धितया विधीयते । तद्वत्क्रमोऽपि । यत्तु संघातविशेषणत्वान्न विधेयविशेषणत्वमिति । तदनुपपन्नम् । पदार्थानामेव विशेषणत्वात् न हि संघातः क्रमस्य भाजनमवगम्यते । न हि भवति क्रमेण संघात इति । भवति तु पदार्थाः क्रमेणानुष्ठीयन्त इति ।

यत्त्वेकैकत्र नावगम्यत इति । नैष दोषः । संयोगवत्सद्वितीयपदार्थाश्रयत्वात्, तथाऽवगमात् ।

यद्वा नायं सद्वितीयपदार्थाश्रयः, एकैकत्र तु सप्रतियोगिको दीर्घत्वादिवद्वर्तते । पौर्वापर्यं हि क्रमः । न द्वयोः पूर्वत्वम्, नापि परत्वम् । एकापेक्षया त्वितरस्य पूर्वत्वम्, तदपेक्षया चेतरस्य परत्वमवगम्यते । तस्मात्सर्वथा न संघाताश्रयः, किं तु पदार्थाश्रयः, पदार्थाश्रयत्वेन च तद्विधिनैव दध्यादिवद्विधीयत इति ।

---

न्यायविरोधात्, सूत्रभाष्यविरोधाच्च तन्मतं दूषयति–इदं त्विति । तत्र प्रथमं युक्तिविरोधमाह–अननुष्ठेयेति । निबन्धनकारमतं दूषयति–अभिधेति । पितृयज्ञेति । अनभिहितस्याध्याहृतस्य कर्तुर्यथा तत्र ग्राहकग्रहणमङ्गत्वं च । तद्वत् क्रमस्यापीत्यर्थः । तद्धीति । आकाङ्क्षादिमत्त्वमेवाङ्गान्तराणामपि ग्राहकग्रहणे हेतुरित्यर्थः । क्त्वाप्रत्ययेन क्रमस्याभिधानं नास्तीत्युक्तम् । तन्निराकरोति–वदेदिति । 'समानकर्तृकयोः पूर्वकाले अ. पा. सू. इति स्मृत्या पूर्वकालत्वमर्थ इति प्रतीयते । तथा लोकप्रयोगादपि तत्र पूर्वकालत्वप्रतीतेः । परोक्तामन्यथासिद्धिं निराकरोति–प्रयोगेति । क्त्वाप्रत्ययान्तस्य शब्दस्य पूर्वमेव प्रयोग इति नियमो नास्तीत्यर्थः । प्रतिपत्तिश्चेति । क्त्वाप्रत्ययमन्तरेण पूर्वकालत्वप्रतीतिरन्यतो न सिध्यतीत्यर्थः ।

श्लोकान् व्याचष्टे–यत्तावदिति । अनुमन्यामह इति अभावार्थत्वादित्यर्थः । कथं तर्हि विधेय इत्याह–विधेयस्वरूपेति । प्रयोगविशेषणत्वेन विधेयत्वे दृष्टान्तमाह–कालादिवदिति । व्रीह्यादिद्रव्याणि हि पूर्वं कर्मोद्देशेन तच्छेषतया विधीयमानानि पश्चात् प्रयोगवेलायामप्यन्वीयन्ते । कालस्तु प्रयोगवेलायामेवाकाङ्क्षितत्वात्, तदानीमेव तच्छेषतया विधीयते । तद्वत् क्रमोऽपि तच्छेषतया विधेयः स्यादित्यर्थः । न हि संघात इति । संघातस्यै[illegible]त्वात् क्रमस्य चानेकाश्रितत्वात् न संघातस्य क्रमोऽस्तीत्यर्थः । तर्हि केषां क्रमः ? तत्राह–भवत्विति । एकस्मिन् पदार्थे क्रमाभावात् संघाताश्रयत्वं क्रमस्योक्तं तद्दूषयति–यत्त्विति । तथावगमादिति । अनयोः संयोग इति वदनयोः पौर्वापर्यमिति प्रतीतेः पदार्थद्वयाश्रितः क्रम इत्यर्थः । एकैकपदार्थाश्रयत्वमपि तस्योपपादयति–यद्वेति । पौर्वापर्यं हीति । पौर्वापर्यं नाम नैकः पदार्थः । किंतु पूर्वत्वं, परत्वं च । तच्च द्वयमेकैकत्रैव । न तु तयोरुभयोरुभयमस्तीत्यर्थः । सर्वथेति । एकैकनिष्ठत्वेप्युभयनिष्ठत्वेपीत्यर्थः । अस्त्वेवम् । विधेयत्वे किमायातमित्यत्राह–पदार्थेति । यथा

## विततिविशेषः क्रमः, तस्यानभिधानेनाऽविधेयत्वमिति निबन्धनमतस्य दूषणम् ।

यत्त्वनभिहितत्वान्नास्य ग्राहकग्रहणं भवतीति, तदप्ययुक्तम् । किमत्र अभिधानेन, आकाङ्क्षा-संनिधि-योग्यत्वानि ह्यन्विताभिधानोपलक्षणम्, नाभिधानम् । मा विलोपि विश्वजिदादौ नियोज्यान्विताभिधानम् । आकाङ्क्षितश्च प्रयोगविधेर्नानापदार्थानेकस्मिन् कर्तरि निक्षिपतः क्रमविशेषः, सन्निधापितश्चासौ श्रुत्यादिभिः, योग्यश्चेति किमर्थमनेनान्वितं स्वार्थमभिधातुम् प्रधानवाक्यगतो लिङ्शब्दः कापुरुषवदभिधानमुत्कोचमपेक्षते । यस्यापि चान्यस्यान्विताभिधानमस्ति प्रयाजादेः, तदपि न स्वशब्देन प्रधानापूर्वान्वितमभिधीयते, किं तु प्रधानवाक्यगत एव लिङ्शब्दस्तदन्वितं स्वार्थमभिधत्ते, स्वशब्दस्तु तत्सन्निधापनमात्रोपयोगीति ते दर्शनम् । सन्निधापनं च विनाऽप्यभिधानेन क्रमस्यापि विद्यत एवेति, भवत्यसौ ग्राहकग्रहणगोचरः । तद्यथा पितृयज्ञे, विश्वजिति चानभिहितस्यापि कर्तुरङ्गत्वम्, एवं क्रमस्यापि भविष्यति ।

अव्यापकश्चायं हेतुरनभिहितत्वादिति । 'अध्वर्युर्गृहपतिं दीक्षयित्वेत्येवमादौ क्त्वाप्रत्ययेन पूर्वकालस्याभिहितत्वात् । यत्तु व्यभिचारित्वान्न पूर्वकालत्वमर्थ इति । तन्न । न व्यभिचारादशब्दार्थत्वं भवतीति । मा भून् ज्वलनवचनस्याग्निशब्दस्य माणवकेऽपि प्रयोगादतदर्थत्वम् ।

## अनभिहितत्वहेतोरव्यापकत्वोपपादनम् ।

मा च भूत्—

'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते' इत्यादिषु भिन्नकर्तृकेऽपि प्रयोगादलंखल्वुपपदाद्धात्वर्थमात्रेऽपि प्रयोगात्समानकर्तृकत्वमप्यतदर्थः ।

---

'दध्ना जुहोती'त्यत्र यागो होमोपरक्तविधिमन्तरेण दध्नः पृथग्विध्यभावेऽपि तद्विधिनैव तद्विशेषणतया विधेयत्वं, तथा क्रमस्य तत्तत्पदार्थविशेषणतया तत्तद्विधिभिरेव विधानं सिध्यतीत्यर्थः ।

यत्तु पाश्चमिकस्य विततिलक्षणक्रमस्यानभिहितत्वेन ग्राहकग्रहणासंभवात् न विधेयत्वमिति निबन्धनमतं, तदनूद्य दूषयति—यत्त्विति । किमत्रेति । बुद्धिसंनिधिरेवान्विताभिधाने अपेक्षितः, नतु शाब्द इति भवन्मतस्थितिरिति भावः । क्रमस्याकाङ्क्षादित्रयमुपपादयति—आकाङ्क्षितश्चेति । निक्षिपतः—अनुष्ठेयतया एकस्मिन् कर्तरि प्रापयतः । क्रममन्तरेण नानापदार्थानामेकेन कर्त्राऽनुष्ठानासिद्धेः स आकाङ्क्षित इत्यर्थः । क्वचित् शब्दस्यापि ग्राहकग्रहणार्थं पदार्थसंनिधापकत्वमेव । नतु स्वयमन्विताभिधायकत्वमाश्रितं भवतैव । क्रमस्य तु शब्दमन्तरेणापि तत्सिद्धेः, तद्वदेव भवेद्ग्राहकग्रहणमित्याह—यस्यापि चेति । तदन्वितं—शब्दोपस्थापितप्रयाजाद्यन्वितम् । अशब्दोपात्तस्यापि ग्राहकग्रहणे विधेयत्वे, अङ्गत्वे च दृष्टान्तमाह—तद्यथेति । सर्वस्यापि क्रमस्यानभिहितत्वं नास्तीत्याह—अव्यापकश्चेति । अशब्दार्थत्वमिति । हेतोरेव व्यभिचारित्वं दोषः । शब्दस्य तु लक्षणयाप्यन्यत्र वृत्तिसंभवात्, न तावता स्वार्थवाचकत्वं हीयत इत्यर्थः । समानकर्तृकत्वमेव क्त्वाप्रत्ययार्थं इत्युक्तं भवता । व्यभिचारात् पूर्वकालस्यातदर्थत्वे, तदपि तदर्थो न स्यादित्याह—मा च भूदिति । श्रवणं हि नरकर्तृकं, विमोक्षस्तु पापकर्तृक इति भिन्नकर्तृकत्वम् । अलं खल्वुपपदेति । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' ३-४-१८ इत्यत्रापि क्त्वाप्रत्ययानुशासनादित्यर्थः ।

स्यान्मतम्। न व्यभिचारादशब्दार्थत्वं ब्रूमः, किन्त्वनन्यलभ्यः शब्दार्थः इति स्थितिः। समानकर्तृकत्वं च तथा। न हि तस्यानभिहितस्यान्यतः कुतश्चिदवगतिः संभवति, पूर्वकालत्वप्रतिपत्तिस्तु प्रयोगनियमादप्युपपद्यते। समानकर्तृकार्थवाचिनोर्हि पूर्वं प्रयुज्यमानाद्धातोः क्त्वाप्रत्ययो लोके प्रयुज्यते। तस्मात्पूर्वकालप्रतिपत्तेरन्यथाऽपि सिद्धत्वान्न शब्दार्थत्वम्–इति। नैतद्युक्तम्। प्रयोगनियमाभावात्। भवति हि गच्छति भुक्त्वेत्यपि लोके प्रयोगः। श्रुतिस्मृतीतिहासादिषु चानेकशो 'हृदयमाच्छिन्दन् जातवेदो मरुतोऽद्भिस्तमयित्वा आप. श्रौ सू. ५ २. ४१.' प्राणायामं चरेत्स्नात्वा, 'न्यवर्तत मृगं हत्वे'वा. रा. अ त्यादीनि बहून्युदाहरणानि। तस्मान्न प्रयोगनियम इत्यनन्यलभ्यत्वात्पूर्वकालत्वं क्त्वाऽभिधेयमिति सिद्धमव्यापकत्वं हेतोः।

## सूत्र-भाष्यग्रन्थविरोधप्रदर्शनेन दूषणम्।

सूत्रकारश्च श्रुतिलक्षणमानुपूर्व्यमि मी. द. ५ १–१ ति स्पष्टमेव विधेयत्वं दर्शयति। भाष्यकारोऽपि 'दीक्षाक्रमं विधत्ते, स क्रमो विधीयते' इत्यादिभिस्तत्र तत्र क्रमस्य विधेयत्वमाघोषयति। तस्मान्न्यायतः, ग्रन्थतश्च क्रमस्याविधेयत्वं न घटते। ग्राहकग्रहणापादितविध्यैदमर्थ्यस्य, लिङ्गाच्च प्रतिलब्धप्रयोगावच्छेद- द्वारस्योपादानपरिकल्पितकरणोपकारसाधनत्वस्य संख्यावत्क्रमस्य न किंचिदनङ्गत्वे कारणमस्ति यदविधेय इत्युच्यते।

## क्रमस्याविधेयत्वे पञ्चमाध्यायानारम्भ इति दूषणान्तरम्।

किं च–चोदनालक्षणत्वं च क्रमस्य कथमीदृशः।
स्वरूपं हि तद्रम्यं साध्य-साधनते न च॥ ८॥
न लिङ्गमात्रं संख्यावल्लिङ्गिनाऽनवधारणात्।
तथा सत्यपि लिङ्गं चेद् द्रव्याद्यपि तथा भवेत्॥ ९॥

---

पूर्वकालत्वप्रतीतेः क्त्वाप्रत्ययाभिधानं विनाप्यन्यतः सिद्धत्वात् अतदर्थत्वं पूर्वकालत्वस्य समानकर्तृकत्वस्य तु तदभावात् तदर्थत्वमेवेतीदानीमाशङ्कते—स्यान्मतमिति। शब्दप्रतिपाद्यत्वमन्तरेण तत्प्रतीतेः प्रकारान्तरेणालभ्यत्वे अनन्यलभ्यत्वम्। तथेति। अनन्यलभ्यप्रतीतिकमित्यर्थः। तदेवाह—नहीति। अनभिहितस्य। क्त्वाप्रत्ययेनेत्यर्थः। प्रयोगनियममेवाह—समानकर्तृकेति। निगमयति—तस्मादिति। विपरीतप्रयोगेपि पूर्वकालत्वप्रतीतेः संभवेन, तस्याः प्रयोगनियमहेतुकत्वासंभवेनानन्यलभ्यत्वात् समानकर्तृकत्ववत् पूर्वकालत्वस्यापि क्त्वाप्रत्यार्थत्वमेवेति परिहरति—नैतदिति।

एवं युक्तविरोधमभिधाय ग्रन्थविरोधमप्याह–सूत्रकारश्चेति। विध्यैदमर्थ्ये, द्वारैदमर्थ्ये, करणैदमर्थ्ये चाङ्गान्तरवत् प्रमाणपौष्कल्यात् क्रमस्याविधेयत्वं न युज्यत इति निगमयति—ग्राहकग्रहणेति। लिङ्गात्–क्रमस्वभावसामर्थ्यात्। संख्यावदिति। यथा कर्मसमवायिन्याः संख्यायाः सामर्थ्यात प्रयोगावच्छेदद्वारलाभः। उपादानाच्च करणैदमर्थ्यम्।

क्रमस्याविधेयत्वे चोदनालक्षणत्वाभावात्। विचारानर्हत्वं स्यात्। ततश्च पञ्चमाध्यायानारम्भ एव स्यादिति, प्रकारान्तरेण दूषयति—किंचेति। लिङ्गमात्रं-विधेयोपलक्षणमात्रम्। लिङ्गिनः-उपलक्ष्यस्य।

कथं चेद्दृगनूदितस्याविधेयस्य क्रमस्य चोदनालक्षणत्वम्? न हि तस्य स्वरूपं चोदनागम्यमपूर्ववत्, प्रमाणान्तरगम्यत्वात्। नापि दध्यादिवदपूर्वसाधनत्वम्, अनभ्युपगमात्। नापि साध्यत्वम्, अधिकारवदस्य चोदना बोधयतीति, न तल्लक्षणत्वम्। अतल्लक्षणं च न विचारमर्हतीति, नारम्भणीयं क्रमलक्षणं स्यात्।

## अविधेयत्वस्यापि चोदनालक्षणत्वे दृष्टान्तान्तरावलम्बनेन शंका।

तत्रैतत्स्यात्। यथा 'सप्तदश प्राजापत्यान्पशूनालभते' इत्यत्राविधेयाऽपि संख्या विधेयभूतकर्मोपलक्षणत्वेन चोदनार्थतां नातिवर्तते, तथा क्रमोऽपि प्रयोगविधिविधेयप्रयोगविशेषोपलक्षणत्वेन चोदनालक्षणः स्यादिति। नैतत्सारम्। लक्ष्यानवधारणात्। संख्या हि स्वसमवाययोग्यानि पृथक्कर्माण्युपस्थापयन्ती भवत्युपलक्षणम्। क्रमस्तु न कथं चित्प्रयोगविशेषमुपस्थापयति, न ह्येतेषु कर्मसु कृतेषु द्वयं संख्या संपद्यत इतिवदस्मिन्प्रयोगेऽनुष्ठितेऽयं क्रमस्संपद्यत इति शक्यं निरूपयितुम्। यद्यपि कचित्प्रयोगविशेषे क्रमविशेषः कश्चिदवस्थितः, तथाऽपि नासावनुष्ठानात्प्रागवगन्तुं शक्यते। अस्मिन्नयं क्रमः, नास्मिन्निति। तत्रैतदेवापतति—अनेन क्रमेणानुष्ठातव्यमिति। ततश्च क्रमविशेषविशिष्टस्य विधेयत्वादविधानाभिधानं प्रलापः।

---

श्लोकं व्याचष्टे—कथंचेति। प्रमाणान्तरगम्यत्वादिति। अनुष्ठानक्रमस्य प्रत्यक्षादिगम्यत्वादित्यर्थः। अनभ्युपगमादिति। अविधेयत्ववादिना भवतेत्यर्थः। अधिकारवदस्य फलवदस्य। न विचारमर्हतीति। 'चोदनालक्षणोऽर्थो धर्मः' मी. द. १. १. २. इति शास्त्रादौ चोदनालक्षणस्यैव विचार्यत्वप्रतिज्ञानात्। प्रमाणलक्षणस्य, तद्भेदलक्षणस्य चौपोद्घातिकत्वादित्यर्थः।

अविधेयस्यापि चोदनालक्षणत्वं तादृशदृष्टान्तावष्टम्भेन शङ्कते—तत्रैतत्स्यादिति। 'एकादश प्रयाजान् यजती' श. ब्रा. ३-६-५-१. ति उत्पन्नकर्मसमवायिनी संख्या कर्मणामुत्पन्नानां विधानासंभवात् स्वयमेव विधीयते। उत्पद्यमानकर्मसमवायिनी तु कर्मसु बहुपु (१) विहितेषु केवलं तत्प्रचयगम्येति, स्वयं न विधीयते। किंतु विधेयानां कर्मणां न्यूनाधिकभावव्यवच्छेदेनेयत्तोपलक्षणं भवतीति निबन्धनकारमतमिति भावः। दृष्टान्तवैषम्येन परिहरति—नैवदिति। क्रमेणोपलक्ष्यविशेषस्यानिर्धारणात्तदेव वैषम्यं दर्शयति—संख्या हीति। संख्यया कर्मस्वियत्ताप्रतीतिवत् क्रमेण प्रयोगे न कश्चित् विशेषः प्रतीयत इत्यर्थः। संख्यया कथं विशेष उपस्थाप्यते, क्रमेण वा कथं स नोपस्थाप्यत इत्याशङ्क्य, संख्यानामन्योन्यविलक्षणतया संख्या स्वाधारेषु वैषम्यमुपलक्षयति। क्रमाणामन्योन्यवैलक्षण्यप्रतीतिरशक्यतया स्वाधारेषु वैषम्यं न तेनोपस्थाप्यते इत्याह—नह्येतेष्विति। ननु प्रयोगान्तरात् प्रयोगान्तरे ततो विलक्षणः कश्चित् क्रमोऽस्त्येव। स च कथं नोपलक्षणं स्यादित्याशङ्क्य, विद्यमानस्यापि विलक्षणत्वेनाप्रतीतस्योपलक्षणत्वं न युज्यत इति परिहरति—यद्यपीति। अनुष्ठानात् प्रागिति। संख्या तु ततः पूर्वमपि विलक्षणतया प्रत्येतुं शक्यते। क्रमस्तु न वैलक्षण्येन ज्ञातुं शक्यत इत्यर्थः। ततश्च क्रमो विलक्षणतया पृथगप्रतीयमानः प्रयोगविशेषमुपलक्षयितुं न शक्नोति। तद्विशेषणतया तेन सहैव प्रत्येतुं शक्यत इत्याह—तत्रैतदिति। तथैव भवेत्, को दोष इत्याशङ्क्य, तथात्वे विधेयत्वं प्रसज्यत इत्याह—ततश्चेति।

तदेवं सत्यपि यदि क्रमस्याविधेयत्वमुच्यते, ततः 'सोमेन यजेते'त्यादिष्वपि सोमसाध्यस्य यागस्यैव विधानम्, न सोमस्य। सोमस्तु यागविशेषोपलक्षणमिति शक्यं प्रत्यवस्थातुम्। तस्यापि च कृतिविशेषोपलक्षणत्वेन अविधेयत्वान्न किंचिद्विधेयमवशिष्यते कृतिव्यतिरिक्तमिति, सुनिरूपितमत्रभवता भवता। अथ विशेषणत्वे संभवत्युपलक्षणत्वमन्याय्यमिति यागविधानम्, तत् क्रमेऽपि समानम्, अन्यत्र स्वसमयापस्मारात्।

किं च क्रमविशेषपरिगृहीतप्रयोगावच्छिन्नः प्रयोगविधिरिति वदता प्रयुक्तानां क्रमश्चिन्त्यत इति, प्रयोगविध्युत्तरकालं क्रमनिरूपणं वदन्नवधीरितः स्यादिति।

### तन्निरासमुखेन स्वसिद्धान्तकथनम्।

वचसोऽध्वर्युरित्यादेर्विधेयं किं निरूपितम्।
कर्ता चोदकतः सिध्येदसिद्ध्यन्वचसाऽपि न ॥ १० ॥

अपि च—

यदि क्रमो न विधीयते, कस्त'ह्यध्वर्युर्गृहपतिं दीक्षयित्वे'त्यस्य विधेः विषयः।

---

प्रतिवन्दिप्रदर्शनपरं तथा सत्यपीत्यमुमंशं व्याचष्टे—तदेवं सत्यपीति। विशेषणत्वेन विधेयत्वसंभवेऽपीत्यर्थः। क्रमस्योपलक्षणतां भवद्वचनविरुद्धमपीत्याह—किंचेति। पूर्वमनङ्गत्वेऽपि क्रमस्य प्रयोगविधेः श्रुत्याद्यवगतक्रमविशेषपरिगृहीतप्रयोगविशेषसाध्यत्वात् आदरणीयत्वमिति वदता प्रयोगविधिप्रवृत्तेः पूर्वमेव प्रयोगविशेषणतया क्रमस्यान्वय इत्युक्तं भवतीति। इदानीं प्रयोगविशेषोपलक्षणं क्रम इति वदता प्रयोगविधिना प्रयोगेऽवगते पश्चात् प्रयोगविध्यन्वित इत्युक्तं भवति। ततश्चानयोर्वचनयोर्विरोध इत्यर्थः।

प्रयोगविशेषणतया प्रयोगविधिनैव क्रमो विधीयत इत्युक्तम्। इदानीं क्वचित् क्वचित् क्रमस्यावान्तरविधिविधेयत्वमपि प्रतिपादयितुमुपक्रमते—अपि चेति। विधेयं किंनिरूपितमिति। क्रममन्तरेणान्यस्य विधेयत्वं दुर्निरूपमित्यर्थः। नन्वध्वर्युरेव दीक्षाः कुर्यादिति कर्तृनियमोऽनेन वचनेन विधीयत इत्याशङ्क्य, दीक्षास्वध्वर्युः कर्ताऽतिदेशतः प्राप्नोति नवेति विकल्प्य, यदि प्राप्नोति, तदा नियत एवेति विधिवैयर्थ्यमित्याह—कर्तेति। सिध्येदिति। नियत एवेति शेषः। द्वितीये प्राप्त्यभावादेवानेन वचसा सुतरां नियमसिद्ध्यनुपपत्तिरित्याह—असिध्यन्निति।

किं दीक्षाऽनेन वाक्येन विधीयते, अध्वर्युः कर्ता वा, उताध्वर्युरेवेति कर्तृनियमो वेति विकल्प्य, प्रथमं दूषयति—दीक्षातावदिति। सत्रे हि 'ऋद्धिकामाः सत्रमासीरन्' इति वचनेन बहुत्वस्य विवक्षितत्वात् बहवो यजमानाः तैरेवार्त्विज्यमपि क्रियते। अत एव सर्वेषां क्रतुफलभाक्त्वात् वरण भरणे न स्तः। तत्र चाचार्यमते सर्वेषां यजमानत्वमध्वर्युत्वादिकमुभयमपि मुख्यमेव। उभयोरपि लौकिकत्वादुभयकार्यमपि तेषामतिदेशत एव प्राप्तम्। गुरुमते तूभयस्याप्यलौकिकत्वात् तेषां यजमानत्वमेव मुख्यम्। अध्वर्युत्वादीनां तु वरणनिमित्तत्वात्, सत्रे च तदभावात् तत्तत्कार्यकरणमात्रेण गौणोऽध्वर्य्वादिव्यपदेश इति। एवं सति प्रकृतौ यजमानस्य दीक्षाविधानात् सर्वेषामपि यजमानत्वात्, तेषां दीक्षाऽतिदेशत एव प्राप्नोतीति, न सा विधेयेत्यर्थः।

'दीक्षा तावत्सर्वेषां यजमानत्वाच्चोदकेनैव प्राप्ता। अध्वर्युरपि कर्ता तेनैव प्राप्नोति, यदि क्रमो न विधीयेत, निर्विषयमेव वाक्यं स्यात्। अत्राहुः–अध्वर्युविधावपि नियम एवे बृ प्र १०८२ ति। अस्यार्थः। सत्रे हि 'ये यजमानाः, त ऋत्विजः' इत्यार्त्विज्ये यजमानविधानादृत्विजस्तावन्निवृत्ता यजमानैरेव सर्वमार्त्विज्यं कर्तव्यम्। तत्र येनैव केन चिदाध्वर्यवं कुर्वता अध्वर्युव्यपदेशो लब्धः, तेनैवान्यदप्याध्वर्यवमनुष्ठेयमिति, नास्ति प्रमाणम्। एवं च सर्वत्र सर्वेषां कर्तृत्वमनियमेनोपप्लवत इति, 'अध्वर्युर्गृहपतिं दीक्षयित्वे'त्यनेन गृहपतिसंज्ञकस्य दीक्षायामध्वर्युः कर्ता नियम्यत इति।

तदिदमयुक्तम्। यदि चोदकेन कर्तृविशेषो दीक्षायां न लभ्यते ततो वचनेनापि न लब्धुं शक्यते, तद्वर्तिनां पदानामज्ञायमानार्थत्वात्। सर्वेऽध्वर्य्वादिशब्दाः सर्वेषु पुरुषेषु वर्तन्ते, तत्र कोऽध्वर्युः कस्य गृहपतिसंज्ञकस्य दीक्षायां कर्ता नियम्यते, के वा निवर्त्यन्ते, सर्वे हि पुरुषाः शक्यन्तेऽभिधातुमध्वर्युशब्देन, न चैवं सत्यनेन कर्तृविशेषो नियन्तुं शक्यते।

## कर्त्रैक्यमात्रं नियम्यत इति शंका-तन्निरासौ।

स्यादेतत्। गृहपत्यादिचतुष्टयमेको दीक्षयतीत्येतावद्विधीयते, स चाध्वर्युकार्यदीक्षाकरणात्तच्छब्देनाभिधीयत इति। भवेत्तावदेतदपि कथंचित्कुशकाशावलम्बनम्,

द्वितीयं निराकरोति—अध्वर्युरपीति। प्रकृतौ अध्वर्योरेव दीक्षाकर्तृत्वादित्यर्थः। तृतीया शङ्का तद्ग्रन्थारूढेत्याह—अत्राहुरिति। ऋत्विजस्तावत् निवृत्ता इति। सत्रं बहुयजमानकम्। तत् प्रकृतितोऽन्येषु ऋत्विक्षु प्राप्तेषु 'ये यजमानास्त एव ऋत्विज' (शालिकनाथेनोक्तमर्थं व्युदस्यति प्र. प. ४७७-४७८ पृष्ठयोः) इति वाक्येन यदार्त्विज्यं, तद्यजमानैरेव कार्यमिति ऋत्विक्प्रत्याम्नायतया यजमानानामेव विधानात् सत्रे ऋत्विज एव न संभवन्तीति भावः। यदि तत्र ते न सन्ति, तर्हि अध्वर्योरपि तत्राप्राप्तेर्दीक्षायामनेन वाक्येन कथं तन्नियमविधिस्तत्राह—तत्र येनेति। तत्र यो यजमानोऽध्वर्युकार्यकरणादुपचारतोऽध्वर्युव्यपदेशभाक्। स एव दीक्षासु कर्तृत्वेन नियम्यत इति कर्तृनियमविधिरुपपद्यत इति भावः।

दूषयति—तदिदमिति। तद्वर्तिनाम्—अध्वर्य्वादिपदानाम्। अयं भावः—सत्रे तावत् स्वतोऽध्वर्य्वादयो न सन्ति। सर्वेषामपि यजमानत्वात्। दीक्षादिकार्येषु प्रवृत्तेः पूर्वं तेषामौपचारिकमपि आध्वर्यवादिकं न संभवतीति, ततश्च दीक्षाकार्ये कर्तृनियमविधिवेलायामौपचारिकस्याप्यध्वर्योरनिर्णयात्, को वात्र कर्तृत्वेन नियम्यते? के वा निवर्त्यन्त इति विशेषापरिज्ञानात् नियमविधिरेव न संभवतीति।

नन्वौपचारिकतयाऽप्यध्वर्युशब्दार्थस्यानिर्णयात् मा भूदध्वर्युरूपकर्तृनियमविधिः। किंतु दीक्षासु एक एव कुर्यादिति कर्त्रैक्यमात्रं नियम्यते। स च कर्ता इदानीमेवाध्वर्युः संपद्यत इति तच्छब्देनाभिधीयत इति शङ्कते—स्यादेतदिति। भवत्वेवं यथाकथंचित् कर्तृनियम-

१—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'त्यत्र त्रेधा विकल्पः—किमनेन वाक्येन दीक्षा विधीयते, अथवाऽध्वर्युः कर्ता, विधीयते, अथवाऽध्वर्युरेवेति कर्तृनियमो वेति। तानि क्रमेण दूषयति—प्रथमं दीक्षा तावदित्यादिना न विधीयत इति द्वितीयं मध्वर्युरित्यादिना, तदिदमित्यादिना—तृतीयमिति बोध्यम्।

यदि ब्रह्मादयो निर्धारयितुं शक्यन्ते, तेषु त्वनिर्धार्यमाणेषु केषामेको दीक्षयितेत्युच्यते। एवं प्रतिप्रस्थात्रादिषु नियम्येषु ब्राह्मणाच्छंस्यादिषु नियमविषयेषु द्रष्टव्यम्। तेन यदि तावच्चोदकप्राप्तानां नानापदार्थानां बहुषु यजमानेषु कर्तृत्वव्यवस्थयोपप्लुतेषु व्यवस्थापेक्षायां प्रकृतौ या व्यवस्था दृष्टा, सैवाङ्गीकर्तव्या, कथं चिद्व्यवस्थासम्भवेऽव्यवस्थायोगात्।

## प्रकृतौ समाख्यया व्यवस्था, क्रमनिरूपणमुखेन क्रमस्य प्रयोगविधिविधेयत्वस्य निगमनञ्च।

समाख्ययैव तु प्रकृतौ व्यवस्था। न हि समाख्या स्वयमेव कर्तृनियमस्य विधायिका। प्रयोगवचनस्तु शब्दो बहूनामर्थानां बहुभिरनुष्ठानं विदधद्व्यवस्थापेक्षः सन्समाख्यया कथंचिदवगतां व्यवस्थामाश्रयति। एवञ्च सत्रप्रयोगवचनोऽपि तदपेक्षस्सन् प्रकृतावेकेन ये पदार्थाः कृताः, तानिहाप्येककर्तृकान्विदधाति। ततः प्राप्तत्वान्न दीक्षायामध्वर्युर्विधातव्यः। अथ न व्यवस्था, तथाऽप्यध्वर्युशब्दस्य पुरुषविशेषप्रतिपादकत्वमनुपपन्नमिति, उभयथाऽपि न कर्तृविधिः सम्भवतीति, क्रमस्यैव विधेयत्वम-

---

विधिः। तत्राध्वर्युशब्दप्रवृत्तिश्च। ब्रह्मादीनामितः पूर्वं स्वस्वकार्यप्रवृत्तेरौपचारिकतयापि ब्रह्मादिशब्दानिर्धारणेन नियमविषयानिश्चयात् नियमविधिर्न संभवतीति परिहरति— भवेत्तावदिति।

एवं प्रतिप्रस्थात्रादिष्विति। गृहपतेर्गणमुख्यानां त्रयाणां चाध्वर्युर्दीक्षयिता। तद्दीक्षायां तु 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु' इति मन्त्रलिङ्गविरोधेन स्वस्य दीक्षकत्वासंभवात् प्रतिप्रस्थातुः प्राप्तिः। गणद्वितीयेष्वपि तस्यैव। गणतृतीयेषु तु नेष्टुः प्राप्तिः। चतुर्थेषु तु उन्नेतुरिति स्थितिः। अत्र सर्वत्र तत्तच्छब्दार्थापरिज्ञानात् नियमविध्यनुपपत्तिर्द्रष्टव्येत्यर्थः।

तस्मादस्मन्मतानुसारेण चोदकत एव सर्वस्याप्याध्वर्यवस्याध्वर्युरेक एव कर्ता नियतः प्राप्नोतीति, नियमविध्यनुपपत्तिः। भवन्मतेपि सत्रेऽध्वर्य्वादेर्निवृत्तावपि सर्वस्याध्वर्यवस्यैककर्तृत्वमात्रमतिदेशत एव प्राप्नोतीति नियमविध्यनुपपत्तिः समाना। तस्मादस्मन्मतानुसारेण सत्रे मुख्यमेवाध्वर्युत्वादिकमङ्गीकृत्य तेषु तेष्वध्वर्य्वादिकृत्येषु अतिदेशत एव तेषां तेषां कर्तॄणां नियतानामेव प्राप्तिरङ्गीकार्या। ततश्च नियमविध्यनुपपत्तिरिति प्रतिपादयितुमुपक्रमते-तेनेति।

व्यवस्थापेक्षायामिति। यजमानानामेव सर्वार्त्विज्यकरणेऽधिकारात् केन यजमानेन किमार्त्विज्यं कार्यमिति व्यवस्थापेक्षायामित्यर्थः। सैवाङ्गीकर्तव्येति। प्रकृतावध्वर्योर्यावत् कर्तव्यं, सत्रेऽप्यध्वर्युरसाविति कृतसंकल्पस्य यजमानस्य तावत् कार्यम्। एवम् ऋत्विगन्तरकार्यमपीत्येवंविधा व्यवस्थेत्यर्थः।

प्रकृतौ व्यवस्थाक्रममाह—समाख्ययेति। आध्वर्यवौद्गात्रयाजमानादिकाण्डसमाख्ययेत्यर्थः। समाख्यया वा कथं व्यवस्था? तत्राह—नहीति। प्रयोगवचनस्तु शब्द इति। प्रयोगविधिरित्यर्थः। व्यवस्थापेक्ष इति। प्रकरणे बहवः पदार्था विहिताः। बहवश्चाध्वर्य्वादयः कर्तारः श्रुताः। केन किं कर्तव्यमित्येवं व्यवस्थामपेक्षमाण इत्यर्थः। प्रकृतौ व्यवस्थामुक्त्वा, चोदकतस्तद्वदेव सत्रेऽपि व्यवस्था सिध्यतीत्याह—एवं सत्रेति। एवमतिदेशतो व्यवस्थानङ्गीकारे तु पूर्वोक्तन्यायेन नियमविधित्वानुपपत्तिरित्याह—अथेति। अनुपपन्नमिति। नियमविधित्वा-

वश्यमङ्गीकर्तव्यम्। तस्माच्छ्रुत्याद्यवगतक्रमविशेषविशिष्टस्य प्रयोगस्य विधानात्क्रमस्यापि विधेयत्वम्, अङ्गत्वञ्च सिद्धम्।

आह च—

'क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः' तं० वा० पृ–६४७। इति

## क्रमस्यापि प्रयोगविधिवेलायामपेक्षितत्वमिति कथनम्।

किमिदानीं प्रयोगविधिविधेयः क्रमः[1]? ओमित्युच्यते। कथमविनियुक्तस्य प्रयोगविधिना विधानम्। अस्यापि श्रुत्यादिभिर्विनियोगाददोषः। यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्थाः प्रयोग'विधिना विधी'यन्ते, तथा श्रुत्यादिभिः क्रमः। इयांस्तु विशेषः। अन्ये कर्मस्वरूपानुबन्धाः। क्रमस्तु देशादिवत्प्रयोगानुबन्धः–इति। न हि तार्तीयैरेव सर्वं विनियोक्तव्यमिति नियमः, तानि तु पदार्थैदमर्थ्ये, क्रमैदमर्थ्ये तु पाञ्चमिकान्येव श्रुत्यादीनि प्रमाणम्।

*यद्वैषामपि तार्तीयेष्वेवान्तर्भावः शक्यते दर्शयितुमिति, न किं चिदनुपपन्नम्।

---

नुपपत्तिरिति शेषः। एवमन्यस्य विधेयस्यासंभवात् क्रमविधायकत्वमेवास्य वचनस्य फलितमिति निगमयति–इत्युभयथापीति। अतिदेशतो व्यवस्थाङ्गीकारे, अनङ्गीकारे चेत्यर्थः। एवं क्वचित् क्रमस्यावान्तरविधिविधेयत्वात्, सर्वत्र च प्रयोगविधिविधेयत्वसंभवाच्च विधेयत्वं सिद्धमिति, महाप्रकृतं निगमयति–तस्मादिति। क्रमस्याङ्गत्वे, प्रयोगविधिविधेयत्वे चाचार्यसंमतिमाह–आह चेति।

गूढाभिसन्धिः पृच्छति–किमिदानीमिति। उत्तरमाह–ओमिति। अभिसन्धिमुद्घाटयति–कथमिति। प्रथममङ्गाङ्गिभावेन विनियुक्तानां हि पदार्थानां पश्चात् प्रयोगः। विनियोगाभावे च स न सिध्यतीत्यर्थः। उत्तरमाह–अस्यापीति। श्रुत्यादिभिः क्रम इति। श्रुत्यादिभिर्विनियुक्तः क्रमः प्रयोगविधिना विधीयत इत्यर्थः। कर्मस्वरूपानुबन्धा इति। कर्मस्वरूपेण सह क्रियाकारकभावेन, शेषशेषिभावेन च प्रथममन्वितानां पदार्थानां पश्चात् प्रयोगः। यथा अन्योन्यान्वितानां पदार्थानामनुष्ठानवेलायामेव देशकालयोरपेक्षितत्वात्, तयोः प्रयोगशेषभावेनैव विनियोगः, तद्वत् क्रमस्यापि प्रयोगवेलायामपेक्षितत्वात् तच्छेषभावेनैव श्रुत्यादिभिर्विनियोग इत्यर्थः। तार्तीयेष्वेवान्तर्भाव इति। श्रुतेः श्रुतावेवान्तर्भावः। अर्थस्य तु सामर्थ्यपरामर्शरूपत्वात् लिङ्गे। एवमन्यत्रापि यथायोग्यं द्रष्टव्यमित्यर्थः।

---

१—अत्रेदं बोध्यम्–मुख्यक्रमोप्यण्वांगानां क्रमे हेतुरित्यस्योदाहरणम्–प्रयाजशेषेणादावाग्नेयहविरभिधारणम्, पश्चादैन्द्रस्यदध्नः, आग्नेययागैन्द्रयागयोः पौर्वापर्यादित्युक्तम्। तदेवार्थसंग्रहेऽप्यनुसृतम्। परन्तु शास्त्रदीपिकायां 'सारस्वतौ भवतः' इत्युदाहरणान्तरं दत्तम्। तस्यायमाशयः। तथाहि–देवताभेदेन, द्रव्यपृथक्त्वेन च द्रव्यदेवतासंबन्धभेदात् यागभेदः, प्रणो, देवी, आनो दिवः' इति स्त्रीदेवत्ययाज्यापुरोनुवाक्यापाठानन्तरं-'पीपिवांसं सरस्वतः सरस्वयेते ऊर्मयः' तै. सं. का. ३-११-२. इति पुंदैवत्याज्यनुवाक्ययोः पाठात्। अतो मुख्यक्रमादंगक्रमः–इति। आरादुपकारकाणां तन्त्रत्वेन सन्निपत्योपकारकेष्वपि निर्वापव्यतिरिक्तेषु निर्वापप्रवृत्तिक्रमादेव क्रमसिद्धेः परिशेषात्सन्निपातिषु निर्वापस्य प्राथम्यमिति। अतोऽत्र मुख्य–प्रवृत्त्योः सांकर्यं दृश्यते।

## श्रुतिक्रमादीनां सोदाहरणमुपवर्णनम् ।

तत्र श्रुतिक्रमो नामायम्—यत्र क्रमपरं वचनम्, तद्विशिष्टपरं वा । यथा 'अध्वर्युर्गृहपतिं दीक्षयित्वा, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, वषट्कर्त्तुः प्रथमभक्षः' इति ।

अर्थक्रमोऽयम्—यः प्रयोजनवशेन निर्णीयते । यथा पाक—होमयोः ।

विधायकवाक्यस्थः, मन्त्रवाक्यस्थो वा यः पदार्थेष्वाश्रीयते, स पाठक्रमः । यथा प्रयाजादीनामाग्नेयादीनां च ।

यस्तु सह प्रयुज्यमानेषु सन्निपातिनामावृत्त्याऽनुष्ठाने कर्तव्ये, प्रथमक्रम एव द्वितीयादिष्वपि प्रयोगवचनावगताङ्गसाहित्याबाधाय आश्रीयते, स प्रवृत्तिक्रमः । यथा प्राजापत्येषु पशुषूपाकरणक्रम एव नियोजनादिष्वपि प्रयोगवचनाद्भवति ।

---

श्रुतिक्रमादीनां षण्णां क्रमाणां क्रमेण स्वरूपमुदाहरणञ्च दर्शयति—तत्रेति । यत्र क्रममात्रविधायकं वचनमस्ति तद्विशिष्टपदार्थान्तरविधिपरं वा । तत्रोभयत्रापि श्रुतिक्रम इत्यर्थः । उभयस्योदाहरणमाह—यथेति । 'अध्वर्युर्गृहपतिमि'ति केवलक्रमविधिपरं वचनम् । 'वषट्कर्तुः प्रथमभक्षः' इति प्राथम्यविशिष्टभक्षणप्रतिपादनपरम् ।

अर्थक्रममाह—अर्थक्रम इति । प्रयोजनवशेन—अनुष्ठानानुरोधेन । 'यथाऽग्निहोत्रं जुहोति, यवागूं पचति' इति श्रूयते । तत्र पाठवशेन पाकस्य होमोत्तरकालत्वप्रतीतावपि, श्रुत्या लिङ्गेन च पाकस्य होमद्रव्ययवागूशेषत्वप्रतीतेः, पश्चात् करणे तस्यानर्थक्यप्रसङ्गादसति द्रव्ये होमस्याप्यनिष्पत्तेरर्थसामर्थ्यात् पाकोत्तरकालं होम इति निर्णीतम् । अयमेवार्थक्रम इत्यर्थः ।

पाठक्रमस्य स्वरूपमाह—विधायकेति । 'समिधो यजति, तनूनपातं यजती'ति विधायकवाक्यक्रमात् प्रयाजादीनां क्रमः । याज्यापुरोनुवाक्याक्रमात्तु आग्नेयादीनां क्रम इत्यर्थः ।

प्रवृत्तिक्रमस्य स्वरूपमुदाहरणं, चाह—यस्त्विति । 'वैश्वदेवीं कृत्वा प्राजापत्यैः चरन्ती'ति वचनात् सप्तदशसु पशुषु सहप्रयुज्यमानेषु आरादुपकारिणां तन्त्रेणानुष्ठानं, संनिपातिनां तु उपाकरणादीनां प्रतिपशु आवृत्त्यानुष्ठानं कार्यम् । आवृत्त्यानुष्ठानेऽप्येकस्य पशोरुपाकरणनियोजनादि तन्त्रं सर्वं कार्त्स्न्येन कृत्वा, परस्यापि तथैव कर्तव्यमित्येवं न भवति । प्राजापत्यैरित्यत्रेतरेतरयोगबाधप्रसङ्गात् । किं तर्हि ? सर्वेषामुपाकरणं कृत्वा, ततो नियोजनं, ततः पर्यग्निकरणमित्येवमनुष्ठेयम् । तत्र प्राथमिकमुपाकरणं यत्र कुत्रचित् पशावारभ्य यत्र कुत्रचित्

---

तत्र शंका—उपाकरणस्य नियोजनाद्यपेक्षया पूर्वभावित्वेन तत्प्रवृत्तेर्नियोजनादिक्रमनियामकत्वमुपपद्यते, प्रकृतोदाहरणे तु याज्या-पुरोनुवाक्ययोः पश्चाद्भावित्वेन तत्प्रवृत्तेर्निर्वापानुष्ठानदशायामसत्त्वात्, न तस्या निर्वापक्रमनियामकत्वं संभवति—इति । समाधानन्त्वित्थम्—प्रयोगविधिदशायामभिसंहिता प्रवृत्तिः प्रयोगविध्यवगम्यप्रत्यासत्त्यनुग्राहकत्वेन क्रमनियामिका भवति । एवञ्च पूर्वपदार्थप्रवृत्तिवदुत्तरपदार्थप्रवृत्तेरपि अभिलषितयागप्रयोगप्रत्यासत्त्यनुग्राहकत्वाविशेषात् क्रमनियामकत्वं संभवति । अत इहोदाहरणे मुख्यप्रवृत्त्योः प्रमाणयोस्संकरः, तेन क्लेशेन साधयितव्यो भवतीत्यस्वारस्यं मनसि निधायोदाहरणान्तरमाह—दर्शपूर्णमासयोर्दध्नस्सांनाय्यधर्माः, निर्वापादयश्च पूर्वं प्रवर्तन्ते, तद्विपरीता याज्यापुरोनुवाक्यादय इति । ततः प्रयाजशेषाभिघारणस्याग्नेयस्य प्रथमभिघारणं मुख्यक्रमादेवेति बोध्यम् ।

यस्तु प्रकृतौ नानादेशावगतानां पदार्थानां विकृतावेकस्य देशे सर्वेषामनुष्ठाने वचनात्कर्तव्ये सति, यस्य देशेऽनुष्ठीयन्ते, तस्य प्रकृत्यवगतस्थानाबाधेनागन्तुभिः क्रमः समाश्रीयते, स स्थानक्रमः। यथा साद्यस्क्रे सवनीयस्थाने पशुषु सहाऽऽलभ्यमानेषु तस्याश्विनग्रहानन्तर्यं न बाध्यते।

मुख्यक्रमस्तु यः प्रधानक्रमः, सोऽङ्गेष्वपि प्रयोगवचनावगताङ्गप्रधानसहित्याबाधार्थमाश्रीयते। यथा 'सारस्वतौ भवतः' इत्येकवाक्यचोदितयोः स्त्रीपुंसदेवत्ययोः कर्मणोः याज्यानुवाक्याक्रमेणावगतानुष्ठानयोस्सतोरङ्गेष्वपि प्रधानक्रम एव भवति।

---

समाप्यते। न तत्र नियमः। नियोजनादीनां तु उपाकरणक्रमेणैवानुष्ठानम्। अत्र प्राथमिकाङ्गप्रवृत्तिक्रम एव यो द्वितीयादीनामाश्रीयते। स प्रवृत्तिक्रम इत्याश्रीयत इत्यर्थः।

द्वितीयानां प्राथमिकक्रमाश्रयणे हेतुमाह—प्रयोगवचनेति। अङ्गानां प्रयोगप्राशुभावः-अन्योन्यसाहित्यं, प्रधानसाहित्यं तेषां च क्रम इत्यादीनि प्रयोगविधिप्रमेयभूतानि। तत्रैकैकस्य पशोरुपाकरण-नियोजनादीनि चान्योन्यसंनिहितानि कार्याणि। तत्रैकस्य पशोरुपाकरणे कृते, सहानुष्ठानविधिबलाच्च पश्वन्तरेषु च कृते प्रथमपशौ नियोजने क्रियमाणे षोडशभिरुपाकरणक्षणैः व्यवधानम्। द्वितीयपशोस्तु पञ्चदशभिरुपाकरणक्षणैरेकेन च नियोजनक्षणेनेत्येवं सर्वत्र सजातीयविजातीयैः षोडशभिरेव क्षणैः व्यवधानं न्याय्यम्। न न्यूनैः, नाप्यधिकैः। प्रवृत्तिक्रमाश्रयणे तावद्भिरेव व्यवधानं भवेत्। अन्यथा न्यूनैरप्यधिकैरपि क्षणैः व्यवधानं स्यात्। अतोऽन्योन्यसाहित्यलाभाय प्रवृत्तिक्रम आश्रयणीय इत्यर्थः।

स्थानक्रममाह—यस्त्विति। ज्योतिष्टोमे त्रयः पशवः। तत्र प्रथममग्नीषोमीयः औपवसथ्येऽहनि अनुष्ठीयते। ततः पश्चात् सौत्येऽहनि सवनीयः, अनुबन्ध्यश्चावभृथान्ते। साद्यस्क्रेतु विकृतौ 'सह पशूनालभते तां. ब्रा.' इति तेषां साहित्यं श्रुतम्। तत्र प्रधानभूतसोमयागसंनिधिलाभाय सवनीयस्थान एवान्यदपि पशुद्वयं समालभ्यते। तत्र प्रक्रांतक्रमात् प्रथममग्नीषोमीयः, पश्चात् सवनीय इत्येवं क्रमे प्राप्ते अग्नीषोमीयानुबन्ध्ययोः सवनीयस्थाने कर्तव्यत्वेन चलितस्थानत्वात् सवनीयस्य त्वचलितस्थानत्वाच्च तस्य 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति। इति प्रकृत्यवगताश्विनग्रहानन्तर्यलक्षणस्थानाबाधेन प्रथमं सवनीयः, पश्चात् इतरपशुद्वयमिति, यः क्रमः आश्रीयते। स स्थानक्रम इत्यर्थः। आगन्तुभिश्चलितस्थानैः।

मुख्यक्रममाह—मुख्यक्रम इति। प्रधानानां यः क्रमः। स एव सर्वत्राङ्गानामप्याश्रीयते। यथा 'सारस्वतौ भवतः तै. सं. इति युगपदुत्पन्नयोः स्त्रीपुंसदेवत्ययोः यागयोः याज्यापुरोनुवाक्यामन्त्रपाठक्रमेण प्रथमं स्त्रीदेवत्यः, पश्चात् पुंदेवत्य इति प्रधानयोः क्रमे नियते, तत्क्रमेणैव तदङ्गभूतानां निर्वापादीनां क्रमो भवतीत्ययं मुख्यक्रम इत्यर्थः। अङ्गानामपि प्रधानक्रमाश्रयणे हेतुमाह—प्रयोगवचनेति। प्रथमं स्त्रीदैवत्यस्य, पश्चात् पुंदैवत्यस्य च निर्वापे क्रियमाणे, यावदनुज्ञातमेव प्रधानेनाङ्गस्याव्यवधानं स्यात्। पश्चाद्भाविनः प्रथममङ्गानुष्ठाने तु अङ्गप्रधानयोरत्यन्तव्यवधानं स्यात्। ततश्च सर्वत्र यावदनुज्ञातसाहित्यसिद्धये प्रधानक्रमेणैव क्रम आश्रयणीय इत्यर्थः।

## श्रुत्यादिक्रमाणां प्रयोगविधिविधेयत्वे आचार्यवचनविरोधशंका-परिहारौ ।

सर्वेषां क्रमाणामेव प्रयोगविधिविधेयत्वे सत्यपि मुख्य-प्रवृत्तिक्रमयोः प्रामाण्यमपि प्रयोगविध्यवगतसहित्यनिमित्तमित्यनेन विशेषेण

'प्रयोजकवशौ चेष्टौ मुख्य-प्रावृत्तिकक्रमावि' तं. ६५१ वा. पृ. त्युक्तम् ।

## श्रुत्यादीनां प्रमाणानां प्राबल्य-दौर्बल्यविवेचनम् ।

श्रुत्यर्थपठनमुख्यप्रवृत्तीनां समवाये पारदौर्बल्यम् । पाठेऽपि मन्त्रपाठाद्ब्राह्मणपाठो दुर्बलः । चोदकाश्रयाच्च क्रमात् विकृतिषु प्रयोगवचनाश्रयो दुर्बलः क्रमः । तत्र श्रुत्यर्थाभ्यां पाठस्य दौर्बल्यं क्रमकोपाधिकरणे मी. द. ५-४-१ अभिहितम् । श्रुत्यर्थयोस्तु नैव विरोधः सम्भवति, यथाश्रुत्येव प्रयोजनकल्पनात् । यदि हि हुत्वा पचेदिति श्रूयेत, ततः पाकस्यादृष्टार्थतां परिकल्प्य, येन केन चिद् द्रव्येण हूयेत । तथा पाठेऽपि मन्त्रगताद्ब्राह्मणगतस्य दुर्बलत्वं मन्त्रतस्तु विरोधे स्यादित्यत्र दौर्बल्यमु (मी.द ५-१-१६) क्तम् ।

---

श्रुत्यादिक्रमाणां षण्णामपि प्रयोगविधिविधेयत्वमित्युक्तम् । आचार्यैस्तु मुख्यप्रवृत्तिक्रमयोरेव तदुक्तम् । तत्कथमित्यत आह—सर्वेषामेवेति । साहित्यनिमित्तमिति । अङ्गप्रधानसाहित्यं मुख्यक्रमस्य निमित्तम् । अङ्गानामन्योन्यसाहित्यं, प्रवृत्तिक्रमस्येत्यर्थः ।

एवं श्रुत्यादीनुदाहृत्य तेषां प्राबल्यदौर्बल्यमाह—श्रुत्यर्थेति । पाठो द्विविधः—ब्राह्मणपाठः, मन्त्रपाठश्च । उभयोः प्राबल्य-दौर्बल्यप्रकारमाह—पाठेऽपीति । विकृतिष्वतिदेशाश्रयात् क्रमादुपदेशाश्रयस्य क्रमस्य दौर्बल्यमित्याह—चोदनेति । सर्वेषां प्राबल्यदौर्बल्यं क्रमेणोदाहरति—तत्रेति । क्रमकोपाधिकरणे हि एवं विचारितम्—किं श्रुत्यर्थाभ्यां तुल्यबलः पाठः, उत दुर्बल इति । तत्राश्विनग्रहस्य तृतीये पर्वणि पाठः । सचाश्विनो दशमो गृह्यते इति वचनात् दशमे पर्वणि अनुष्ठेयतया श्रुतः । तथा पाठात् होमपाकयोः पौर्वापर्यम् । अर्थवशात्तु होमात् पूर्वं पाकः । तत्र श्रुत्यर्थपाठानां प्रमाणत्वाविशेषात् तृतीये दशमे वा स्थाने आश्विनस्य ग्रहणं स्यात् । पाकात् पूर्वं पश्चाद्वा होमः । अतो न नियम इत्याशङ्क्य श्रुत्या साक्षात् क्रमे विहिते, पाठतस्तत्कल्पनायोगात्, पाठानुरोधे च पाकहोमयोरुभयोरप्यानर्थक्यप्रसङ्गेनानुष्ठानायोगाच्च, दशमस्थान एवाश्विनस्य ग्रहणं, पाकानन्तरं च होम इति निर्णीतम् । श्रुत्यर्थयोस्तु विरोधचिन्तैव न युज्यत इत्याह—श्रुत्यर्थयोस्त्विति । येन केनचिदिति । होमचोदनावशेन यत्किंचित् द्रव्यमाक्षिप्यते । तच्च सामान्यतो होमेषु प्राप्तमाज्यमेव स्यादित्यर्थः ।

मन्त्रतस्त्विति । दर्शपूर्णमासयोरग्नीषोमीयस्य प्रथमं ब्राह्मणं तत आग्नेयस्य । मन्त्राम्नानं तु विपरीतम् । अत्र किं ब्राह्मणक्रमात् अग्नीषोमीयस्य प्राथम्यम्, उत मान्त्रक्रमादाग्नेयस्येति विषये, विधिक्रमस्य पदार्थोत्पत्तिवेलायामेव पदार्थेषु प्राप्तत्वात् मन्त्रक्रमस्य तूत्पन्नेषु पदार्थेषु विनियुक्तेषु च मन्त्रेषु पश्चात् प्राप्तत्वेन ततो दौर्बल्यात् अग्नीषोमीयस्यैव प्राथम्यमित्याशङ्क्य, पदार्थानामवगतौ क्रमस्यानाकाङ्क्षितत्वात्, तदनुष्ठानवेलायां तदाकाङ्क्षायां तु तत्स्मरणक्रमस्यैवोपयोगात् मन्त्राणां तु स्मरणैककार्यतया तत्रैषां प्राधान्यात् । विधीनां तु विधानेनापि चरितार्थतया स्मरणेऽत्यन्तमुपयोगाभावात् अनुष्ठानक्रमे मन्त्रक्रमस्यैव

ततस्तु मुख्यक्रमस्य प्रकृतौ तु स्वशब्दत्वादि ५-१-१५ इत्यत्र दौर्बल्यमुक्तम्। ततोऽपि प्रवृत्तिक्रमस्य 'अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यादि' ५-४-२ इत्यत्र। चोदकाश्रयाच्च प्रयोगवचनाश्रयस्य दुर्बलता 'तद्वचनात्तु विकृतौ यथाप्रधानं स्यादित्य ५-१-१५ त्रोक्ता।

## क्रमप्रमाणनिरूपणस्योपसंहारः, चतुर्थ-पंचमयोस्सांकर्यशंका-परिहारौ च।

एवं बलाबलविभक्तैः श्रुत्यादिभिः समर्पितेन क्रमविशेषेण विशिष्टः प्रयोगः प्रयोगविधिना विधीयते।

---

प्राबल्यमिति तद्वशेनाग्नेयस्यैव प्राथम्यम्। मन्त्राभावे तु अन्यार्थानामपि विधीनामाकाङ्क्षा-वशात् स्मरकत्वमप्याश्रित्य तत्क्रमेणानुष्ठानम्। यथा प्रयाजेष्विति निश्चितमिति।

पाठक्रमात् मुख्यक्रमस्य दौर्बल्यमुदाहरति—ततस्त्विति। दर्शपूर्णमासयोः पौर्णमास्यां प्रथमं पुरोडाशहविराग्नेयः, तत आज्यहविरुपांशुयाजः, ततोऽग्नीषोमीयः पुरोडाशहविरिति प्रधानक्रमादाग्नेयनिर्वापानन्तरं त्वग्नाषोमीयस्य निर्वापः पठितः। अत्राग्नेयानन्तरं किं मुख्यक्रम उपांशुयाजस्य निर्वापः, उत पाठक्रमादग्नीषोमीयस्येति संशये, तत्र प्रधानगततया मुख्यक्रमस्यैव प्राबल्यमित्याशङ्क्य, मुख्यक्रमो हि प्रथमं प्रधानयागे केनापि प्रमाणेनावगम्यमानोऽङ्गानां तत्साहित्यसंपत्तये पश्चादङ्गेष्ववतरति विलंबितः। पाठात्त्वन्यानपेक्षादङ्गानामेव साक्षात् क्रमोऽवगम्यत इति, पाठक्रमस्यैव प्राबल्यात् तद्वशेनाग्नेयानन्तरमग्नीषोमीयस्यैव निर्वाप इत्यवधारितमित्यर्थः।

मुख्यक्रमात् प्रवृत्तिक्रमो दुर्बल इत्याह—ततोऽपीति। दर्शपूर्णमासयोरेवामावास्यायां प्रथममाग्नेयस्यानुष्ठानं, पश्चात् सांनाय्यस्येति प्रधानक्रमः। तत्र सांनाय्यधर्माः शाखाहरणादयः पूर्वमेव प्रवर्तन्ते। पश्चादाग्नेयधर्मा निर्वापादयः। अत्र स्विष्टकृदवदानं प्रयाजशेषाभिघारणं, वेद्यां हविरासादनं च किं प्रवृत्तिक्रमात् सान्नाय्यस्य पूर्वमेव भवति, उत मुख्यक्रमादाग्नेयस्येति संशये, प्रमाणद्वयाविशेषादनियमे प्राप्ते, अङ्गानां प्रधानोपकारकत्वेनाङ्गान्तरसाहित्यादपि प्रधानसाहित्यस्यैवाश्रयणीयत्वात् मुख्यक्रमे त्वाश्रीयमाणे प्राथमिकस्यैव पदार्थस्य पूर्वस्मात् पदार्थात् विप्रकर्षो भवति। द्वितीयादीनां तु लभ्यत एव साहित्यम्। प्रवृत्तिक्रमे तु बहूनां प्रधानेन विप्रकर्षः स्यात्। अतश्च मुख्यक्रमस्यैव प्राबल्यमिति निर्धारितमित्यर्थः। तद्वचनात्तु विकृताविति। 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः' इति यागत्रयमाम्नातम्। अत्राग्नावैष्णवधर्मानुष्ठानानन्तरं किं मुख्यक्रमेण सारस्वताज्यधर्माणां प्रवृत्तिः, उत प्रकृतावाज्यधर्मेभ्यः पूर्वमेवौषधर्मप्रवृत्तेः तद्वदेवात्राप्याज्यधर्मात् पूर्वमेव बार्हस्पत्यौषधधर्माणां प्रवृत्तिरिति। अत्र मुख्यक्रमस्यौपदेशिकत्वेनातिदेशिकात् बलीयस्त्वात् आतिदेशिकबाधेनाज्यधर्माणामेव प्राथम्यमित्याशङ्क्य, अतिदेशेन सक्रमकाणामेव पदार्थानां प्राप्तेः क्रमाकाङ्क्षाया अभावेन पुनः क्रमान्तराकाङ्क्षाश्रयणायोगात् आकाङ्क्षा-वशात् क्रमकल्पकस्यौपदेशिकस्यापि मुख्यक्रमस्य तदभावेऽनुदयादेव तेनातिदेशिकक्रमबाधायोगाच्च बार्हस्पत्यौषधधर्माणामेव प्रवृत्तिरित्यवधारितमित्यर्थः।

ननु चतुर्थेऽपि प्रयोगविधिव्यापार एव चिन्तितः, अत्रापि स एवेति, कथं लक्षणभेदः ? सत्यम् । उभयत्रापि प्रयोगविधिविचारः एव । किन्तु तत्र केषामङ्गानां किमर्थं प्रयोजको भवतीति प्रयोज्यविशेषविचारः कृतः, इह तु किंक्रमविशिष्टं प्रयोगं विधत्त इति, प्रयोगविशेषविचारः इति लक्षणभेदः ।

इति पञ्चमाध्यायार्थस्समाप्तः ।



---

एवं क्रमप्रमाणानि सविशेषं निरूप्य, लक्षणार्थं निगमयति—एवमिति । चतुर्थपञ्चमयोः प्रतिपाद्यैक्याल्लक्षणसांकर्यमाशङ्कते—नन्विति । उभयत्रापि प्रयोगविधिव्यापारचिन्तासाम्येऽपि तत्र प्रयोज्यपदार्थप्राधान्यम्, अत्र प्रयोगप्राधान्यमिति लक्षणभेद इति परिहरति—सत्यमिति ।

इति श्रीधर्मपुरीश्रीरामानुजाचार्येण विरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने पञ्चमाध्यायार्थः ।



---

१—सर्वेषां क्रमाणां प्रयोगविधिविधेयत्वाविशेषेऽपि मुख्य–प्रवृत्तिक्रमयोः प्रयोगविध्यवगतसाहित्यबलेन क्रमनियामकत्वमिति, प्रामाण्यमपि प्रयोगविध्यधीनम्, इतरेषाञ्च–तुर्णान्तु प्रामाण्यं न प्रयोगविधावायतते, इत्यादिकमाचार्यवचनोपन्यासेनोपोद्बलयति—प्रयोजकवशाविति ।

२—चतुर्थ–पञ्चमयोः प्रतिपाद्यैक्यात् कथं लक्षणभेद इत्याशंक्य समाधत्तसत्यमित्यादिना । उभयत्रापि प्रयोगविधिव्यापारचिन्तासाम्येऽपि, चतुर्थे प्रयोज्यपदार्थप्राधान्यम्, पञ्चमे प्रयोगप्राधान्यमित्यवान्तरवैलक्षण्यमिति ध्येयम् । यथोक्तमभियुक्तैः—

'द्वितीयादित्रये प्रोक्तं भेद–शेष–प्रयुक्तिभिः ।
अनुष्ठेयमनुष्ठानक्रमः पञ्चम ईर्यते' ॥ इति ।

## अथ षष्ठाध्यायार्थः

### पञ्चम-षष्ठयोस्संगतिवर्णनमाद्यश्लोकेन ।

तदेवं पञ्चलक्षण्या कार्यवर्गे निरूपिते ।
कोऽनेनाऽधिक्रियेतेति षष्ठेऽध्याये निरूप्यते ॥ ११ ॥

### तत्र हेतूपन्यासो द्वितीयेन श्लोकेन ।

निरूपिते ह्यनुष्ठेये शक्यं शक्तिनिरूपणम् ।
तस्यां निरूपितायान्तु तदधीनाऽधिकारधीः ॥ १२ ॥

न ह्यनवगतेऽनुष्ठेये, तच्छक्तिरवगन्तुं शक्या । तया चाधिकारनिरूपणमिति, भवत्यनुष्ठेयप्रतिपादकस्याध्यायपञ्चकस्याधिकारविचारहेतुत्वम् । [१]न चैकस्यैवाध्यायस्य हेतुत्वम् । तत्संघातस्याप्येककार्यप्रतिपादकस्य पूर्वषट्कस्येवोत्तरषट्कं प्रति तदुपपत्तेः । एकस्याप्ययस्य नानानयसंघातात्मकस्यैककार्योपधानादेवैकत्वम् । तदध्यायपञ्चकस्याप्यनुष्ठेयप्रतिपादनादैक्यमापादितस्याधिकारहेतुत्वमुपपन्नम् ।

### उपोद्घातसंगत्याऽधिकारसद्भावप्रतिपादनम्, स्वर्गकामाधिकरणस्य पूर्वपक्ष-सिद्धान्तवर्णनञ्च ।

तत्र प्रथमं तावदुपोद्घातत्वेनाधिकारसद्भावः प्रतिपाद्यते । सति हि तस्मिन् कस्यायमिति विचारस्सम्भवति, नान्यथेति । तत्र 'स्वर्गकामो यजेते'ति भावना भाव्या-

---

वृत्तवर्तिष्यमाणयोः सङ्गतिमाह—तदेवमिति । कार्यवर्गे—अनुष्ठेयवर्गे । प्रमाणलक्षणेन कार्यवर्गानिरूपणेपि, तदुपोद्घातत्वेन पञ्चलक्षणेत्युक्तम् । अनेककार्यवर्गेण अधिक्रियेत—अधिकारी क्रियेत । कार्यनिरूपणस्याधिकारनिरूपणहेतुत्वमुपपादयति—निरूपिते हीति । शक्यं शक्तिनिरूपणमिति । शक्यवर्गेऽवगते पश्चादेतावन्मयाऽनुष्ठातुं शक्यमिति, स्वस्वशक्तिः पुरुषैः स्वत एवावगम्यत इत्यर्थः । तदधीनेति । सर्वानुष्ठेयवर्गानुष्ठानसमर्थस्यैवाधिकारादित्यर्थः ।

संगतिनिरूपणपरस्य प्रथमश्लोकस्य हेतुपरतया द्वितीयं श्लोकं व्याचष्टे—न ह्यिति । ननु संनिहितत्वात् पञ्चमेनैव षाठस्य संगतिं वक्तुं युक्ता । न त्वध्यायपञ्चकेनेत्याशङ्क्याह—न चेति । पूर्वषट्कस्येति । अतिदेशस्योपदेशोपजीवित्वादतिदेशषट्कहेतुत्वमुपदेशषट्कस्येत्यर्थः । ननु नानार्थप्रतिपादकेनाध्यायसंघेन कथं संगतिरित्याशङ्क्य, केनचिदाकारेणैकार्थप्रतिपादनस्यापि संभवात् एकेनैव सा युज्यत इत्याह—एकस्यापीति ।

प्राथमिकं स्वर्गकामाधिकरणं षष्ठाध्यायस्योपोद्घात इत्याह- तत्रेति । तस्योपोद्घातत्वमुपपादयति—सति हीति । अधिकारे सति षष्ठ आरम्भणीयः । असति तु नेति तदुपोद्घातत्वं तस्येत्यर्थः । अस्याधिकरणस्य सर्वाण्यप्यधिकारवाक्यानि विषयः । अधिकारो नाम मदीयफलसाधनत्वात् मदीयमिदं कर्मेति फलस्वाम्याधीनं कर्मणि मादर्थ्यज्ञानम् । त्वादृशाधिकार एव

---

१—अयमर्थस्तन्त्ररत्नेऽप्युपपादितः, विस्तरस्तु ११८ पृष्ठे द्रष्टव्यः ।

काङ्क्षिणी समानपदोपादानलक्षणया श्रुत्योपनीतमनन्योपसर्जनं च धात्वर्थमेव पदान्तरोपनीतपुरुषविशेषणीभूतस्वर्गप्रहाणेन भाव्यत्वेन स्वीकरोति, श्रुतेर्वाक्याद्बलीयस्त्वात्। स्वर्गशब्दस्य सुखसाधनीभूतद्रव्यवचनत्वात् द्रव्यस्य कर्मार्थत्वे दृष्टार्थत्वात्। कर्मणस्तु द्रव्यार्थत्वे दृष्टोपकाराभावात् स्वर्गादिद्रव्येण यागम् कुर्यादिति वाक्यार्थः। कामशब्दश्च कर्म कुर्वाणस्य तत्साधने तत्सिद्ध्यर्थं कामना भवत्येवेत्यनुवाद इति, श्रुतिलिङ्गाभ्यां वाक्यबाधेन यागस्य प्रधानत्वान्न किंचिदनेन फलं साध्यत इति, नास्त्येवाधिकार इत्युक्त्वा, विधिश्रुतिबलेन सिद्धान्तः कथितः। विधिर्हि समानपदोपात्ताद्धात्वर्थाद्भावनायाः सन्निकृष्टः प्रथममेव तामवरुध्य पुरुषार्थाय नयति, प्रवर्तनात्मकत्वादपुरुषार्थफले च व्यापारे पुरुषस्य प्रवर्तयितुमशक्यत्वात्तेन प्रवर्तनात्मकविध्यन्वयादेव समीहितरूपे भाव्येऽपेक्षिते, तद्विशेषमात्रं वाक्यादवगम्यते, तस्मिंश्चावगते, समान पदोपात्तो धात्वर्थः प्रत्यासत्तेः करणतया स्वीक्रियते, द्रव्यादि त्वितिकर्तव्यतया।

विध्यन्वयः क्रिमंशत्रयान्वयात्पूर्वम्, अथवा पश्चादिति द्वेधा विकल्प्य, प्रथमपक्षेऽनुपपत्तिवर्णनम्।

आह—'विधेर्भावनया योगः पूर्वं यद्यंशसंगतेः।
पश्चात्संबध्यमानानां ततो न स्याद्विधेयता ॥ १३ ॥

---

संभवति, न वेति प्रधानविचारः। तदर्थं च भावनायाः किं धात्वर्थ एव भाव्यः प्रधानं स्वर्गादि तु तत्साधनतया गुणीभूतम्, उत स्वर्गादिरेव प्रधानं भाव्यं तच्छेषश्च धात्वर्थ इति विचार्यते।

तत्र पूर्वपक्षमाह—तत्रेति। विशेषणीभूतेतिशब्दात् प्राधान्येन प्रतिपादितस्यैव पदार्थान्तरेणान्वयो न्याय्यः। न तु पदार्थान्तरगुणीभूतस्येत्यर्थः। शब्दस्वभावपर्यालोचनया स्वर्गस्य भाव्यत्वं निराकृत्य, वस्तुस्वभावपर्यालोचनेनापि निराकरोति—स्वर्गशब्दस्येति। चन्दनादौ प्रयोगात् प्रीतिसाधनभूतद्रव्यवचनः स्वर्गशब्द इत्यर्थः। दृष्टार्थत्वादिति। कर्मनिर्वृत्तिः दृष्टमेव प्रयोजनमित्यर्थः। द्रव्यार्थत्वे—प्रीतिसाधनभूतस्वर्गाख्यद्रव्यशेषत्वे। दृष्टोपकाराभावात्—अवहननादिष्विव दृष्टप्रयोजनादर्शनेन प्रोक्षणादिष्विव किंचिददृष्टं कल्प्यमित्यर्थः। स्वर्गादिद्रव्येणेति। पशुकामान्नाद्यकामादिष्वप्येवमेव वाक्येषु विपरिवृत्तिर्द्रष्टव्येत्यर्थः। स्वर्गादेरफलत्वे कथं काम्यमानत्वमित्याशङ्क्याह—कामशब्द इति। श्रुतिलिङ्गाभ्यामिति। श्रुतिः—समानपदोपादानम्। लिङ्गं—स्वर्गादिवस्तुस्वभावपर्यालोचनम्। ननु पूर्वपक्षे फलभावे कर्मणि कथं प्रवृत्तिसिद्धिरिति चेत्? मास्तु सा। नैतावता न्यायबहिष्कृतं फलमङ्गीकर्तुं शक्यमिति भावः।

विधिश्रुतिबलेन—एकलिङ्गप्रत्ययोपादानलक्षणश्रुतिबलेन। भावनायाः प्रथममेव विध्यन्वये जाते, पश्चात् तदनुरोधेनैव धात्वर्थादीनां भाव्यत्वेनान्वयो वाच्य इति भावः। तदेवाह—विधिर्हीति। पुरुषार्थरूपमेव भाव्यं तस्याः कल्पयतीत्यर्थः। कथं कल्पयति विधिरित्याशङ्क्य, स्वभावादित्याह—प्रवर्तनात्मकत्वादिति। व्यापारे—भावनायाम्। प्रथमं भावनाया भाव्याकाङ्क्षायां विधिबलेनैव सामान्यतः समीहिते भाव्ये अवगते, तद्विशेषचिन्तायां संनिहितमपि धात्वर्थमपुरुषार्थतयाऽतिलङ्घ्य पदान्तरोपात्तमुपसर्जनभूतमपि स्वर्गादिकं पुरुषार्थतया भाव्यविशेषत्वेनान्वेतीत्याह—तेनेति। एवं भाव्यान्वयात् प्रच्युतो धात्वर्थः पश्चात् करणाकाङ्क्षायां करणत्वेनान्वेतीत्याह—तस्मिन्निति। पश्चात् कथमाकाङ्क्षायां द्रव्यकर्मादिकमन्वेतीत्याह—द्रव्यादीति।

---

१—विधिभावनयोरिति २ पु. पा.।

अथ सर्वांशसंपूर्णा भावना विधिगोचरः ।
विधिहीना ततो न स्यात्पुरुषार्थफला क्रिया ॥ १४ ॥

यदि तावदंशत्रयान्वयात्प्रागेव केवला भावना विधीयते, ततः विशिष्टभावनाविध्यधीनविधीनामंशानां पश्चाद्भावनान्वये सत्यपि, केवलायाः एव विधिसंस्पर्शान्न विधेयत्वं स्यात्। अथ तु नांशत्रयान्वयात्प्राक् भावनाया विध्यन्वयः। ततो विधिविधुरा सती धात्वर्थमेव प्रत्यासत्तेर्भाव्यमवलम्बत इति, न पुरुषार्थस्य भाव्यत्वं सिध्येदिति।

## द्वितीयपक्षस्यावलम्बनेनोक्तानुपपत्तेः परिहारः ।

नैतदेवम्—विधि-भावनयोः श्रुत्या संगतिः पूर्वमीयते[१] ।
अयोग्यत्वात्तदा त्वेषा निर्वृतिं नैव विन्दति ॥ १५ ॥
सङ्गतिप्रतिपत्तेश्च तदैवेयं प्रतीयते ।
यादृशैः परिपूर्णेयं भावना विधिसङ्गतिम् ॥ १६ ॥
लभेत तादृशैरंशैः पूरणीयेति तद्भवेत् ।
पुरुषार्थस्य भाव्यत्वमंशानाञ्च विधेयता ॥ १७ ॥

प्रथमं तावदेकशब्दोपात्तयोर्विधि-भावनयोः श्रुत्या सम्बन्धोऽभिधीयते। तस्यान्त्ववस्थायां भावनायाः केवलाया अननुष्ठेयत्वात्प्रतीताऽपि सङ्गतिर्नैव निष्पद्यते। अनिष्पन्नायामपि च तस्याम्, तत्प्रतिपत्त्या तदैवं पुरुषो निरूपयति—अस्यास्तावद्वि-

विध्यन्वयबलात् भावनायाः पुरुषार्थभाव्यत्वमित्युक्तम् । स च विध्यन्वयः किमंशत्रयान्वयात् पूर्वमेव, उत पश्चाद्वेति विकल्प्य, पक्षद्वयेऽप्यनुपपत्तिमाशङ्कते श्लोकद्वयेन **आहेति**। विधिहीना—पूर्वं विध्यनन्विता। पुरुषार्थफला—पुरुषार्थभाव्यका। क्रिया—भावना। **विशिष्टभावनेति**। भावनाया एव साक्षात् विधेयत्वम्। तद्द्वारेण तदंशानामिति प्रागुदितमित्यर्थः। **विधेयत्वमिति**। पूर्वमेव विधिव्यापारस्य निर्वृत्तत्वात् पुनर्विधिव्यापारायोगादंशानां न विधेयत्वमुपपद्यत इत्यर्थः। विधेयत्वाभावे च नियमेनानुष्ठानं न सिध्यतीति चतुर्थादावुपपादितमिति भावः। **धात्वर्थमेवेति**। विध्यन्वयबलात् खलु पुरुषार्थस्य भाव्यत्वमुक्तम्। पूर्वं तदभावे पूर्वपक्ष एव सुस्थः स्यादिति भावः।

[२]अंशत्रयान्वयात् पूर्वमेवात्यन्तसंनिधानात् भावनया विधिरन्वेति। स चान्वयस्तदानीमेव न पर्यवस्यति। किंतु अंशत्रयान्वयपर्यन्तं विलम्बते। इयं च दशा विधिप्रक्रम इति गीयते। पश्चाच्च निर्व्यूढो भवति। ततश्च न कश्चिद्दोष इति परिहरति—**नैतदेवमिति**। **अयोग्यत्वादिति**। प्रयत्नमात्रात्मिकाया भावनाया निर्विषयाया भावार्थानुपरक्ताया अनुष्ठातुमयोग्यत्वादित्यर्थः। **तदा त्विति**। अंशान्वयात् प्रागेव। संगतिं-विधिसंगतिम्। लभते। पूर्वं प्रतीतो विध्यन्वयो निर्व्यूढो भवतीत्यर्थः। तत्ततो हेतोः। भवेदित्यस्य विधेयतेत्यनेनान्वयः। तत्प्रति-

१—इष्यत इति ब. पु. पा.।

२—अत्र वार्तिकद्वयस्यार्थं संक्षिप्य दर्शयति टीकाकारः। तथा च वार्तिकद्वयम्।

'विशिष्टाभावनां प्राप्यवृत्तिर्विधिनिषेधयोः यद्यप्यन्यैरसंस्पृष्टा विधिस्स्पृशति भावनाम्। तथाप्यशक्तितोनासौ तन्मात्रे पर्यवस्यति। अनुष्ठेये हि विषयविधिः पुंसां प्रवर्तकः। अंशत्रयेण चापूर्णां नानुतिष्ठति भावनाम्' श्लो. वा. पृ. ९२१ इति।

ध्यन्वयेन भवितव्यम्। ततः यादृग्भिरंशैस्संयुक्तेयं विध्यन्वयं भजते, तादृग्भिः पूरयितव्या। न चापुरुषार्थफला तदन्वयमर्हति। तस्मात्पुरुषार्थफलेत्यध्यवसाय, तद्विशेषमपेक्षमाणः समानपदस्थं धात्वर्थमपुरुषार्थत्वादुल्लङ्घ्य, पदान्तरोक्तमपेक्षते। तत्र स्वर्गकामादिशब्देन तद्विशेषस्य प्रतिपत्तेः, तेन सह भावना सङ्गच्छते, तदन्विता च करणापेक्षा सती प्रत्यासत्तिवशाद्भावार्थाधिकरणन्यायेन समानपदोपात्तं धात्वर्थं करणतया स्वीकरोति। ततः कथंभावापेक्षायाम् श्रुत्याद्यवगतान्यङ्गानीत्थंभावेन गृह्णाति। ततस्सर्वांशविशिष्टा भावना विधीयते।

तदेवं प्रथममेव विध्यन्वयप्रतीतेः पुरुषार्थस्य भाव्यत्वं सिध्यति। प्रतीतस्यापि च विध्यन्वयस्यांशत्रयसम्बन्धोत्तरकालमेव निर्वृत्तेरंशानामपि विधेयत्वं सिध्यति। अतो न कश्चिद्दोषः—इति।

### यथाश्रुतग्रहणेन अंगप्रधानविशिष्टा भावना विधीयत इत्यनेन प्रयोगविधिरेवैको विधिरिति मत्वा शास्त्रोक्तविधिचातुर्विध्यस्य विरोधशंका।

ननूत्पत्त्यादिभेदेन चातुर्विध्यं विधेः कथम्।
प्रयोगविधिरेवैको भवतैवं प्रकीर्तितः॥ १८॥

श्रुत्यादिभिरुपनीतेऽशत्रये पश्चाद्विधिरिति वदता प्रयोगविधिरेवैकः विधिरित्युक्तं भवति। चतुर्विधञ्च तं समाचक्षते—

उत्पत्तिविधिनामैको यो द्वितीये विचार्यते।
विनियोगविधिस्त्वन्यो यस्तृतीये विचार्यते॥ १९॥

---

पत्त्या-विध्यन्वयप्रतिपत्त्या। विध्यन्वयेन निर्व्यूढेनेति शेषः। ततो यादृग्भिरिति। यैर्येन प्रकारेणान्वये सति प्रतीतो विध्यन्वयः सुस्थितो भवति, तैस्तेन प्रकारेणान्वेति, न तु वैपरीत्येनेत्यर्थः। तादृशैस्तेन प्रकारेणान्वयक्रमं दर्शयति—न चेत्यादिना। अध्यवसाय-निश्चित्य।

भावार्थाधिकरणन्यायेनेति। प्रत्यासत्त्या भावार्थस्यैव करणत्वेनान्वयः। न तु नामार्थानामिति, तत्र प्रतिपादितमित्यर्थः। ततः कथंभावेति। एकस्या एव भावनाया आकाङ्क्षाक्रमवशात् अंशत्रयेण क्रमेणान्वयो भवतीति भावः। भावना विधीयत इति। पूर्वप्रतीतो विध्यन्वयः तस्यामंशत्रयादनुष्ठानयोग्यायां संजातायां पर्यवसितो भवतीत्यर्थः। एवं सति पक्षद्वयोक्तदोषद्वयस्यापि परिहारो भवतीत्याह—तदेवमिति।

अङ्गप्रधानविशिष्टा भावना विधीयते इत्युक्तम्। तादृशश्च विधिः प्रयोगविधिरेव। एवं सति स एवैको विधिरिति भवता प्रतिपादितम्। शास्त्रे च विधिचातुर्विध्यमुक्तम्। अतस्तद्विरोध इति शङ्कते—नन्विति। द्वितीये विचार्यत इति। कर्मभेदः खलु द्वितीयाध्यायगोचरः। स च विधिप्रमेय एव। तथाहि—विध्यन्तरप्रतिपन्ने कर्मणि तेनैव प्रवृत्तिसिद्धेः

---

१—अंगप्रधानविशिष्टा भावना विधीयत इत्युक्तम्, तादृशश्च विधिः प्रयोगविधिरेव, एवं सति स एवैको विधिरित्युक्तो भवति, शास्त्रे च विधेश्चातुर्विध्यमुक्तं दृश्यते। अतस्तद्विरोध इति शंकते-नन्वित्यादिना-अनुपपन्नमित्यन्तेन-इति।

चतुर्थे पञ्चमे चैव प्रयोगविधिचिन्तनम् ।
अधिकारविधिस्त्वन्यो यः षष्ठाध्यायगोचरः ॥ २० ॥

तस्मादैकविध्याभिधानमनुपपन्नमिति ।

**एकस्यैव विधेः प्रमेयभेदादुत्पत्त्यादयः क्रमभाविन्यश्चतस्रोऽवस्थाः इत्यनेनोक्तशंकापरिहारः, तत्राऽऽचार्यसम्मतिप्रदर्शनञ्च ।**

उच्यते ।

[1]उत्पत्त्यादित्रयाणाञ्च विध्यन्वयबलाद्गतेः ।
स्वरूपेण प्रयोक्तृत्वाच्चातुर्विध्यं विधेर्मतम् ॥ २१ ॥

अप्रवृत्तप्रवर्तकस्वरूपस्य विधेर्यदा तत्सिद्ध्यर्थं कर्मस्वरूपपरत्वं भवति, तदा विध्यन्वयप्रतिपत्तिवशादेव तद्विषयस्य कर्मणः प्रमाणान्तराप्राप्तिपरिकल्पनात् उत्पादकत्वसिद्धिः । तद्वशेनैव च तद्विषयस्य फलसाधनत्वम्, फलवदुपकारकत्वं वा कल्प्यत

---

स्वप्रवर्तकत्वाभावात् स्वस्य प्रवर्तकत्वसिद्ध्यर्थं विधिरेव स्वविषयस्य कर्मणः ततोऽन्यत्वं गमयति । तस्य च शब्दान्तराभ्यासादयः सहाया भवन्तीति द्वितीये विधिव्यापार एव चिन्तित इत्यर्थः ।

ऐकविध्यमेकविधत्वम् । शास्त्रे व्युत्पत्त्यादिभेदात् परस्परप्रविभक्तं चातुर्विध्यं न प्रतिपाद्यते । किंत्वेकस्यैव विधेः प्रमेयभेदात् उत्पत्त्यादयः क्रमभाविन्यश्चतस्रोऽवस्था भवन्ति इति तत्र प्रवर्तनैकरसतया प्रयोजकत्वमेव स्वाभाविकम् । अतः स एव विधिरित्युक्तम् । तदनुपपत्त्या तत्सिद्ध्यर्थमितरदवस्थात्रयं संभवतीति तत्रोक्तमिति न शास्त्रविरोध इति परिहरति—उच्यत इति । गतेः-अवगतेः । अवस्थात्रयस्य प्रयोजकत्वानुपपत्तिवललभ्यत्वमुपपादयति—अप्रवृत्तेति । कर्मस्वरूपपरत्वं-कर्मान्तरात्प्रविभक्तकर्मस्वरूपपरत्वम् । प्रमाणान्तरा-

---

१—अत्रेदं बोध्यम्—प्रवर्तनैकरसो विधिरिति विधेस्स्वरूपमेकमेव । परन्त्वस्यप्रमेयमुत्पत्त्यादि चतुर्विधम् । अधिकारविनियोगप्रयोगोत्पत्तिरूपाणां परस्परमविनाभावात्, परन्तु तद्वाक्यानामैदम्पर्यं भिद्यते, यथा—'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिभ्योऽधिकार-विनियोग-प्रयोगाणां प्रतिलम्भात्, 'अग्निहोत्रं जुहोती' इत्युत्पत्तिवाक्यम् । नतु विनियोगादयो न सन्ति । सन्तोऽपि न विवक्षिताः, अन्यतोलब्धत्वात् । अनन्यलभ्यः शब्दार्थ इति न्यायात् । अज्ञातज्ञापना-प्रवृत्तप्रवर्तनैकस्वरूपस्य विधेर्यदा तत्सिद्ध्यर्थं कर्मस्वरूपपरत्वं भवति, तदा विध्यन्वयप्रतीतिवशादेव तद्विषयस्य धात्वर्थस्य कर्मणः प्रमाणान्तराप्राप्तिपरिकल्पनेनोत्पादकत्वं सिद्ध्यति ।

अस्यचोत्पत्तिविधेः सहकारीणि मानानि प्रदेशान्तरे भेदेन कृतकरिष्यमाणसूचनतया ग्रन्थकृतोपेक्षितान्यपि, जिज्ञासूनां सुखबोधाय प्रदर्श्यन्ते । तथाहि—तत्रोत्पत्तिविधेर्द्वे कार्ये कर्मोत्पत्तिः, कर्मभेदज्ञप्तिश्च ।

शब्दान्तरम्, अभ्यासः, संज्ञा, गुणः, प्रकरणान्तरमित्येतानि पञ्च साक्षात् प्रथमकार्ये कर्मोत्पत्तौ, तत्प्रणालिकया द्वितीये कर्मभेदज्ञप्तौ च सहायतां भजन्ते । तत्रैकत्वातिरिक्ता संख्या तु तेषामन्यतमेन कर्मोत्पत्तिपरतां गते विधौ तदुत्पाद्यकर्मणि पृथक्त्वनिवेशित्वस्वाभाव्यादनेकतां बोधयन्ती द्वितीये सहायतां भजते इति विशेषः । कर्मेति चात्र भावनोच्यते, न धात्वर्थ इति न प्रस्मर्तव्यम् ।

इति विनियोजकत्वम्। फलसाधने च कर्मणि पुरुषस्याधिकारः स्वामित्वं सिध्यतीत्यधिकारोऽपि विधिप्रमेय एव। स्वरूपेणैव च प्रयोजकत्वमिति युक्तं प्रमेयचातुर्विध्याद्विधेश्चातुर्विध्यम्, विधिशब्दो हि प्रवर्तकैकरसं विध्यात्मानमभिधत्ते, तदन्यथानुपपत्त्यैवेतरत्त्रयं कल्पयतीति प्रमेयचतुष्टयसिद्धिः। न तु स्वरूपेणैव चातुर्विध्यम्।

आह च—

"विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः" तं वा. पृ. ७०० इति।

## उक्तार्थे प्रासंगिकप्रयोजननिर्देशः।

चतुष्टयेऽपि चैकस्मिन् क्वचित्किञ्चिद्विवक्षितम्।
एकं द्वयं त्रयं वाऽपि क्वचिच्चापि चतुष्टयम्॥ २२॥

'अग्निहोत्रं जुहोती'त्युत्पत्त्येकपरत्वम्। 'समिधो यजती'त्युत्पत्तिविनियोगपरत्वम्, असति विधौ प्रकरणविनियोगासिद्धेरिति प्रागेव गतम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति विनियोगाधिकारपरत्वम्, उत्पत्तेः 'सोमेन यजेते'त्यनेन सिद्धत्वात्। 'उद्भिदा यजेत पशुकामः इति चतुष्टयपरत्वम्, एकस्याप्यन्यतोऽसिद्धेः। यथा च विनियोजकत्वेऽपि विधेः श्रुत्यादीनां विनियोजकत्वं सिध्यति, तथा प्रागेवाभिहितम्।

## स्वर्गकामाधिकरणे उक्तस्य-विधेरिष्टभाव्यकत्वस्याधिकारसिद्धौ पर्यवसानमित्युपसंहारः।

प्रकृतमनुसरामः। तदेवं विधिबलेन पुरुषार्थस्य भाव्यत्वेऽवधारिते, तद्विशेषापेक्षायां कामसम्बन्धावगतप्राधान्यस्य स्वर्गादेर्भाव्यत्वं पुरुषोपसर्जनस्यापि भवति, न

---

प्राप्नोति। प्रमाणान्तरात् प्राप्ते तेनैव प्रवृत्तिसिद्धेः स्वप्रवर्तकत्वाभावादिति भावः। तद्वशेन प्रवर्तकत्वानुपपत्त्यैवेत्यर्थः। प्रधानस्य फलसाधनत्वम्, अङ्गानां फलवदुपकारकत्वम्। स्वामित्वं मदीयफलसाधनत्वात् मदीयमिदं कर्मेत्येवंविधम्। कथं विधेः प्रयोजकत्वमेव स्वाभाविकं, नान्यदवस्थात्रयमित्याशङ्क्य, तादृशवेषस्यैव लिङादिवाच्यत्वात, इतरस्य तदभावाच्च तथेत्याह—विधिशब्दो हीति। विधिशब्दः—लिङादिप्रत्ययः। प्रयोजकत्वस्यैव स्वाभाविकत्वे आचार्यसंमतिमाह—आह चेति। अभिधात्री प्रथमा। विनियोक्त्री द्वितीया। इयं तु तृतीयेत्यर्थः। उत्पत्त्यादिषु चतसृष्ववस्थासु यस्य यस्य विधेरेकस्या द्वयोस्तिसृणां वा विध्यन्तरेण न सिद्धिः। तस्य तस्य तत्रैव विवक्षा। न तु विध्यन्तरसिद्धांश इति प्रसङ्गादाह—चतुष्टयेऽपीत्यादिना। उत्पत्त्येकपरत्वमिति। विनियोगाधिकारप्रयोगाणाम् 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यनेन सिद्धत्वादित्यर्थः। उत्पत्ति-विनियोग-परत्वमिति। प्रयोगाधिकारयोः प्रधानविधिनेव लाभादित्यर्थः। ननु 'समिधो यजतीत्यस्य विनियोगपरत्वं वा कथमित्याशङ्क्य, तत् तृतीये प्रयाजादीनां प्रकरणविनियोगावसरे प्रतिपादितमित्याह—असतीति। प्रसक्तानुप्रसक्तमुपसंहरति—प्रकृतमिति। एवं विधिं निरूप्य तद्बलेन स्वर्गादिफलानामेव भाव्यत्वेनान्वयात् सिद्धोऽधिकार इति सिद्धान्तं निगमयति तदेवमिति।

---

१—'अभिधात्री श्रुतिः काचिद्विनियोक्त्र्यपरा तथे'ति अस्य पूर्वार्धम्।

२—समिधो यजतीत्यस्य कथं विनियोगपरत्वमित्याशंक्य तृतीये प्रकरणे विनियोगावसरे निरूपितमित्याह॥।

पूर्वपक्ष इव साधनत्वम्। न हि पूर्वपक्षेऽपि स्वर्गकामशब्दः पुरुषपरः, किं तु स्वर्गाख्यस्य द्रव्यस्य क्रियासाधनत्वप्रतिपत्तिपरः।

## स्वर्गकामाधिकरणपूर्वोत्तरपक्षौ।

कथं पुनः पुरुषवचनशब्दस्योभाभ्यामपि वादि-प्रतिवादिभ्यां तत्परत्वमवधार्यते? उच्यते। पूर्वपक्षवादी तावदेवं मन्यते क्रियासामर्थ्यादेव तावद् गुणभूतः पुरुषः प्राप्तः, तत्र स्वर्गकामशब्देन न कश्चित्पुरुषविशेषः राजशब्देनेव, व्रीह्यादिशब्देनेव वा द्रव्याविशेषः समर्प्यते। य एव हि स्वर्गकामः, स एवास्वर्गकामोऽपि भवति। यदा तत्कामः तदा तत्कामी यजेत इति तत्कालोपलक्षणत्वे वा स एव दोषः। तस्मान्न स्वर्गकामनाविशिष्टस्य पुरुषस्यात्र शेषत्वेनान्वयः। तत्र विशेष्यांशस्य प्राप्तत्वाद्विशेषणपरत्वं लोहितोष्णीषादि-

---

नन्वन्योपसर्जनस्य स्वर्गस्य कथं साध्यत्वमित्याशङ्क्य, पूर्वपक्षे तादृशस्यैव साधनत्वं यथोच्यते तद्वत् साध्यत्वमपि इत्याह - न हीति। ननु गुरुमते स्वर्गकामशब्दस्य कर्तृपरत्वं पूर्वपक्षयित्वा नियोज्यपरत्वेन सिद्धान्तः कृतः। तदेव समञ्जसम्। स्वर्गकामशब्दस्य पुरुषवाचकस्य पूर्वपक्षसिद्धान्तयोराञ्जस्यात्। न त्विहातद्वचनस्याञ्जस्यं पूर्वपक्षसिद्धान्तयोरित्याशङ्कते—कथं पुनरिति। उत्तरमाह—उच्यत इति। पूर्वपक्षवादिनस्तावत् पुरुषपरत्वानाश्रयणे तात्पर्यमाह—पूर्वपक्षेति। क्रियासामर्थ्यात्—भावनाक्षेपात्। गुणभूतः—कर्तृत्वेन क्रियानिर्वर्तकः। पुरुषसामान्यस्य प्राप्तत्वेऽपि 'राजा राजसूयेन यजेत' आप. श्रौ. १८-८-१-४ त्यत्र राजादिशब्दवत् स्वर्गकामशब्दस्य पुरुषविशेषपरत्वं किमिति न स्यादित्याशङ्क्याह—तत्र स्वर्गेति। व्रीह्यादीति। यथा क्रियाक्षेपेणैव द्रव्यसामान्ये प्राप्ते, व्रीह्यादिशब्दो द्रव्यविशेषपरस्तद्वदित्यर्थः। इदं च व्यतिरेकदृष्टान्तद्वयं कथं तेन समर्थ्यत इत्याशङ्क्य, स्वर्गकामनायाः क्षणिकत्वेना-नैयत्येन राजत्वादिवत् पुरुषविशेषकल्पनायोगादित्याह—य एवेति। स्वर्गकामनाया अनैयत्येन कालान्तरानुगतावपि, तद्विशिष्टस्य तस्मिन् काल एव कर्तृत्वं प्रतिपाद्यत इत्याशङ्क्य, तदा काललक्षणाप्रसङ्ग एव दोषः स्यादित्याह—यदेति। उक्तयुक्त्या पुरुषपरत्वाभावमुपसंहरति—तस्मादिति।

तर्हि किंपरोऽयं शब्द इत्यत्राह—तत्रेति। विशेष्यांशस्य-पुरुषांशस्य। प्राप्तत्वात् भावनाक्षेपेणेत्यर्थः। विशेषणपरत्वं—स्वर्गपरत्वम्। लोहितेति। श्येनयागे लोहितोष्णीषा

---

तद्वशेन तद्विषयस्य फलसाधनत्वम्, फलवदुपकारकत्वं वा कल्प्यत इति, विनियोजकत्वसिद्धिः। फलसाधने कर्मणि पुरुषस्याधिकारः—स्वामित्वं सिद्ध्यतीत्यधिकारोऽपि विधिप्रमेय एव। स्वरूपेण प्रवर्तकत्वमिति विधिशब्दो हि प्रवर्तनैकरसं विध्यात्मानमभिदधानस्तदन्वयानुपपत्त्यातत्सर्वं कल्पयतीति, प्रमेयचतुष्टयसिद्धिः, न तु स्वरूपेणैव चातुर्विध्यमिति।

यथोक्तं विधिविवेककृता—

'उत्पत्तिविनियोगार्थ-प्रयोगाधिक्रियात्मकः' पृ० ३७४।

'सर्वो विधिस्तत्परताविशेषान्न विभज्यते' वि० वि० इति च।

१—कामनयासहनेति मु० पु० पा०।

*तदेवं शेषिविशेषप्रतिपादनेन, शेषविशेषप्रतिपादनेन चाङ्गत्वं बोधयतः विधेस्सहायकं कुर्वन्ति श्रुत्यादिनि विनियोगेकारणान्यभिधीयन्त इत्यनवद्यम्। मित्यत्रेति पृ. १३५। इति शेषः।

वद्भवति। तत्रापि स्वर्गकामनायाः शेषत्वेनोपदेशोऽदृष्टार्थता स्यात्। न हि स्वर्गकामनायाः कर्मणि दृष्टोपकारः संभवति। गौरवं च स्वर्गविशिष्टस्य कामस्याङ्गत्वोपदेशे विधेः स्यात्। स्वर्गस्य तु द्रव्यरूपस्य कर्मसाधनत्वेन दृष्टार्थत्वात्तन्मात्रस्य चाङ्गत्वविधाने लाघवात्, द्रव्योपदेशः एवायम्। कर्तृवचनस्त्वणप्रत्ययः सह कामयतिनाऽनुवाद इति।

सिद्धान्तस्तु—विधिबलेनैव व्यापारस्य भावनायाः पुरुषार्थत्वमवगम्यते न ह्यस्वार्थे कर्मणि कश्चित्प्रेक्षावान्प्रवर्तते। तादर्थ्यं च तदपेक्षितोपकारसाधनत्वात्। तेन विधित एवापेक्षितोपकारसाधनद्वारेण पुरुषार्थत्वे भावनायाः समधिगते सत्युपकारविशेषापेक्षायां स्वर्गकामशब्देन पूर्वोक्तन्यायावधारितानुपपन्नपुरुषविशेषप्रतिपादकभावेन विशिष्टफलापेक्षिणः पुरुषस्य शेषित्वमभिधीयमानं विशेषणभूतस्वर्गाख्योपकारविशेषप्रतिपत्तिपरं भवति। तत एव स्वर्गकामशब्दः पक्षद्वयेऽपि न पुरुषपरः, किन्तु स्वर्गपरः। गुणप्रधानभावे तु विवादः। अत एवोक्तम्—किं स्वर्गो गुणतः, कर्म प्रधानतः, उत कर्म गुणतः स्वर्गः प्रधानत शा. भा. ६-१-१ इति।

---

ऋत्विजः प्रचरन्ती षड्वि. ब्रा. ३-८ ति श्रुतम्। अत्रोष्णीषस्य, ऋत्विक्प्रचारस्य च प्रकृतितः प्राप्तत्वात् लौहित्यमात्रे तात्पर्यमित्यर्थः।

मास्तु पुरुषपरत्वं, तथापि समुद्रमनोध्यानवत् स्वर्गकामनाया एवाङ्गत्वप्रतिपादनं किमिति न स्यात्। तत्राह—स्वर्गकामनाया इति। अदृष्टार्थतेति। तथा च समुद्रध्यानवदेवारादुपकारकत्वप्रसङ्गादिति भावः। गौरवमिति। केवलस्यैव स्वर्गस्याङ्गत्वे संभवतीति शेषः। स्वर्गमात्रपरत्वे तु नैतद्दोषद्वयमित्याह—स्वर्गस्य त्विति। सह कामयतिनेति। साधनकामनायाः, पुरुषस्य चान्यत एव प्राप्तत्वात् न तत्परत्वमिति भावः।

सिद्धान्तिनः पुरुषपरत्वानङ्गीकारे तात्पर्यमाह—सिद्धान्तस्त्विति। विधिबलेन विध्यन्वयबलेन। व्यापारस्य भावनायाः—व्यापाररूपाया भावनाया इत्यर्थः। पुरुषार्थत्वं—पुरुषशेषत्वम्। एवं च विधिबलात् भावनाशेषिभूतः पुरुषः स्वयमेव प्राप्नोतीत्यर्थः। विध्यन्वयात् भावनायाः पुरुषार्थत्वलाभमुपपादयति—न हीति। पुरुषशेषत्वं च भावनायास्तदपेक्षितफलसाधनत्वान्निर्वहतीत्याह—तादर्थ्यं चेति। उपकारः—फलम्।

अस्त्वेवम्। स्वर्गकामशब्दस्य फलपरत्वे किमायातम्। तत्राह—तेन विधित इति। विशेषापेक्षायामिति। विधिबलेन शेषिभूतः पुरुषः प्राप्तः। फलमपि सामान्यतः। तद्विशेषस्त्वपेक्षितः। तस्यां सत्यामित्यर्थः। शेषित्वमिति। स्वतः प्राप्तः शेषिभूतः पुरुषस्ततः प्राप्त एवानेन शब्देनाभिधीयत इत्यर्थः। पक्षद्वयेऽपि प्रतिपादितं पुरुषपरत्वाभावं निगमयति—तत एव स्वर्गेति। गुणप्रधानभावे त्विति। पूर्वपक्षे स्वर्गशब्दस्य सुखसाधनद्रव्यवाचकत्वमाश्रित्य यागं प्रति गुणत्वमुक्तम्। सिद्धान्ते तु सुखपरत्वमाश्रित्य शेषित्वमिति भावः।

पुरुषपरत्वमनाश्रित्यैव गुणप्रधानभावमात्रेण विचारप्रवृत्तौ भाष्यसंमतिमाह अत एवेति। पूर्वपक्षे स्वर्गकामशब्दो भावनास्वभावाक्षिप्तगुणीभूतपुरुषवाचकः। तद्विशेषणभूतस्वर्गाख्यद्रव्यस्य शेषत्वप्रतिपादनपरः। सिद्धान्ते तु विधिस्वभावलब्धशेषिभूतपुरुषवाचकस्तद्विशेषणस्वर्गाख्यफलस्य शेषित्वपर इत्यवगन्तव्यम्।

## तत्र शंका-समाधाने ।

किमिदानीं शेषित्वेन फलकामस्यान्वयः । बाढम् । कथं तर्हि 'राजा राजसूयेन स्वाराज्यकामो यजेते'त्यादिषु राजादिशब्देन शेषप्रतिपादकेन कामशब्दस्य सामानाधिकरण्यम् ? उच्यते । उभयोरपि कर्तृपरत्वात् । कर्तृत्वेन हि राज्ञ इव फलकामस्यान्वयः समस्त्येव । स त्वन्वयः कर्मणा पुरुषस्योपकारः कथं भवतीत्येवमर्थः । मलिनेन स्नातव्यम्, क्षुधितेनाशितव्यमितिवत् । यत्र हि तृतीयाश्रुत्या विस्पष्टेऽपि कर्तृत्वेऽभिहिते शेषित्वमेव मलिनादेर्भवति, तत्र स्वर्गकामादेः फलसमभिव्याहारकल्प्यकर्तृत्वस्य न भवतीति कुत एतत् । न खलु कर्तृत्वान्वयः शेषिभावस्य परिपन्थी, सर्वकारकाणां शेषित्वसंभवः प्रयाजशेषादीनां प्रागेव दर्शितो यतः ।

## द्वितीया-तृतीयादीनां साध्यत्व-साधनत्वप्रतिपादनशंका-समाधाने ।

यद्येवम्-कथं तर्हि द्वितीया शेषिविभक्तिः, तृतीयादयस्तु शेषविभक्तय इति [1]विशेषसिद्धिः ? उच्यते । साध्यसाधनभावप्रतिपादनादुपपन्नः विशेषः । द्वितीया हि

---

राद्धान्ते शेषित्वान्वये दोषं वक्तुकामस्तत्र पराङ्गीकारं पृच्छति—किमिदानीमिति । अङ्गीकारेणैवोत्तरमाह—बाढमिति । तत्र दोषमाशङ्कते—कथं तर्हीति । प्रधानोपसर्जनभावेन विरुद्धार्थप्रतिपादकयोः शब्दयोः समानाधिकरण्यमयुक्तमिति भावः । परिहरति—उभयोरिति । अयं भावः—यद्यपि राजशब्दप्रतिपाद्यः पुरुषः शेषभूतो भवति । स्वाराज्यकामशब्दप्रतिपाद्यस्तु शेषी । अथापि नोभयोः शेषत्वं, शेषित्वं, वाचकवृत्त्याऽभिधीयते । नापि क्रियान्वये वा वैरूप्यमस्ति । उभयोरपि कर्तृत्वेनैवान्वयात् । अतो युक्तमुभयोः सामानाधिकरण्यमिति । तदेवाह—कर्तृत्वेनेति । प्रथमं क्रियायां कर्तृत्वेनान्वितयोरुभयोः शेषशेषिभावः पर्यवसानलभ्य इति भावः ।

ननु कर्तृत्वं क्रियानिर्वर्तकत्वम् । तथात्वेनान्वितस्य कथं शेषित्वं भवतीत्यत्राह—स त्वन्वय इति । कर्तृत्वान्वयो द्वेधा-केवलक्रियासिद्धिमात्रप्रयोजनार्थः । क्रियया स्वप्रयोजनसिद्ध्यर्थश्च । तत्राद्यः शेषत्वस्योपयोगी । द्वितीयस्तु शेषित्वस्य । अत उभयोः साधारणः कर्तृत्वान्वय इति, तथान्वितस्य न शेषित्वविरोध इति भावः ।

कर्तृत्वेनान्वितस्य शेषित्वे दृष्टान्तमाह—मलिनेति । मलिनस्य स्नाने कर्तृत्वान्वयो मालिन्यापाकरणार्थः । एवं क्षुधितस्यापि । न तु क्रियामात्रनिष्पत्त्यर्थ इति अर्थात् शेषित्वमेव तयोर्भवति । तद्वदिहापि स्यादित्यर्थः । शेषित्वस्य दृष्टान्ते स्पष्टेनापि कर्तृत्वेनाविरोधं वर्णयन् प्रकृते तच्छङ्कैव नोदेतीत्याह—यत्र हीति । कल्प्यकर्तृत्वस्येति । स्वर्गकाम इत्यत्राण्प्रत्ययेन कामनां प्रत्येव कर्तृत्वमभिधीयते । यागं प्रति तु न शब्देनाभिधीयत इति तत्पदसमभिव्याहारेण कल्प्यमित्यर्थः । प्रागुपपादितक्रमेणापि कर्तृत्वस्य न शेषित्वविरोध इत्याह—न खल्विति ।

ननु द्वितीयया, चतुर्थ्या च कर्मसंप्रदानयोः शेषित्वस्याभिधानात् भवतु तयोः शेषित्वसंभवः । कर्तृकरणादीनां तु तृतीयादिभिः शेषत्वस्यैवाभिधानात् कथं सर्वकारकाणां शेषित्वसंभवः । तत्संभवे वा कथं विभक्तीनां शेषशेषिभावप्रतिपादनव्यवस्थेति शङ्कते—यद्येवमिति । विशेषसिद्धिः—व्यवस्थासिद्धिः ।

---

१—विशेषसिद्धिः—व्यवस्थासिद्धिः । २—अवैगुण्यादिति मु पु. पा. ।

साध्यभावं प्रतिपादयति, साध्यत्वञ्च शेषित्वप्रत्यासन्नम् । न ह्यसाध्यस्य शेषित्वं संभवति, तेन तदभिधायिन्या द्वितीयया तदवगतिर्युक्तैव । तृतीयादयस्तु शेषभावप्रत्यासन्नसाधनत्वाभिधानात्तत्प्रमाणतयोच्यते*। यत्र तु तत्प्रतिपादितसाधनभावस्यैव शेषित्वम् भवति, तत्र साध्यत्वमशब्दाभिहितमपि कल्पयितव्यमिति विशेषसिद्धिः । तेन कर्तृत्वान्वितयो राज-स्वाराज्यकामयोर्विधिबलेन स्वाराज्यकामस्य शेषित्वम्, राज्ञस्तु द्रव्यकर्मसंयोगन्यायेन पू. द. ६-१-१ साधनत्वानुगुण्यात्तच्छेषत्वमेव भवति ।

---

द्वितीयादिविभक्तयो हि शेषत्वं, शेषित्वं वा न साक्षादभिदधति । किं तु शेषित्वप्रत्यासन्नं साध्यत्वं, शेषत्वप्रत्यासन्नं साधनत्वञ्च । एवं च साध्यत्वाभिधायकानां शेषिविभक्तित्वम् । इतरासां तु इतरविभक्तित्वमिति व्यवस्था इति, ताभिः साध्यत्वसाधनत्वाभिधानेऽपि शेषशेषित्वयोरनभिधानात् क्वचित् न्यायबलात् वैपरीत्यस्यापि संभवात् कर्तृकरणादीनामपि शेषित्वं संभवतीति, सर्वकारकाणां शेषित्वसंभवश्चेति परिहरति—उच्यत इति । यत्र तु करणादेः शेषित्वं, तत्रापि तृतीयादिना साधनत्वमेवाभिधीयते । न्यायबलाच्च शेषित्वेऽवधृते, साध्यत्वं तु पश्चात् कल्प्यत इति न सापि शेषिविभक्तित्वेनोच्यत इति व्यवस्था सिध्यतीत्याह—यत्र त्विति ।

ततश्च प्रथमं क्रियायाः कर्तृत्वात् अवैरूप्येणान्वितयो राजस्वाराज्यकामयोः पश्चान्न्यायबलेन शेषशेषिभावः पर्यवसित इति सामानाधिकरण्यमविरुद्धमिति निगमयति—तेनेति । द्रव्यकर्मसंयोगन्यायेनेति । 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' मी. द. ६–१–१ इत्यस्मिन् सूत्रे साध्यरूपेण कर्मणा सिद्धरूपद्रव्यं संबध्यमानं तत्साधनत्वेनैव संबध्य, तस्य शेषो भवतीति प्रतिपादितम् । अनेन न्यायेनेत्यर्थः ।

स्वर्गकामस्य पक्षद्वयेऽपि कर्तृत्वमङ्गीकृत्यैव पूर्वपक्षे शेषत्वेनान्वयः । सिद्धान्ते तु शेषित्वेनेत्युक्तम् । प्रभाकरेणापि कर्तृत्वेनैवान्वयमङ्गीकृत्यैवमेव पूर्वपक्षसिद्धान्तयोरन्वयो वक्तव्यः । तत्र पूर्वपक्षे कृतः कर्तृत्वान्वयः शेषत्वेनैवेति तेनाप्यङ्गीकृतमेव । सिद्धान्तिनस्तु नियोज्यान्वयोऽप्यस्मदुक्तकर्तृत्वेनैव शेषित्वान्वय इत्यङ्गीकार्यं इति प्रतिपादयितुमुपक्रमते—

---

*अत्रेदं बोध्यम्—द्वितीया-चतुर्थ्योः कर्म-संप्रदानवाचिन्योश्शेषित्वं भवतु, कर्तृकरणादीनां तृतीयादिभिश्शेषस्वस्याभिधानात् कथं सर्वेषां कारकाणाम् शेषित्वसंभवः, तथात्वे विभक्तीनां शेष-शेषिभावप्रतिपादनव्यवस्थेति चेत् ? शृणु, द्वितीयादिविभक्तयश्शेषित्वम्, शेषत्वं वा न साक्षादभिदधति, अपि तु शेषित्वप्रत्यासन्नं साध्यत्वम्, शेषत्वप्रत्यासन्नं साधनत्वञ्चाभिदधति । तथा च साध्यत्ववाचिनीनां शेषिविभक्तित्वम्, साधनत्वाभिधायकानां शेषविभक्तित्वमिति व्यवस्थासिद्धिः । तेन द्वितीया-तृतीयादिभिस्साध्य-साधनभावाभिधानेऽपि क्वचिन्न्यायबलाद्वैपरीत्यस्यापि संभवात्, कर्तृकरणादीनामपि शेषित्वम् संभवति । परन्त्वेतावान् विशेषः—यत्र करणादेश्शेषित्वम्, 'प्रयाजशेषेण हवींष्यभिघारयती'त्यादौ, तत्रापि तृतीयया साधनत्वमेवाभिधीयते, न्यायबलाच्छेषित्वेऽवधृते पश्चाल्लक्षणया साध्यत्वं कल्प्यते—इति ध्येयम् । विशेषः १५१ पृष्ठे द्रष्टव्यः ।

## प्राभाकरमते स्वर्गकामपदस्य कर्तृत्वेनान्वयपक्षस्यानुवादः ।

[1]योऽपि कैश्चिन्नियोज्यत्वेनान्वयः फलकामस्येष्यते, सोऽपि विविच्यमानः शेषित्वान्वय एव यथोक्तो भवति । इतरथा तु न कर्तृत्वान्वयाविशेषात् ।

तथा हि—

नियोज्यो नाम यः कार्यमात्मीयत्वेन बुध्यते ।
तदीयत्वं च कार्यस्य तत्कृतिव्याप्यतात्मकम् ॥ २३ ॥
यत्कृत्या व्याप्यते यच्च ध्रुवं तत्कर्तृकं हि तत् ।
तत्कर्तृत्व-नियोज्यत्वे शेष-शेषित्वकारिते ॥ २४ ॥

स्वर्गकामस्य कर्तृत्वान्वयं पूर्वपक्षीत्य, नियोज्यत्वेनान्वयः सिद्धान्तीक्रियत इति यस्य दर्शनम, सोऽपि शेष-शेषिभावव्यतिरेकेणाऽन्वयस्य भेदं वक्तुं न क्षमते। तथा हि—यो ममेदं कार्यमिति बुध्यते, स नियोज्यः । ततश्च 'स्वर्गकामो यजेते'त्यनेन स्वर्गकामस्येदं कार्यमिति प्रतिपादयितव्यम् । स्वर्गकामकृतिव्याप्यमित्यर्थः तथा हि सत्यसौ ममेदं कार्यमिति बुध्यते, यच्च यस्य कृत्या व्याप्यते, तत् तत्तत्कर्तृकमेव । यथा भावार्थः। तस्माद्राज-स्वाराज्यकामयोः कर्तृत्वेनान्वयात्स्वाराज्यकामस्य नियोज्यत्वम्, राज्ञस्तु कर्तृत्वमित्ययं विशेष एवं समर्थयितव्यः-कर्तृत्वेऽपि स्वाराज्यकामस्य शेषित्वम्, कार्यं प्रति राज्ञस्तु शेषत्वमिति ।

---

योऽपीति। यथोक्तः-अस्मदुक्तः । इतरथा तु नेति । अयमन्वयः शेषित्वान्वयं विना प्रकारान्तरेण न संभवतीत्यर्थः । यदि नायं शेषित्वान्वयः, तदा पूर्वपक्षसिद्धः शेषत्वान्वय एव स्यात् । कर्तृत्वान्वयस्य शेषत्वान्वयमन्तरेण प्रकारान्तरासंभवादित्याह—कर्तृत्वान्वयाविशेषादिति । अविशेषप्रसङ्गादित्यर्थः ।

ननु कर्तृत्वादन्यदेव नियोज्यत्वम् । तस्य शेषित्वानङ्गीकारे कथं पूर्वपक्षाद्विशेषः । इत्याशङ्क्य नियोज्यत्वस्य कर्तृत्वादनन्यत्वं प्रतिपादयति—तथा हीति । तदीयत्वमिति । कार्यस्य तदीयत्वमुभयोरपि यत्किंचित्संबन्धमन्तरेण न घटते । स च कृतिद्वारक इति वाच्यम् । ततश्च तत्कृतिसाध्यत्वं तस्य भवतीत्यर्थः । कृतिव्याप्यता-कृतिसाध्यता । तथाहि सतीति । वाक्येनैव तत्कृतिसाध्यमेतदिति प्रतिपादने सतीत्यर्थः । यथा भावार्थ इति । लोके 'देवदत्तः पचती'त्यादौ भावार्थो यत्कृतिसाध्यः, स तत्कर्तृक इति प्रभाकरेणाप्यङ्गीकृत इत्यर्थः । एवं नियोज्यस्यापि कर्तृत्वमुपपाद्य, तस्य केवलकर्तृत्वात् भेदो मदुक्तरीत्या शेषित्वेनैव वाच्य इत्याह—तस्मादिति । कार्यं प्रतीति । मम तु भावनाया एव लिङर्थत्वात् तां प्रत्येवायं पक्षद्वयेऽपि विशेष उक्तः । तव तु अपूर्वस्यैव तदर्थत्वात् तत्प्रत्येवायं भेदो वाच्यः ।

---

१—अस्य विषयस्य सुखावगतये षष्ठाद्यगतस्तन्त्ररत्नग्रन्थोऽधस्तादुद्ध्रियते । तथाहि-यस्तु पृष्टीकृत्य भाष्यं स्वप्रज्ञाविलसितं प्रकाशयन् पुरुषपरत्वमेव स्वर्गकामादिशब्दानामङ्गीकृत्य, किं वा कर्तृसमर्पक इति विचारं वर्णयति, स वक्तव्यः—कोऽयं कार्यवाक्यार्थपक्षे कर्तृव्यतिरिक्तो नियोज्यो नामेति ? यः कार्यमात्मीयं बुद्ध्यते, स नियोज्य इति यदि ब्रूयात्, प्रतिब्रूयादेनम्-कथमेवम्भूतस्य स्वर्गकामादिशब्देन कार्यान्वयो बोध्यत इति । स यदि ब्रूयात्—स्वर्गकामस्येदं कार्यमित्येवाऽस्यान्वयप्रतिपादनम् । एवंभूतेऽन्वये प्रतिपादिते हि ममेदं कार्यमिति स्वर्गकामो

ननु बोद्धृत्वेन नियोज्यत्वम्, न शेषित्वेन। किमिदानीं कामशब्दः कामिनः कार्यं विषयावच्छिन्नं प्रति बोद्धृत्वमभिधत्ते—स्वर्गकामबोद्धृकम् यागावच्छिन्नं कार्यमिति। यद्येवं बोद्धृत्वव्यतिरेकेण कामिनः कार्यान्वयाभावाद्यजेतेत्यनेन योऽर्थोऽभिहितः, तमेव केवलं बुध्येत- कार्यमेतदिति। न तु ममेदं कार्यमिति। ममशब्दाभिधेयस्य सम्बन्धस्य नियोगेन सहात्मनः कस्य चिदप्यभावात्। ततश्चानियोज्यत्वमेव। न हि यः कार्यमिति बुध्यते, स नियोज्यः, किं तु यो ममेदं कार्यमिति बुध्यते। न च प्रवृत्तिः सिद्ध्येत्। न हि कार्यमित्येव कश्चित्प्रवर्तते, अपि तर्हि ममेदम् कार्यमिति। अनर्थकश्च नियोज्यप्रतिपादकः शब्दः स्यात्। अन्तरेणापि तच्छब्दमाख्यातार्थं व्युत्पन्नः स्वर्गकामो बुध्यत एव। तत्र परिसंख्या स्यात्। स्वर्गकाम एव व्युत्पन्नो बुध्येत, नान्य इति। सा चाशक्या परिसंख्यायमानेऽपि व्युत्पन्नानां बोधस्यानिवार्यत्वात्। पितृयज्ञादौ च सर्वेषामेव व्युत्पन्नानां बोद्धृत्वलक्षणनियोज्यत्वसद्भावान्न तदध्याहारः स्यात्। तस्मात्स्वर्गकामस्य ममेदं कार्यमित्येवंविधबोद्धृत्वलक्षणनियोज्यत्वमिच्छ-

---

नियोज्यत्वस्य कर्तृत्वादन्यत्वमाशङ्कते—नन्विति। बोद्धृत्वान्वये दोषं वक्तुं तत्र वाक्यप्रवृत्तिक्रमं विविच्य पृच्छति—किमिदानीमिति। तथात्वे दोषमाह—यद्येवमिति। स्वर्गकामस्येदं कार्यमित्युक्ते कृतिद्वारा स्वर्गकामकार्ययोः संबन्धप्रतिपादनात् तत्कृतिव्याप्यतामन्तरेण तस्य तत्कार्यत्वायोगात् ममेदं कार्यमिति बुध्येत। स्वर्गकामस्य यागावच्छिन्नं कार्यं बोध्यमित्युक्ते त्वन्यपुरुषकार्यस्यापि तदनिष्पादकेनान्येन बोध्यत्वसंभवात् कृतिद्वारकसंबन्धालाभेन ममेदं कार्यमित्येवंविधं नियोज्यत्वं न स्यादित्यर्थः।

नन्विदं कार्यमित्येवं बोद्धृत्वमेव नियोज्यत्वं स्यात्। तत्राह—न चेति। नियोज्यत्वान्वयोऽप्यधिकारद्वारा कर्मणि प्रवृत्त्यर्थः। एवं नियोज्यान्वये नैव सा स्यादित्यर्थः। एवंविधस्यैव नियोज्यत्वे किं स्वर्गकामशब्दः यागावच्छिन्नकार्यस्य बोद्धृत्वमात्रसमर्पणपरः उत अस्वर्गकामस्य बोद्धृत्वनिवृत्तिप्रतिपादनपर इति विकल्प्य प्रथमे वैयर्थ्यमाह—अनर्थकं चेति। शास्त्रं-स्वर्गकामप्रदम्। अस्यायं बोद्धेतिशब्देन प्रतिपादनमन्तरेणापि तस्य तद्बोद्धृत्वसिद्धौ तच्छब्दस्य वैयर्थ्यमित्यर्थः। द्वितीयं परिशेषयति—तत्रेति। असंभवेन परिहरति—सा चेति। अनुष्ठानस्यैव नियमः, परिसंख्या च संभवति। बोध्यस्तु वचनेन नियन्तुं परिसंख्यातुं वा न शक्यत इति भावः। विश्वजिदादौ तच्छब्दाध्याहारश्च न स्यादित्याह—पितृयज्ञादाविति। एवं केवलबोद्धृत्वान्वयस्य शाब्दत्वानुपपत्तेः कर्तृत्वेनैवान्वयः शब्दवाच्य इति निगमयति—तस्मादिति।

---

बुद्धयत इति। प्रतिब्रूयादेनम्—स्वर्गकामस्येदम् कार्यमिति कोऽर्थः? स्वर्गकामकृत्या व्याप्यमित्यर्थः। अहो बत भवानतिनिपुणम्मन्योऽपि प्रमाद्यपि। कर्त्रऽतिरेकेण हि भवता नियोज्यो दर्शयितुपक्रान्तः, स चेदानीं कर्तैव सञ्जातः। तत्कृतिव्याप्यत्वमेव हि कार्यस्य तत्कर्तृकत्वम्, नान्यत्, ततश्च स्वर्गकामकृतिव्याप्यता चेद् कार्यस्योच्यते, तत्कर्तृकत्वमेव तर्हि तदिति, न कर्त्रन्यो नियोज्यस्सिद्धयति।

यद्युच्येत-विषयभेदादनयोर्भेदः। क्रियान्वयो हि कर्तृत्वम्, तदतिरिक्तन्तु विध्यर्थं क्रियातिरिक्तकार्यरूपं प्रति नियोज्यान्वयः—इति।

ताऽश्यमस्येदं कार्यमित्येवमेव वचनेन प्रतिपादयितव्यमिति वक्तव्यम्। तथा च कर्तृत्वेनैवान्वयप्रसङ्गः। यद्युच्येत–सत्यमयमेवान्वयः तथाऽपि तु न कर्तृत्व–नियोज्यत्वसङ्करः, विषयभेदात् कर्तृत्वं हि भावार्थे, नियोगे च नियोज्यत्वमिति।

### कर्तृत्व-नियोज्यत्वयोर्भेदाभावेन तन्निरासः

तदयुक्तं न भावार्थव्यतिरेकेण किंचन।
कार्यं प्रसिद्धमद्यापि नियोज्यत्वे स्थिते हि तत्॥ २५॥

एतदधिकरणसिद्ध एव हि नियोज्यान्वयः क्रियातिरिक्तकार्याभिधानकल्पनाबीजम्। अतः प्राक् न तत्सिद्धिरिति, न विषयभेदादसङ्करः शक्यतेऽभिधातुम्। लोके च तदभावात्। 'देवदत्त गामानये'त्यादिषु सम्बोधनविभक्तिसद्भावेऽपि देवदत्तादीनां नियोज्यत्वं न स्यात्। तस्मात्कार्यं प्रति शेषित्वमेव नियोज्यत्वं न च कर्तृत्वमित्येव वाच्यम्।

---

नियोज्यत्वान्वयोऽपि कर्तृत्वान्वय एवेत्येतावत् भवेन्नाम। अथापि न शेषशेषिभावेन कर्तृत्व-नियोज्यत्वयोर्भेदमङ्गीकुर्मः। किं तु प्रकारान्तरेणेति शङ्कते—यद्युच्येतेति। नियोगे चेति। नियोगे कर्तृत्वम्। नियोज्यत्वमित्यर्थः। दूषयति—तदयुक्तमिति। अस्मिन्नधिकरणे स्वर्गकामादिकर्तृत्वातिरिक्तनियोज्यत्वे सिद्धे सत्यफलसाधके क्षणिके भावार्थे फलकामिनो नियोज्यत्वानुपपत्त्या लिङादीनां तदतिरिक्तस्थिरकार्याभिधानात् भावार्थातिरिक्तभवदभिमतनियोगसिद्धिः। तदतिरिक्ते च तस्मिन् सिद्धे विषयभेदात् कर्तृत्वातिरिक्तनियोज्यत्वसिद्धिरितीतरेतराश्रयदोषः प्रसज्येदिति भावः। वृद्धव्यवहारे नियोज्यान्वयव्युत्पत्तिं वदता संबोधनविभक्तिनिर्दिष्टस्य लोकेऽपि नियोज्यत्वेनान्वयसंभवात् तत्र व्युत्पत्तिः संभवतीति प्रतिपादितं प्राभाकरेण। तच्च न सिध्येत्। नियोज्यत्वस्य नियोगविषयत्वात् नियोगस्य च लौकिकवाक्येष्वभावात्। अतो व्युत्पत्तिरेव न सिध्येदित्याह–लोके चेति। तस्मादस्मदुक्तप्रकारेण शेषशेषिभावेनैव तयोर्भेदो वाच्यः। ततश्च नियोगप्राधान्यं हीयेतेति निगमयति–तस्मादिति।

---

तदयुक्तम्। न खल्वद्यापि क्रियातिरिक्तं कार्यं सिद्धम्। यत् विषयभेदात् कार्यभेदः स्यात्। सिद्धे ह्यस्मिन्नधिकरणे कर्तृव्यतिरिक्ते नियोज्ये, तदन्वयबलादेव अपूर्वाधिकरणे क्रियातिरिक्तकार्यसिद्धिः, प्राक्त्वेतस्मात् न तत्सिद्धमिति, न विषयभेदात् भेदस्संभवति। लोके च तदभावात् नियोज्यत्वं 'देवदत्त गामानय' इत्यादौ संबोधनविभक्तावपि सत्यां देवदत्तादीनां न स्यात्।

अथ शेषित्वेनाऽन्वयो नियोज्यत्वम्, शेषतयाऽन्वयस्तु कर्तृत्वमित्युच्यते, युक्तमेतत्। किन्त्विदं वक्तुं भवतोऽनुचितम्, विध्यर्थस्य भवतः सर्वप्रधानाभिमतस्य गुणभावापत्तेः। यदि नियोज्यस्य शेषित्वम्, ततो विध्यर्थस्य नियोज्यम् प्रति शेषत्वात्। नियोगसिद्धौ सर्वं तदनुगुणम्, इति रिक्तार्थं वचस्स्यात्।

यच्चान्यत्प्रलप्यते, तत्सर्वं न्यायरत्नमालायामेव विस्तरेण निरस्तमित्यमलमनेन इति।

## कर्तृत्व-नियोज्यत्वयोरभेदेऽपि नापूर्वस्य प्राधान्यं हीयत इति शंका।

यस्तु ब्रूते—

शेषशेषित्वभेदेन सत्यं कर्तृ–नियोज्यते।
कृतिं प्रति त्वसौ भेदः कार्ये तु गुणता द्वयोः॥ २६॥

यद्यपि कर्तृत्व–नियोज्यत्वयोः शेषशेषित्वभेदादेव विशेषः, तथाऽपि न नियोगं प्रति नियोज्यस्य शेषिता, तस्य सर्वप्रधानत्वात्। यथाऽऽह 'नियोगसिद्धौ सर्वं तदनुगुणमिति केन नेष्यते' इति। किं तर्हि कृतिम् प्रति शेषित्वं नियोज्यत्वम्। तां च प्रति शेषत्वं कर्तृत्वमिति। तेनात्मार्थकृतिव्याप्यं कार्यं बुध्यमानोऽपि नियोज्य इत्युच्यते। न तु कार्यमेवात्मार्थम्। तेन स्वर्गकामो यजेतेत्यस्य कोऽर्थः? यागावच्छिन्नं स्वर्गकामार्थकृतिव्याप्यं कार्यमित्यर्थः। तेन कार्यं प्रत्युभयोः कर्तृनियोज्ययोः शेषत्वे सत्येव कृतिं प्रति शेषशेषिभावादसङ्करः–इति।

## अस्मदुक्तरीत्या स्वर्गकामस्य पूर्वोत्तरपक्षयोरन्वयो वाच्य इति कथनम्।

सोऽपि वृथैव क्लिश्यति। तथा हि—

कृतिर्हि कार्यशेषत्वान्नान्यशेषत्वमश्नुते।
कार्ये तच्छेषभूतेऽस्यास्तद्वारेण भवेदिदम्॥ २७॥

न खलु नियोगशेषभूता अभिधानत एवावगम्यमाना कृतिः पुरुषशेषभावमनुभवितुमर्हति। अन्यार्थस्यान्यार्थतानवकल्पनात्। यदि तु तत्कार्यं पुरुषशेषो भवेत्, ततस्तद्द्वारेण कृतेरपि संस्काराणामिव कारकद्वारेणाऽपूर्वशेषता पुरुषशेषत्वं भवेत्, नान्यथा। नन्वसत्यपि नियोगस्य पुरुषशेषत्वे फलस्य तच्छेषत्वात्तस्यापि तथैव कृत्या व्याप्यत्वात्तद्वारेण कृतेः पुरुषशेषता भविष्यतीति। का वार्ता नैमित्तिक–निषेधाधिकारयोः। न हि तत्र फलान्तरमस्ति, यद्द्वारेण कृतेः पुरुषशेषता भवेत्। अस्ति च

---

भवेन्नाम नियोज्यत्वमपि कर्तृत्वमेव। भवतु च शेषशेषिभाव एव तयोर्भेदः। तथापि नियोगप्राधान्यस्य न विलय इति शङ्कामनुवदति–यस्त्विति। केन नेष्यतेनाभ्युपगम्यत इत्यर्थः। अयं भावः–ममेदं कार्यमित्यस्य नायमर्थः मदर्थमिदं कार्यमिति। किं तु मदर्थकृतिसाध्यमिति। ततश्च कृतिं प्रति शेषित्वं पर्यवस्यति। न तु कार्यं प्रति। इदमेव नियोज्यत्वम्। कर्तृत्वं तु धात्वर्थावच्छिन्नकृतिनिष्पादकत्वमात्रम्। ततश्च तां प्रति शेषत्वमेव। एवं चोभयोर्भेदोऽपि भवति। नापि नियोगप्राधान्यहानिरिति।

नियोगं प्रति शेषभूतायाः कृतेः पुरुषं प्रति शेषत्वं न घटत इति परिहरति–सोऽपीति। अन्यार्थस्येति। उत्पत्तावेवान्यशेषतयाऽवगतस्य तं विहायान्यशेषतयाऽन्वयो न घटत इति भावः। तद्द्वारेण तु अन्यशेषत्वमपि दूरनिरस्तमित्याह–यदि त्विति। संस्काराणामिति। अवहननादीनां श्रुतव्रीह्यादिद्वारा परित्यागेनैव दर्शपूर्णमासापूर्वशेषत्वमित्यर्थः। शङ्कते—नन्विति। तथैव कृतिव्याप्यत्वादिति। नियोगफलयोरेकमेव साध्यत्वं व्यासज्य वर्तत इति एकैव कृतिरुभाभ्यां संबध्यत इत्यर्थः। एवंविधं शेषत्वं न सर्वत्र सिध्यतीति परिहरति–का वार्तेति।

तत्रापि निमित्तवान्निषिध्यमानक्रियाप्रवृत्तश्च नियोज्यः। स कथमात्मार्थकृतिव्याप्यं कार्यं जानीयात्। तस्मान्नियोगरूपस्यापि कार्यस्य पुरुषार्थत्वमवश्यमभ्युपेयम्।

युक्तं चैतत्। न ह्यस्वार्थं कश्चिदपि ममेदं कार्यमित्यवगन्तुमर्हति। यदि नैवम्, फलस्यापि तर्हि न पुरुषार्थता सिध्येत्। तस्यापि हि ममेदं कार्यमित्येतादृश्येवावगतिः। तस्मादकामेनापि कार्यमेव प्रति पुरुषस्य शेषित्वम् नियोज्यत्वम्, शेषत्वं च कर्तृत्वमित्येव विवेको भणितव्यः। एवञ्च संबोधनविभक्तिर्नियोज्ये प्रमाणमित्ययुक्तम्। 'अग्नीदग्नीन्विहरे'त्यादिष्वग्नीदादीनां कृतिम्, कार्यं वा प्रति शेषित्वाभावात् अशेषिणश्चानियोज्यत्वात्।

**कार्यं विध्यर्थ इति पक्षे नियोज्योऽपेक्षितः, प्रवर्तनाविध्यर्थः इति पक्षे प्रवर्त्योऽपेक्षित इति विचारे उभयपरत्वे गौरवात् नियोज्यपरत्वमिति शंका।**

'आह च—विध्यर्थे कार्यरूपे स्याच्छेषित्वेन नियोज्यता।
प्रवर्तनात्मकत्वे तु प्रवर्त्यस्य नियोज्यता ॥ २८ ॥

प्रवर्तनारसो ह्यहमिदं कुर्यामित्येवं विधान्तःसंकल्पमूलात्मा विधिरिति भवतां सिद्धान्तः। स च प्रवर्त्यं भाव्यमिव भावना अपेक्षते। प्रवर्त्यश्च नियोज्यः। तत्र

निमित्तवानिति। 'यावज्जीवं जुहोती'त्यादिषु स्ववाक्यश्रुतजीवनादिविशिष्ट एव नियोज्यः। 'न निहन्यान्न भक्षयेदित्यादिषु तु फलस्याश्रवणात् नियोगस्य स्वतः कार्यतया फलानपेक्षत्वात् नियोज्यविशेषणस्याप्यत्रैव लाभात् हननादिप्रवृत्त एव सामर्थ्यान्नियोज्यो लभ्यत इत्यर्थः। एतादृशस्थले कृतेर्नियोगद्वारेणैव पुरुषशेषत्वं वक्तव्यमिति, नियोगस्यापि तच्छेषत्वं बलादापतितमित्याह—तस्मादिति। पुरुषार्थत्वं—पुरुषशेषत्वम्। नियोज्यस्वभावपर्यालोचना कार्यस्य पुरुषशेषत्वमागदितम्। इदानीं कार्यस्वभावपर्यालोचनेनापि तस्य पुरुषशेषत्वं वक्तव्यमित्याह—युक्तं चैतदिति। साक्षात् प्रयोजनतया, तत्साधनतया वा यन्न पुरुषशेषः। तस्य कार्यप्रतीत्यालम्बनत्वं न युज्यत इत्यर्थः। यदि नियोगस्य पुरुषशेषत्वमन्तरेणापि कार्यप्रतीत्यालम्बनत्वमुच्येत, तदा फलस्यापि तदन्तरेणैव कार्यबुद्धिविषयत्वं स्यात्। ततश्च फलद्वारा नियोज्यस्य कृतिं प्रति शेषित्वमुपपद्यत इति, युक्तिरयुक्ता स्यादित्याह—यदि नैवमिति। तस्यादस्मदुक्तक्रमेणैव पूर्वपक्षसिद्धान्तयोरन्वयो वाच्य इति निगमयति—तस्मादिति। एवमङ्गीकारेऽपि दूषणान्तरान्न मोक्ष इत्याह—एवं चेति। शेषित्वाभावादिति। विहरणादिष्वाग्नीध्रादीनां कर्तृत्वेनैवान्वयोऽभिमत इत्यर्थः।

स्वमते स्वर्गकामशब्दस्य शेषिभूतपुरुषसमर्पणपरतया फलपरत्वमुक्तम्। पराभिमतनियोज्यसमर्पणपरतया केवलपुरुषपरत्वं तु निराकृतम्। इदानीमाचार्यमतमाश्रित्यापि फलपरत्वात् वरं पुरुषपरत्वमेवेति शङ्कते—आहेति। विधिविवेके मतद्वये कार्यं प्रवर्तना च विध्यर्थ इत्युक्तम्। तत्र कार्यस्य विध्यर्थत्वे तदर्थं तत्कार्यं तादृशशेषिभूतपुरुषसमर्पकत्वं स्यादित्यर्थः। द्वितीयमर्धं व्याचष्टे—प्रवर्तनारसो हीति। अहमेतत्कुर्यामिति य आन्तरो मानसः संकल्पः, तस्य मूलं-कारणम्। तदेवात्मा स्वरूपं यस्यासावेवंविध इत्यर्थः। अपेक्षत इति। यथा भावयेदित्युक्ते किमिति भाव्यमपेक्षितम्। तद्वत् प्रवर्तयेदित्युक्ते कमिति प्रवर्त्योऽपेक्षित इत्यर्थः।

१. आहेति मु. पु. पा.।

स्वर्गकामशब्दः किं भावनापेक्षितं भाव्यं समर्पयेत्, आहोस्विद्विध्यपेक्षितं नियोज्यम्, उभयपरत्वानुपपत्तेर्वैरूप्यापातादन्यतरेणवान्यतरसिद्धेः। न हि स्वर्गफले कर्मण्यतदर्थी नियोज्यः संभवतीति, फलेन नियोज्यसिद्धिः। स्वर्गकामस्य चान्यफले कर्मणि नियोज्यत्वायोगान्नियोज्यविशेषणस्य फलत्वसिद्धिः। [1]तत्र स्वर्गकामशब्दस्य पुरुषवचनत्वान्नियोज्यपरतैव युक्तेति।

## कार्य-प्रवर्तनाभ्यां नियोज्य-फलयोरपेक्षणेऽपि योग्यताक्रमेण फलपरत्वमिति तन्निरासः।

उच्यते—विधेरपेक्षितस्सत्यं नियोज्यो न त्वसौ तदा।
अवधारयितुं शक्यः फलस्य त्वस्ति योग्यता[2] ॥ २९ ॥

यद्यपि फलवन्नियोज्योऽपेक्षितः, तथाऽपि नासावनुष्ठेयवर्गावधारणात्प्रागवधारयितुं शक्यते। न हि फलकाममात्रस्य नियोज्यत्वम्। कस्य तर्हि? अनुष्ठानशक्तियुक्तस्य। सा चानुष्ठेयावगमाधीननिरूपणा। अङ्गप्रधानयुक्तैव च क्रियाऽनुष्ठेया, तस्याश्च यथा विधिरंशत्रयसम्बन्धोत्तरकालमेव भवति, न प्रथमम, अयोग्यत्वात्। तथा नियोज्योऽपि। फलं तु प्रागेवांशान्तरसम्बन्धादवगन्तुं शक्यत इति, तत्परमेवेदम्। अवगते च तस्मिन्नंशान्तरे चावधारिते सर्वविशेषणविशिष्टायां भावनायां

---

ननु विधिवत् भावनापि विध्यर्थ एव। तस्याश्च भाव्यमाकाङ्क्षितमिति, तत्परत्वमस्य शब्दस्य स्यादित्याशङ्क्य उभयोरुभयमाकाङ्क्षितम्। तत्र किंपरत्वमाश्रयितुं युक्तमिति विचारयाम इत्याह—तत्रेति। तत्रोभयसमर्पकत्वमस्य निराकरोति—उभयेति। फलपरत्वे शेषिभूतस्य पुरुषस्य भावनां प्रत्युद्देश्यत्वानुवाद्यत्वप्रधानत्वानि स्युः। प्रवर्त्यपरत्वे तु भावनाशेषभूतपुरुषस्योपादेयत्वविधेयत्वाङ्गत्वानि स्युरिति वैरूप्यं प्रसज्येत इत्यर्थः। यद्वा सकृत् श्रुतस्योभयपरत्वानुपपत्तिरित्यर्थः।

उभयपरत्वानुपपत्तौ युक्त्यन्तरमप्याह—अन्यतरेणेति। तत्र फलपरत्वे नियोज्यसिद्धिमुपपादयति—न हीति। यागेऽतिदुःखरूपे स्वतः प्रवृत्त्यभावात् फलरागवत एव तत्र प्रवृत्तिः सिध्यतीत्यर्थः। नियोज्यपरत्वे फलसिद्धिमाह—स्वर्गकामस्येति। स्वर्गं कामयमानस्य प्रवृत्तिः साक्षात् स्वर्गे, तत्साधने वा संभवेत्। नान्यत्र। ततश्च तस्य यागे प्रवृत्तिर्यागस्य स्वर्गसाधनत्वं, स्वर्गस्य च तत्फलत्वमन्तरेण न सिध्यतीति, स्वर्गस्य फलत्वं सिध्यतीत्यर्थः। एवमन्यतरमात्रपरत्वेऽवश्याश्रयणीये नियोज्यपरत्वमेवाश्रयणीयमित्याह—तत्रेति।

विधिभावनाभ्यां नियोज्यफलयोरपेक्षितत्वेऽपि स्वर्गकामशब्दस्य योग्यताक्रमेण प्रथमं फलपरत्वमेवाश्रयणीयम्। पश्चात्तु नियोज्यपरत्वमिति परिहरति—उच्यत इति। अनुष्ठेयवर्गः-

---

१. तन्नेति मु. पु. पा.।

२—फलस्य त्वस्ति योग्यतेति—विधिर्भावनां विधत्ते, न शुद्धाम्। किमाद्यंशेषु परिपूरितेषु प्राच्योदीच्यांगविशिष्टा भावनाऽनुष्ठानयोग्या भवति, तदा सर्वांगानुष्ठानसामर्थ्ययुक्तो नियोज्यत्वेनान्वेतीति क्रमोऽवश्यं समाश्रयितव्यः। ननु प्रथममेव नियोज्यस्यान्वयः। अतो योग्यत्वात्प्रथमं स्वर्गकामादिपदं फलसमर्पकमेव, ननु नियोज्यसमर्पकमित्याह—योग्यतेति।

तत्फलकामं तदनुष्ठानसमर्थं पुरुषं विदधद्विधिर्नियुङ्क्ते। आह च 'अङ्गप्रधानवत्यां च भावनायां युगपत्पुरुषनियोगः' इति।

## स्वर्गकामपदेन प्रथमतो नियोज्यस्य प्रतीतावपि कर्त्रधिकरणन्यायेन पुरुषस्य प्राप्तत्वात् विशेषणीभूतफलप्रतिपादनमिति कथनम्।

किञ्च नियोज्यान्वयेऽपि न पुरुषपरत्वं कामशब्दस्य, किं तु फलविशेषपरत्वमेव। तथाहि विधित एवावगम्यते—अस्ति हि कश्चिदिह व्यापारे नियोज्यः, स चासौ योह्यस्य व्यापारस्य शेषी। न ह्यस्वार्थे व्यापारे कश्चिन्नियोक्तुं शक्यते, स एव शेषी, योऽस्य भाव्यं फलविशेषं भोक्तुमभिलषतीत्येवमवगते, फलविशेषमात्रे चानवगते, तत्परत्वमेव स्वर्गकामशब्दस्य भवति। तत्र किं नियोज्यत्वेन स्वार्थमभिदधत्परः, उत शेषित्वेनेति चिन्तायाम् अशक्यावगमनियोज्यत्वपरित्यागेन शक्यप्रतिपत्तिशेषित्वप्रतिपादनमेव वरम्। न हि नियोज्यत्ववच्छेषित्वं शक्तिविशिष्टस्य। अनुष्ठानोपयोगिनी हि सा, न शेषित्वोपयोगिनी, अनुष्ठातुरेव शेषित्वात्। शक्तानामनधिकारो राजसूय इवा राज्ञः न हि तत्र राजत्वमनुष्ठानाधिकारोन्तःपाति, तद्वच्छक्तेरप्यधिकाररूपशेषित्वाननुप्रवेशाच्छक्यत एवाङ्गनिरूपणस्य पुरस्तादेव शेषित्वं निरूपयितुमिति, शेषित्वेनैव स्वर्गकामस्यान्वयः। स च फलविशेषप्रतीतिपर इति। तस्मात्स्वर्गादेः फलत्वेनान्वयात् तत्साधने कर्मणि पुरुषस्य सिद्धोऽधिकार इति, तद्विशेषनिरूपणमारब्धव्यम्।

---

अङ्गवर्गः। क्रिया-भावना। विधिः विदधन्नियुङ्क्त इति। अयं भावः—क्रियाकारकभावेनान्वयस्यैव प्रातीतिकत्वात्, प्रथमं यागभावनायां स्वर्गकामस्य कर्तृत्वेनान्वयः। ततो विधियुक्ताया भावनायाः फलाकाङ्क्षायां यदा फले विनियोगविधिना विनियोगः तदा स एव शेषिभूताधिकारित्वेनान्वेति। यदा तु अंशत्रयेषु पूरितेषु सर्वाङ्गविशिष्टाया भावनायाः प्रयोगविधिना प्रयोगः, तदा स एव सर्वाङ्गानुष्ठानसामर्थ्ययुक्तो नियोज्यतयान्वेतीत्येवमेव क्रमस्थितिरवश्याङ्गीकार्या। न तु प्रथममेव नियोज्यान्वयः। ततश्च योग्यत्वात् प्रथमं शेषिभूताधिकारिरूपकर्तृपुरुषप्रतिपादनद्वारा फलपरत्वमेव। न तु नियोज्यपरत्वमिति। युगपदिति। विनियोगस्त्वङ्गानां निरूढं प्रत्यनिरूढस्य शेषतया विनियोगात् क्रमिकः। प्रयोगस्तु युगपदित्यर्थः।

इदानीं प्रथमत एव नियोज्यप्रतिपादनेऽपि विशेष्यांशस्य पुरुषस्य प्राप्तत्वात् विशेषणभूतफलपरत्वमेवेति प्रतिपादयति—किं चेति। व्यापारे-भावनायाम्। नियोज्यपरत्वमाश्रित्यापि फलपरत्वमुपपादितम्। तत्तु न युक्तम्। किं त्वधिकारिपरत्वमेव युक्तमित्याह—तत्र किमिति। अधिकारित्वस्य वा कथं शक्यप्रतिपत्तित्वम्? तत्राह—न हीति। फलत्वस्याकाङ्क्षावशात् प्रथमत एव प्रतीतेरित्यर्थः।

ननु यदि शक्तिर्नाधिकारानुप्रविष्टा तर्ह्यशक्तानामनधिकार इति मीमांसकप्रसिद्धिः कथमित्याह—अनुष्ठातुरिति। तस्यैव प्रथमं शेषिभूतस्य पश्चादनुष्ठातृत्वात् तद्विशेषणं तद्विशेषणतयोपचर्यत इत्यर्थः। दृष्टान्तमुपपादयति—न हीति। राजत्वं शेषभूतकर्तृत्वोपयोगीत्यर्थः। सर्वाङ्गोपदेशोत्तरकालनिरूपणीयायाः शक्तेः शेषित्वानुपयोगेन तस्य प्रथमत एवावगन्तुं योग्यतया तादृशस्य पुरुषप्रतिपादनद्वारा स्वर्गकामशब्दस्य फलपरत्वमुपसंहरति—तद्वदिति। अधिकारं निगमयति—तस्मादिति।

## तिर्यगधिकरणपूर्वोत्तरपक्षयोर्वर्णनेन शक्तिरपि अधिकारिविशेषणमिति प्रतिपादनम् ।

तत्र प्रधानवाक्ये ऽविशेषेण सर्वेषामधिकारावगमात्तदनुसारेणाङ्गानाम् विनियोगाद्यो यच्छक्नोति कर्तुम्, स तत् कुर्यादिति ।

तद्यथा—द्रव-संहत-मांसानामवदानेऽवधारिते ।
स्रुवेणावद्यतीत्येतत्सामर्थ्याद् द्रवगोचरम् ॥ ३० ॥

तथा—स्वर्गकामशब्देन सर्वेषामधिकारेऽवगते सति, अङ्गविधयस्समर्थगोचरा भवन्ति, तस्मात्तिर्यगादीनामप्यधिकार इत्युक्ते, अभिधीयते । नित्यवदङ्गानामन्वयावगमात् पाक्षिकत्वे तद्बाधप्रसङ्गात् अङ्गोपेतस्यैव फलसाधनत्वम्, नान्यादृतस्य ।

## एकार्थत्वेनांगानां विकल्पशंका, तत्र निरपेक्षत्वविशेषणप्रदानेन तत्परिहारश्च ।

नन्वेकार्थत्वादङ्गानां व्रीहियववद्विकल्पे सति, येन केन चिदङ्गेनापि युक्तं प्रधानं फलसाधनं स्यात् । मैवं वोचः । न ह्येकार्थत्वमात्रं विकल्पे हेतुः, किं तर्हि निरपेक्षाणामेकोपकारसाधनत्वम् । न च समिदादीनामेकार्थत्वं परस्परनिरपेक्षैस्समिदादि-

---

अङ्गानुष्ठानशक्तियुक्तस्याधिकार इत्युक्तम् । तद्विशेषमेव दृढीकर्तुं तिर्यगधिकरण-(पू. मी ६.१.२) मारचयन् तत्र पूर्वपक्षमाह—तत्रेति । अविशेषेणेति । शक्ताशक्तादिविशेषानादरेण सर्वेषां स्वर्गकामिनामित्यर्थः । तदनुसारेणेति । प्रधानं सर्वाधिकारमेव प्रतीयते । अतो विष्णुक्रमाद्यङ्गोपदेशस्तु तत्तदनुष्ठानसमर्थमात्रे संकोचनीय इत्यर्थः । तत्र दृष्टान्तमाह—तद्यथेति । 'हस्तेनावद्यति स्रुवेणावद्यति, स्वधितिनावद्यती'त्यविशेषेण हस्त-स्वधिति-स्रुवा अवदानशेषतया विहिता अपि पुरोडाश-मांस-द्रवद्रव्येषु सामर्थ्यात् व्यवस्थिताः । तद्वच्छक्तेष्वेवांगानां व्यवस्था स्यात् । ततश्चाशक्तानां तदनुष्ठानेऽपि तदतिरिक्ताङ्गोपेतेन प्रधानेनैव फलं सिध्यतीत्यर्थः । तिर्यगादीनामिति । तिर्यगादीनामित्युपलक्षणम् । अन्धबधिर-पङ्ग्वादीनामित्यर्थः ।

सिद्धान्तमाह—अत्राभिधीयत इति । किं प्रधानमात्रेणैव फलसिद्धेः सर्वाङ्गोपसंहार-नियमाभावात् अधिकारोऽभिधीयते, उत प्रधानवाक्ये सर्वेषां फलकामिनामधिकारावगमात् तद्विरोधादनियम इति विकल्प्याद्यं दूषयति—नित्यवदिति । यदि केवलस्यैव प्रधानस्य फलसाधनत्वं स्यात्, तदाऽङ्गाम्नानं व्यर्थं स्यात् । तस्मात् तदुपेतस्येति वाच्यम् । नापि सामर्थ्ये सति कदाचिदनुष्ठानार्थं तदाम्नानमिति वाच्यम् । वाशब्दाद्यभावेन नित्यवदाम्नानविरोधादित्यर्थः । ननु नित्यवदाम्नानेऽपि अङ्गानां क्रतूपकारलक्षणैकप्रयोजनसाधनत्वेन । पुरोडाशलक्षणैकप्रयोजनसाधनव्रीहियववत् विकल्पेनान्वयः स्यात् । ततश्च यत्किंचिदङ्गोपेतस्यापि फलसाधनत्वात् न सर्वोपसंहार इत्याशङ्कते—नन्विति । परिहरति—मैवमिति । नैकार्थ्यमात्रं विकल्पे हेतुः । अनेकैः प्रत्येकं समर्थैः समुच्चित्यापि एकप्रयोजनसाधनसंभवात् । किंतु नैरपेक्ष्ययुक्तमैकार्थ्यं तद्धेतुः । तच्च नैरपेक्ष्यं व्रीहियवादिषु वाशब्दादिभिः प्रतिपन्नम् । नाङ्गेषु तादृशः शब्दोऽस्ति । अतस्तेषां समुच्चय एव युज्यते । नतु विकल्प इति भावः । उपकारः—प्रयोजनम् । ऐकार्थ्यमप्यङ्गानां न संभवतीत्याह—न चेति । शब्दान्तराभ्यासादिभिः समिदाद्यङ्गयागजन्या-

विधिभिः पृथगेवावान्तरापूर्वाख्योपकारपरिकल्पनात्। यथा ऽऽह भाष्यकारः 'न च यत्समित्सम्बन्धेन क्रियते, तत्तनूनपात्सम्बन्धेने' शा. भा. पृ. ४७२ति।

**अवदानसाधनत्वेन विहितानां स्रुवादीनामवदेयेषु संकोचः, तथाऽङ्गानामनुष्ठानसमर्थमात्रे संकोच इति शंकानिरासपूर्वकं प्रधानवाक्यादवगतस्याधिकारस्यसमर्थपुरुषे संकोचः इति तिर्यगाधिकरणसिद्धान्तस्य निगमनम्।**

ननु च सर्वैरंशैरेक उपकारः क्रियत इति दर्शनम्। तत्कथमुपकारभेदाभ्युपगमः। सत्यमेक उपकारः। न तु तत्र नैरपेक्ष्यम्। यदि हि पूर्वप्रसिद्धमुपकारमुद्दिश्य तत्साधनत्वेन समिदादयो विधीयेरन् ततः सर्वेषाम् नैरपेक्ष्येण तत्साधनत्वावगमाद्विकल्पः स्यात्, न त्वेतदस्ति, तादर्थ्यमात्रेणाङ्गेषु प्रधानान्वितेषु पश्चादुपकारकल्पनादिति प्रागेवावेदितम्। तेनाष्टदोषदुष्टविकल्पपरिहारार्थं समुदिताङ्गविशिष्टप्रधानभावनाविधानात्सहैव सर्वेषामेकोपकारसाधनत्वेनाग्नेयादीनामिव फलसाधनत्वं समिदादीनामवगम्यते। येन यत्रैकार्थ्यम्, न तत्र नैरपेक्ष्यम्, यत्र नैरपेक्ष्यम्, न तत्रैकार्थ्यमिति, न विकल्पसंभवः–इति।

---

नामपूर्वाणामपि भेदावगमात् नाङ्गानामेककार्यहेतुत्वमित्यर्थः। अङ्गानामैकार्थ्याभावे भाष्यकारस्य संमतिमाह–यथाहेति। दर्शपूर्णमासयोः समिद्यागसंबन्धेन य उपकारो जायते, नासौ तनूनपाद्यागेन। किंतु अन्य एवेत्यर्थः। ननु सर्वैरङ्गैरखण्ड एक उपकारो जायत इति हि तान्त्रिकप्रसिद्धिः। तद्विरुद्धस्त्वङ्गानां भिन्नोपकारजनकत्वाङ्गीकार इति शङ्कते–नन्विति। परिहरति–सत्यमिति। सत्यमखण्ड उपकार एक एव। स तु क्षणविनश्वरैरङ्गैः संभूय साक्षात् संपादयितुं न शक्यत इति द्वारभूतावान्तरोपकाराः परैरङ्गीकार्याः। तेषु तु ऐकार्थ्याभावात् न विकल्पशङ्कावकाशः। अखण्डोपकारे तु ऐकार्थ्यसंभवेऽपि नैरपेक्ष्यासंभवात् न विकल्प इत्यर्थः। नैरपेक्ष्याभावमेवोपपादयति—यदि हीति। विधीयेरन्निति। एकैकमेवाङ्गमुपकारोद्देशेन पृथक् पृथक् यदि विधीयत इत्यर्थः। न त्वेतदस्तीति। उपकारप्रतिपादकशब्दाभावादित्यर्थः। पश्चादिति। पश्चात् कल्पनीयेनोपकारेण प्रथममङ्गानामन्वयो न युज्यत इत्यर्थः। प्रागेव तृतीयाध्याये प्रकरणविनियोगप्रतिपादनावसरे। उपकारकल्पनात्पूर्वमेव प्रधानेनैवाङ्गानामन्वयः तथापि समुच्चयसिद्धिस्तु कथं तत्राह—तेनेति।

अष्टदोषेति। विकल्पे ह्येकैकस्य पदार्थस्यानुष्ठानवेलायामितरस्य प्रामाण्यपरित्यागः, अप्रामाण्यस्वीकरणमिति दोषद्वयं स्यात्। तस्यैवानुष्ठानवेलायां स्वीकृताप्रामाण्यत्यागः, त्यक्तप्रामाण्यस्वीकार इति दोषद्वयम्। तथा पुनरपि इतरपदार्थानुष्ठानेऽपि दोषद्वयम्। अननुष्ठानेऽपि दोषद्वयमिति अष्टौ दोषा इत्यर्थः। सहैवेति। यावन्त्यङ्गानि प्रधानान्वितानि तेषां सर्वेषां तत्कारणोपकारजनकत्वं कल्पनीयमिति, समुच्चयः सिद्ध्यतीत्यर्थः। तत्र दृष्टान्तमाह—आग्नेयादीनामिति। यथा यागषट्कस्य फलसाधनत्वमन्योन्यसापेक्षं समुच्चित्य फलसाधनत्वं, तथा अङ्गानामप्युपकारसाधनत्वमित्यर्थः। विकल्पासंभवं निगमयति–तेनेति। अखण्डोपकारं प्रत्यैकार्थ्यम्। तत्र सापेक्षतैव। अवान्तरोपकारं प्रति तु नैरपेक्ष्यमस्ति। न

---

१—भिन्नत्वात्तयोः। अतो न विकल्पः, इति भाष्यमप्यनुसन्धेयम्।

व्रीहि-यवयोस्तु पुरोडाशप्रकृतित्वादेककार्ययोर्वाक्यद्वयेन निरपेक्षयोरवगमाद्युक्तो विकल्पः। तस्मात्साङ्गस्यैव फलसाधनत्वादनुष्ठानसमर्थस्यैवाधिकारः।

यत्तु प्रधानवाक्ये सर्वेषामधिकारावगमात्, तदनुरोधेनाङ्गानां समर्थविषयत्वमिति। तदयुक्तम्। विरोधाभावात्। न हि प्रधानवाक्येन सर्वेषामधिकारो निश्चितः। सामान्येन त्वसाववगम्यते। तत्रासति विशेषप्रमाणे सर्वेषां स्यात्। अङ्गानुरोधात्तु विशेषावगमान्न सर्वेषामसौ भवति। यत्र तु प्रधानवाक्यविरोधे नैमित्तिकाधिकारे वाक्येन सर्वेषामधिकारः[1] निश्चितः।

---

त्वैकार्थ्यम्। उभयं च समुदितं विकल्पहेतुः। न त्वेकैकम्। अतो नाङ्गानां विकल्प इत्यर्थः। व्रीहियवयोस्तु उभयमप्यस्तीत्याह—व्रीहियवयोरिति। तत्र प्रथमं पक्षं निगमयति—तस्मादिति।

प्रधानवाक्यविरोधादङ्गोपसंहारानियम इति द्वितीयं पक्षमनूद्य दूषयति—यत्त्विति। अविरोधमेवोपपादयति—नहीति। विशेषावगमादिति। स्वर्गकामशब्दः सर्वाङ्गोपसंहारशक्तस्वर्गकामविशेषे पर्यवस्यतीत्यर्थः। प्रधानवाक्यविरोधे तु अङ्गोपसंहारनियमो नास्तीत्याह—यत्रेति। तत्र वा कथं तद्विरोध इत्याशङ्क्य, तत्र निमित्तश्रुतिबलेनावश्यानुष्ठेयत्वप्रतीतेस्त-

---

१—अधिकार इति। अत्रेदं बोध्यम्—अधिरत्रोपर्यर्थकः, ततश्चाधिकारः—उपरिभावेनाऽवस्थितिः, उपरिभावेनावस्थितिः, स्वाम्यापरपर्यायः,॥ यो यस्य स्वामी, स तस्योपरिभवति, तथा च कर्मभिः पुरुषोऽधिक्रियत इत्यस्यायमर्थः—कर्मभिः स्वभूतैरुपरिभावेनाऽवस्थाप्यते—स्वामी क्रियते। यथोक्तं भाष्ये—'यद्यस्य स्वम्, तत्तमधिकरोति—स्वामिनं करोतीत्यर्थः शा. भा. इति। एवञ्चाधिकारः स्वाम्यम्-तच्च कर्मजन्यफलभोक्तृत्वम्। एवञ्च कर्मजन्यफलभोक्तृत्वप्रतिपादकत्वे सति विधिवाक्यत्वमधिकारविधेर्लक्षणमिति फलति, लक्षणसमन्वयप्रकारश्चेत्थम्। तथाहि—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यनेनविधिना स्वर्गमुद्दिश्य यागं विदधता यागकर्तुः-यागजन्यस्वर्गरूपफलभोक्तृत्वं प्रतिपाद्यते, अर्थात् प्रवर्तनाविध्यर्थवादे यागो मदिष्टसाधनम्, मत्कृतिसाध्यश्चेत्यनुमितम्, आक्षिप्तं वा, तदा मत्कृतिसाध्ययागजन्यफलभोक्ताप्यहं भविष्यामीति ज्ञातम्, तदपि विधिप्रमाणादेवेति कर्मजन्यफलसंबन्धबोधकविधिप्रमाणगम्यत्वाल्लक्षणसमन्वयः। एवं नित्यस्थले, नैमित्तिकस्थले च पापक्षयरूपफलभोक्तृत्वप्रतिपादकत्वात् विधित्वाच्च लक्षणसमन्वयो बोध्यः।

लक्षणघटकदलानां सार्थक्यवर्णनम्।

अत्र कर्तृत्वमधिकार इति स्वीकारे ऋत्विजामधिकारापत्तिस्स्यात्। अतस्तद्वारणाय फलभोक्तृत्वमिति विशेषणं देयम् ऋत्विजां कर्मकराणां फलभोक्तृत्वाभावान्न दोषः। तावन्मात्रोक्तौ श्राद्धादौ पित्रादेरधिकारः स्यात्। जातेष्टौ च पितुरधिकारो न स्यात्, अतः फलभोक्तृत्वसमानाधिकरणं कर्तृत्वमधिकारः इति वक्तव्यम्।

न चैवं वैश्वानरेष्टौ पितुः फलभोगाभावादधिकारो न स्यादिति शंकनीयम्। प्रवृत्तिप्रयोजकफल-तदिच्छान्यतरसमानाधिकरणं कर्तृत्वमिति विवक्षितम्। वैश्वानरेष्टौ फलस्य पुत्रनिष्ठत्वेऽपि मम पुत्रस्य फलं भवत्वितीच्छायाः-पितृनिष्ठत्वान्न दोषः। तथा श्राद्धे फलस्य पितृनिष्ठत्वेऽपि मम पितुः फलं भवत्वितीत्याकारकेच्छायाः पुत्रनिष्ठत्वेन नाधिकारो विहन्यते। फलेच्छासमानाधिकरणकर्तृत्वस्य विवक्षणे ऋत्विजामपि यजमानस्य फलं भवत्वितीच्छायास्स्वनिष्ठकर्तृत्वसमानाधिकरणत्वादधिकारस्स्यात् स्वामिने वा तदर्थत्वादित्यधिकरणे ३. २. १३।

तत्र यथाशक्त्यङ्गोपसंहारो भवत्येवेति दर्शितं यथाशक्तिनिर्णये। तस्मात्तिर्यगादीनाम्, शूद्राणामनाहिताग्नीनाम्, असमाधेयाङ्गवैकल्यानाम्, राजसूयादिषु च ब्राह्मणादीनामनधिकारः। अवदानन्तु द्रवादीनां विशेषरूपेणव तत्र विहितमिति, न वस्तुवशेन सङ्कोचनम्।

तस्मात्—यथाधिकारमङ्गानां विनियोगो न वर्ण्यते।
यथाङ्गविनियोगं स्यादधिकारस्य वर्णनम्॥ ३१॥

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रेण विरचितायां न्यायरत्नमालायामङ्गनिर्णये तृतीयः परिच्छेदः समाप्तः॥ ३॥



---

द्विरोध इति प्रागेवोपपादितमित्याह—तत्रेति। शूद्राणामध्ययनसंपादितविद्यारूपाङ्गवैकल्यादत्र्यार्षेयाणामार्षेयवरणाभावादनाहिताग्नीनामाहवनीयाद्यभावात् विकलाङ्गानां तु विष्णुक्रमाज्यावेक्षणाद्यङ्गराहित्यात्। ब्राह्मणादीनां राजसूयादिषु विशेषतो राजविधानादनधिकारो द्रष्टव्यः।

यस्तु हस्त-स्रुव-स्वधितीनामवदानमात्रशेषतया विहितानामपि सामर्थ्यमात्रात् यथा पुरोडाशाज्यमांसावदानेषु संकोचः, तद्वदङ्गानामपि तदनुष्ठानसमर्थमात्रेसंकोचात् न सर्वाधिकारत्वमिति यदुक्तं, तदपि दूषयति—अवदानमिति। तत्तत्प्रकरणेषु तेषां पाठात् प्रकरणवशेनैव तेषां व्यवस्था। नतु सामर्थ्यमात्रादित्यर्थः। स्रुव (वस्तु) वशेन स्रुवादिद्रव्यसामर्थ्यवशेन। तिर्यगधिकरणसिद्धान्तं निगमयति—तस्मादिति। यथाधिकारं-प्रधानवाक्यमात्रावगताधिकारानुसारेण। वर्णनमिति। प्रधानवाक्यावगतस्याधिकारस्य समर्थे पुरुषे संकोच इत्यर्थः।

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने अङ्गनिर्णये तृतीयः परिच्छेदः॥



---

व्यवस्थापनात्। अतस्तद्वारणाय प्रवृत्तिप्रयोजकेतिविशेषणम्, दक्षिणाप्राप्तिर्मेभूयादितीच्छायाः एव ऋत्विक्प्रवृत्तिजनकत्वेनोक्तविधेच्छायाः प्रवृत्तिप्रयोजकत्वाभावात्। तथा च प्रवृत्तिप्रयोजकफलतदिच्छान्यतरसमानाधिकरणकर्तृत्वप्रतिपादकत्वे सति विधिवाक्यत्वमधिकारविधेर्लक्षणमित्यनवद्यमिति बोध्यम्।

# अङ्गनिर्णये चतुर्थः परिच्छेदः

## सप्तमाष्टमाऽध्यायप्रतिपाद्यार्थः

### कर्तव्यार्थप्रतिज्ञा

## उपदेशातिदेशयोस्स्वरूपनिर्देशपूर्वकमुपदेशषट्-कातिदेशषट्कयोस्संगतिनिरूपणम्

एवं तावदौपदेशिकाङ्गसम्बन्धप्रकारस्सप्रमाणकः पूर्वाध्यायषट्कगोचरः प्रदर्शितः। इदानीमातिदेशिकाङ्गसम्बन्धविधा सप्रमाणोत्तरषट्कप्रतिपाद्याऽभिधीयते। द्विविधं हि शब्दजातमुपदेशात्मकमतिदेशात्मकं च। इत्थमिदं कर्त्तव्यमित्युपदेशः। तद्वदिदं कर्त्तव्यमित्यतिदेशः। तत्रानुपदिष्टधर्मकेष्वैन्द्राग्नयागादिषु अतिदेशेन तत्प्राप्तिस्सविशेषा सप्तमादिषु चिन्त्यते।

---

अतिदेशस्योपदेशपूर्वकत्वादुपदेशषट्कानन्तरमतिदेशषट्कारम्भ इति सङ्गतिं दर्शयन् षट्कद्वयार्थमाह—एवं तावदिति। षट्कद्वयभेदौपयिकतया तद्विचारविषययोरुपदेशातिदेशयोः स्वरूपमाह—द्विविधमिति। शब्दजातं—वेदजातम्। यस्मिन् वेदभागे सकलाङ्गविशिष्टप्रधानं पठ्यते, तत्रैव तावदङ्गविशिष्टं मयैतत्कर्तव्यमिति प्रतीतिर्जायते। स वेदभाग उपदेश इत्यर्थः। यत्र तु न सकलाङ्गोपदेशस्तत्राकाङ्क्षावशात् अन्यतः सिद्धान्यङ्गान्युपजीव्यानि। तत्र तद्वदिदं कर्तव्यमिति प्रतीतिर्जायते। ततः साक्षात्पठितो वा अध्याहृतो वा तत्प्रतिपादकशब्दोऽतिदेश इत्यर्थः। इत्यमुभयोरपि स्वरूपभेदमभिधाय, उत्तरषट्कप्रतिपाद्यमर्थं प्रतिजानीते-तत्रेति। सविशेषेति। सप्तमे सामान्यातिदेशचिन्ता। अष्टम-नवम-दशमेषु विशेषातिदेशचिन्तेत्यर्थः।

---

१—इत्थमिदं कर्तव्यमित्युपदेशः—तस्यायमाशयः। तथाहि—यस्मिन् वेदभागे सकलांगविशिष्टं प्रधानं समाम्नायते, तत्रैव तावदंगविशिष्टं मयैतत्कर्तव्यमिति बुद्धिरुत्पद्यते, स वेदभाग उपदेश इत्युच्यते।

यत्र न सकलांगोपदेशः, तत्राकांक्षावशादन्यतस्सिद्धान्यंगान्युपजीव्यानि, तत्र तद्वदिदं कर्तव्यमिति प्रतीतिर्जायते, ततस्साक्षात्पठितो वाऽध्याहृतो वा तत्प्रतिपादकश्शब्दोऽतिदेश इति। मूले संग्रहेणोक्तयोरुपदेशातिदेशातिदेशयोस्स्वरूपं विवृतमिति बोध्यम्।

२—अयमधिकृत इत्थं कुर्यादित्याकारकोपदिष्टपदार्थविधानानन्तरमेव तद्वत् कुर्यादित्यतिदेशस्संभवतीति मत्वा, पूर्वोत्तरषट्कयोरुपदेशातिदेशनिरूपणपरयोरुपजीव्योपजीवकभावरूपा संगतिः। यथोक्तं भाष्यकृता—

पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनामितिकर्तव्यता चिन्तिता, उत्तरेणेदानीमविहितेतिकर्तव्यताकेष्वैन्द्राग्नादिषु चिन्तयितुमिष्यते शा. भा. पृ. १५२२ इति।

अत्रेदं बोध्यम्—पूर्वषट्के प्रकृति-विकृतिसाधारण्येनोपदेशमात्रं विचारितम्। उत्तरषट्के तत्साधारण्येनातिदेशविचारः करिष्यत इत्येव वक्तव्यं भवति, अन्यथा तृतीयचतुर्थाधिकरणे

## धर्माणां सांकर्येणातिदेशानारम्भपूर्वपक्षः ।

तत्र प्रथमं तावदुपोद्घातत्वेन व्यवस्था धर्माणां प्रतिपाद्यते । तस्यां हि सत्यामतिदेशविचारः कर्त्तव्यो, नान्यथेति । तत्र दर्शपूर्णमासादिप्रकरणपठिताः प्रयाजादयः सर्वयागेष्वेवोपदेशेन सम्बन्धं लभन्ते । इतिकर्त्तव्यता हि करणानुग्राहिणी तेनैव सम्बन्धमर्हति । न च तद्विधीयमानं फलं प्रतीतिकर्त्तव्यतया संगन्तुं क्षमते । वैरूप्या-

---

तत्रातिदेशोपोद्घाततया सप्तमाद्याधिकरणमवतारयति—तत्रेति । तस्योपोद्घातत्वमुपपादयति—तस्यां हीति । धर्माणां क्वचित् प्रतिनियतत्वे खलु ततोऽन्यत्रातिदेशसिद्धिः । अनियतत्वे तु तेषां सर्वसाधारणतया सर्वत्रोपदेशेनैव प्राप्तेरतिदेश एव न स्यादिति तद्व्यवस्थायास्तदुपोद्घातत्वमित्यर्थः । तत्र धर्माः पारिप्लवाः, क्वचित् व्यवस्थिता वेति प्रधानविचारः । तदर्थं च किं तेषां करणेनान्वयः, उत फलभावनयेति । तत्र पूर्वपक्षमाह—तत्रेति । तेनैवेति । करणोपकारकत्वादङ्गानां तेनैवान्वयो वाच्यः । न तु भावनयेत्यर्थः । अस्तु करणेनैवान्वयः । तथापि कथं पारिप्लवत्वमित्याशङ्क्य, किं फले विधीयमानेन करणेन, उत विहितेनेति विकल्प्याद्यं दूषयति—न चेति । फलं प्रति करणस्योपादेयत्वविधेयत्वशेषत्वानि स्युः । अङ्गानि प्रति तु उद्देश्यत्वानुवाद्यत्वप्रधानत्वानीति विरुद्धत्रिकद्वयमापद्यत इत्यर्थः । द्वितीये तु पारिप्लवत्वमेव

---

सर्वपृष्ठेष्टावप्रत्यक्षधर्मकायां स्विष्टकृदर्थं प्रतिकर्म भेदेन अवदेयम्, अथवा सकृदुत्तरार्धादवदेयमिति विचारितं दृश्यते, तथा तत्रैवाष्टमपादे विशेऽधिकरणे प्रत्यक्षधर्मके श्येने विचारः क्रियते, एवमुत्तरषट्केऽपि प्रत्यक्षधर्मकेषु दर्शपूर्णमासादिषु भूयसो विचारस्य दर्शनात् ।

तथा तन्त्रावाप–प्रसंगा उपदिष्टातिदिष्टपदार्थसाधारणा इति पूर्वषट्के यत्र क्वापि विचारयितुं योग्याः विशेषतश्च प्रयोगविशेषविचारात्मकत्वेन चतुर्थ–पञ्चमयोरुभयोरेव तेषामुचितं निरूपणं कर्तुम् । एवं दधिहोमशब्दस्य नामधेयत्वविचारः प्रथमचतुर्थे संगतः ।

तथापि अतिदिष्टपदार्थविषयत्वेनोत्तरषट्के, विशिष्यातिदिष्टपदार्थायत्तविचारात्मकत्वेन तदुभयाधीनतयाऽन्ते कृतमिति । अत एवोक्तं मिश्रैः—अतिदेशविचारश्च सप्तमादिभिर्दशमान्तैस्समाप्तः । सांप्रत्युपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसंगादेकादशे तन्त्रावापचिन्तया चिन्त्यते । शा. दी. पृ. ७९३, इति ।

एवञ्च प्रमाणस्य त्वेवंविधविशेषनियामकाभावात् सर्वस्यापि प्रमाणाधीनसिद्धिकतया सर्वोपजीव्यत्वाच्चादौ निरूपणमिति वैषम्यम् ।

सर्वपृष्ठाया'मुत्तरार्धात् 'स्विष्टकृते समवद्यती'ति यद्यप्ययमुपदेशार्थविचारः प्रकृतावपि संभवति, तथाप्युभयथापि प्रकृतावनुष्ठानसाम्यात् तत्रानुपयुक्त इति सर्वपृष्ठास्विष्टकृतौ कृतः ।

एवमुत्तरषटके प्रकृतिविषयविचारोऽपि अतिदेश-तत्प्रसंगागत एवेति ।

अयमत्रार्थसंक्षेपः । तथाहि—इदंच षट्कद्वयार्थकथनं प्रायिकाभिप्रायमिति ज्ञेयम् । तेनोपदेशातिदेशसाधारणस्य प्रमाणस्य पूर्वस्मिन् षट्के विचारेऽपि नानुपपत्तिः । नवा तन्त्र–प्रसंगयोरुपदेशातिदेशसाधारणयोरुत्तरषट्के विचारेऽपि न काप्यनुपपत्तिः । प्रायेणोपदेशप्रमाणनिरूपणपरस्य पूर्वषट्कस्य, प्रायेणातिदेशप्रमाणनिरूपणपरोत्तरषट्कं प्रति हेतुत्वात् हेतुहेतुमद्भावसंगतिरिति ।

पत्तेः। तस्माद्यागे फलं प्रति विहिते सत्यनुमितेन वाक्येन यागमनूद्य धर्मा विधीयन्ते। ततश्चाविशेषात्सर्वेष्वेव यागेषु विहिता भवन्ति। ननु 'प्रकरणाम्नानानुमितेन वाक्येन प्रकृतस्यैव यागस्यानुवादात्कथं पारिप्लवत्वम्। नैष दोषः। प्रकरणाम्नानादपि यजिशब्दस्यैव प्रधानानुवादकस्य परिकल्पनात्। तेन च स्वशक्त्या सर्वयागानामनुवादात्।

---

पर्यवसितमित्याह—तस्मादिति। यागेकरणे। अनुमितेनेति। प्रकरणस्य वाक्यानुमापकतया तदनुमितेन प्रयाजादिभिर्यागं भावयेदित्येवंविधेनेत्यर्थः। अविशेषादिति। सर्वेषामपि यागत्वाविशेषात् तावन्मात्रस्यैवानुवाद्यत्वादित्यर्थः। शङ्कते—नन्विति। अनुमीयमानवाक्येपि प्रकृतयागानुवादकतया किं यागशब्दमात्रमध्याह्रियते, उत दर्शपूर्णमासादिनामधेयेन स्वर्गादिफलेन वा विशेषितो यागशब्द इति विकल्प्याद्ये पारिप्लवस्तदवस्य इति परिहरति—नैष दोष इति। द्वितीयमाशङ्कते—यदिति। तत्प्रयाजादिभिरुपकृत्येत्येवं वाक्यं कल्प्यते चेदिति शेषः। परिहरति—एवमिति। उद्देश्यविशेषणस्य विवक्षितत्वे, तस्याप्युद्देश्यत्वात् प्रत्युद्देश्यं वाक्यपरिसमाप्तेर्वाक्यभेदप्रसङ्गात् तस्य विवक्षा न संभवतीत्यर्थः।

---

तथा च सर्वेषामध्यायानां प्रमाणलक्षणाधीनत्वादादौ विध्यर्थवादमन्त्रस्मृतिशिष्टाचारनामधेयवाक्यशेषसामर्थ्यरूपप्रमाणनिरूपणमकारि। शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैष्षड्भिः प्रमाणैरुत्पत्तिविधिव्यापारनिरूपणेन कर्मभेदः प्रत्यपादि। अत्र कर्मशब्दो भावनावाचीति न प्रस्मर्तव्यम्। विनियोगविधिव्यापारनिरूपणेन श्रुति-लिंग-वाक्य-प्रकरण-स्थान-समाख्याभिश्शेषत्व-परार्थत्वादिशब्दप्रतिपाद्यमंगत्वं सबलाबलं न्यरूपि। तदनन्तरं शेषशेषिगोचरप्रयोगविधिव्यापारनिरूपणेन क्रत्वर्थ-पुरुषार्थविचारमुखेन प्रयुक्तिर्व्यचारि।

ततश्च प्रयोगविशेषक्रमश्च श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभिः प्रत्यपादि। ईदृशैर्भेदाभेद-शेषशेषि-प्रयोजकाप्रयोजकैरेवं क्रमयुक्तैः कर्मभिः कोऽधिक्रियत इति विचार्य, अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो यजेतेत्यधिकारी निरणायि।

अष्टमाध्याये करिष्यमाणस्य विशेषविचारस्यातिदेशसामान्यसिद्धयधीनत्वात् प्रत्यक्षवचन-नाम चांदनालिंगै (कल्पितवचनै) रतिदेशसामान्यं सप्तमे विवेचितमतिदेशसामान्यलक्षणप्रदर्शनपूर्वकम्। तथा च सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति सामान्यतः प्रतिपाद्यते। अष्टमेन 'यस्य लिंगमर्थसंयोगादि' मी. द. ८—१—२ त्यादिना यो यस्य यतश्चे ति विशेषातिदेशो निष्कर्षितः। मन्त्र-साम-संस्कारोहैश्चेत्थं प्रयोक्तव्या इति नवमेन व्युदपादि। दशमेनाऽतिदिष्टानां पदार्थानां बाधाभ्युच्चयानुनिष्पादिनी अंगानामियत्तोपापादि। इयत्ताप्रसंगेनैकादशेऽध्याये प्रयोगेयत्ता प्रत्यपादि। तस्यामेव सर्वत्र प्राप्तायां तदपवादत्वेनान्यादृशीयत्ता प्रसंगादपि भवतीत्यन्यादृशं प्रयोगपरिमाणं द्वादशेन कृतमिति ज्ञेयं विज्ञैः।

१—अत्रेदं बोध्यम्—सप्तमाद्ये मिश्रैरयमर्थो विवृतः। केन पुनःकरणमुद्दिश्यते इत्याशंक्य, केचिदाहुः प्रकरणाम्नानानुमितेन वाक्येनेतयादिनाऽयमर्थ उक्तः। तेन यजिरेवात्र कल्प्यः—इति।

भाष्यानुसारिणस्तु 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति वाक्यं कल्पकम्। अत्र दर्शपूर्णमासपदं प्रायेण पर्वकालत्वद्यागानामनुवादः, स्वर्गकामशब्दोऽधिकृतापेक्ष इति पक्षद्वयेऽपि यजिपदं सर्वान् यागान् स्मारयति। अतो यजिप्रयुक्ता धर्मा इति।

'यद्दर्शपूर्णमासाभ्याम् यजेते'त्येवं कल्पनेऽप्युद्दिश्यमानस्य विशेषणविवक्षाऽसम्भवात् सर्वार्थाः धर्मा इति—पूर्वः पक्षः।

## प्रकरणात् व्यवस्थेति सिद्धान्तनिर्देशेनाऽतिदेशारम्भसमर्थनम्।

[२]सिद्धान्तस्तु—भावनैव प्रत्ययार्थः करणेतिकर्तव्यताविशिष्टा विधीयते। तस्याश्च सह भाव्यरूपेणापूर्वेण शब्दान्तरादिभिर्भेदः साधितः। तत्रैकस्यामितिकर्तव्यता-

---

इतिकर्तव्यताया न करणेनान्वयः। किं तु करणेतिकर्तव्यतयोर्द्वयोरप्यन्योन्यमनन्वितयोः फलभावनयैव। ततश्च न पारिप्लवत्वमिति राद्धान्तमाह—राद्धान्तस्त्विति। अस्तु भावनान्वयः।

---

१—'यदपेक्षितधर्माणां प्रत्यक्षं प्रतिपादकम्।

प्रधानसन्निधौ शास्त्रमुपदेशस्स उच्यते। इति। भाष्यकारश्च परत्र विहिताः धर्मास्तमतीत्याऽन्यत्र तेषां देशो येन भवति, सोऽतिदेश इत्यवयवयोगेनातिदेशपदार्थं विवृणोति स्म। श्लोकमुदाहरन्ति—

'प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु।
धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः॥'

इति प्राचां श्लोकः।

मिश्रैर्व्याख्यातश्चायं सप्तमाद्ये—

क्व धर्मप्रदेश इत्यपेक्षायामाह यस्मात् तत्समानेष्विति, यस्मात्प्राकृतादाग्नेयादेः धर्माः प्रदिश्यन्ते, तत्समानेषु सौर्यादिषु कर्मसु' इति।

अयमभिप्रायः—प्राकृतात् कर्मणः तत्समानेषु धर्मप्रापको व्यापारोऽतिदेशः इति श्लोकोक्तं लक्षणं यथाश्रुतमनुपपन्नम्। यतश्चोदनासामान्यनिमित्तातिदेशातिरिक्तस्थले विकृतौ प्रकृतिसाम्येन भवितव्यमिति निर्बन्धाभावात्। अतश्श्लोके तत्समानेष्विति प्रायिकं स्वरूपकथनमेव, अविवक्षितं वा। अतएव श्लोके यत्तच्छब्दयुगलोपादानम्।

एवञ्चाऽन्यधर्मत्वेनावगतानां तत्संबन्धादरेणान्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति, इति। तथा कर्मस्वित्यपि अविवक्षितम्, फलचमसे स्थानापत्त्यतिदेशविषयेऽव्याप्तिप्रसंगादिति ज्ञेयम्।

भाष्येऽतिदेशो द्विविधः—नाम्ना, वचनेन च। तत्र नाम त्रिविधमातिदेशकम्—कर्मनाम, संस्कारनाम, यौगिकञ्चेति। वचनं पुनर्द्विविधम्—प्रत्यक्षश्रुतम्, आनुमानिकञ्चेति, आनुमानिकं त्रिविधं चोदनासामान्यातिदेशः, आश्रयातिदेशः, स्थानापत्त्यतिदेशः—इति।

अत्रानुमानपदेन श्रुतार्थापत्तिकल्पितत्वं विवक्षितम्। अत एव स्मृत्यधिकरणवार्तिकेऽनुमानपदमनुपश्चान्मानमनुमानमित्यर्थापत्तिपरतया व्याख्यातम्। नानुमानकल्पितत्वम्, तस्य व्याप्त्याद्यभावेनाप्रसरात्। 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति विधिवाक्यमितिकर्तव्यताऽलाभादपरिपूर्णम्। येन प्रकृतिवद्वचनेन वाक्यशेषभूतेन परिपूर्यते, तादृशमर्थापत्तिप्रमाणं कल्पितं वचनमनुमितवचनातिदेश इत्यर्थो बोध्यः। पार्थसारथिमिश्रस्तु षड्विध एवातिदेश इति। यौगिकशब्देन केवलयौगिकमुक्तम्, योगरूढं वेति, विशेषस्तु शास्त्रदीपिकातोऽवगन्तव्यः—इति।

२—पार्थसारथिमते पदार्थविशिष्टोपकाराणामेवातिदेशः, आर्थिकस्तु विशेषणानां पदार्थानामतिदेशः कल्प्यते, अतएव दशमाद्ये—

विशिष्टायां विधीयमानायाम्, अन्यस्याः कुतस्तत्प्राप्तिः। विधीयमानैव हि भावना त्रिभिरंशैरवैरूप्येण सम्बध्यते इदमनेनेत्थं कुर्यादिति। तस्यान्तु विशिष्टायां विहितायां पश्चादरुणैकहायनीन्यायेनांशानां परस्परं सम्बन्धः। यथोक्तम्—

'एकभावनयोपात्तास्त्रयोऽप्यंशाः परस्परम्।
उपकार्योपकारित्वं पश्चादनुभवन्ति ते' श्लो. वा. ७-२६५ इति॥

यद्यपि करणानुग्राहिण्येवेतिकर्तव्यता, तथाऽपि न तेन साक्षात्सम्बध्यते, न हि भवतीत्थं याग इति, किंत्वित्थं कुर्यादिति। तस्माद्भावनासम्बन्धाद्भाव्यरूपापूर्वविशेषप्रयुक्तमङ्गजातम्, न पारिप्लवमिति। यद्यपि यजिप्रयुक्तम्, तथाऽपि प्रकृतयागानुवादेन

---

तथापि कथं न पारिप्लवत्वमित्याशङ्क्य, भावनानामन्योन्यवैलक्षण्यस्य द्वितीयाध्याये साधितत्वात्, येषामङ्गानां या संनिहिता भावना, तयैव तेषामन्वयः। न सर्वाभिरिति न पारिप्लव इत्याह—तस्याश्चेति। अपूर्वेणेति। अपूर्वभेदो भावनाभेदश्च साधित इत्यर्थः। नन्वङ्गानां फलं प्रति विधीयमानया भावनयाऽन्वयो विहितया वा। आद्ये वैरूप्यम्। द्वितीये तु करणान्वयपक्षोक्तन्यायेन पारिप्लवत्वं तदवस्थमित्याशङ्क्याह—विधीयमानेति। यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचती'त्येका पाकक्रिया अनेकैरपि करणोपकरणैरवैरूप्येणान्वयं भजते तद्वत् भावनाया अपि क्रियारूपतया गुणप्रधानभूतैरपि त्रिभिरङ्गैरवैरूप्येणान्वयो युज्यते। करणस्य तु कारकतया प्रधानेन फलेन, गुणीभूतैरङ्गैश्च युगपदन्वये वैरूप्यं प्रसजेदित्यर्थः। यद्यप्याकाङ्क्षावशात् भावनायाः क्रमेणैवांशत्रयान्वयः अथापि विधिप्रक्रमवेलायामेवान्वयाद्विधीयमानैव तदन्वयिनीत्युक्तम्। एवं चांशत्रयस्यापि प्राथमिकः शाब्दोऽन्वयो भावनयैव। अन्योन्योन्यान्वयस्तु भावनाद्वारा तेषां पश्चात् पर्यवस्यति। तस्य चाशाब्दतया न वैरूप्यदोष इत्याशयेनाह—तस्यां त्विति। नन्वङ्गानां करणोपकारकतया तेनैवान्वयो वक्तव्य इत्युक्तमित्याशङ्क्य, न वयं तदन्वयस्तेषां नास्तीति वदामः। स तु न शब्दः। नापि प्राथमिक इत्याह—यद्यपीति। साक्षात् प्रथममभिधानवृत्त्येत्यर्थः। अशब्दत्वमेवाह—नहीति। भावनान्वयस्य शाब्दत्वमाह—किं त्विति। कुर्यात् भावयेदित्यर्थः। निगमयति—तस्मादिति।

अयं भावः—यदा भावना आन्तरालिकभाव्येऽपूर्वे पर्यवस्यति, तदाऽङ्गैः संबध्यते। ततश्च तदन्वयिनामङ्गानामपूर्वमेव प्रयोजकमवतिष्ठते। एवं चाङ्गानां प्रतिसंबन्धिनी भावना तत्प्रयोजकमपूर्वं चोभयमपि शब्दोन्तरादिभिरितरविलक्षणं प्रतीतमङ्गानामन्यत्र गमनं

---

'अपेक्षासत्तियोग्यत्वैरुपकारातिदेशनमि'ति सिद्धान्तितम्।

अत एव 'उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिस्स्यात्, ततश्च कर्मभेदस्स्यात्. द. ७-१-७ इति सिद्धान्तसूत्रं व्याचक्षाणेन पार्थसारथिमिश्रेण तन्त्ररत्ने 'य एव ह्यन्यत्र श्रुतस्योपकारस्य, पदार्थस्य वा तत्संबन्धाबाधेन तमतीत्यान्यत्र देशः, स एवातिदेशः' इत्यतिदेशलक्षणमुपकारस्यैव प्रथमं कृतम्, अभ्यर्हितं पूर्वमिति न्यायात्। पदार्थस्य गौणतया सप्तमाद्ये पश्चान्निर्देशः कृतः, इदं मनसि निधायैव खण्डदेवाचार्यः पदार्थघटितमतिदेशलक्षणं वर्णयामास, परन्तु दशमाद्ये 'तत्त्वन्तु प्रकृतियोग्यताजनकैर्विकृतियोग्यतां प्रकृतिवज्जनयेदि भा. दी. पृ. ४६३ त्यादिना ग्रन्थेनोभयविषयकस्यैवातिदेशस्यैव कल्पनीयत्वेन स्वयं वक्ष्यमाणत्वात्, उपकारवत् पदार्थातिदेशाभिप्रायेण लक्षणमुक्तमिति, तन्त्ररत्नमूलकमेवेदं लक्षणमिति ज्ञेयं सूरिभिः। इदं युक्तं नवेति शास्त्रदीपिकाभूमिकायां परीक्षिष्यते—इति।

विधानान्न पारिप्लवं स्यात्। सामान्यवचनोऽप्यधिकारवशाद्विशेषे वर्तते। तस्माद्यजि-प्रयुक्तत्वपक्षेऽपि न पारिप्लवत्वम्। तथा च नवमाद्ये भाष्यकारो वक्ष्यति—किं प्रतिप्रकरणम् नियता धर्माः, उत सर्वे सर्वत्रेति। तत् अपूर्वप्रयुक्तत्वे, यजिप्रयुक्तत्वे, च सिद्ध्यति।

## उक्तार्थे फलस्य भाव्यत्वपरापूर्वभाव्यत्वपरनाना-स्थलीयभाष्यविरोधप्रदर्शनम्।

यद्येवं किमिति तर्ह्यपूर्वप्रयुक्तत्वमत्र साधितम्। यजिप्रयुक्तत्वेऽपि तद्विशेष-प्रयुक्तत्वाच्छक्यत एव व्यवस्थापयितुम्। तत्त्वेन तूत्तरं विवक्षता अपूर्वभावनया सम्बन्धः कथितः इत्यदोषः। युक्तं[1] तावद्भाव्यनिष्ठेन संबध्यमानं धर्मजातं भाव्य-प्रयुक्तमिति। भाव्यं[2] तु फलम्, नापूर्वम्। स्वर्गं भावयेदिति ब्रूयुः। भावना च फल-स्योच्यत इति तत्र तत्र भाष्यकारवचनात्। स्वर्गकामाधिकरणेऽपि यागस्य कर्तव्य-तोच्यते, कामस्य वेति भाव्यविशेषविचारं दर्शयन् सिद्धान्ते कामस्यैव भाव्यतेति दर्शयति।[3] विश्वजिदधिकरणे च पूर्वपक्षे न चापूर्वस्य कर्तव्यतामाह, फलकर्तव्यतायाम्

---

निरुणद्धीति न पारिप्लवत्वमिति। करणान्वयपक्षेऽपि प्रकरणानुमितवाक्येन प्रकृतस्यैव याग-स्यानुवादेनाङ्गविधानान्न पारिप्लवत्वमित्याह—यद्यपीति। ननु प्रकृतयागानुवादकतयापि यजिशब्दस्यैव कल्पनीयत्वात् तेन च स्वशक्त्या सर्वानुवादात् पारिप्लवत्वं स्यादित्युक्तमेवेत्या-शङ्क्याह—सामान्येति। सर्वयागानुवादसमर्थोऽपि यजिशब्दोऽनुवादस्य संनिहितैकगोचरत्व-स्वारस्यात् प्रकृतयागव्यक्तिविशेषमेवानुवदतीत्यर्थः। अधिकारवशात्-संनिधिवशात्।

यजिप्रयुक्तत्वेऽपि पारिप्लवत्वाभावे भाष्यकारसंमतिमाह—तथा चेति। एवं तर्हि सप्तमाद्ये भाष्यकारणैव धर्माणां पारिप्लवत्वनिराकरणाय यजिप्रयुक्तत्वं निराकृत्यापूर्वप्रयुक्तत्व-प्रतिपादनं व्यर्थं स्यादित्याशङ्कते—यद्येवमिति। उत्तरमाह—तत्त्वेनेति। सिध्यत्येव यजि-प्रयुक्तत्वेऽपि धर्मव्यवस्थानम्। नतु तत् तात्त्विकम्। किंतु अपूर्वप्रयुक्तत्वमेव तात्त्विकम्। अतस्तदेवोत्तरं भाष्यकारेण कथितमित्यर्थः। अपूर्वभावनेति। अङ्गानामपूर्वप्रयुक्तत्वप्रतिपादने भावनासंबन्ध एव प्रतिपादितो भवतीति भावः। कथं तदित्याशङ्क्य भावनासंबन्धस्यापूर्व-प्रयुक्तत्वोपाधिकत्वं दर्शयति—युक्तं तावदिति। भाव्यनिष्ठेन भाव्यभूतापूर्वगोचरेण। भावेन भावनया। अङ्गानां संबन्धे युक्तमेव भाव्यप्रयुक्तत्वम्। अपूर्वप्रयुक्तत्वनियमस्तु कथम्? भाष्यकारेण क्वचित्फलस्य भाव्यत्वप्रतिपादनात् क्वचिच्चापूर्वस्य तत्प्रतिपादनादित्याशङ्कते—भाव्यं त्वित्यादिना व्याख्येयमेतदित्यन्तेन।

---

१—भाव्यनिष्ठेन भावेन ब. पु. पा.। २—भाव्यन्तु नापूर्वमिति मु. पु. पा.।

३—अत्रेदं बोध्यम्—भगवान् भाष्यकारस्सप्तमाद्ये धर्माणां पारिप्लवत्वनिरासार्थं यजिप्रयुक्तत्वं निराकृत्य, अपूर्वप्रयुक्तत्वं प्रतिपादयांबभूव, अंगानामपूर्वप्रयुक्तत्वप्रतिपादने भावना-संबन्ध एव प्रतिपादितो भवति, अत एवोक्तं शास्त्रदीपिकायाम्—

'प्रधानविधिवाक्यं खल्वंगवाक्यसमन्वितम्।
अंग-प्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम्'॥ ७–१–९ पृ. ५२५।

हि सत्यां तदवगम्यत इति वदन् फलभाव्यतोत्तरकालमपूर्वकल्पनं दर्शयति। सिद्धान्तेऽपि फलविशेषापेक्षां दर्शयन्न व्यापारस्य कर्तव्यतोच्यते, कस्य तर्हि ? व्यापारेणान्यस्य कस्यचिदिति, भवति तदानीं वचनं साकाङ्क्षमित्याह। तत्कथमिह यजेर्गुणभावः श्रूयते—दर्शपूर्णमासाख्येन यागसमुदायेनान्यत् कुर्यादिति। यत्तदन्यत् कर्तव्यतया चोद्यते, न यजिः अपूर्वं तदित्याह।

## वाचनिकं फलस्य भाव्यत्वम्, अपूर्वभाव्यत्वनिराकरणपराणीति, तेषां सामञ्जस्येन व्याख्याप्रदर्शनम्।

तस्माद् व्याख्येयमेतत्। किमिति व्याख्येयम्। व्याख्यातं स्वयमेव भाष्यकारेण। 'ननु फलमत्र वाक्ये श्रूयते-स्वर्गकामो यजेतेति' तत्कर्तव्यम् स्यादिति चोदयित्वा, सत्यं श्रूयते, न तु तद्यजिना क्रियते, विनष्टे यजौ तद्भवति। अपूर्वन्तु तेन क्रियते। तस्मान्न तस्य कर्तव्यतोच्यते शा. भा. पृ. १५२८ २९. इति परिहृतम्। अस्यार्थः। न साक्षाद्यजिर्विशरारुत्वात्फलम् साधयति, किन्त्वपूर्वप्रणालिकया। तेनापूर्वे कृते, तेनैव फलं भविष्यतीत्यवधारणात्, तत्सिद्धयर्थं तत्कर्तव्यं भवति, तेन भाव्यप्रयुक्तमङ्गजातम्। आन्तरालिकभाव्येऽपूर्वे वाङ्नियमवदवान्तरापूर्वे पर्यवस्यतीति। एतदेव पुनश्चोद्यपूर्वकं प्रकटितम्। यश्च यजेः प्रत्यक्षः फले गुणभावः, स नानादृत्याऽपूर्वं संभवतीति प्राणालिकी विज्ञायते शा. भा. पृ १५३२ इति।

---

तत्र प्रथमं फलस्यैव भाव्यत्वं भाष्यकारवचनैः प्रतिपादयति-भाव्यं त्विति। कामस्य काम्यफलस्य। अपूर्वस्य भाव्यत्वनिराकरणपरं भाष्यमुदाहरति-विश्वजिदिति। अवगम्यत इत्यनुपपत्त्या कल्प्यत इत्यर्थः। व्यापारस्य-यागस्य। विश्वजिदधिकरणराद्धान्ते फलस्यैव कल्पनीयत्वात् भाव्यतया तस्यैवाकाङ्क्षा दर्शितेति, तस्यैव भाव्यत्वमुक्तं भवति। न त्वपूर्वस्येति भावः। इत्याह भाष्यकार इति शेषः। एवं फलस्य भाव्यत्वप्रतिपादनपराणि भाष्याण्युदाहृत्य, अपूर्वभाव्यत्वप्रतिपादनपरं भाष्यमाक्षेपमुखेन पठति-तत्कथमिति। कथमाहेत्यन्वयः। गुणभावः-करणत्वेन शेषत्वम्। तस्मात्-परस्परविरोधादित्यर्थः।

वाचनिकं तु भाव्यत्वं फलस्यैवेति तद्भाव्यत्वप्रतिपादनपराणि भाष्याण्युपपन्नानि। अपूर्वभाव्यत्वनिराकरणपराणि तु तद्भाव्यत्वस्य वाचनिकत्वाभावोपपादनपराणि। अपूर्वभाव्यत्वप्रतिपादनपराणां तु तात्पर्यं पूर्वोत्तरभाष्यपर्यालोचनेनैव स्पष्टमित्याह-किमितीति। स्वयमेवेति। न यजिः अपूर्वं तदित्येतद्भाष्यसमनन्तरमित्यर्थः। श्रूयते अभिधीयते। विनष्टे यजाविति। देशान्तरे, कालान्तरे, देहान्तरे वेत्यर्थः। न तस्येति। फलस्य साक्षात् भाव्यत्वं नोच्यते इत्यर्थः। भाव्यतात्पर्यमाह-अस्यार्थ इति। वाचनिकं फलभाव्यत्वमनुपपत्त्याऽपूर्व-

---

भाष्यकृता क्वचित्फलस्य भाव्यत्वं प्रत्यपादि, क्वचिच्चापूर्वप्रयुक्तत्वमुपापादि इति, भाष्ययोर्विरोधः प्रतीयते, तत्परिहारश्चेत्थमवगन्तव्यः। तथाहि-वाचनिकं भाव्यत्वं फलस्यैवेति, तद्भाव्यत्वप्रतिपादनपराणि, अपूर्वभाव्यत्वनिराकरणपराणि तु तद्भाव्यत्वस्य वाचनिकत्वाभावोपपादनपराणि, इति। अपूर्वस्य भाव्यत्वप्रतिपादनपराणां तात्पर्यं पूर्वोत्तरभाष्यपर्यालोचनेनेत्थमवगम्यते। यत् वाचनिकं भाव्यत्वं श्रुतार्थानुपपत्त्याऽशब्देनाऽपूर्वमवतरति, पश्चादन्वीयमानानामंगानां तदेव प्रयोजकमवतिष्ठत, इति, अतो न दोषः—इति।

## यत् कर्तव्यम् , अपूर्वञ्च तदिति भाष्यावलम्बनेनापूर्वस्य प्रत्ययार्थत्वमिति गुरूणामाशंकानिरासः ।

एतेन नवमाद्यभाष्यमपि प्रत्ययार्थेन हीतिकर्तव्यताऽऽकाङ्क्ष्यते, कर्तव्यं कथमिति, न यजिः कीदृश इति। तस्माद्यत्कर्तव्यम्, तस्यैवेतिकर्तव्यतया संबन्धः, अपूर्वं च तदित्येतद्व्याख्यातम्। कर्तव्यमिति भाव्यनिष्ठं व्यापारम्, विधियुक्तं प्रत्ययार्थं दर्शयति तस्माद्यत्कर्तव्यमिति यत्–तस्य व्यापारस्य भाव्यम्- तदर्थमितिकर्तव्यताजातमित्यर्थः। अपूर्वञ्च तदिति फलस्य भाव्यत्वं साक्षादसंभवदपूर्वे संक्रान्तम्, अतस्तदेव साक्षाद्भाव्यमित्यपूर्वप्रयुक्तमित्यर्थः।

## अपूर्वस्यैव प्रत्ययार्थत्वप्रतिपादनपरमेतद्भाष्यमिति वदताम् प्राभाकराणां मतं भाष्यान्तरविरोधेन भाष्याभिप्रायाज्ञानमूलकमिति तन्निरासस्योपसंहारः ।

यदि पुनरनेन भाष्येणापूर्वस्य प्रत्ययवाच्यत्वमुच्यते, ततो विश्वजिदधिकरणे व्यापारेणान्यस्य कर्तव्यतोच्यते कस्येति भवति साकाङ्क्षम्, तेनेदानीं वाक्यं तत्राध्याहारोऽवकल्पते शा. भा. १२५४ इति न युज्यते। 'यदा ह्यपूर्वाख्यस्य भाव्यविशेषस्य स्वशब्देनैवाभिधानम्, तदा कस्य भाव्यत्वमित्या[2]काङ्क्षा न जायेत। यत्र तद्विशेषाध्याहारो भवेत्। यदा तु भाव्यनिष्ठः व्यापारः सविधिकः कर्तव्यशब्देनोक्तः तदानीं तत् कर्तव्यमिति भाव्यविशेषापेक्षानिमित्तोऽध्याहारः।

---

मवतरति। पश्चाच्चान्वीयमानानामङ्गानां तदेव प्रयोजकमवतिष्ठते। इदमेव भाष्यतात्पर्यमिति भावः। अनादृत्य-अकल्पयित्वा। प्राणाडिकः-परम्परालभ्य इत्यर्थः।

अपूर्वस्यानुपपत्तिकल्प्यं भाव्यत्वं, न तु वाचनिकमित्युक्तम्। तदनुपपन्नम्। क्वचित् भाष्यकारेणैवापूर्वस्य प्रत्ययार्थतया तद्भाव्यत्वस्य वाचनिकत्वाभिधानादिति गुरुमतेनाशङ्क्य, तस्यापि तात्पर्यमाह एतेनेति। एतेनेत्युक्तमेवाह–कर्तव्यमिति। भाव्यनिष्ठं-स्वभावतो भाव्याकाङ्क्षम्। व्यापारं-भावनाम्। प्रथमकर्तव्यताशब्दो भावनापर इत्यर्थः। द्वितीयस्त्वपूर्वपर इत्याह–तस्मादिति। साक्षात्–अव्यवधानेन।

अपूर्वस्यैव प्रत्ययार्थत्वप्रतिपादनपरमेतद्भाष्यं किमिति न स्यादित्याशङ्क्य, भाष्यान्तरविरोधान्नैतद्युक्तमित्याह–यदि पुनरिति। अयुक्तत्वमुपपादयति–यदा हीति। न जायेत इति। साक्षाद्भाव्यस्यापूर्वस्य प्रत्ययेनैवोपादानादित्यर्थः। भावनायाः प्रत्ययार्थत्वे तु तदानुगुण्यमाह–

---

१—प्राभाकरमीमांसकास्तु कार्यापरपर्यायमपूर्वं लिङादिप्रत्ययवाच्यमिति मन्यमाना अपूर्वं कर्तव्यमित्यादिभाष्यसन्दर्भं प्रमाणतयोपन्यस्यन्ति। तदनुपपन्नम्। भवन्मते साक्षाद्भाव्यस्यापूर्वस्य लिङादिप्रत्ययेनोपादाने भाव्यविशेषविषये संशय एव नोपपद्यते, अतस्तेषामुत्तरं न वाच्यम्। अतस्तन्मतं भाष्याभिप्रायापरिज्ञानमूलमित्याह—'यदाहीत्यादिना उपेक्षैवोत्तरमित्यन्तेन।

२—भावप्रत्ययेनेति मु. पु. पा.।

## अयमेव प्रकारोऽन्यत्रावगन्तव्य इति कथनम् ।

एवमन्यत्रापि यागे वा कर्तव्यतोच्यते, कामे वेति । तथाऽपूर्वं कर्तव्यमित्युक्त्वा न तु फलं कर्तव्यमित्युक्त्वा च, ननु च फलं कर्तव्यं स्यादित्यनेन तदेवोपपाद्यते, [1]नापूर्वस्य भाव्यविशेषस्य शब्दार्थत्वम् । तस्मादेवमाद्यनालोचनेन प्रत्ययार्थत्वमपूर्वस्य भाष्यकारेणोक्तमिति जल्पतामुपेक्षैवोत्तरमिति ।

## श्रुतं परित्यज्य, अश्रुतस्य कल्पनमयुक्तमिति स्वयमेव भाष्यकृता समाहितमिति कथनपूर्वकं न व्यापारेण व्यापारिणोऽन्यथासिद्धिरिति व्यापारेण व्यवधानेऽपि सदृष्टान्तम् करणत्वस्योपपादनम् ।

किमर्थं पुनः प्रत्यक्षप्रतिपन्नभाव्यभावफलपरित्यागेनानुमानिकभाव्यभावस्यापूर्वस्य प्रयोजकत्वमङ्गीक्रियते । एतदपि भाष्यकारेणैव फले यजेः प्रत्यक्षो गुणभावः, आनुमानिकोऽपूर्व इति चोदयित्वा प्रत्यक्षोऽपि नानादृत्य अपूर्वं सम्भवतीति प्राणालिको विज्ञायते शा भा. १५९२ । न चैतावता प्रत्यक्षश्रुतयागकरणत्वहानिः । यतः प्रणाल्याऽपि येन क्रियते, तत्करणम् भवति । यथाऽ* 'गोमयैः पचति, तुपपक्का भवन्ती'त्यनेन परिहृतम् । कथमनेनैतत्परिहृतम् ? उच्यते । प्रत्यक्षोऽपि यागस्य फलसाधनभावः क्षणिकस्य न साक्षात्सम्भवतीत्यानुमानिकापूर्वप्रणाल्या समाश्रीयते । अनुमिते चापूर्वे न फलापूर्वयोः कश्चिद्विशेषः । द्वयोरपि भाव्यत्वस्यावगतत्वात् अनिर्ज्ञातोपायत्वाच्च । नात्र कश्चिद्धेतुरस्ति । यदव्यवहितभाव्यमपूर्वमुल्लङ्घ्य फलं यावदितिकर्तव्यता गच्छेत् ।

---

यदा त्विति । एवमेवेति । भावनाया एव प्रत्ययार्थत्व इत्यर्थः । शब्दार्थत्वमिति । साक्षाद्भाव्यस्यापूर्वस्य प्रत्ययेनोपादाने भाव्यविशेषविषय एतादृशः संशय एव नोपपद्यत इत्यर्थः । अतस्तन्मतं भाष्याभिप्रायापरिज्ञानमूलमिति निगमयति—तस्मादिति ।

ननु यदि भवन्मते अपूर्वस्य न प्रत्ययार्थत्वं, किंतु कल्प्यत्वमेव । तर्हि तस्याङ्गप्रयोजकत्वं न स्यात । फलस्यैव तदङ्गीकार्यं स्यादिति शङ्कते—किमर्थमिति । एषा शङ्का भाष्यकारेणैव परिहृतेत्याह—एतदपीति । करणत्वहानिः—फलकरणत्वहानिः ।

भाष्यस्याभिप्रायं वक्तुमाकाङ्क्षामुत्थापयति—कथमिति । अयं भावः—यद्यपि प्रथमं फलस्यैव भाव्यत्वं प्रत्यक्षवचनप्रतिपन्नं, तथापि न तदानीमितिकर्तव्यतान्वयः । तस्य करणान्वयोत्तरकालत्वात् । करणान्वये तु सति तस्यापूर्वकल्पनामन्तरेणानिर्वाहात् तस्मिन् कल्पिते सति पश्चादितिकर्तव्यान्वयवेलायामपूर्वस्य फलस्य भाव्यत्वाविशेषात् आगमातिरिक्तप्रमाणैस्तदुपायपरिज्ञानासिद्धेश्चोभयोरप्यङ्गान्वययोग्यत्वे सत्यपि संनिहितापूर्वपरित्यागेन व्यवहितफलान्वयायोगात् अपूर्वस्यैवाङ्गप्रयोजकत्वं भवति । करणस्य त्वपूर्वकल्पनात् पूर्वमेव भावनान्वयात् फलं प्रयोजकमिति । अनेनैव न्यायेन क्वचित् संनिहितत्वात् प्रधानोत्पत्त्यपूर्वाणां च प्रयोजकत्वं, न

---

१—कर्तव्यतोच्यते इति भाष्ये नास्ति ।

*—लौकिक-वैदिकदृष्टान्तद्वयमिति बोध्यम् ।

## सन्निहितत्वेनोत्पत्त्यपूर्वाणाम्, अंगापूर्वाणाञ्च प्रयोजकत्वम्, नतु परमापूर्वाणांमितिनिर्देशेनाद्याधिकरणस्य निगमनम्।

एतेनाज्यौषधसान्नाय्यधर्माणाम्, वाङ्नियमादीनाञ्चावान्तरापूर्वप्रयुक्तिर्व्याख्याता। अतः सिद्धमवामन्तरापूर्वभावनासम्बन्धाद् व्यवस्थिता एव धर्माः, न पारिप्लवा इति। तेनानुपदिष्टधर्मकेष्वैन्द्राग्नादिष्वतिदेशेन धर्माः सिध्यन्तीत्येतत्साधनार्थं सप्तमादिकमारब्धव्यम्'।

## प्रत्यक्षवचन-नामातिदेशयोर्विशेषरूपेण, चोदनालिंगातिदेशस्य सामान्यतो निरूपणमित्युपसंहारः।

तत्र सप्तमे प्रत्यक्षवचनेन, नामधेयेन च सापवादोऽतिदेशः कृत्स्नः साध्यः। आनुमानिकवचनेनातिदेशोऽपि सामान्येन। तद्विशेषस्त्वष्टमे' चिन्तितः।

इति सप्तमाष्टमयोरध्याययोः प्रतिपाद्यार्थः। '



परमापूर्वस्येत्याह—एतेनेति। अत एव तद्धर्माणां न परस्परसांकर्यं, वाङ्नियमनादीनां च ज्योतिष्टोमाङ्गभूतेष्टचन्तरेष्वप्रसक्तिरितिभावः। उपोद्घातमधिकरणं निगमयति—तत्सिद्धमिति। एतदधिकरणफलितमतिदेशषट्कस्यारम्भणीयत्वमपि निगमयति—तेनेति।

तत्र सप्तमाध्यायप्रमेयमाह—तत्रेति। इषुं विष्टुतिं करोति सप्ताहं साम भवति इति इषौ यागे समानमितरच्छ्येनेन इति प्रत्यक्षवचनेन श्येनयागधर्मातिदेशः। तथा साकमेधे पर्वणि 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वारुणप्राघासिकाङ्गानां प्रत्यक्षवचनेनैवातिदेशः।

तथा कुण्डपायिनामयने सत्रे 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोतीति विहितस्य कर्मणोऽग्निहोत्रनामबलात् नैयमिकाग्निहोत्रधर्मातिदेशः। आनुमानिकेति। अनुपदिष्टाङ्गेषु विकृतियागेषु इतिकर्तव्यताकाङ्क्षाकल्पितेन 'प्रकृतिवद्विकृतिः कर्तव्या' इत्येवंविधवचनेन यस्मात् कस्माच्चित् प्रकृतियागात् धर्मा अतिदेष्टव्या इत्येतावन्मात्रं सप्तमे चतुर्थपादे प्रतिपादितमित्यर्थः।

---

१—सप्तमाध्यायप्रतिपाद्यार्थसंग्रहः—'इषुं विष्टुतिं करोति, सप्तहं साम भवति' इतीषुसंज्ञके यागे 'समानमितरच्छ्येनेने'ति प्रत्यक्षवचनेन श्येनयागीयवैशेषिकधर्माणामतिदेशः। तथा साकमेधाख्ये तृतीये 'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इति प्रत्यक्षवचनेन वारुणप्राघासिकधर्माणामतिदेशः।

तथा कुण्डपायिनामयने सत्रे 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वति' इति विहितस्य कर्मणोऽग्निहोत्रनामबलात् नैयमिकाग्निहोत्रधर्माणामतिदेशः। अनुपदिष्टधर्मकेषु सौर्यादिविकृतियागेष्वितिकर्तव्यताकांक्षाकल्पितेन प्रकृतिवद्विकृतिः कर्तव्येत्यवंविधवचनेन यस्मात् कस्माच्चित्प्रकृतियागात् धर्मा अतिदेष्टव्या इत्येतावन्मात्रं सप्तमस्य चतुर्थपादे प्रतिपादितमिति।

२—अष्टमाध्यायप्रतिपाद्यार्थसंक्षेपः—'यस्य लिंगमर्थसंयोगादि'ति न्यायेन चोदनालिंगबलेनेष्ट्यन्तरेषु दर्शपूर्णमासधर्मातिदेशः, 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यादि'ति न्यायात्। तत्राप्येकदेवत्येष्वाग्नेयधर्मातिदेशः। द्विदेवत्येषु अग्नीषोमीयधर्माणाम्। आमिक्षा-

तद्विशेष इति । चोदनालिङ्गबलेनेष्टचन्तरेषु दर्शपूर्णमासधर्मातिदेशः । तत्राप्येकदेवत्येष्वाग्नेयधर्मातिदेशः । द्विदेवत्येषु अग्नीषोमीयधर्माणाम् । आमिक्षादियागेषु सांनाय्यधर्माणाम् । क्वचित् द्रव्यदेवतासाम्ययोः द्रव्यसाम्यबलेनैवातिदेशः । पशावप्यग्नीषोमीये सान्नाय्यधर्माणाम् । तद्धर्माणां तु सवनीये । तस्यापि धर्मा एकादशिन्याम् । तद्धर्मास्तु सौत्रामाण्यादिपशुगणेष्विति ।

तथा एकाहानां सोमयागानामग्निष्टोमः प्रकृतिः, द्वादशाहस्य च । द्वादशाहो द्विप्रकारः अहीनभूतः सत्रभूतश्च । तत्राहीनभूतस्त्वहीनानां प्रकृतिः, सत्रभूतस्तु सत्राणाम् । तत्रापि शतसंवत्सरसाध्यानां आदित्यानामयनादीनां गवामयनं प्रकृतिः । तथा होमचोदनासु दर्वीहोमा न कस्यचित् प्रकृतयो, नापि कस्यचित् विकृतय इत्यादिरूपो विशेषातिदेशोऽष्टमे चिन्तित इत्यर्थः ।

इति धर्मपुरि श्रीरामानुजाचार्येण विरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने सप्तमाष्टमाध्यायार्थौ ।



---

दियागेषु सान्नाय्यधर्माणामतिदेशो भवति । क्वचिद्द्रव्यदेवताघटितसादृश्ययोर्विरोधे द्रव्यघटितसादृश्येनैवातिदेशः ।

अग्नीषोमीये पशौ सान्नाय्यधर्माणामतिदेशः, अग्नीषोमीयधर्माणां सवनीयपशौ, दैक्षस्य चेतरेषु ।' सुत्याकालत्वसामान्यात् सवनीयधर्माणामैकादशिन्यामतिदेशः । तद्धर्मास्तु सौत्रामण्यादिपशुगणेषु ।

तथा—एकाहानां सोमयागानामग्निष्टोमः प्रकृतिः, द्वादशाहस्य च । द्वादशाहः द्विविधः, —अहीनः, सत्रश्चेति, तत्राहीनस्त्वहीनानां प्रकृतिः, सत्रभूतस्तु सत्राणामिति । तत्रापि संवत्सरसाध्यानामादित्यानामयनं अंगिरसामयनमित्यादीनां गवामयनं प्रकृतिः । तथा जुहोतिचोदनासु दर्विहोमाः न कस्यचित् प्रकृतयः, नापि कस्यचिद्विकृतयः इत्यादिरूपो विशेषातिदेशोऽष्टमे चिन्तितः विशेषस्तुभूमिकायाम् द्रष्टव्यः—इति ।

 

# अथ नवमाध्यायार्थः ।

## नवमाध्यायप्रतिपाद्यार्थस्य प्रतिज्ञा ।

## तस्य स्वरूपम्, अत्रोपदेशविचारबाहुल्येनोहविचारस्याक्षेप-समाधाने ।

नवमे त्वतिदिष्टानां पदार्थानां दशमाद्यसाध्यं कार्यप्राधान्यं सिद्धम् कृत्वा प्रयोगविशेषविचार ऊहाख्यः क्रियते । यद्यपि चोहशब्दस्तर्कमात्रवचनः । तथाऽप्यस्मिन् शास्त्रेऽन्यथाऽवगतानां पदार्थानामन्यथाभावविषयो यस्तर्कः, स ऊहशब्देनोच्यते । यद्यपि चात्रोपदेश एव चिन्त्यते । किम् प्रकृतौ हन्तिपिषिप्रयुक्तं प्रोक्षणम्, उतापूर्वप्रयुक्तम्, प्रवोवाजीयाप्रयुक्तम्, प्राथम्यप्रयुक्तं वा त्रित्वम् । सवित्रादिशब्दाः समवेताभिधायिनः, न वा । यज्ञपतिशब्दः स्वार्थः, परार्थो वा । अग्निस्वरूपप्रयुक्तं मन्त्रो

---

नवमाध्यायप्रतिपाद्यमाह—नवमे त्विति । कार्यप्राधान्यमिति । अखण्डोपकारातिदेशपुरस्सर एव पदार्थानामतिदेश इति प्रतिपादितमुपकारपुरोधानमित्यर्थः । न्यायशास्त्रे ऊहशब्दस्तर्कपरतया प्रसिद्धः । स तु नवमप्रतिपाद्यो न भवतीत्याह—यद्यपीति । अन्यथावगतानां प्रकृतौ व्रीह्याद्यन्यपदार्थसम्बंधितयाऽवगतानामवहननप्रोक्षणादीनां नीवारादिपदार्थान्तरसम्बन्धित्वप्रतिपादकः । तर्को न्यायः । ननु नवमे उपदेशचिन्तायाः एव बहुलत्वात् तस्यातिदेशषट्कारम्भः कथमित्याशङ्कामनूद्य परिहरति—यद्यपीति । प्रकृतौ दर्शपूर्णमासे । यद्यपि विकृतियागा अपि चिन्तिताः, तथापि तत्र य उपदेशांशः, तस्यैव विचारात् तस्यापि नोत्तरषट्कान्वयो युक्त इत्याह—

---

नवमाध्यायप्रतिपाद्यमूहस्वरूपं विविच्यते । तथाहि—प्रकृतावन्यथाऽवगतानाम् व्रीह्याद्यन्यपदार्थसंबन्धितयाऽवगतानां पदार्थान्तरसंबन्धित्वप्रतिपादको यः तर्कः, सएवात्रोहशब्दार्थः । यथा व्रीहिसंबन्धितयाऽवगतानामवहननप्रोक्षणादीनां नीवारादिपदार्थसंबन्धित्वप्रतिपादक इति लक्षणसमन्वयः । यद्यपि न्यायशास्त्रे ऊहशब्दस्तर्कपरतया प्रसिद्धः । स नवमाध्यायप्रतिपाद्यो न भवतीति ज्ञेयम् । अतएव मीमांसाशास्त्रैकप्रसिद्ध इति मूले समाहितम् । अर्थात् येनोहेन पदार्थानामन्यथाभावो विकृतौ भवति, तस्मिन्नन्यथाभावे पारिभाषिकमूहत्वमुररीकृत्य स एवास्मिन्नध्याये विचारणीयो भवति, तस्य चातिदिष्टमन्त्रादित्रयविषयत्वस्य संभवात् । अतएव पार्थसारथिमिश्रैर्नवमाद्ये अतिदिष्टानाम् पदार्थानां मन्त्र–साम–संस्काराणां द्वारान्तरसंबन्धनिमित्तोऽन्यथाभावात्मकः उहश्चिन्त्यते शा. दी. पृ ५७२ । इति ग्रन्थसन्दर्भेणोहस्वरूपं वर्णितम् ।

एवञ्चोहो नाम प्राकृतद्वारसंबन्धिनां विकृतौ तदन्यद्वारसंबन्धितयाऽनुष्ठानम् । अत्र प्रकृतावपि व्रीहिप्रतिनिधिभूतेषु नीवारादिष्ववघातस्यान्यथाभावेऽपि प्रतिनिधौ सादृश्यप्रयोजकव्रीह्यवयवद्वारसंबन्ध एवावघातस्य, न द्वारान्तरसंबन्ध इति नातिव्याप्तिर्लक्षणस्य, एतादृशोहस्योपदिष्टेष्वसंभवात्, अतिदिष्टेष्वेव मन्त्रादिषु संभवात्, अतिदिष्टानां मन्त्र-साम-संस्काराणामिति क्रमेण संगतेः, विषयत्रयस्य च प्रतिपादनापरम् । एवञ्च प्रकृतावन्यथादृष्टस्य विकृतौ द्वारान्तरसंबन्धनिमित्तान्यथाभाव इति प्रकृति–विकृतिपददानेन लक्षणं वर्णनीयम् । इतरथा प्रतिनिधिभूतेषु नीवारेषूहो न स्यात् । येनैव वितुषीभावद्वारेण व्रीहिषु विद्यमानस्यावघातस्य विकृतावपि तेनैव द्वारेणान्यथाभावः इति द्वारान्तरसंबन्धाभावादूहो न सिद्ध्येदिति ।

द्वारणम, देवताविशेषप्रयुक्तं वेति। तथा विकृतावप्यर्थान्तराणां नीवार-नखावपनपरिधि-मध्वशनादीनां पञ्चधा प्राकृतव्रीह्यादिकार्यापत्तिरुपदेशार्थ एव। तथाप्यष्टमानन्तर-मेवास्य सङ्गतिः। न हि प्रकृतिमात्रालोचने प्रयुक्तिविशेषजिज्ञासा जायते, कारणा-भावात्। यदा तु विकृतावतिदिष्टा धर्माः, तदा कथमत्रैते प्रयोक्तव्या इति चिन्ता जायते।

---

विकृतावपीति। अष्टमानन्तरमिति। प्रकृतिविशेषात्पदार्थेष्वतिदिष्टेषु तत्पदार्थविशेषविषय-त्वादूहस्य विशेषातिदेशानन्तरमतिदेशषट्क एवारम्भो युक्त इत्यर्थः। कथं तदित्याशङ्क्य उपदेश-पदार्थस्याप्यतिदिष्टपदार्थविषयोहौपयिकत्वादत्रैव तस्य सङ्गतिर्युज्यते न पूर्वषट्क-इत्याह-न हीति।

कारणाभावादिति। 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति प्रोक्षणस्यावहनन-प्रयुक्तत्वे, ऽपूर्वप्रयुक्तत्वे वा 'अग्नये जुष्टं निर्वपामि' तै. सं. १-१-४ इति मन्त्रस्यापूर्वप्रयुक्तत्वे, अग्निरूपदेवताप्रयुक्तत्वे, वा न किञ्चित् प्रकृतावनुष्ठानवैषम्यं भवतीति, न तत्रेति चिन्तायाः हेतुरस्तीत्यर्थः। कथमत्रेति। नखभेदस्य प्रोक्षणमनुष्ठेयम्, उत तस्यापि भूतावहननाभावान्ना-नुष्ठातव्यम्। सौर्ययागेऽपि किमयं निर्वापमन्त्रः अविकृत एव प्रयोक्तव्यः, सूर्यपदप्रक्षेपेण वेत्येवं-विधा चिन्ता जायते-इत्यर्थः। एतच्चिन्तौपयिकतया तु प्रकृतौ प्रयोजकविशेषविचारः कार्य

---

ऊहलक्षणे प्रकृति-विकृतिपदद्वयनिवेशेऽपि प्रकृतौ व्रीहिषु प्रोक्षणम्, विकृतौ नीवारेषु, प्रकृतौ चोलूखलमुसलयोः प्रोक्षणम्-विकृतौ नखेषु प्रोक्षणमिति प्रोक्षणाद्यूहे, अव्याप्तिस्स्यादेव, द्वारान्तरसंबन्धनिमित्ताभावात्। कारकभेदेन क्रियाया वैलक्षण्यावश्यंभावेनोलूखल-मुसल-नीवारादिरूपकारकभेदादन्यथाभावसत्त्वेन नाव्याप्तिप्रसंगः। प्रयाजादेस्तु सौर्यादिलक्षणद्वारान्तर-संबन्धेऽपि अनुग्राह्यत्वमेव, न कारकत्वमिति बोध्यम्। सामोहस्थले च द्वारान्तरेत्यनेनाऽभि-व्यंग्यान्तरं विवक्षितम्। अन्यथा 'रथन्तरमुत्तरयोर्गायति' इत्यादौ प्राकृतद्वारात् द्वारान्तरा-भावेनाव्याप्तिस्स्यात्। तथाचोहलक्षणम्-प्रकृतावान्यथावगतानां पदार्थानां विकृतावन्यथा-भावविषयको यः तर्कः, स ऊहशब्देनोच्यते-इति।

इदमेव लक्षणमाचार्यखण्डदेवो नवमाद्ये संबन्धनिवेशेन नव्यन्यायदृष्ट्या तत्त्वञ्चे-त्यादिना परिष्करोति स्म। तत् अवसरान्तरे परीक्षिष्यते, माधवाचार्यस्त्वधिकरणमालाया-मूहलक्षणमाहुः, यथा—

प्राकृतस्थानपतितपदार्थान्तरकार्यतः।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः'॥ इति।

अत्र तुरीयपादे ऊहशब्दस्य यौगिकत्वं प्रदर्शितम्। तेन कार्यकल्प्यत्वं प्राप्तम्। इतरांशस्तु रूढिलभ्य इति योगरुढोऽयं पङ्कजादिशब्दवदूहशब्द इति बोध्यम्।

१—सचोहः प्रथमं त्रिविधः मन्त्रोहः, सामोहः, संस्कारोहश्चेति, अत्र मन्त्रोह-सामोहयोः पृथगुक्तिः गोबलीवर्दन्यायेन, तत्साधकनावमिकन्यायभेदात्। तत्र सामोहस्तावत् 'उभयसाम्निचैवमेकार्थापत्तेः। स्वार्थत्वाद्वा व्यवस्थास्यात् प्रकृतिवत् 'मी. द. ८-२-१-६' इति पूर्वोत्तरपक्षसूत्राभ्यामुक्तः। तदितरमन्त्रोहन्यायस्तु 'प्रकृतौ च यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् लिंगदर्शनाच्चे' मी. द. ९. ३. १. २. ति सूत्राभ्याम् प्रतिपादितः।

तदुपायत्वेन च किम् प्रयुक्ता एते प्रकृताविति जिज्ञासा। तेनोपदेशविचारोऽप्यतिदिष्टेष्वेव विशेषं फलतीति विशेषातिदेशानन्तरमारब्धः।

## धर्माणां यजिप्रयुक्तत्वनिरासेनाऽपूर्वप्रयुक्तत्वव्यवस्थापनम्।

तदुपोद्घाततया चापूर्वप्रयुक्तत्वं सप्तमाद्यसाधितं स्मारितम्।

अथ वात्रैवैतत् साध्यते। धर्मव्यवस्था तु यजिविशेषप्रयुक्तत्वेऽप्युपपद्यत इत्युक्तम्। ऊहस्तु नापूर्वप्रयुक्तत्वमन्तरेण सिध्यतीति, इह तत्साध्यते। तत्र तु यजिमात्रप्रयुक्तत्वनिराकरणपरेण सताऽत्रत्यमपूर्वप्रयुक्तत्वमुक्तम्।

## सप्तमे आरादुपकारकाणामपूर्वप्रयुक्तत्वम्, नवमे तु सन्निपत्योपकारकाणां तदिति विषयव्यवस्थया पौनरुक्त्यपरिहारः।

अथ वा तत्रारादुपकारिणाम्, इह सन्निपातिनां तत्प्रयुक्तत्वमभिधीयते। तत्र तु चोद्यनिराकरणमात्रार्थं सन्निपातिपरामर्शः। निमित्तमात्रं वा तत्र। अत्र तु प्रयोजकं विचरितमित्यपुनरुक्तत्वम्।

* दशमाद्यसाधितं चोपकारपुरोधानं पदार्थानामूहसिद्ध्यर्थमपेक्षितव्यम्, अन्यथा तदसम्भवात्। तदा ह्यनादृतोपकाराः पदार्थाः प्रकृताविव विकृतौ सम्बध्यन्ते, तदा तद्वदेव यथाऽवस्थितानामेवाङ्गानां दृष्टम्, अदृष्टम् वा प्रयोजनं परिकल्प्य, लक्षणया वाऽविकृतानामेव प्रयोगः स्यात्। यदा तु यथा प्रकृतावुपकृतम्, तथा

---

इत्याह—तदुपायत्वेनेति। प्रकृतावपूर्वप्रयुक्तत्वे प्रोक्षणस्यैवं वाक्यार्थः स्यात्—अपूर्वसाधनद्रव्यवितुषीकरणोपायं प्रोक्षयेदिति। ततश्च नखभेदस्थलेऽपि प्रोक्षणसिद्धिः। तथा निर्वापमन्त्रस्य देवताप्रयुक्तत्वे, सूर्यस्य देवतात्वात् तत्पदप्रक्षेपकर्तव्यत्वादूहसिद्धिरित्याद्यतिदिष्टपदार्थप्रयोगविशेषोपायोऽयं विचार इत्यर्थः। अतोऽतिदेशषट्क एवायं सङ्गत इत्युपसंहरति—इति विशेषेति।

अध्यायसंगतिमुक्त्वा नवमाद्याधिकरणस्य तदुपोद्घाततया सङ्गतिमाह—तदुपोद्घातेति। सप्तमाद्य इति। पारिप्लवनिराकरणोपयोगितया तत्र प्रतिपादितमेवेहोपयोगीति। स्मारितमिति। भाष्यकारेणेति शेषः। अपूर्वप्रयुक्तत्वस्य ऊहेऽत्यन्तोपयोगात् अत्रैव तत्साधनं क्रियते। सप्तमाद्ये तु तदभावात् प्रसङ्गादेतदनुवाद इति, प्रकारान्तरेणापि सांकर्यं परिहरति—अथवेति। यजिविशेषः—संनिहितयागव्यक्तिविशेषः। यजिमात्रप्रयुक्तत्वं—यागसामान्यप्रयुक्तत्वम्। उक्तमिति। यजिसामान्यप्रयुक्तत्वनिराकरण एव तात्पर्यम्। अपूर्वप्रयुक्तत्वं तु प्रसङ्गादुक्तमित्यर्थः।

विषयव्यवस्थयाप्यधिकरणद्वयासांकर्यमाह—अथवेति। किमर्थं तर्हि तत्रापि भाष्यकारेण संनिपातिनां परिकीर्तनं कृतम्। तत्राह—तत्र चोद्येति। प्रयोजनभेदादप्यधिकरणयोरपौनरुक्त्यमाह—निमित्तेति। अतिदेशनिमित्तभूतधर्मव्यवस्थार्थं तत्रापूर्वप्रयुक्तत्वमुपपादितम्। अत्र तु अतिदेशानन्तरभाव्यूहरूपप्रयोजनार्थं तदुपपादितमित्यर्थः। अनागतावेक्षणन्यायेन दशमाद्यसाध्यं पदार्थातिदेशस्योपकारातिदेशपुरोधानमूहसिद्ध्यर्थमत्राप्याश्रयणीयमित्युपपादयितुमुपक्रमते—दशमाद्येत्यादिना। तदसंभवात् ऊहासंभवात्। तदेवोपपादयति—यदिहीति। यथाऽङ्गप्रतिपादक-

---

*—साध्यमिति मु. पु. पा.

विकृतावित्युपकारः पूर्वं प्राप्तः, तथाविधश्चोपकारस्तैरेव पदार्थैर्ज्ञातोत्पत्तिरिति तत्सिद्ध्यर्थं तेषामतिदेशः पश्चाद्भवति। यदा येन यथोपकृतम्, तेन तथैवोपकर्तव्यमिति विकृतावप्यारादुपकारकाणां परमापूर्वोत्पत्तावदृष्टोपकारसाधनत्वम्। सन्निपातिनामपि स्वकारके दृष्टम्, अदृष्टं वा कुर्वतां यागसामर्थ्यजननद्वारेणोपकारकत्वमिति, तत्सिद्ध्यर्थम्, ऊहः सन्निपातिनां मन्त्र-साम-संस्काराणां सिद्धो भवति। न हि व्रीहिषु क्रियमाणं प्रोक्षणं नैवारचरोः प्राकृतमुपकारं साधयतीत्यूहितव्यम्। एवं साम्नामप्यृगन्तरसंचारे द्रष्टव्यम्।

मन्त्राणामपि देवतान्तर-द्रव्यान्तरवत्यां विकृतावविकृतानां प्रकृतिवदुपकारकत्वं न संभवतीति, प्रातिपदिक-लिङ्ग-वचनानामेकैकस्य, द्वयोर्द्वयोर्वा, समस्तानां वाऽन्यथा-

वाक्यजातस्य सकलस्यापि प्रकृतौ प्रकरणेन प्रधानवाक्यैकवाक्यतायां सत्यामारादुपकारकाणां द्वारस्याश्रुतत्वात् साक्षात् प्रधानेनैवान्वये तेषामदृष्टरूप उपकारः कल्प्यते। संनिपातिनां तु श्रुतव्रीह्यादिद्वारापरित्यागेनापूर्वसाधनलक्षणया विनियोगे सति, तेष्वेव द्वारेषु दृष्टरूपः, अदृष्टरूपो वोपकारः कल्प्यते। एवं प्राकृताङ्गकाण्डस्यातिदेशेन वैकृतप्रधानवाक्यैकवाक्यतायां प्रकृतिक्रमेणैवाङ्गान्वयसंभवे तयैवान्वयः। तदसंभवे त्वपरया स्यात्। पश्चाच्च तदानुगुण्येनैवोपकारकल्पनमपि स्यात। ततश्च नैवारचरुयागेऽवहननप्रोक्षणादिवाक्यानां प्रधानवाक्यान्वये सति, तत्र नीवारप्रत्याम्नानेन व्रीहिबाधात् तेषां चापूर्वसाधनलक्षणया विनियोगादारादुपकारकत्वमाश्रित्य सक्तुहोमन्यायेन 'व्रीहीनि'ति द्वितीयया साधनत्वं लक्षयित्वा व्रीहिसंबन्धितयैवावहननप्रोक्षणादेरनुष्ठानसंभवादूहो न सिध्येदित्यर्थः। यथावस्थितानां—व्रीह्यादिसम्बन्धिनामेवावहननप्रोक्षणादीनामित्यर्थः। लक्षणया—व्रीहीनित्यादिद्वितीयया, व्रीहिभिरित्यादिक्रमेण साधनत्वलक्षणया। अविकृतानां व्रीह्यादिसंबन्धानाम्। उपकारपुरःस्सरे त्वतिदेशे ऊहः सिध्यतीत्याह—

**यदा त्विति**। **उपकार इति**। अखण्डोपकार इत्यर्थः। **ज्ञातोत्पत्तिरिति**। तत्तदवान्तरोपकारद्वारेणेत्यर्थः। **तेषामतिदेशः**। तत्तदवान्तरोपकारद्वारेणेत्यर्थः। अङ्गवाक्यानां तु ततोऽपि पश्चादतिदेश इत्यर्थः। **उपकर्तव्यमिति**। एवमेव व्यवस्था प्राप्नोतीति शेषः। एवं सति विकृतौ यः प्राकृताङ्गानामुपकारः, स एव संपद्यत इत्याह—**विकृताविति**। **स्वकारके** वैकृतयागसाधने प्रकृतिप्राप्ते प्रत्याम्नाते वा द्रव्ये। **यागसामर्थ्येति**। विलक्षणापूर्वजननसमर्थयागजननद्वारेणेत्यर्थः। **संनिपातिनामिति**। 'ऊहो नाम प्राकृतद्वारान्तरसंवन्धिनां विकृतौ तदन्यद्वारसंबन्धितयाऽनुष्ठानम्। तच्च नारादुपकारकाणां संभवति। तेषां द्वारस्यैवाभावादित्यर्थः। उपकारजनकतया पदार्थानामतिदेशे ऊहसिद्धिं व्यतिरेकमुखेनोपपादयति—**न हीति**। प्रकृतौ प्रोक्षणेन यागसाधनभूतव्रीहिद्रव्यं किंचित्कारद्वारोपकृतम्। नीवारद्रव्यायां विकृतौ व्रीहिष्वेव प्रोक्षणे क्रियमाणे तथोपकारो न सिध्येदिति, नीवाराणामेव प्रोक्षणं कर्तव्यमिति, ऊहः सिध्यतीत्यर्थः।

**एवं साम्नामिति**। प्रकृतौ यस्यामृचि यो गीतिविशेषः क्लृप्तः, विकृतौ तस्या ऋचः स्थाने मन्त्रान्तरे विहिते सति, स एव गीतिविशेषस्तस्मिन्मन्त्रान्तरे कर्तव्य इत्यर्थः। **मन्त्राणामपीति**। सूर्यदेवतायुक्तायां विकृता'वग्नये जुष्टं निर्वपामी'ति मन्त्रस्य सूर्यपदप्रक्षेपेणोहः।

१. अतिदिष्टानां मन्त्र—साम-संस्काराणां द्वारान्तरसंबन्धनिमित्तकोऽन्यथाभावात्मक ऊहश्चिन्त्यत शास्त्रदीपिकावाक्यमनुसन्धेयम्।

भावात्तथाऽवस्थितानामेव वाऽभ्यासादष्टधा विकारः ऊहः सिध्यति । *तदूहस्यापि कार्यप्राधान्यमपेक्षितव्यमिति, द्वयोरप्यूहबाधयोस्साधारणं मध्ये समारब्धमिति वेदितव्यम् ।

इति नवमाध्यायप्रतिपाद्यर्थः ।



---

पृषदाज्यवत्यां विकृतावाज्यस्याज्यमसीति मन्त्रस्याज्यदधिपदप्रक्षेपेणोहः । अष्टधेति । एकैकोहात् त्रेधा, द्वयोर्द्वयोरप्यूहात् त्रेधा, समस्तानामूहादेकः । एकधाभ्यासाच्चैकधेत्यष्टधात्वम् । यद्यूह-सिद्धयर्थमुपकारपुरोधानमपेक्षणीयं, तर्हि तत्प्रतिपादकाधिकरणस्य नवमाध्याय एवारम्भः स्यादित्याशङ्क्य, बाधस्याप्युपयोगात् मध्ये दशमाद्य एवारम्भो युक्त इत्याह—तदूहेति ।

इति धर्मपुरी श्रीमद्रामानुजाचार्येण विरचिते न्यायरत्नमालाव्याख्याने नायकरत्ने नवमाध्यायार्थः समाप्तः ।



---

१—अधिकार इति मु. पु. पा. ।

अष्टधा विकार ऊह इति । अत्रेदं बोध्यम्— मन्त्रोहोऽष्टविधः प्रकृत्यूह, प्रकृति-वचनोहः, प्रकृतिवचनलिंगात्मकत्रितयोहः, एकधे त्यत्र कृत्स्नपदाभ्यासलक्षणश्चेति । एकैकोहात् त्रेधा, द्वयोर्द्वयोरप्यूहात् त्रेधा, समस्तानामूहादेकः एकधापदाभ्यासाच्चेत्यष्टधात्त्वमिति । उदाहरणम्—यथा क्वचित्प्रकृतिमात्रोहः 'सूर्याय जुष्टम्' इति । धान्यमसीत्यत्र मांसमसीति शाक्त्यांनामयने षट्त्रिंशसंवत्सरसाध्यसत्रे । लिंगमात्रमूह्यते न, प्रकृतिः, न वचनम्, यथा 'वस्व्यसि रुद्राऽसी'त्यादिमंत्रः सोमक्रयार्थं विहिते साण्डे ।

तत्र प्रायेण प्रकृत्यूहः प्रथमपादे विचारितः, तृतीयपादे वचनोहश्चिन्त्यते, तत्रापि प्रकृत्यूहोऽल्पः । अयमर्थस्तन्त्ररत्ने विशदः ।

क्वचिद्वचनमात्रमूह्यते, न प्रकृतिः, नवा लिंगम् । यथा छागस्य वपाया मेदस इति मन्त्रः प्राजापत्येषु छागानामिति । क्वचित् प्रकृतिलिंगे एवोह्येते, न वचनम् । यथाऽग्नये जुष्टमित्येतत् अदित्यै जुष्टमिति । क्वचित् प्रकृतिवचने एवोह्येते, न लिंगम् । यथाऽग्नये जुष्टमित्येतत् 'विश्वेभ्यो देवेभ्य' इति वैश्वदेवे हविषि । क्वचिल्लिंगवचने एवोह्येते, न प्रकृतिः । यथा 'प्रास्मा अग्निं भरते'ति अध्रिगुप्रैषमन्त्रेऽस्मैपदं पुंल्लिगैकवचनमादित्यां मल्लांगर्भिणी-मालभेतेत्यादिषु प्राभ्य इत्येवंस्त्रीलिंगबहुवचनरूपेण । क्वचित्त्रीण्यपि प्रकृतिलिंग-वचनान्यूह्यन्ते । यथा—'आपोदेवीः शुद्धास्स्थ'ति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रः । अत्राप्शब्दस्स्त्रीलिंगो बहुवचनान्तः । घृतं प्रोक्षणमिति घृत देव शुद्धमसीति नपुंसकलिंगैकवचनान्तघृतपदोहे सर्वमेवान्यथा भवति, क्वचित्तु प्राकृतस्यैव सकलस्य पदस्याभ्यासात्मक ऊहः । यथा पशुगणे 'एकधाऽस्य त्वचमि'-त्यस्मिन् मन्त्रे । एकधैकधेति । एवञ्चाष्टविधस्याप्यूहस्य मन्त्रोह एवान्तर्भावात्, न त्रैविध्य-प्रतिज्ञायाः विरोध इति ।

---

कविमण्डनशम्भुभट्टेन नावमिकतृतीयाद्ये प्रकृतिलिंगादिविषयभेदेनाष्टविधोऽपि षट् तत्र तत्रांगत्वेनाप्युपपादितः। तथाहि—अर्थप्रकाशनार्था मन्त्राः, न तूच्चारणमात्राददृष्टार्थाः। तथा मुख्यार्थाभिधायिनः, नतु गौणार्थाः। तथाऽपूर्वप्रयुक्ताः, न तत्राग्न्यादिस्वरूपप्रयुक्ताः। प्रकृतौ समवेतार्थाभिधायिनः, नतु सवित्रादिशब्दवदसमवेतार्थाः तथाऽपरार्थाः, नतु यज्ञपतिशब्दवत् परार्थाः। प्रभा० पृ. ३८३। इति।

१४—ऊहप्रयोजकानि चैकादश-मुख्यार्थत्वम्, दृष्टार्थत्वम्, स्वार्थत्वम्, समवेतार्थत्वम्, शब्दस्वरूपाविवक्षा, आदिशब्दोपात्त-कार्यमुखोतिदेशः, विकृतिगतत्वम्, अनिषिद्धोहत्वम्, कार्यापत्तिः, अर्थान्तरत्वम्, अपूर्वार्थत्वम् धर्माणाञ्चेति। एतानि चैकादश प्रयोजकानि ऋग्यजुर्मन्त्रोह एवापेक्षितानि। नतु संस्कारोह–सामोहयोः। तत्रत्वष्टावेव प्रयोजकानि, तथा च वार्तिकम्।

मुख्य-दृष्टार्थता-स्वार्थ-समवेतार्थतादिभिः ।
प्रयुक्ताः प्रकृतौ मन्त्राः गताः कार्यातिदेशतः ॥
विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा ।
अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते ॥ तं० वा. पृ. इति।

सर्वतोमुखसोमयाजिरोगनाथदीक्षितस्तु मयूरवमालिकायां अत एव मुख्यत्वमूहसाधनेषु परिगणितमाचार्यैरित्यादिनोपरिसमुद्धृतपद्यद्वयमुपन्यस्यति म. मा. पृ. २११ इति।

*तदूहेति—अस्यायमर्थः—यद्यूहसिद्ध्यर्थमुपकारपुरोधानमयेक्षितव्यम्, तर्हि तत्प्रतिपादकस्याधिकरणस्य नवमाध्याय एव स्यादिति नाशंकनीयम्। बाधस्याप्युपयोगान्मध्ये दशमादिष्वारम्भो युज्यत इत्याशयेनाह—तदूहेति।

इति नवमाध्यायार्थः।



# अथ दशमाध्यायार्थः ।

## कर्तव्यार्थप्रतिज्ञा ।

**दशमे बाधाभ्युच्चयद्वारेण विकृतिषु पदार्थेयत्ता चिन्त्यते । कथम् पुनर्वचनप्राप्तस्य बाधोऽध्यवसीयते ? यथा चैतत्तथा वक्ष्यामः । प्रथमम् तावदिदं तत्सिद्ध्यर्थं चिन्त्यते ।**

---

दशमप्रतिपाद्यांया बाधचिन्ताया अतिदिष्टपदार्थेयत्तादिविषयत्वात्, तस्योहचिन्तानन्तर्यमिति संगतेः स्पष्टत्वात्केवलं तत्प्रतिपाद्यमाह—**दशम** इति । बाधो नाम प्राकृतानामेव पदार्थानां द्वारलोपादिना निवृत्तिः । अभ्युच्चयो नाम औपदेशिकाङ्गानि सन्ति चेत् तैः सहातिदेशिकाङ्गानां समुच्चयः । पदार्थेयत्ता—अङ्गप्रमाणम् । दशमप्रतिपाद्यस्य बाधस्यैवानुपत्तेः, तदारम्भो न युज्यत इत्याशयेनाशङ्कते—**कथमिति** । वचनप्राप्तस्य—आनुमानिकेन प्रत्यक्षेण वा वचनेन प्राप्तस्य । परिहरति—**यथेति** । उपोद्घाततया तदाद्याधिकरणमवतारयति—**प्रथममिति** ।

---

१—बाधेति—बाधः, निवृत्तिः, अननुष्ठानमिति पर्यायः । बाधो नाम प्राकृतानामेव पदार्थानां द्वारलोप—प्रत्याम्नान—प्रतिषेधैर्निवृत्तिः, अभ्युच्चयो नामौपदेशिकैर्विकृतैरंगैस्सहातिदेशिकानां प्राकृतानामंगानां समुच्चयः । अत्रेदम् बोध्यम् । अबाधो द्विविधः अभ्युच्चयपर्यन्तः, केवलश्चेति । तत्राद्यो यथा वैकृतेन प्राकृतस्य बाधप्रसक्तावबाधः प्रतिपाद्यते, सोऽभ्युच्चयपर्यन्तः । नक्षत्रेष्टिसन्निधौ श्रुतानामुपहोमैर्नारिष्टहोमानाम्, तत्र प्राकृत—वैकृतयोरप्यनुष्ठेयत्वात् । द्वितीयो यथा—यत्रतु न वैकृतं किञ्चित्, किन्तु प्राकृतस्यैव लुप्तद्वारत्वशंकया बाधप्रसक्तौ अबाधो व्युत्पाद्यते, स केवलः । खलेवाल्याम् पर्यूहणादेः । अतिदिष्टानां पदार्थानामियत्तारूपमङ्गपरिमाणमेकमेवाध्यायार्थः । न तु बाधाभ्युच्चयौ, अर्थभेदेनाऽध्यायभेदापत्तेः । इमामाशंकां वार्तिककारस्स्वयमेवोत्थाप्य पर्यहार्षीत् । तथा च टुप्टीकाग्रन्थाः—दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ता । टु. टी. पृ. १५२५ । अस्यायमर्थः—दशमे बाधाभ्युच्चयलक्षणं वृत्तमिति भाष्यसन्दर्भे अभ्युच्चयस्य शास्त्रार्थत्वाभावेन कथमध्यायार्थत्वमित्याक्षिप्य, बाधाभावस्यैवाभ्युच्चयत्वात् तस्य निरूपणीयत्वं न संभवति । अतः बाधाभ्युच्चयद्वारेणानुष्ठेयपदार्थपरिमाणस्यैकस्याध्यायार्थत्वांगीकारेण न दोषः ।

अत्र खण्डदेवाचार्यः प्रत्यवतिष्ठते, तथाहि—यथाऽभ्युच्चयस्य शास्त्रार्थत्वाभावेनाध्यायार्थत्वानुपपत्तिः, तथांगनामियत्तारूपपरिमाणस्य शिष्टाकोपाधिकरणोक्तरीत्याऽशास्त्रार्थत्वेनाध्यायार्थत्वं नोपपद्यते—अतो बाधमात्रस्याध्यायार्थत्वम् युक्तमिति ।

अत्र वयं ब्रूमः—बाधेनाभावरूपेणैतदध्यायसंगतेस्स्वतोऽसंभवेन बाध्यमानानुष्ठेयार्थज्ञानद्वारैव तस्या वक्तव्यत्वे सति समानन्यायादन्येषामपि नवमाध्यायपर्यन्तानामुपदिष्टपदार्थवर्गज्ञापकत्वाविशेषात् । यथोक्तं पार्थसारथिना—

'ऊहे सिद्धेऽतिष्टानां बाधाभ्युच्चयचिन्तया ।
इयत्ता दशमेऽगानां विकृतिष्वभिधीयते' ।। शा. दी. पृ ५४५ इति ।

अतोऽतिदिष्टानां पदार्थानामियत्तैवैका निरूप्यत इति शास्त्रदीपिकाकारमतम् भाष्यवार्तिकानुगुणम्, नतु भाट्टदीपिकाकारमतमिति युक्तमुत्पश्यामः ।

## पदार्थस्यातिदेशः, अथवोपकारस्येति संशयोपन्यासः ।

किं प्राकृतमङ्गजातमनादृतोपकारं स्वरूपेणैव विकृतावतिदिश्यते सौर्येण कुर्यात् । कथम्* । आग्नेयस्य स्वकार्यसाधने यः प्रकारः, स सौर्यस्य स्यादित्यतिदिश्यते । ततस्तत्सिद्ध्युपायत्वेनावान्तरापूर्वाणि प्रयाजादिजन्यानि, प्रोक्षणजन्यं चादृष्टम्, जाति-द्रव्य-गुणावघातादिजन्यञ्च नियमादृष्टानुविद्धं दृष्टमतिदिश्यते, ततस्तत्साधनभूताः पदार्थाः, तेषां च तथाविधानामेव प्रतीत्युपायतया वचनान्यतिदिश्यन्ते—इति ।

## पदार्थानामेवातिदेशः, नोपकारस्येति पूर्वपक्षवर्णनम् ।

तत्र पूर्वपक्षः—प्रकृतिवत्सर्वमेवाङ्गकाण्डं विकृतेरपि वाक्यशेषो भवति, तेन तेषु सर्वेषु विहितेषु प्रकृतिवद्यथासम्भवं दृष्टम्, अदृष्टं वा प्रयोजनम् कल्प्यत इति, नास्ति बाधः । यद्यपि न शास्त्रातिदेशः, तथाऽपि पदार्थाः एवातिदिश्यन्ते, नोपकारः । प्रकृतावुपकारस्य पदार्थपूर्वकत्वाद्विकृतावपि तत्पूर्वकैव तस्य प्रतीतिः । तत्र प्रथमप्रतिपन्नपदार्थातिक्रमेण न युक्तम् जघन्यप्रतिपन्न उपकारोऽतिदिश्यत इति । तस्मात्पदार्थानामेव कार्यनिरपेक्षाणामतिदिष्टानामिहैव दृष्टादृष्टप्रयोजनकल्पनान्नास्ति बाध इति प्राप्ते ।

## आकांक्षादिभिरुपकारस्यैवातिदेशः, तत्पृष्ठभावेन पदार्थानाम्, तत्पृष्ठभावेन शास्त्राणामतिदेश इति सिद्धान्तनिरूपणम् ।

अभिधीयते—'प्रकारस्यातिदेशः स्यात्पूर्वं यस्मादपेक्षितः ।
ततोऽवान्तरकार्याणामङ्गानां वचसां क्रमात् ॥ १ ॥

---

तत्र संशयमाह-किमिति । सौर्येण कुर्यादिति । सौर्येणापूर्वं भावयेदित्यर्थः । तदुपेतेनेति । ततश्च प्रकृतिवदत्राप्युपकारः कल्पनीय इति भावः । स्वकार्येति । परमापूर्वोत्पादनवेलायामाग्नेयोत्पत्त्यपूर्वेण या सामग्री अखण्डोपकारलक्षणा अपेक्षिता । साऽत्रापि स्यादित्यतिदिश्यत इत्यर्थः । वाक्यशेषो भवतीति । वैकृतप्रधानवाक्यैकवाक्यभावमनुभवतीत्यर्थः । नास्ति बाध इति । कृष्णलेषु दृष्टोपकारासंभवेऽपि अदृष्टार्थमवघातसंभवान्नास्ति बाध इत्यर्थः ।

प्राभाकरा वचनातिदेशं न मन्यन्ते । तन्मतेऽपि पूर्वपक्षमाह—यद्यपीति । अस्तु प्रकृतिक्रमेण विकृतावपि प्रथममेव पदार्थान्वयः, तथापि बाधासिद्धिः कथम्? तत्राह—तस्मादिति ।

---

* आग्नेयस्य ये धर्माः, तदुपकृतेनेति । किं वा उपकारः प्रथममतिदिश्यतेसौर्येण कुर्यात्, कथम्? यथाऽऽग्नेयेनेति ब. पु. पा. ।

१ – प्रकारस्येति । अत्रेदं बोध्यम्—यागेन भावयेदिति यागस्य स्वर्गसाधनत्वेनोपदेशे सति, अर्थाद्यागस्य स्वर्गसाधनत्वं यथा भवति, तथा कुर्यादित्यर्थः प्रतीयते, ततश्च कथमित्यपेक्षा, केन व्यापारेण यागं फलसाधनं कुर्यात् इति, यागगतफलसाधनतासंपादकव्यापारविशेषाकांक्षा पर्यवस्यति । नतु यागगतफलसाधनतासंपादकत्वरूपम्, विना स्वरूपेण व्यापारापेक्षामात्रम् । यागगतफलसाधनतासंपादकत्वञ्च तत्तत्पदार्थजन्यदृष्टादृष्टोपकारसंपादनस्यैव साक्षात् संभवति, पदार्थानान्तु तादृगुपकारव्यवधानेनेति, महोपकारसंबन्धिन उपकारस्यैवापेक्षा, न तु पदार्थानाम् ।

यद्यपि प्रकृतावुपकारः शास्त्रपदार्थपूर्वक एव, तथाऽपि विकृतावतिदेशावस्थायां सर्वेषां शास्त्र-पदार्थ-कार्याणां क्लृप्तत्वाविशेषेऽपि कथंभावापेक्षा विकृतिभावना प्रकारमेव प्रथमं स्वीकरोति। न हि तस्याः शास्त्राणि, पदार्था वा स्वरूपेणापेक्षिताः, किं तु प्रकारः, प्राकृतः स एव तावदङ्गीक्रियते। स च पदार्थविशिष्टावान्तरकार्यविशिष्टोऽतिदिष्टः सन्, विशेषणानि चार्थात्प्रापयति। तेन तत्सिद्ध्यर्थमवान्तरकार्याणि, तदर्थं चाङ्गानि, ततः शास्त्राणि[1]। यद्यपि प्रथमावगताः पदार्थास्तथैवालोचयितव्याः, तथाऽप्यनपेक्षितत्वात्पदार्थानुपेक्ष्य, प्रकारमेव विकृतिर्गृह्णाति। तस्मात्तत्पुरस्सरः एवातिदेशः।

कार्यनिरपेक्षाणाम्—उपकारनिरपेक्षाणाम्। किन्तूपकार इति। भावनायाः कथमिति, करणेन भाव्यनिष्पत्तावुपकार एवापेक्षितः, न त्वङ्गानां स्वरूपमित्यर्थः। तावदङ्गीक्रियते—प्रथममतिदिश्यत इत्यर्थः। यद्यपि प्रकृतावपि प्रथममुपकार एवाकाङ्क्षितः। तथापि तस्याक्लृप्तत्वात् तदुपस्थापकशब्दाभावाच्च तं विहाय, श्रुतानामङ्गानां प्रथममन्वयः। पश्चाच्चोपकारकल्पनं भवति। विकृतौ तु तस्य क्लृप्तत्वादाकाङ्क्षितस्य तस्य त्यागे कारणाभावात्, प्रथमत एवोपकारान्वय इति भावः। प्रागेवोपकारातिदेशः। स तु कथमित्याशङ्क्य, तस्यैव साक्षादतिदेशः, तद्विशेषणतया पदार्थानामतिदेशस्त्वार्थिक इत्याह—स चेति। उपकारस्य स्वविशेषणप्रापणक्रमं दर्शयति—तेनेति। प्राकृतान्वयक्रम एव किमिति नाश्रित इत्याशङ्क्य, तदुल्लङ्घने हेतुमाह—यद्यपीति। अधिकरणं निगमयति—तस्मादिति। अस्तु तत्पुरःसर एवातिदेशः। बाधसिद्धिः कथमित्याशङ्क्य, उपकारस्यैव साक्षादतिदेशात् तस्य च सकलपदार्थसाध्वत्वेन सामान्यभूतस्य कतिपयपदार्थोत्कर्षापकर्षक्षमत्वात्, तत्पुरःसरस्य तद्विशेषणतया पदार्थाति-

स चोपकारो द्विविधः परमोपकारः अवान्तरोपकारश्चेति, तत्र करणस्य यागादेः फलसामर्थ्याचरणात्मक उपकारः परमोपकार इत्यभिधीयते, सचेदृशः—दृष्टादृष्टरूपोपकारसंपादनेन यागं फलसाधनं कुर्यादिति फलसाधनसामर्थ्याचरणात्मकः। अवान्तरोपकारस्तु परमोपकारसाधनत्वेन विधीयमानो दृष्टादृष्ठसंपादनलक्षणो व्यापारः—इति। तत्र साधनोपदेशाबलादेव तत्सामर्थ्याचरणरूपोपकारस्यार्थप्राप्तत्वेनाप्राप्तस्तदुपायविशेषभूतोऽवान्तरव्यापारः एवातिदिश्यते। अयमर्थः शास्त्रदीपिकायां दशमाद्ये विशिष्य प्रत्यपादि, एतत्सर्वमभिप्रेत्याह—प्रकारस्यातिदेश—इति

१—यद्यपीति। अत्रेदमवधेयम्—ननु 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिंगदर्शनम्' मी. द. ७-४-१ इत्यादौ सप्तमे विध्यन्तशब्दश्रवणात् शास्त्रातिदेशः प्रतीयते। प्रकृतेचोपकारस्साक्षादतिदिश्यते, न शास्त्रम्, न वा पदार्थ इति। तदेतत्पूर्वापरव्याहतम्। अथैतद्दोषपरिजिहीर्षया पदार्थानामेवोपकारमुखेनातिदेशः, शास्त्रस्य तु साक्षादतिदेश, इत्युच्यते, तर्हि कृष्णलचरौ दृष्टप्रयोजनाभावेऽप्यदृष्टार्थोऽवघातस्स्यात्। बाधो न स्यात्। अतः प्रधानविधिनास्वरूपेण पदार्थानामनपेक्षितत्वेनोपकारस्यैवाक्रांक्षितत्वात्प्रथममतिदेशः तत्पृष्ठभावेनोपकारजनकीभूतानां पदार्थानाम्, तत्पृष्ठभावेन तत्प्रापकशास्त्राणामतिदेश इति बोध्यम्। यदुक्तं सप्तमे शास्त्रातिदेश उच्यत इति, तदापातरमणीयम्। सप्तमेऽपि न शास्त्रातिदेशः प्रतिपाद्यते। किन्तूपकारमुखेनैव। यथोक्तं मिश्रैः—उच्यते कार्यातिदेशार्थिको यश्शास्त्रातिदेशः, तदभिप्रायमेतत्, शा. दी. पृ. ६४२ इति। एतत्सर्वं मनसि निधायाऽऽह 'यद्यपीत्यादिना उपकारस्यातिदेश' इत्यन्तेन।

तदतिदेशेन चार्थात्प्राप्यमाणेषु पदार्थेषु व्रीहीणां प्रत्यक्षश्रुतकृष्णलचरौ निवृत्तिः, वितुषीकरणस्य च तेष्वसंभवान्निवृत्तिः। तन्निवृत्तौ च तद्द्वारस्यावघातस्य निवृत्तिरिति तदतिरिक्तविशेषणयुक्तस्यैवोपकारस्यातिदेशः—इति।

## प्राकृतस्योपकारस्योपदेशेनैव विकृतावन्वयः, पदार्थानान्त्वतिदेशेनेति वदतां प्राभाकरमीमांसकानां मतस्यानुवादः।

[१]प्राकृतस्योपकारस्य विकृतावुपदेशतः।
अन्वयं कश्चिदाचष्टे पितृयज्ञे नियोज्यवत्॥ २॥

उपदेशो हि ग्रन्थसन्दर्भः। स चार्थान्तरान्वितं तदर्थं कार्यतया प्रतिपादयति। स तावत्तथाभूत एवौपदेशिकः, तेनापि यदपर्यवस्यता आक्षिप्यते, तदप्यौपदेशिकमेव। यथा पिण्डपितृयज्ञे नियोज्यः। यथा च प्रकृतावुपकारः। तेन विकृतावपि विध्यर्थकल्पितस्योपकारस्य भवत्यौपदेशिकत्वमिति कश्चित्।

---

देशस्यार्थिकत्वोपपादनात्, प्रतिपदार्थं पृथक् पृथक् अतिदेशाभावेनार्थिकस्य पदार्थातिदेशस्यापि सामान्यत्वेन प्रत्याम्नात–प्रतिषिद्धलुप्तद्वारकाङ्गव्यतिरिक्ताङ्गविषयतया संकोचात् तादृशाङ्गानामतिदेशस्यैवाभावेन निवृत्तेर्बाधः सिध्यतीति प्रतिपादयति—तदतिदेशेनेति। माषपरिमितानि सुवर्णशकलानि कृष्णलानि। निवृत्तिरिति। प्रत्याम्नानादिति शेषः। वितुषीकरणस्य—वितुषीकरणाख्यावान्तरोपकारस्य। असंभवात्—संपादयितुमशक्यत्वात्। तद्द्वारस्य—तादृशावान्तरोपकारजननद्वारा महोपकारजनकस्य।

स्वमते सकलपदार्थविशिष्टस्योपकारस्यैवातिदेश इत्युक्तम्। प्राभाकरास्तु प्राकृतस्योपकारस्योपदेशेनैव विकृतावन्वयः। पदार्थानां त्वतिदेशेनेति वदन्ति। तदनुवदति दूषयितुं—प्राकृतस्येति। कथमशाब्दस्योपकारस्यौपदेशिकत्वमित्याशङ्क्य, तदुपपादयति—उपदेशो हीति। तथाभूत एवौपदेशिक इति। ग्रन्थसंदर्भेण साक्षात् प्रतिपादित एवौपदेशिक इत्येतावदविप्रतिपन्नमेवेत्यर्थः। अन्यदप्यौपदेशिकमस्तीत्याह—तेनापीति। प्रकृतावुपकार इति। विध्यर्थकल्पितेन—विधिना साक्षादाकाङ्क्षितेन। अङ्गानुपपत्तिकल्पितेनोपकारेण विधेरन्विताभिधानात् तस्याप्यौपदेशिकत्वमित्यर्थः।

---

१. प्रकृतस्येति मु. पु. पा.।

२–अत्रेदं बोध्यम्–प्राभाकरमीमांसकाः परमोपकार एवाऽतिदिश्यते, तस्यैव फलजननसामर्थ्योद्बोधरूपत्वेन प्रथममपेक्षितत्वात्। तस्य च जनकापेक्षायाम् पदार्था अपि पृथगतिदिश्यन्ते। नत्ववान्तरोपकारमुखेन पदार्थानामतिदेशः। अतस्तेनावघातादेस्तुषविमोकरूपावान्तरोपकारस्याभावेऽपि, परमोपकारस्य सत्त्वात् पृथक् पदार्थातिदेशेनावघातादेस्तदर्थत्वेन बोधनात् कृष्णलचरौ विद्यते एवांगत्वम्। प्रयोजनरूपद्वारलोपादनुष्ठानं परं बाध्यते, न तु तद्वर्ज्यातिदेश इति मन्यन्ते। तदनुवदति दूषयितुम्–उपदेशोहीत्यादिना कश्चिदित्यन्तेन। ग्रन्थसन्दर्भेण न साक्षात् प्रतिपादित एवौपदेशिक इति सर्वसंप्रतिपन्नः, विध्यर्थकल्पितेनोपकारेण विधेरन्विताभिधानात्, तस्याप्यौपदेशिकत्वमिति पूर्वपक्षस्याशयः।

**वैकृतो विधिरुपकारव्यक्तिविशेषमाक्षिपति, अथवा प्राकृतमुपकार-विशेषमिति द्वेधा विकल्प्य दूषणेन तन्निरासः।**

तन्न युक्तम्—[1]उपकारकभेदात्स्यादुपकारविशेषधीः ।
पूर्वमेव त्वपेक्षा स्यात्पदार्थेष्वपि सा समा ॥ ३ ॥

उपकारकपदार्थविशेषाधीनसिद्धिरुपकारविशेषो नानवधारितेषु तेषु विशेषरूपेण निरूपयितुं शक्यते। भवितव्यं हि केन चिदुपकारविशेषेणेत्यपेक्षामात्रमेव प्रथमं सिद्ध्यति। तच्च पदार्थेष्वपि भवितव्यमुपकारजनकैः पदार्थभेदैरित्यपेक्षासम्भवात्तुल्यमेव।

---

विधिना स्वसिद्ध्यर्थं कल्पितस्योपकारस्यौपदेशिकत्वे पदार्थानामप्यौपदेशिकत्वं प्रसज्येतेति प्रतिबन्द्याशयेन परिहरति—तदयुक्तमिति। विश्वजिदादौ स्वर्गकामादिनियोज्यविशेषवदयमत्रोपकारविशेष इति शृङ्गग्राहिकयोपकारविशेषस्य विधिना परिकल्पनात् तस्यौपदेशिकत्वमुच्यते, अथवा उपकारविशेषानिरूपणेऽपि प्रथमं तद्विषयाकाङ्क्षासम्भवमात्रात् तस्यौपदेशिकत्वमिति विकल्प्य, प्रथममसंभवेन दूषयति—उपकारकेति। उपकारकपदार्थविशेषादेवोपकारविशेषो वाच्यः। न तु प्रकारान्तरेण संभवति। ततश्च विशेषकपदार्थनिरूपणमन्तरेण उपकारविशेषस्य प्रत्येतुमशक्यतया तस्यौपदेशिकत्वे तेषामपि तथात्वं प्रसज्यत इत्यर्थः।

द्वितीयमाशङ्कते—पूर्वमिति। प्रथमत एवोपकारविशेषस्यापेक्षा स्यादित्येतावन्मात्रेण, तस्यौपदेशिकत्वमुच्यते चेदित्यर्थः। दूषयति—पदार्थेष्वपीति।

प्रथमार्धं व्याचष्टे—उपकारकेति। द्वितीयार्धस्य प्रथमपादं व्याचष्टे—भवितव्यं हीति। तुरीयं पादं व्याचष्टे—तच्चेति। ननु विधिबलेनोपकारविशेषस्य परिकल्पनात् तस्यौपदेशि-

---

१—वैकृतोविधिरुपकारव्यक्तिविशेषमाक्षिपति। तत्र द्वेधा विकल्पः सर्वविलक्षणमुपकारव्यक्तिविशेषमाक्षिपति, अथवा प्राकृतमुपकारविशेषमाक्षिपतीति। विकल्पे सति दूषणासहत्वात्। अत उपकारस्यातिदेशिकत्वमेव स्वीकर्तव्यमिति भावः। उपकारस्य न केवलमातिदेशिकत्वम्, नापि केवलमौपदेशिकत्वम्, अपितु केवलविध्याक्षेप्यत्वादुपदिष्टम्। तद्वद्भावेन प्रापितत्वाच्चातिदेशिकत्वमिति, उभयरूपाक्रान्तत्वादुभयरूपत्वमिति प्राभाकरमीमांसकमतस्थितिः, न चैकस्योभयरूपत्वं विरुद्धमिति शंकनीयम्। न्यायसिद्धतया न विरोध इत्यादिकं मनसि निधाय षट्कद्वयार्थं स्वमतेनोपदेशातिदेशयोरुपदेशकार्याश्रितत्वमुपपादयति, तेनेत्यादिना अपितूपदेशकार्याश्रितमित्यन्तेन। अस्य विस्तरोऽतिदेशपारायणे प्र. प. पृ. ४९२—४९६ द्रष्टव्यः।

एवं व्यवस्थायामंगीक्रियमाणायां सप्तमाष्टमयोः कार्यषट्कप्रमेयस्यौपदेशिकस्योपकारस्य विचारो यथा उपोद्घाततया नेतव्यः, तथैव भाट्टमीमांसकमतेऽपि प्रयोगविधिव्यापाररूपत्वेन तन्त्रावापप्रसंगानां विचारः प्रासंगिको ज्ञेय इति।

'यस्तूभयोस्समो दोषः परिहारोऽपि तादृशः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ इति ध्येयम्।

अत्रत्योविशेषस्तु भूमिकायां द्रष्टव्यः। इत्थं प्रासंगिकं गुरुमतनिराकरणम् परिसमाप्य दशमाद्याधिकरणफलतया दशमाध्यायारम्भोपयिकीं तत्प्रमेयसिद्धिम् निगमयति—तत्सिद्धम्—इति।

अथोच्येत न विधिर्विशेषरूपेण पदार्थानाक्षेप्तुं प्रभवतीति, वाक्यान्तरादिभिः, अतिदेशेन वा यागदानादिपदार्थभेदसमर्पणमपेक्षते। उपकारन्तु विशेषरूपेणवाक्षिपति। अयमेव हि तस्य विशेषाक्षेपः—यदस्ति कश्चिदुपकार इति। न ह्यसौ पदार्थवदयमसाविति निरूप्यते, तद्विधित एव कल्पितोऽसावौपदेशिक इति। तथाऽपि कथं प्राकृतस्योपकारविशेषस्यौपदेशिकत्वम्, तस्य हि नान्तरेण चोदकं विधिराक्षेपाय प्रभवति। सत्यम्, तथाऽप्युपकारविशेषकल्पनायेशानोऽपि लाघवात्प्राकृतं गृह्णाति, तेन विध्याक्षेपविशेषस्य* नियममात्रं चोदकात्—इति।

## अत्र शंका-समाधाने

अत्राह। ननु चैवं सति दृष्टार्थानामवघातादीनाम्, द्रव्य-गुणादीनाञ्च विधित एवानियमेनाक्षेपसंभवादतिदेशेन च नियममात्रालाभाद्व्रीह्यादीनामपि विकृतावुपदेशादेष

---

कत्वमिति, प्रथममेव पक्षमङ्गीकुर्मः। तत्र च न कश्चित् दोप इत्याशयेनाशङ्कते—अथोच्यत इति।

ननु तस्यौपदेशिकत्वे तद्विशेषकपदार्थानामप्यौपदेशिकत्वं प्रसज्येतेति दोष उक्त एवेत्याशङ्क्य, उपकारविशेपवत् पदार्थविशेषाणां याग-दान-होमावहननप्रोक्षणादीनां केवलविधिवलेन आक्षेपायोगात्, न तेषामौपदेशिकत्वं प्रसज्यत इत्याह—न विधिरिति। प्रकृतौ संनिहितवाक्यान्तरादिभिः, विकृतावतिदेशेन। पदार्थविशेषानाक्षेपेत दधीनविशेपस्य, उपकारविशेषस्य वा कथमाक्षेप इत्याशङ्क्य पदार्थविशेषाधीनस्योपकारविशेपस्य प्रत्येतुमशक्यत्वेऽपि यावानुपकारविशेष आक्षेप्तुं शक्यते, तावत औपदेशिकत्वमित्याह—उपकारं त्विति। आक्षेपार्हमुपकारविशेषमाह—अयमेवेति। उपकारविशेषाक्षेपस्त्वयमेव यत् स्वत उपकारान्तरेभ्यो भिन्ना उपकारव्यक्तिराक्षिप्यत इत्यर्थः। यथा पदार्थानां यागदानहोमादिभेदेन स्वरूपवैलक्षण्यम्, एवमुपकारस्वरूपवैलक्षण्यस्य निरूपयितुमशक्यत्वादत्र काचिदुपकारव्यक्तिरस्तीत्येवमेव तस्य विशेषाक्षेप इत्याह—न हीति। उपकारस्यौपदेशिकत्वं निगमयति—तदिति।

उपकारव्यक्तिविशेषमाक्षिपन् वैकृतो विधिः किं सर्वविलक्षणमुपकारव्यक्तिविशेषमाक्षिपति, उत प्राकृतमुपकारविशेषमिति विकल्प्य, आद्ये विकृतौ प्राकृतोपकारो न सिध्येत्। तदसिद्धौ च तत्पुरस्सरः प्राकृतपदार्थातिदेशो न स्यादित्याशयेन दूषयति—तथापीति। द्वितीये तु विधि स्वाक्षेप्यस्योपकारस्य स्वयमेव प्राकृतत्वं कल्पयितुं न शक्नोति। किंतु तच्चोदनासामान्येनैव लभ्यम्। ततश्चातिदेशिकत्वमेव स्यादिति दूषयति—तस्य हीति।

ननु सर्वविलक्षणमुपकारविशेषमाक्षेप्तुं शक्नोत्येव विधिः। तथापि तस्य क्वचिदप्यक्लृप्तस्य कल्पने गौरवात् प्रकृतिक्लृप्तमेव तमाश्रयति। ततश्च प्राकृतस्यैवोपकारस्य विधिमात्राक्षेप्यत्वादौपदेशिकत्वमिति शङ्कते—सत्यमिति। ननु प्राकृत उपकारोऽस्तीत्येतावन्मात्रस्य विधिकल्प्यत्वेपि, अयमैष्टिकः, सौमिकः, पाशुक—उपकार इत्यादिविशेषस्य चोदनासामान्यमन्तरेण विधिमात्रकल्प्यत्वाभावात्, कथमौपदेशिकत्वमित्याशङ्क्य, प्रकृतिविशेषनियमस्य चोदकलभ्यत्वमात्रेण प्राकृतोपकारस्यौपदेशिकत्वं न हीयत इत्याह—तेनेति।

पदार्थविशेषप्रतिबन्द्या परिहरति—अत्राहेति। सौर्यंचरुयागे सौर्यचरुसिद्ध्यर्थं व्रीह्यादि-

---

* आक्षेपस्यापीति मु. पु. पा.

संगतिः प्रसज्येत। अथ विधिना यत्साक्षादाक्षिप्यते, तदौपदेशिकम्। यथाचोपकारः, तत्सिद्धयर्थन्तु यत् पश्चादाक्षिप्यते द्रव्यादि, न तदौपदेशिकमिति परिभाष्यते। तथा सति विश्वजिद्यागस्य स्वर्गफलसाधनत्वं नौपदेशिकं स्यात्, विधिपरिकल्पितविशिष्ट-नियोज्यसम्बन्धकल्पितत्वात्। तस्मान्नोपकारस्योपदेशः, सहैव तु पदार्थैरुपकारस्यातिदेश एव प्रमाणम्। तद्भावो ह्यतिदेशः। तेन यत्साक्षात्प्रणाल्या वा प्राप्यते, तदातिदेशिकम्। तन्निरपेक्षमेव तु ग्रन्थसंदर्भमात्रेण श्रुत्यर्थाभ्यां प्रमितमौपदेशिकमिति विवेकः।

**उपकारस्य विध्याक्षेपलभ्यत्वादुपदिष्टत्वम्, तद्भावेन प्रापितत्वाति-दिष्टत्वमित्युभयरूपत्वम्, उपदेशकार्याश्रितयोः पूर्वोत्तरषट्कयोरुपदेशाति-देशविषयत्वम्, तेन प्रमेयनिरूपणमिति प्रतिपादनञ्च।**

यदप्युच्यते—उपदिष्टस्याप्युपकारस्यान्यदीयस्यान्यत्रातिदेशादतिदिष्टत्वमप्यस्ति, तेनोपदेशातिदेशयोरेकत्रैव युगपत्सम्भवान्नैतौ प्रतिपक्षभूतौ शब्दप्रमाणभेदौ। अत एव नोपदेशातिदेशाश्रितौ षट्कौ, किंतूपदेशकार्यान्वितौ। कार्यमिति च पदार्थजन्यस्योप-कारस्याभिधानम्, न नियोगस्य। अत एवोपादानाभिधानो विध्याक्षेपः पूर्वषट्के चिन्तितः, विध्याक्षेप्यत्वादुत्पत्त्यादीनाम्। तन्त्रावापादि तु प्रकृतावप्युपकारप्रमेय-

---

द्रव्यम्, अवहननादिस्वरूपं च विधिरेवाक्षेप्तुं प्रभवति। व्रीह्यादिनियममात्रमतिदेशबलाद्भवेत्। नैतावता व्रीह्यादीनामौपदेशिकत्वं हीयते प्राकृतोपकारवदिति वक्तुं शक्यत इत्यर्थः,

पदार्थप्रतिबन्दी परिहारमाशङ्कते—अथेति। तत्सिद्धयर्थमिति। उपकारसिद्धयर्थमेव चरुप्रकृतिभूतव्रीह्यादिद्रव्यावहननादीनामाक्षेप इति, तेषामौपदेशिकत्वं न प्रसज्यत इति भावः। दूषयति—तथा सतीति। विश्वजिद्यागस्य फलसाधनत्वमौपादानिकतया औपदेशिकमिति हि तस्याङ्गीकारः। स न सिध्येदित्यर्थः। तस्मादस्मादुक्तरित्या उपकार-पदार्थयोरुभयोरपि आतिदेशिकत्वमङ्गीकार्यमित्याह—तस्मादिति।

कथमुभयोरप्यातिदेशिकत्वमित्याशङ्क्य, तदुपपादयति—तद्भाव इति। यदन्यत्र क्लृप्त-मत्यत्र प्राप्यते, तदातिदेशिकम्। साक्षात्त्वमकारणमित्यर्थः। तर्हि कीदृशमौपदेशिकत्वं? तत्राह—तन्निरपेक्षमिति। अर्थात् प्रमितः प्रकृतावुपकारः। विश्वजिदादौ च फलमित्यादि। उपकारस्य न केवलमातिदेशिकत्वं, नापि केवलमौपदेशिकत्वं। किं तु केवलविध्याक्षेप्यत्वात उपदिष्टत्वं, तद्भावेन प्रापितत्वाच्चातिदेशिकत्वमिति उभयलक्षणाक्रान्तत्वादुभयरूपत्वमिति वदाम इत्याशङ्कते—यदपीति। नन्वेकस्योभयरूपत्वं विरुद्धमित्याशङ्क्य न्यायसिद्धतया न विरोध इत्याह—तेनेति।

प्रसङ्गात् स्वमतेन षट्कद्वयार्थमाह—अत एवेति। यत एकस्मिन्नपि प्रमेये प्रमाणद्वय-समावेशसंभवः अत इत्यर्थः। आश्रिताविति। उपदेशप्रमेयं पूर्वषट्के चिन्त्यते। कार्यप्रमेयं तु उत्तरत्रेत्यर्थः। कार्यशब्देन नियोगानभिधाने हेतुमाह—अत एवेति। पूर्वषट्के—चतुर्थाध्याय इत्यर्थः। उत्पत्त्यादीनामिति। औपादानिका एवोत्पत्तिविनियोगप्रयोगाधिकाराश्चतुर्थे चिन्तिता इत्यर्थः। कार्यशब्देनोपकारविवक्षायां च हेतुमाह—तन्त्रेति। उपकारस्यैकरूपत्वे तन्त्रं, प्रसङ्गश्च, उपकारभेदे त्वावृत्तिरित्युभयोरुपकारनिरूप्यत्वात् एकादशे, द्वादशे च तद्विचार

मित्युत्तरषट्के निरूपितम्। अन्यथाऽतिदेशविषयत्वे सति प्रयाजादीनामाग्नेयादिषु तन्त्रेण, आवृत्त्या वाऽनुष्ठानमित्यादिविचारो नात्र संबध्येत। तस्मान्नोपदेशातिदेशाश्रितं षट्कद्वयम्, अपितूपदेशकार्याश्रितमिति।

**उपकारस्यातिदेशिकत्वमेव न तूभयरूपत्वमिति दूषणम्, भाट्टमतेन सहेतुकं षट्कद्वयस्य प्रतिपाद्यनिरूपणम्, अनुपपत्ति-परिहारयोः समानत्वेन यस्तूभयोस्समो दोष इति न्यायेन सामञ्जस्यकथनम्।**

तदप्युपकारस्योक्तेन न्यायेनौपदेशिकत्वासम्भवान्निरस्तम्। तथा हि—उपदेशातिदेशावेव प्रमाणे, तदाश्रितञ्च षट्कद्वयं भवति। तथा सति कथमुपदिष्टार्थविषया तन्त्रावापादिचिन्ता। अन्यथा वा कथं सप्तमाष्टमयोर्वचन–नामधेय–चोदनालिङ्गैरुपकारस्योपदेशप्रमेयस्य चिन्ता। सा हि विध्याक्षेपविषयत्वाच्चातुर्थिकी स्यात्। पदार्थप्राप्तिसिद्ध्यर्थमिति ब्रूमः नह्यसत्यामुपकारस्य प्राप्तौ तद्वशेन पदार्थानां प्राप्तिर्वर्णयितुं शक्यते। तेनोपोद्घातस्तद्विचारः पारिप्लवत्वनिराकरणवदिति। अस्मत्पक्षेऽपि प्रासङ्गिकस्तन्त्रावापादिविचारः। दशमे हि पदार्थेयत्तायां निरूपितायां परिमाणप्रसंगेन तन्त्रावापप्रसंगाः प्रयोगपरिमाणरूपाश्चिन्त्यन्ते। उपदिष्टातिदिष्टपदार्थसाधारण्याच्च उभयोत्तरकालमेव तन्त्राद्यारम्भः। यद्यपि प्रयोगविशेषविचारात्मकत्वाच्चतुर्थ–पञ्चमसमीपेऽप्यारम्भसम्भवः, तथाऽपि परिमाणविचारात्मकत्वादत्राप्यारम्भः सम्भवतीति, पर्यनुयोगाविशेषादत्राप्यारम्भः। यथा भवन्मते कार्य–पदार्थयोरुपदेशकार्यप्रमेयत्वादुभयविचारात्मकयोस्सप्तमाष्टमयोरन्यतरांशेन चतुर्थोत्तरषट्कान्तर्भावादन्यतरत्रारम्भे कर्तव्ये सति, अविशेषादुत्तरषट्क एवारम्भः। तथा अस्माकमपि तन्त्रादेरिति न दोषः।

---

इत्यर्थः। उत्तरषट्कस्यातिदेशविचारात्मकत्वे तु तयोर्न तत्र संगतिरित्याह—अन्यथेति। तस्मान्न भवदुक्तक्रमेण षट्कद्वयार्थो युक्त इति, अस्मदुक्तमर्यादयैव भेदोऽङ्गीकार्य' इति निगमयति—तस्मादिति। पदार्थप्रतिबन्द्या उपकारौपदेशिकत्वस्य पूर्वमेव निराकृतत्वात्, तस्य च केवलातिदेशिकत्वमेव युक्तं, न तूभयरूपत्वमिति दूषयति—तदपीति।

उपदेशातिदेशयोरसंकीर्णविषयतया षट्कद्वयस्य तदाश्रितत्वं प्रतिपादयितुमुपक्रमते—तथा हीति। प्रमाण इति। उपकारे, पदार्थेष्वप्यतिदेश एव प्रमाणं, न तु पदार्थेषूपकारः प्रमाणमिति भावः। उत्तरस्यातिदेशाश्रितत्वे तत्रोपदेशाश्रिततन्त्रादिचिन्ता कथं संगतेति शङ्कते—तथा सतीति। कार्याश्रितत्वे वा तस्य सप्तमाष्टमयोः कार्यषट्काप्रमेयस्यौपदेशिकस्योपकारस्य चिन्ता भवन्मते वा कथं संगच्छत इति प्रतिबन्द्या परिहरति—अन्यथा वेति। उपकारस्यौपदेशिकप्रमेयत्वेन, तच्चिन्तायाः साक्षात् संगत्यभावेऽपि कार्यषट्कोपोद्घाततया तत्र चिन्ता संगतेति शङ्कते—पदार्थेति। अस्मन्मतेऽपि प्रासङ्गिकतया तन्त्रादिचिन्ताऽतिदेशषट्के संगतेति परिहरति—अस्मदिति। प्रासङ्गिकत्वमेव दर्शयति—दशमे हीति। न केवलं प्रासङ्गिकी संगतिः। अवसरप्राप्तत्वाच्च, तत्रैवारम्भो युज्यत इत्याह—उपदिष्टेति। प्रयोगविधिव्यापाररूपत्वात् तन्त्रावापप्रसङ्गानां चतुर्थवत् प्रथमषट्क एवारम्भः स्यादिति, आशङ्कामनूद्य परिहरति—यद्यपीति। उक्तमर्थं प्रतिबन्द्याप्युपपादयति—तथापीति। कार्यम् उपदेशप्रमेयम्। पदार्थास्तु कार्यप्रमेयभूताः। उभयविचारेति। उपकारस्तयोः साक्षाद्विचारितः। तद्विचारेणैव तत्प्रमेयभूता अपि पदार्थास्तयोर्विचारिता इति भावः।

## चोदकसहायेनोपदेशेनोपकारे प्राप्ते, अतिदेशेन पदार्थप्राप्तिरिति गुरुमतेन शंका–निरासौ ।

यच्चोपकारप्राप्तेः पश्चात्पदार्थातिदेशाङ्गीकरणम्, तदपि व्यर्थम्, विशिष्टोपकारप्राप्त्यैवार्थात्पदार्थप्राप्तेः । न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि कल्प्यन्ते । सर्वपदार्थसाधारणोपकारशास्त्रतः पश्चान्न पदार्थविशेषाणां शास्त्राणि सम्भवन्तीति । तत्सिद्धं कार्यद्वारेण पदार्थानां प्राप्तौ, कार्याभावे बाध इति । एवं च यद्वचनप्राप्तस्य बाधो न युक्त इति, तत् परिहृतम्, वचनस्यैव कार्यद्वारेण पदार्थान् प्रापयतस्तदभावे प्रापकत्वव्याघात्। एतादृशं हि वचनम् यथाऽऽग्नेय उपकृतः, तथा सौर्योऽपीति । किं तत् येनोपकर्तव्यम् ? समिदाद्यवान्तरकार्यम् । तदपि तैरेव समिदादिभिर्यथाप्रकृत्येव जनयितव्यमिति । एवं च सामान्यतः प्राप्तिमवगम्य तदनन्तरं पदार्थान्स्वरूपेणालोचयति–अनेन कथमुपकृतमिति ।

---

उपकारे साक्षादतिदेशेनैव प्राप्ते तद्विशेषणतया पदार्थानामार्थिकी प्राप्तिरिति स्वमतमुपपादयितुमुपकारप्रापकशास्त्रेण चोदकसहायेनोपदेशेनोपकारे प्राप्ते पश्चात् शास्त्रान्तरेणातिदेशेन पदार्थप्राप्तिरिति तन्मतमनूद्य दूषयति—यच्चेति । व्यर्थं । गौरवपराहतमित्यर्थः । विध्यर्थस्य विध्याकाङ्क्षितस्य विशिष्टस्य–इष्टि–पशु–सोमादिप्रकृतिविशेषविशेषितस्योपकारस्य । अर्थात्–पृथक् शास्त्रमन्तरेण सामर्थ्यादेव । सामर्थ्यं च कार्यरूपस्योपकारस्य करणविशेषणभूतपदार्थमन्तरेण प्राप्तुमशक्तिः । सामर्थ्यादेव पदार्थप्राप्तौ सत्यां, शास्त्रान्तरकल्पने कल्पनागौरवमित्यर्थः ।

ननु प्रथमं सामान्यशास्त्रेणोपकारप्राप्तावपि तस्य पदार्थाविशेषितस्यैव प्राप्तेः, तत्प्राप्त्यर्थं पुनः शास्त्रान्तरं कल्पनीयमित्याशङ्क्याह—न चेहेति । कल्प्यन्ते–कल्पयितुं युज्यन्त इत्यर्थः । कथं तदित्याशङ्क्य, प्रथमं तस्य पदार्थाविशेषितत्वेऽपीष्टचादिप्रकृतिविशेषसंबन्धित्वात्, तस्य च प्रकृतौ तद्गतसकलपदार्थजन्यत्वस्य क्लृप्तेस्तत्प्राप्तौ तेषां सामर्थ्यादेव प्राप्तेः शास्त्रान्तरकल्पनावैयर्थ्यादिवेत्याह—सर्वपदार्थेति । शास्त्राणि सन्तीति । शास्त्रकल्पना न संभवतीत्यर्थः ।

इत्थं प्रासङ्गिकं प्राभाकरमतनिराकरणं परिसमाप्य, दशमाद्याधिकरणफलतया दशमारम्भौपयिकीं तत्प्रमेयसिद्धिं निगमयति—तत्सिद्धमिति । कार्याभावे–अवान्तरकार्यासंभवे । वचनप्राप्तस्य कथं बाध इति शङ्कायाः परिहारं वक्ष्याम इत्युक्तम् । तदेवाह—एवञ्चेति । कथं परिहार्य इत्याशङ्क्य, तेषां वचनप्राप्तत्वस्यैवानङ्गीकारादित्याह—वचनस्येति ।

ननु सर्वसाधारणेन वचनेन केषांचित् प्राप्तौ सत्यामेव, कथं केषांचिदप्राप्तिः ? अप्राप्तौ वा कथं बाधवाचोयुक्तिरित्याशङ्क्य, तदुभयमुपपादयति—एतादृशमिति । अयं भावः–प्रथममखण्डोपकारस्तावदतिदिश्यते । तस्य न कुत्रचिद्बाधः । अवान्तरोपकाराणां तु यत्र संभवः, तत्र प्राप्तिः । तद्द्वारा च तत्साधनपदार्थानां प्राप्तिः । यत्र तु कृष्णलादावसंभवः, न तत्र तेषां प्राप्तिः । तदप्राप्तौ च तद्द्वारा प्रापणीयस्यावघातादेर्वचनेनापि न प्राप्तिः संभवति । बाधवाचोयुक्तिरप्यैष्टिकाद्युपकारप्राप्तौ प्रथमं तत्पदार्थाः सर्वेऽपि अत्र प्राप्नुवन्तीति मन्यते पुरुषः । ततः पदार्थविशेषप्राप्तिक्रमपर्यालोचने प्रथमजनितस्य सामान्यज्ञानस्य मिथ्यात्वकल्पनाद्युज्यत इत्युभयमप्युपपद्यत इति ।

## प्रयोजनलोपात्, प्रत्याम्नानात्, प्रतिषेधाच्च बाधनिरूपणम् ।

तत्रावघातस्य दृष्टप्रयोजनद्वारेणोपकारकत्वं प्रकृतावालोच्य कृष्णलेषु तथाभावासम्भवात् पूर्वसंजातस्य सामान्यज्ञानस्य बाधं मन्यते ।

एवम्—प्रत्याम्नातेऽपि कार्यद्वारेण पदार्थेषु प्राप्यमाणेषु बर्हिःकार्ये हविरासादने पूर्वं प्राप्तेः, तत्साधनापेक्षायां यावच्चोदकेन कुशा न प्राप्यन्ते, तावदेव प्रत्यक्षेण वाक्येन तदुद्देशेन शराणां विधानात्कुशबाधः ।

तथा—प्रतिषेधे सामान्यरूपस्य चोदकस्य विषयविशेषादुत्कालनम्[1] 'नार्षेयं वृणीत' इति । तस्माल्लुप्तार्थ—प्रत्याम्नात—प्रतिषिद्धांगेभ्यस्समुत्काल्यान्यांगेष्वेव चोदको व्यवस्थाप्यत इति, सिद्धो बाधः ।

## अतिदिष्टानामंगानां विकृतावननुष्ठानमेव बाध इति प्राभाकरमीमांसकानां मतानुवादः ।

लुप्तार्थस्यापि हन्त्यादेः कृष्णलादिषु शेषता ।
अस्ति, नास्ति त्वनुष्ठानमिति केचित्प्रचक्षते ॥ ४ ॥

---

प्रत्याम्नानस्थले तु अवान्तरकार्यातिदेशसंभवेऽपि तत्साधनाकांक्षाया औपदेशिकपदार्थेनैव निवृत्तेर्न चोदकस्य प्रकृतपदार्थप्रापकत्वमित्याह—प्रत्याम्नाय इति ।

प्रतिषेधस्थले तु 'नार्षेयं वृणीते' इत्यादिवाक्ये नञः पर्युदासत्वमाश्रित्य चोदकैकवाक्यत्वे सत्यार्षेयवरणव्यतिरिक्तपदार्थाः प्रकृतिवत् प्रयोक्तव्या इत्येवं चोदकार्थलाभेन तत्संकोचो भवतीत्याशयवानाह—तथेति । विषयविशेषात्,—आर्षेयवरणादिरूपात् । उत्कालनं—संकोचेनान्यत्रैव संचार. । एवं बाधसिद्धावविरोधं निगमयति—तस्मादिति । लुप्तार्थादीनामङ्गानां वैकृतयागशेषतया वचनेन प्राप्तिरेव नास्तीत्युक्तम् ।

प्राभाकरास्तु तेषां वचनेन प्राप्तिरस्ति । तेषां वैकृतापूर्वशेषत्वमप्यस्ति । श्रुत्याद्यवगततादर्थ्यस्यैव शेषत्वात् । बाधस्त्वननुष्ठानमेव । प्रयोगविध्यनुपसंग्रहेण तदनुष्ठाप्यत्वायोगादिति

---

१—उत्कालनम्—संकोचेनान्यत्रैव सञ्चारः ।

अत्रेदमवधेयम्—प्रथमं तावदखण्डोपकारोऽतिदिश्यते, तस्य न कुत्रचिद्बाधः भवति, अवान्तरोपकाराणान्तु यत्र संभवः, तत्र तेषां प्राप्तिर्भवति, तद्द्वारा तत्साधनीभूतानां पदार्थानां प्राप्तिः, यत्रासंभवः कृष्णलादौ, न तत्र तेषां प्राप्तिः । तदप्राप्तौ तद्द्वारा प्रापणीयस्यावहननादेर्वचनेनापि न प्राप्तिस्संभवति, बाधवाचोयुक्तिरप्यैष्टिकाद्युपकारप्राप्तौ प्रथमं प्राकृताः पदार्थास्सर्वेऽपि अत्रापि कर्तव्या इति भ्रान्त्या मन्यते पुरुषः । ततः पदार्थविशेषप्राप्तिक्रमपर्यालोचनया प्रथममुत्पन्नस्य सामान्यज्ञानस्य मिथ्यात्वं कल्प्यते इति, प्राप्तबाधत्वमुपपद्यत इति । प्रत्याम्नानस्थले चायम् विशेषः—यदवान्तरकार्यातिदेशसंभवेऽपि तत्साधनाकांक्षाया औपदेशिकेन पदार्थेनैव निवृत्तेः, नातिदेशस्य प्राकृतपदार्थप्रापकत्वमिति । प्रतिषेधस्थले तु 'न होतारं वृणीते, नार्षेयं वृणीते' इत्यादौ नञः पर्युदासत्वमंगीकृत्यातिदेशेनैकवाक्यत्वे सति पर्युदासाधिकरणन्यायेन होतृवरणार्षेयवरणातिरिक्ताः प्रकृताविव प्रयोक्तव्याः इत्येवं चोदकार्थलाभेन तत्संकोचो भवति । एवञ्च लुप्तार्थानामंगानां वचनेन प्राप्तिरेव नास्तीति ज्ञेयम् ।

प्राप्तबाधत्वसिद्ध्यर्थमन्यथा तन्न सिद्ध्यति।
प्राप्तौ निवार्यमाणायां श्रुतिलिङ्गादिवद्भवेत् ॥ ५ ॥

तार्तीयो ह्यप्राप्तबाधः। दाशमिकस्तु प्राप्तबाध इति स्थितिः। तत्र यदि चोदक एव लुप्तार्थानां नाश्रीयते, ततो हन्त्यादीनां प्राप्त्यभावात्प्राप्तबाधवाचोयुक्तिरयुक्ता स्यात्। श्रुतिलिंगादिवदप्राप्तबाध एव स्यात्। तस्माच्चोदकेन सर्वमेव प्राकृतमङ्गजातं प्राप्यते, सत्यामेव तु प्राप्तौ कृष्णलादिषु हन्त्यादेः प्रयोजनाभावादननुष्ठानलक्षणो बाधो भवति।

तथा 'शरमयं बर्हिरि'त्यत्रापि चोदकावगताबाधिताङ्गभावानां दर्भाणां प्रत्यक्षावगतशरनिराकाङ्क्षेण प्रयोगवचनेनानुपसंग्रहात्तल्लक्षण एव बाधः।

तथा 'नार्षेयं वृणीत' इत्यत्रापि प्रतिषेधस्यैव प्रयोगविधिसंग्रहाद्वरणस्य प्राप्तस्याप्यशक्यत्वादननुष्ठानम्। तस्मान्न कुतश्चिदपि चोदको निवार्यते इति, सर्वमेव तेन प्रापितमपि प्रयोगविधिसंग्रहाभावाद्बाध्यत इत्युच्यते।

## उक्तार्थे सूत्र-भाष्ययोः प्रमाणतयोपन्यासः।

युक्तश्चैतत्। न हि प्रतिस्वं पदार्थानां चोदकोऽस्ति, यदेकवर्जमितरत् प्राप्यते। उपकारसूत्रे हि प्राकृतं पदार्थरत्नजातं प्रोतं सर्वमेव तस्मिन्नाकृष्यमाणे समाकृष्यते, तदनाकर्षणे वा न किञ्चिदपि। तदुक्तम्, तद्वर्जम् तु वचनप्राप्तेः चोदनार्थकार्त्स्न्यादिति मी. द. ३.६-३.। किमिदानीं प्रमत्तगीतमिदं भाष्यम् 'नास्ति लुप्तार्थानां देशकम्। तस्मान्न लुप्तप्राकृतप्रयोजनं चोदकश्चोदयतीति च शा. भा. १८००। तथा 'बाधो नाम यदेवमिदमिति विज्ञानं निश्चितं कारणान्तरेण मिथ्येति कल्प्यत, इति च।

---

वदन्ति। तदाह-लुप्तार्थेत्यादिना। श्रुतिलिङ्गादिवदिति। 'ऐन्द्रचा गार्हपत्यमुपतिष्ठत' मै. सं. ३-२-४ इत्यत्र इन्द्रप्रकाशकस्य मन्त्रस्य शीघ्रप्रमाणेन श्रुत्या गार्हपत्यशेषतया विनियोगे संजाते, पश्चाल्लिङ्गस्यान्यत्र विनियोजकत्वायोगादिन्द्रशेषतया प्राप्तिरेव नास्तीति यथा तत्राप्राप्तबाधत्वम्, एवं चोदकेन तेषां वैकृतापूर्वशेषतया प्राप्त्यभावेऽप्राप्तबाधत्वं स्यादित्यर्थः।

त्वन्मते वा कथं प्राप्तबाधत्वकथनमित्याशङ्क्य स्वमतमुपपादयति-तस्मादिति। प्रयोजनाभावादिति। प्राकृतप्रयोजनस्य साधयितुमशक्यत्वेन प्रयोगविध्यनुपसंग्रहादित्यर्थः। प्रत्याम्नानस्थले तु औपदेशिकाङ्गनिराकाङ्क्षेण प्रयोगविधिना शेषभूतानामपि प्राकृताङ्गानामनुपसंग्रहादननुष्ठानरूपो बाधः सिध्यतीत्याह-तथेति। अशक्यत्वादिति। प्रत्यक्षावगतत्वेन वरणानुष्ठाने सति, तद्विरोधेन वरणानुष्ठानस्याशक्यत्वादित्यर्थः। निगमयति-तस्मादिति।

सर्वेषामप्यङ्गानां चोदकेन प्राप्तिं युक्त्या सूत्रकारवाक्येन चोपपादयति-युक्तं चेति। प्रतिपदार्थं पृथक्चोदकाभावमेवोपपादयति-उपकारेति। अखण्डोपकारमुखेन खलु पदार्थानां प्राप्तिः। स च सर्वपदार्थसाधारणतयाऽविशेषेण सर्वानिव प्रापयति। न तु कांश्चिद्विजहातीत्यर्थः। तद्वर्जमिति। कतिपयपदार्थवर्जनेनैवातिदेशवचनं प्राप्नोतीति चेत्? चोदकस्य कृत्स्नपदार्थविषयत्वादिति सूत्रार्थः।

तस्य कृत्स्नप्रापकत्वे भाष्यविरोधं शङ्कते-किमिदानीमिति। तथा बाधो नामेति दशमार्थस्य बाधस्यार्थोऽभिहितः। मिथ्येति कल्प्यत इति। ततश्चावहननादेः कृष्णलादिषु यत्

नेति ब्रूमः। मिथ्यात्वं तावदनुष्ठानाभिप्रायम्। व्यवहारविसंवादादेव हि सर्वसंविदां मिथ्यात्वम्, न त्वयाथार्थ्यात्। न ह्ययथार्थं नाम संवेदनम् सम्भवतीत्युक्तम् 'यत्प्रत्यक्षम्, न तद्व्यभिचरति, यद्व्यभिचरति, न तत्प्र'त्यक्षमित्यत्र, शुक्तिकारजतादिष्व-ग्रहणाभिधानात्। तद्वदेव तद्ग्रहणमस्तु। न। ग्रहणकारणसद्भावात्[1]। युक्तं हि चक्षुरादीनां प्राप्यकारित्वादसन्निहितरजतप्राप्त्यसंभवादग्रणम्। अत्र तु चोकस्य ग्रहण-कारणस्य सम्भवान्नाग्रहण'सम्भवः।

## प्राभाकरमतेऽननुष्ठानमेव बाधशब्दार्थ इति प्रतिपादनेन तन्मतस्य निगमनम्।

कथं? तर्हि बाधः? उक्तं व्यवहारविसंवादादिति। तदेव तु न युक्तमिति पश्यामः। अग्रहणनिबन्धनो हि व्यवहारो ग्रहणेनाग्रहणे निवृत्ते परावर्तत इति युक्तं, ग्रहणे तु सति कस्तन्निबन्धनं व्यवहारं परावर्तयेत्। उच्यते। अङ्गत्वमात्रं चोदकेनावगम्यते, न च तावन्मात्रेणानुष्ठानम्, प्रयोगविध्युपसंग्रहनिमित्तत्वात्तस्य। तेन च लुप्तार्थानामनुपसंग्रहाद्भवत्येवात्रापि व्यवहारविसंवादः।

---

सामान्यतः प्राप्तिज्ञानं, तद्विशेषपरामर्शादिभिः मिथ्यात्वकल्पनात् तेषां तच्छेषत्वं न संभव-तीत्यर्थः। भाष्यविरोधं परिहरति—नेतीति। प्रथमं बाधो नामेति भाष्यस्याभिप्रायमाह—मिथ्यात्वमिति। यत् कृष्णलादिषु अवहननादिज्ञानं, तस्य कारणान्तरेण मिथ्यात्वं नाम न विषयापहारः। किंतु तत्प्रसक्तस्यानुष्ठानस्य निवृत्तिरेवेति भाष्यस्यार्थः। तदेवोपपादयति—व्यवहारेति। अयाथार्थ्यात्—विषयापहारात्। तदेव कथमित्याशङ्क्य यत्प्रत्यक्षमिति भाष्य-व्याख्यानावसरे अयथार्थज्ञानानां स्वरूपेणैव निराकरणमित्याह—नहीति। यत्प्रत्यक्षमिति। यत् ज्ञानं न तत् विसंवादि, यत् विसंवादि न तत् ज्ञानमिति भाष्यार्थः।

ननु कथमयथार्थज्ञानान्येव न सन्ति। शुक्तिरजतादिज्ञानसंभवादित्यत्राह—शुक्तिकेति। इदमिति, रजतमिति च ग्रहणस्मरणात्मकं ज्ञानद्वयमेव। तच्च यथार्थमेव। तदतिरिक्तं तादात्म्यज्ञानं तु नास्ति। द्वयोर्भेदाग्रहादेव विसंवादिव्यवहारः। नतु ज्ञानं विसंवादीति प्रति-पादितमित्यर्थः। यथा बाधस्थले शुक्तिरजतादौ तादात्म्यज्ञानाभावः, तद्वदत्रापि कृष्णलादिष्वव-हननादिप्राप्तिज्ञानमेव न स्यात्। ततश्च चोदकस्य तत्प्रापकत्ववाचोयुक्तिरयुक्ता स्यादिति शङ्कते—तद्वदेवेति। अत्र कारणाभावात् ज्ञाने असत्येव व्यवहारबाधः। अत्र तु कारणसंभवेन ज्ञाने सत्यपि व्यवहारबाध इत्युभयत्रापि बाधे तुल्येऽप्यवान्तरवैषम्यमस्तीति परिहरति—नाग्रहणेति। ........

गूढाभिसंधिः शङ्कते—कथं तर्हीति। अभिसन्धिमजानन्नुत्तरमाह—उक्तमिति। तं विशदीकरोति—तदेवेति। भेदाग्रहनिमित्तो व्यवहारो नेदमिति भेदग्रहणेन स्वकारणनिवृत्त्या निवर्तत इति युक्तम्। कृष्णलादिष्ववहननादिप्राप्तिज्ञाननिमित्तं त्वनुष्ठानं न ज्ञानस्य विषयाप-हारमन्तरेण निवर्तयितुं शक्यत इति, तज्ज्ञानस्यायाथार्थ्यं स्यादिति भावः। ज्ञाने तस्य याथार्थ्ये च सत्यपि, तन्निमित्तानुष्ठानस्य कारणान्तरेण निवृत्तिः सेत्स्यतीति परिहरति—उच्यत इति। न च तावन्मात्रेति। अङ्गत्वे सत्यपि, स्वतः सिद्धानां देशकालादीनामनुष्ठा-नाभावादित्यर्थः।

---

१—ग्रहणस्य सद्भावात् इति २ पु. पा.।

अन्यथा ज्ञानमप्यत्र चोदकान्नोपजायते ।
दुष्टकारणजं तत्स्याददुष्टश्चेह चोदकः ॥ ६ ॥

येषामप्ययथार्थं विज्ञानं मृगतोयादिविषयमुत्पन्नमेव ज्ञानान्तरेणार्थतत्त्वोपदर्शनेन मिथ्या क्रियत इति मतम् । तेऽपि मिथ्याज्ञानस्य दुष्टकारणजत्वा[1] चोदकस्य च वेदस्यादुष्टत्वात्तज्जनितं यत्पदार्थप्राप्तिज्ञानम्—

नार्थलोपादिना तस्य मिथ्यात्वं वदितुं क्षमाः ।
अननुष्ठानमेवात्र बाधोऽङ्गानां सतामपि ॥ ७ ॥

तेन चोदकप्राप्तानामपि तत्फलस्यानुष्ठानस्याभावान्नास्ति चोदकवचनम्, न चोदकश्चोदयतीति च फलद्वारेण व्याख्यातव्यम्—इति ।

**प्राकृतकार्यनिरपेक्षाणामंगानां प्रकृतावतिदेशः, अथवा तत्सापेक्षाणामिति द्विधा विकल्प्य प्रथमे बाधानुपपत्तिर्दशमाद्याधिकरणविरोधश्च, द्वितीये द्वाराभावादिति तन्मतस्य निरासः ।**

अत्र ब्रूमः—

चोदकेन पदार्थानां विकृतौ संगतिः कथम् ।
किं कार्यनिरपेक्षाणां तद्द्वारेणाथवा भवेत् ॥ ८ ॥
संगतौ निरपेक्षाणां कल्पयित्वा प्रयोजनम् ।
प्रकृतौ वा प्रयोगः स्याद्विकृतौ बाधनं कुतः ॥ ९ ॥
बाधोऽधिकरणस्य स्यात्तादृशी संगतिर्यदि ।
कार्यद्वारेण चेत्प्राप्तिस्तल्लोपे वा कथं भवेत् ॥ १० ॥

यो हि चोदकप्राप्तानामबाधिताङ्गभावानामेवाङ्गानामननुष्ठानं बाधमातिष्ठते, स विकल्प्य प्रष्टव्यः—किं प्राकृतकार्यनिरपेक्षस्यैव हन्त्यादेः कृष्णलादिषु चोदकेनाङ्गत्वप्राप्तिः, अथ वा तद्द्वारेणेति ।

स चेद्ब्रूयात्तन्नैरपेक्ष्येणैव विकृत्या संगतिरिति । प्रतिब्रूयादेनम्—तथा सति चोदकावगताङ्गभावानां तदुपपत्त्यर्थं दृष्टम्, अदृष्टं वा प्रयोजनम् परिकल्प्य, प्रकृताविवा विकृतावपि कृष्णलादौ हन्त्यादीनां प्रयोगात्, नाननुष्ठानलक्षणबाधसिद्धिः, दशमाद्याधिकरणबाधश्च कार्यनिरपेक्षाणां प्राप्तौ प्रसज्येत ।

---

अन्यथाख्यातिवादिनो भवतो मते यत्कृष्णलादिष्ववहननादिप्राप्तेर्ज्ञानमस्ति, तस्यार्थलोपादिपरामर्शेन विषयापहारो बाध इति वक्तव्यम् । स च न युज्यत इत्याह—अन्यथेति । प्राथमिकं यत् पदार्थप्राप्तिज्ञानं, तस्य चोदकमन्तरेण नान्यत् कारणमस्ति । तच्चादुष्टमिति, तस्य याथार्थ्यमकामेनाप्यङ्गीकार्यमिति भावः । उत्तरार्धेनास्मदभिमतमेवाङ्गीकार्यमिति उपसंहरति—अननुष्ठानमिति । प्रथमोदाहृतभाष्यद्वयस्यापि तात्पर्यमाह—तेनेति ।

विकल्पमुखेन गुरुमतं दूषयति—अत्र ब्रूम इति । संगतौ-विकृत्या संगतौ । निरपेक्षाणां कार्यनिरपेक्षाणां पदार्थानाम् । प्रकृतौ वा-प्रकृताविव । श्लोकान् व्याचष्टे—यो हीति । द्वारा-

---

१—चोदकरूपस्य वेदस्येति ब. पु. पा. ।

स चेदेतद्दोषपरिहारार्थं द्वितीयं पक्षमवलम्ब्य ब्रूयात्कार्यद्वारेणैवाङ्गानाम् प्राप्तिः, न स्वतन्त्राणामिति। प्रतिब्रूयादेनम्, न तर्हि कृष्णलेपु हन्तेः प्राप्तिः संभवति। द्वाराभावात्। यत्र हि यस्य द्वारं नास्ति, स तत्र तेनैव द्वारेण प्रविशतीति कुत एतत्। नो खल्वार्द्रतया ज्वलनमकुर्वन्ति काष्ठानि तद्द्वारेणौदनसिद्धेस्साधनभावमनुभवितुं प्रभवन्ति। तत्र प्राकृतेन द्वारेण कृष्णलापूर्वस्य हन्तिरङ्गमिति वचनमशक्यार्थविधित्वादप्रमाणं स्यादिति।

## महोपकारस्य, तत्पृष्ठभावेन पदार्थानामतिदेशः न त्ववान्तरकार्याणामिति पूर्वोक्तानुपपत्तिर्नास्तीति प्रकारान्तरेणाशंका।

तत्रैतत्स्यात्—

उपकारस्तु सर्वाङ्गजन्यः पूर्वं प्रदिश्यते।
ततोऽवान्तरकार्याणां नाङ्गानामतिदेशनम्॥ ११॥

न ब्रूमः--कार्यानपेक्षः पदार्थातिदेश इति। सर्वाङ्गजन्य उपकारः पूर्वमतिदिश्यत एव। तदनन्तरन्तु नावान्तरकार्याणामतिदेशः, किन्त्वङ्गानामेव। स चोपकारः कृष्णलेष्वपि विद्यत एव। तत्सिद्ध्युपायत्वेनैव पदार्थानामतिदेशान्नास्त्यप्राप्तिः। एवमुपकारप्रष्ठेन पदार्थानामङ्गभावेऽपूर्वं प्रत्यवगते, तदुपकारजनकत्वम्, तेषां प्रकृतावेव ज्ञातप्रकारमिति, न प्रकारान्तकल्पनावसरः। न चावघातस्यात्र तथा तज्जनकत्वं सम्भवतीत्यननुष्ठानम्। तस्मादुभयमप्युपपन्नं प्राप्तिः, अननुष्ठानञ्चेति। अधिकरणमप्युपकारानपेक्षपदार्थप्राप्त्यनभ्युपगमादक्षतम्—इति।

---

भावेऽपि प्राप्नुवन्तीत्यस्य विरुद्धत्वं दृष्टान्तमुखेनाह—नो खल्विति। तद्द्वारेण ज्वलनद्वारेण। चोदकस्य साधारणत्वेन सकलपदार्थप्रापकत्वात् कृष्णलादिषु अवहननादिकमपि प्रापयतीति यदुक्त, तद्दूषयति—तत्रेति। एवमुच्यमानेऽशक्यार्थप्रतिपादकतया चोदकस्याप्रामाण्यमेवोक्तं स्यादित्यर्थः।

शङ्कते—तत्रैतदिति। सर्वाङ्गजन्योऽखण्डो महोपकार इत्यर्थः। अवान्तरकार्याणां नेति नञः पूर्वेणान्वयः। किंत्विति। प्रकृतावशाब्दत्वेऽप्याकाङ्क्षावशात् प्रथमं महोपकारेऽतिदिष्टे, पश्चाच्छाब्दानां पदार्थानामेवातिदेशो युक्तः। न त्वशाब्दानामवान्तरकार्याणामित्यर्थः। अस्त्वेवमेवातिदेशः। कृष्णलादिषु अवहननादिप्राप्तिः कथमित्यत्राह— स चेति। कृष्णलेपु-कृष्णलापूर्वेषु विद्यत एव। तस्योत्कर्षाक्षमत्वादित्यर्थः। अस्तु प्राप्तिः। अननुष्ठानं कुतस्तत्राह—एवमिति। प्रष्ठेण, अग्रगामिना उपकारेणेति व्यत्ययेन पूर्वनिपातः। तदुपकारजनकत्वं तेषामिति। पश्चात् कल्प्यत इति शेषः। तेषां विनश्वरत्वेन संभूय तज्जनकत्वं न संभवति इति, केन द्वारेण जनकत्वं कल्पनीयमित्यत्राह—प्रकृतावेवेति। प्रकारः-द्वारम्। अस्त्वेवं प्रकृते किं? तत्राह—न चेति। तथा जनकत्वमिति। वितुषीकरणद्वारेण महोपकारजनकत्वम्। अयं भावः—महोपकारजनकाकाङ्क्षायां चोदकेन प्राप्यमाणानामपि लुप्तद्वारकाणामवहननादीनां तदुपकारजनकत्वं नास्तीति, अनुष्ठानाभावात् वैकृतापूर्वशेषत्वं तु विद्यत इत्युपसंहरति—तस्मादिति।

---

१—उपकारपृष्टभावेनेति २ पु. पा.। २— प्रष्टेन—अग्रगामिनेत्यर्थः।

## उपकारनैरपेक्ष्येण पदार्थमतिदेशे प्रथमविकल्पोक्तदूषण-प्रसंगेन प्रागुक्त-शंकानिरासः ।

तदेतदपि पूर्वोक्तदूषणं नातिवर्तते ।
शेषभावे प्रतीते हि द्वारकार्यानपेक्षया ॥ १२ ॥
प्राकृतस्योपकारस्य प्रकारान्तरमास्थितः ।
हन्त्यादिर्हेतुतां गच्छेदपूर्वाङ्गवदेव नः ॥ १३ ॥

यद्यपि परमोपकारपुरस्सर एवाङ्गानामतिदेशः, तथाऽप्यवान्तरकार्यनिरपेक्षाणामेवाङ्गभावावगमात्तस्य च करणोपकारसाधनभावमन्तरेणाघटनात्तस्य च प्रकृत्यवगतेन मार्गेणासम्भवात्प्रकारान्तरेणापि तत्साधनत्वमवघातादीनामपूर्वाणामिवामनहोमादीनामङ्गानां परिकल्प्यानुष्ठानं स्यात् ।

## विकृतौ उपकार-पदार्थयोरशब्दत्वेनान्योन्यान्वयासम्भवेन दूषणम्, तत्परिहारश्च ।

किञ्चोपकारजनकापेक्षयाऽपि पदार्थानां पृथगतिदेशं भवानिच्छति, तेषाञ्च न प्रथममुपकारेणान्वयः । न ह्युपकाराभिधायी शब्दोऽस्ति, यः पदार्थैरन्वितमुपकारमभिदध्यात् । न च पदार्थवाचिनोऽपि शब्दा विकृतौ सन्ति, ये पदार्थानुपकारान्वितानभिदध्युः । तेनापूर्वस्यैव स्वशब्देन पदार्थप्रयोजनतयाऽन्वितस्याभिधानात्तत्सिद्धये कल्पयित्वाऽपि द्वारमनुष्ठानम् स्यात् । एवञ्च यद्यप्युपकारानन्तरमवान्तकार्याणि ततः पदार्थाः प्राप्यन्ते । तथाऽपि तेषामशब्दतया मिथस्सम्बन्धाभावादपूर्वेणैव तादर्थ्यान्वयाल्लुप्तद्वाराणामपि तत्कल्पनया स्यादेवानुष्ठानम् ।

---

उपकारनैरपेक्ष्येण पदार्थानामतिदेशे प्रथमे कल्पे यो दोष उक्तः, स एवास्मिन्नपि पक्षे प्रसज्यत इति परिहरति—तदेतदिति । प्राकृतस्याखण्डस्योपकारस्य हेतुतां गच्छेदित्यन्वयः । प्रकारान्तरं-प्रकृतिक्लृप्तद्वारादन्यत् द्वारम् । अपूर्वाङ्गवत्-विकृतावुपदिष्टाङ्गवत् । तस्य च अङ्गभावस्य च । अघटनात् तदङ्गत्वं तदुपकारकत्वमन्तरेण न संभवतीति प्रकृतावेवावगतमित्यर्थः । प्रकारान्तरेणापि—अदृष्टोपकारद्वारेणापि । अपूर्वाणामिवेति । यथा विकृतावुपदिष्टानामामनहोमानामातिदेशिकाङ्गैः सह समुच्चित्य यत्किंचिद्द्वारकल्पनया प्राकृतोपकारसाधनतयाऽनुष्ठानं, तद्वत् प्रकृतेऽपि द्वारकल्पनया तत्साधनत्वं, तदर्थं चानुष्ठानं तेषां स्यादित्यर्थः ।

प्रकारान्तरेणापि तदेव दूषणं द्रढयति—किंचेति । यद्युपकारातिदेशेनैव तद्विशेषकतया अर्थात् पदार्थप्राप्तिः, नतु पश्चात् पृथगतिदेशः स्यात् । पृथगतिदेशेऽपि येन प्रकारेण प्रकृतावुपकारेणान्वितः, तेनैव प्रकारेण विकृतावपि तेनैव यद्यन्वीयन्ते, तदा प्राकृतप्रकारासंभवे प्रकारान्तराश्रयणायोगादननुष्ठानं सिध्येत् । न तु तदस्ति । विकृतावुपकार-पदार्थयोरुभयोरप्यशाब्दतयाऽन्योन्यान्वयायोगात् । ततश्च परस्परानन्वितयोरुभयोरप्यपूर्वेणैवान्वयः । तथा च क्लृप्तेनाप्युपकारेण पदार्थानामसंबन्धात् प्रकृताविव तेषामुपकारकत्वमत्रैव कल्पयित्वा, तदर्थमनुष्ठानमपि स्यादिति भावः । तत्प्रयोजनं-तत्साध्यं प्रयोजनमुपकारः । तत्सिद्धय इत्यर्थः । अवान्तरोपकाराणामतिदेशासंभवात् लुप्तद्वाराणां प्राप्तिरननुष्ठानञ्च सिध्यतीत्यत्र दूषणमुक्तम् । तदतिदेशाङ्गीकारेऽपि अस्मात् दोषान्न मोक्ष इत्याह—एवञ्चेति । तादर्थ्यान्वयात्—शेषत्वे-

## शङ्का ।

यद्युच्येत नावश्यंभाव्युपकारसाधनत्वमङ्गानाम्, तेनोपकारसाधनत्वम् न कल्पयितव्यमिति प्रकृतौ तर्हि कथमुपकारकल्पना ? अपेक्षितत्वात् । प्रधानस्य ह्युपकारापेक्षा । तेन प्रकृतौ शेषाणां तज्जनकत्वं कल्प्यते । विकृतौ त्वलुप्तार्थाङ्गजातजनितेनैवोपकारेण प्रधानस्य नैराकाङ्क्ष्यान्नास्त्युपकारकत्वपरिकल्पनं लुप्तार्थानामिति ।

## परिहारः ।

नैतत्सारम् । यद्यनुपकारिणामप्यङ्गत्वे सत्येव प्रधानापेक्षानिबन्धनम् तज्जनकत्वपरिकल्पनम्, तर्हि लब्धप्राकृतोपकारासु विकृतिषु तदपेक्षाभावादपूर्वाणामपि आमनहोमादीनामवघातादिवत्तज्जनकत्वपरिकल्पनाहेत्वभावादनुपकारकत्वेन नानुष्ठानं सिद्ध्येत् ।

## प्राप्त्यननुष्ठानयोः कथनं न संभवतीति तन्मतनिरासः ।

अथ तेषां वचनानर्थक्यभयादनुष्ठानम्, चोदकस्य तु नानर्थक्यम्, अंगान्तरेष्वपि कृतार्थत्वादित्युच्यते । तदयुक्तम् । अत्राप्यानर्थक्यात् । न हि सर्वपदार्थसाधारणोपकारप्राप्त्यैवार्थात्पदार्थप्राप्तिरभिमता । पुनरपि शास्त्रेणैव पदार्थानां विधेरिष्टत्वात्तेषाञ्च सामान्यरूपाभावात्प्रत्येकमतिदेशादवघातस्यापि शास्त्रमननुष्ठानेऽनर्थकं स्यात् । अतस्तस्यानतिदेशो वाऽनुष्ठानं वा, नान्या गतिरस्ति । काममनर्थकं भवतु । नैतावताऽ-

---

नान्वयात् । लुप्तद्वाराणामपि वैकृतापूर्वशेषतयाऽन्वयप्राप्तौ, तदनुपपत्त्या अदृष्टद्वारेणापि तदुपकारजनकत्वं परिकल्प्यानुष्ठानमपि प्रसज्यत इत्यर्थः ।

दूषणपरिहारमाशङ्कते—यदीति । श्रुत्यादिविनियोगाधीनं हि शेषत्वम् । तच्चोपकारकत्वमन्तरेणापि विनियोजकप्रमाणसंभवे निवारयितुमशक्यमिति, नावश्यं तत्सिद्ध्यर्थमनुष्ठानप्रसङ्ग इत्यर्थः । एवं तर्हि अङ्गत्वानुपपत्त्या प्रकृतावशब्दस्योपकारस्य कल्पना न सिध्येदिति भाट्टः शङ्कते—प्रकृताविति । प्रकृतौ नाङ्गत्वानुपपत्त्या उपकारकल्पनम् । किंतु प्रधानस्येतिकर्तव्यतापरनामधेयोपकारकाकाङ्क्षाबलात् । विकृतौ तु तद्भावात् लुप्तार्थानां नोपकारकत्वं कल्पनीयमिति प्राभाकरः परिहरति—अपेक्षितत्वादिति ।

विकृतावङ्गानामपि लुप्तार्थानां प्रधानापेक्षाभावेन तदनुपकारकत्वे उपदिष्टानामप्यङ्गानामुपकारकत्वं न सिध्येत् । ततश्च तेषामप्यननुष्ठानं स्यादिति दूषयति—नैतदिति । उपदिष्टानामनुष्ठानसिद्धिमाशङ्कते—अथेति । आनर्थक्यभयादिति । प्रधानस्य तत्साध्योपकाराभावे तेषामननुष्ठेयत्वे चामनहोमानां विधानमेव व्यर्थं स्यादित्यर्थः । ननु लुप्तार्थानामप्यननुष्ठाने तत्प्रापकस्य चोदकस्यानर्थक्यं स्यादित्याशङ्क्याह—चोदकस्य त्विति । आनर्थक्यसाम्येन परिहरति—तदयुक्तमिति । तदेवोपपादयति नहीति । शास्त्रेण, अतिदेशलक्षणेन । विधेः-प्राप्तेः । ननु पदार्थानां पुनरतिदेशेऽपि, तस्य सर्वपदार्थसाधारणत्वादन्यत्र कृतार्थतया नानर्थक्यमित्याशङ्क्याह—तेषां चेति । उपकारं विना पदार्थानां तदन्यः क्रोडीकारको नास्ति । स च साधारण एव । ततश्च पृथक् पदार्थातिदेशाङ्गीकारात्, तस्यातिदेशस्य साधारणत्वानुपपत्तेः प्रतिपदार्थमतिदेशभेदोऽङ्गीकार्यः स्यात् । ततश्चानर्थक्यं स्यादिति भावः । ततः किं स्यात् ? तत्राह—अतस्तस्येति । अस्मन्मत इव पदार्थानामार्थिकमतिदेशमङ्गीकृत्य, चोदकसंकोचो वा

नवगतोऽर्थः शक्यते कल्पयितुम्। न ह्यत्र किञ्चिदुपकारजनकत्वे प्रमाणमस्ति। नन्वंगत्वानुपपत्तिरेव प्रमाणम्, न ह्यनुपकारिणस्तद्भवति। हन्तेस्तु प्रकृतिवद्वचनादन्यथोपकारकत्वं न सम्भवति। [1]तस्मादननुष्ठानमिति चेत्। तदु उक्तोत्तरम्। प्रकृतिवदङ्गत्वमवघातस्य कृष्णलेषु विदधद्वचनमप्रमाणम् स्यादिति।

## अलुप्तार्थेषु प्रत्याम्नानादिस्थलेषु शरादिष्वननुष्ठानम् न सिद्ध्य-निरूपणम्।

किं च [2]प्राप्त्यबाधे कुशानामलुप्तार्थानां किमित्यननुष्ठानम्, प्रत्याम्नानादिति चेत्। न। तेनाप्यङ्गत्वानवलोपात् तेनाबाधिताङ्गभावयोः कुशशरयोर्विकल्पेनानुष्ठानमैकार्थ्यात्स्यात्, न बाधः। नन्वतुल्यबलयोरुपदेशातिदेशयोः कथं विकल्पः। किं वोपदेशेनातिदेशो बाध्यतामित्युच्यते। ओमिति चेत्। न तर्हि कुशानामङ्गत्वमस्ति,

---

अङ्गीकार्यः, पृथगतिदेशाङ्गीकारे आमनहोमानामिवानुष्ठानं वाऽङ्गीकार्यम्। न तु प्राप्तिः, अननुष्ठानं च सुवचमित्यर्थः। आमनहोमादिप्रतिपादकस्य वचनस्यानर्थक्यप्रसङ्गात् तेषामुपकारकत्वं कल्पनीयमित्युक्तम्।

तत्र दूषणान्तरमप्यमाह—किं चेति। अनवगतोऽर्थः—प्रमाणाप्रतिपन्नमुपकारकत्वम्। अनवगतत्वमेवाह—नहीति। आनर्थक्यं तु न प्रमाणवर्गान्तर्भूतम्। अङ्गत्वानुपपत्तिस्तु अन्यथाप्युपपत्तेर्नोपकारकत्वकल्पिकेति भवतैवोक्तम्। प्रधानस्याप्युपकाराकाङ्क्षात्वातिदेशिकैरेवाङ्गैः निवृत्तेति, न साऽप्यत्र प्रमाणम्। अतो न तत्र किंचित् प्रमाणमिति भावः।

प्रमाणमाशङ्कते—नन्वङ्गत्वेति। एवं तर्हि लुप्तार्थानामप्यङ्गत्वात् तदनुपपत्त्या तदुपकारकत्वं कल्पनीयं स्यादित्याशङ्क्य, तेषामङ्गत्वे सत्यपि तत्प्रापकतया तदुपजीव्यचोदकविरोधान्न तदुपपद्यत इत्याह—हन्तेस्त्विति प्रकृतिवदिति। उपकारजनकाकाङ्क्षया पदार्थातिदेशाङ्गीकारात् प्रकृतौ यैः पदार्थैर्य उपकारः संपादितः, तथाऽत्रापि संपादनीय इत्येवमतिदेशस्य लाभात् द्वारान्तरकल्पनं तद्विरुद्धमित्यर्थः। प्रकृतिवद्वचनात्—प्रकृतिवदतिदेशात्। परिहरति—तदिति। अवान्तरोपकारातिदेशानङ्गीकारे द्वारान्तरकल्पनस्य तद्विरुद्धत्ववाचोयुक्तेरयुक्तत्वात् प्राकृतद्वारेणैव लुप्तार्थानामप्यङ्गत्वमतिदेशो बोधयतीत्येवमुक्तं स्यात्। ततश्चाशक्यार्थबोधकतया वचनस्याप्रामाण्यं स्यादित्यर्थः।

गुरुमते लुप्तद्वारकेष्वप्यङ्गेषु द्वारान्तरकल्पनेनानुष्ठानं प्रसज्यत इति प्रतिपाद्य, अलुप्तार्थेषु तु प्रत्याम्नानादिस्थलेषु तेनैव द्वारेण प्रधानोपकारकत्वस्यापि संभवात् सुतरामननुष्ठानं (न) सिध्यतीति प्रतिपादयितुं पृच्छति—किंचेति। उत्तरमाशङ्कते—प्रत्याम्नानादिति। दूषयति—तेनेति। ततश्च फलितं दूषणमाह—तेनेति। ऐकार्थ्यात्—हविरासादनरूपैकप्रयोजनसाधनत्वात्।

दुर्बलप्रमाणप्रापितानां कुशानां प्रबलप्रमाणप्रापितैः शरैः सह अतुल्यकक्ष्यतया विकल्पो न सिध्यतीति शङ्कते—नन्विति। विकल्पानङ्गीकारेऽत्यन्तबाधो वाङ्गीकार्यः, समुच्चयो वा। तत्र प्रथमः पक्षः किं तवाभिमत इति पृच्छति—किं चेति। अङ्गीकारेणोत्तरमाशङ्कते—ओमिति। एवमङ्गीकारे भवत्सिद्धान्तविरोधः स्यादिति दूषयति—न तर्हीति। विकल्पवदन्य-

---

१—तथोपकारकत्वं चार्थलोपान्न संभवति इत्यधिकः २ पु. पाठः।

तत्प्रमाणस्यातिदेशस्य बाधितत्वात्। अथ नातिदेशस्य बाधः, नापि विकल्पः। अथ किं समुच्चयः ? सोऽपि न, ऐकार्थ्यात्। कथं तह्य ुक्तं प्रयोगवचनेनानुपसंग्रहादननुष्ठानमिति।

तदेव तु न युक्तम्, अङ्गत्वाबाधादिति ब्रूमः। कः खल्वङ्गभूतयोरुपकारसाधनयोः कुश-शरयोर्विशेषः। येन द्वितीयस्यामिव शरेषु कापुरुषस्य विधेरनुरागो भवेत्। अयमस्ति विशेषः-शराणां प्रत्यक्षवचनम् प्रमाणम्। इतरेषामनुमानमिति। नायं विशेषः, प्रत्यक्षेणाऽप्यनुमानस्य अबाधितत्वात्। प्रमाणयोर्हि प्राबल्यदौर्बल्याभ्यामन्यतरस्य प्रमेयापहारान्मिथ्यात्वं भवति। प्रेमयानपहारे तु द्वयोरप्यर्थयोः कार्यसाधनत्वाविशेषादविशिष्टं कार्यनिमित्तमनुष्ठानमिति। विधिर्हि साध्यभूतः साधनेष्वनुष्ठानमाक्षिपति, साधनत्वं च द्वयोरपि कुशशरयोरङ्गत्वाविशेषात् द्वारसंभवाच्चाविशिष्टमिति, नानुष्ठानाक्षेपे कश्चित् विशेषः। तस्मादुभयस्याप्यननुष्ठानान्नास्त्यननुष्ठानलक्षणो बाधः।

**प्रतिषिद्धानां वैकृतापूर्वशेषत्वं पर्यु दासाधिकरणसिद्धान्तविरुद्धमिति कथनम्।**

तथा-'नार्षेयं वृणीते' इत्यत्र प्रतिषेधपक्षे विकल्पमभ्युपेत्य तत्परिहाराय, पर्युदास एव चोदकस्याश्रितः। यच्चुच्यतेऽनारभ्यविधेः सामान्यरूपस्योपदेशात्मकस्य तत्र

---

तरबाधपक्षोऽपि नास्मदभिमत इति शङ्कते—अथेति। किं समुच्चयपक्षस्त्वदभिमत इति पृच्छति—अथ किमिति : सोऽपि न ममाभिमत इति शङ्कते सोऽपीति। तत्र हेतुः—ऐकार्थ्यादिति। नैरपेक्ष्ये सतीति शेषः।

तर्हि किं त्वदभिमतमिति पृच्छति—कथं तर्हीति। स्वाभिमतमाशङ्कते—उक्तमिति। नोभयोः समुच्चयेन वा, विकल्पेन वानुष्ठानम्। नाप्यन्यतरस्यान्यतरेण बाधः। किंतु. एकस्याङ्गस्यैव सतोऽननुष्ठानमात्रमित्यर्थः। प्रयोगविध्यनुपसंग्रह एव न युक्त इति दूषयति—तदेवेति। द्वितीयस्यां पत्न्याम्।

विशेषमाशङ्कते—अयमिति। अयं विशेषो विध्यनुपसंग्रहे न प्रयोजक इति परिहरति—नायमिति। नहि प्रयोगविधिः प्रबलप्रमाणप्रमितमेव स्वीकृत्य दुर्बलप्रमितं परित्यजति। प्रकृतौ श्रुतिलिङ्गादिप्रापितानां सर्वेषामवि स्वीकारात्। विकृतावप्युदिष्टानामतिदिष्टानां चाङ्गानां स्वीकारात्। किंतु प्रमाणयोः प्रमेयविरोधे तु सति प्रबलेन दुर्बलप्रमाणप्रमेयापहारे, तदवगतमपि परित्यजति। अत्र तूभयोरत्यङ्गत्वाविरोधात् प्रधानोपकारकत्वसंभवाच्च नान्यतरस्य प्रयोगविधिपरित्यागे कश्चिद्विशेषोऽस्तीत्यर्थः। अविशेषमाह—विधिर्हीति। साध्यभूत—अनुष्ठेयभूतः। प्रत्याम्नानस्थले अननुष्ठानासिद्धि निगमयति—तस्मादिति।

प्रतिषिद्धानां वैकृतापूर्वशेषत्वाङ्गीकारस्तु पर्यु दासाधिकरण—मी. द. १०—८.१ सिद्धान्तविरुद्ध इत्याह तथेति। तत्र हि 'प्रकृतिवद्विकृतिः कर्तव्येति सामान्येनातिदेशवचनेन सर्वाङ्गानां प्राप्तिः। तथा 'नार्षेयं वृणीते, न होतारम्' इति च किंचिदङ्गं निषिध्यते। तथा यजति येयजामहं करोति' इत्यनारभ्य विहितम्। तथा 'नानूयाजेषु येयजामहं करोति' इति विशेषतो निषिध्यते। अत्र संशयः—किं विकृतावप्यार्षेयवरणमनुष्ठेयम्, अनूयाजेष्वपि येयजामहः कर्तव्यः, उत नेति। तदर्थं च किमयं प्रसज्यप्रतिषेधः, उत पर्यु दास इति। तत्र नञो मुख्यार्थलाभात् प्रसज्यप्रतिषेधत्वमेव युक्तम्। पर्युदासे च अननूयाजेष्विति समासः प्रसज्येत। लोके समासादन्यत्र पर्यु दासाप्रतीतेः। ततश्च विकृतावप्यार्षेयवरणस्यानूयाजेषु येयजामहस्य प्राप्तिमन्तरेण

पर्युदासोऽभिहितः, नातिदेशस्येति। कथं तर्हि प्रदेशग्रहणम्। न्यायविरोधादनादरणीयमिति चेत्। अहो बत महामोहसमाश्रयणं भवतः यदात्मीयज्ञानमृषावारोपयति। न ह्यङ्गत्वाबाधे, सत्युपदिष्टमतिदिष्टमित्यनेन कश्चिद्विशेष इत्युक्तम्। यदि चानपह्नुतयोरपि प्रमेययोरिदं प्रबलप्रमितम्, इदं दुर्बलप्रमितमित्यनेन विशेषेणानुष्ठानाननुष्ठाने भवतः। ततो दूराद्वह्निमध्यक्षयन्, आराच्चानुमिमानोऽनुमितम् हित्वा पाकार्थी दूरस्थमुपधावेत्।

## पर्युदासाधिकरणे सूत्रकारेणातिदेशविषयत्वाभिधानविरोधाद्दूषणम्।

तथा—'यजतिषु येयजामहं करोती'त्यस्य सामान्यविधेर्नानुयाजेषु येयजामहं करोतीत्यतो विशेषप्रतिषेधात्, आहवनीयशास्त्रस्येव विशेषशास्त्रात्पदविधायिनो दुर्बलत्वात्प्रतिषेधे सत्यप्यननुष्ठानं येयजामहस्यानुयाजेषु शक्यते वक्तुमित्यनर्थकं पर्युदास-

---

प्रतिषेधासंभवात्, प्रथमं वचनेन तयोस्तत्र प्राप्तौ सत्यां, वचनप्राप्तस्यात्यन्तबाधायोगात् षोडशिग्रहणाग्रहणवत् विकल्पेनानुष्ठानमिति प्राप्ते—

अभिधीयते—प्रसज्यप्रतिषेधपक्षे अष्टदोषदुष्टविकल्पाङ्गीकारात् वाक्यभेदप्रसङ्गात्, समासाभावेऽपि पर्युदासस्य 'नेक्षेतोद्यन्तम्' इत्यादिषु दर्शनात् पर्युदासाश्रयणेनैकवाक्यत्वमाश्रित्यार्षेयवरणव्यतिरिक्तान्यङ्गानि प्रकृतिवत् कुर्यात्। अनूयाजव्यतिरिक्तेषु येयजामहं कुर्यादिति वाक्यार्थो लभ्यते। ततश्च विकृतावार्षेयवरणादिकम् अनूयाजेषु येयजामहश्च न प्राप्तः, नापि प्रतिषिद्धः। अतो नित्याननुष्ठानमिति प्रतिपादितम्। चोदकेनार्षेयवरणस्य प्राप्त्यभिधाने 'नार्षेयं वृणीते' इति नञः प्रसज्यप्रतिषेधाङ्गीकारेण प्रतिषेधस्य प्रयोगविध्युपसङ्ग्रहाभिधानं च तद्विरुद्धमित्यर्थः।

पर्युदासाधिकरणस्य यजतिषु येयजामहं करोतीत्यनारभ्यवाक्यमेव विषयः। नत्वतिदेशः अतो न विरोध इति शङ्कते—यदीति। सूत्रकारेणातिदेशस्यापि तद्विषयत्वाभिधानात्, तस्य तद्विषयत्वाभावोक्तिरयुक्तेति दूषयति—कथं तर्हीति। प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वात् विकल्पः स्यात्' मी. द. १०.८.१ इति तदधिकरणपूर्वपक्षसूत्रम्। अत्र प्रतिषेधः प्रदेश उच्यत इत्यर्थः। नन्वनारभ्याधीतस्य सामान्यवचनस्य, तत्प्रतिषेधस्य चोपदेशात्मकत्वेन तुल्यबलत्वात् तत्र विकल्पेनानुष्ठानं स्यादिति तस्य विषयत्वं युक्तम्। आर्षेयवरणनिषेधस्य तूपदेशरूपत्वेन बलीयस्त्वात् प्रयोगविधिसंग्रहेणानुष्ठानसिद्धेः, इतरस्य त्वातिदेशिकत्वेन दुर्बलस्य तदनुपसंग्रहात् तदसिद्धेः न विकल्पप्रसङ्ग इति, नास्य विषयत्वं युज्यते।

सूत्रे तद्ग्रहणं तु तन्न्यायविरोधादविवक्षितमिति शङ्कते—न्यायेति। सोपहासं परिहरति अहो बतेति। आरोपयतीति। भवदुक्तिरेव न्यायविरुद्धा। सूत्रं तु न्यायसहमेवेत्यर्थः। तदेवाह नहीति। उक्तमिति। अयं विशेषोऽनुष्ठानाननुष्ठानयोर्नोपयुज्यत इत्युक्तमित्यर्थः। अस्य विशेषस्यानुष्ठानाननुष्ठानयोरुपयोगाङ्गीकारे लोकविरोधमप्याह—यदि वे(चे)ति। न्यायविरोधमपि तत्राह—तथा यज्ञेष्विति। सामान्यवचनस्योपदेशकत्वेऽपि सामान्यवचनत्वेन दुर्बलत्वात्, इतरस्य विशेषत्वेन प्रबलत्वादतिदेशस्थल इवाननुष्ठानसिद्धेः, अतिदेशवदस्यापि तदधिकरणविषयत्वानुपपत्तेः पर्युदाधिकरणं निर्विषयं स्यादित्यर्थः।

सामान्यविशेषयोः प्राबल्यदौर्बल्ये च दृष्टान्तमाह—आहवनीयेति। 'आहवनीये जुहोति' तै. ब्रा. १-१-१० इति सामान्येन सर्वहोमेष्वाहवनीये प्राप्ते 'अश्वस्य पदे पदे जुहोति' इति

प्रतिपादनं स्यात्। तस्मान्न कथं चिदपि प्राप्त्यबाधे सत्यननुष्ठानं संभवतीति, प्राप्तिरेव बाधयितव्या।

## प्राप्तबाधाप्राप्तबाधयोर्व्यवस्थितस्वरूपवर्णनमुखेन-प्राभाकरमतखण्डनम्।

यत्त्वेवं सति प्राप्तबाधाभिधानमनुपपन्नम्, तार्तीय-दाशमिकयोरविशेषादिति।

अत्राभिधीयते—

[1]साधारणस्य शास्त्रस्य विशेषविषयादिना।
संकोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयते॥ १४॥
कल्प्यस्य शास्त्रस्य तु कल्पनं यन्निरुध्यते मूलनिकृन्तनेन।
क्लृप्तेन शीघ्रेण फलापहारादप्राप्तबाधं तमुदाहरन्ति॥ १५॥

## प्रथमश्लोकव्याख्यानमुखेन प्राकृतवैकृत-सामान्य-विशेषादिबाधनिर्देशः।

यत्र क्लृप्तस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुपसर्पतः क्वचिद्विशेषविषया[2]-दिना प्राप्तिरपोद्यते, तत्र प्राप्तबाधः। यथा प्राकृत-वैकृतसामान्यविशेष-नित्यनैमित्तिक-

---

विशेषविधानात् क्वचित्तदपोद्यत इति, ततोऽस्य यथा बलीयस्त्वमित्यर्थः। तस्मादस्मन्मत इव लुप्तार्थप्रत्याम्नानादिष्वङ्गत्वमेव नास्तीति वाच्यमिति निगमयति—तस्मादिति।

परमते दूषणमभिधाय, स्वमते तदुक्तानि दूषणानि क्रमेण परिहरिष्यन् प्रथमं तदापादितं प्राप्ताप्राप्तबाधसांकर्यमनूद्य परिहरति—यत्त्वेवमिति। स्वमते तयोर्विविक्तं लक्षणमाह—साधारणस्येति। साधारणस्य—सामान्येन प्रवृत्तस्य। विशेषो विषयी यस्य, तत्, विशेषविषयं शास्त्रम्। तच्च क्वचित् व्यक्तिविशेषे विशेषान्तरविधायकम्। तदादिशब्देन नैमित्तिकादिपरिग्रहः। क्लृप्तरूपस्य—प्रवृत्तप्रचारस्य। मूलनिकृन्तनेन—तत्कारणनिवर्तनेन। शीघ्रेण—अविलम्बित-प्रवृत्त्या। फलापहारात्—तद्विषयापहारात्।

प्रथमं श्लोकं व्याचष्टे—यत्रेति। शास्त्रे यावन्तः प्राप्तबाधाः। तान् सर्वानुदाहरति—यथेति। प्राकृतानां पदार्थानां विकृतौ प्राप्तबाधत्वसिद्ध्यर्थं चोदकस्य सामान्यरूपत्वं, तस्य

---

१—स च द्विविधः प्राप्तबाधोऽप्राप्तबाधश्चेति तयोरसंकीर्णलक्षणमाह साधारणस्येति।

अस्यायमर्थः—साधारणस्य-सामान्येन प्रवृत्तस्य शास्त्रस्य, विशेषो विषयः यस्य तत् विशेषविषयं शास्त्रम्। तच्च क्वचित व्यक्तिविशेषान्तरविधायकम्। यथा—पदशास्त्रेण विशेषविषयेण आहवनीयरूपसामान्यद्वारेण विशेषानुपसर्पतस्संकोचो भवति। अतस्स प्राप्तबाध इत्युच्यते।

अत्रेदमाकूतम्—प्राकृतानां पदार्थानां विकृतौ प्राप्तबाधत्वसिद्ध्यर्थमतिदेशस्य सामान्य-रूपत्वम्, तस्य स्वतोनिर्दोषस्यापि विशेषापर्यालोचनारूपपुरुषदोषबलात् सामान्यप्रतीतिजनकत्वेन प्रापकत्वम्। तस्याः प्रतीतेः पश्चात् विशेषपर्यालोचनेन मिथ्याकल्पनाद्बाध्यत्वमिति तत्त्वम्।

२—विशेषजिषयागादिनेति मु. पु. पा.।

क्रत्वर्थपुरुषार्थ–पौर्वापर्याल्पभूयस्त्व–सावकाशनिरवकाशाङ्गप्रधानतद्धर्मबाधेषु । प्राकृता हि धर्मा न प्रातिस्विकेन रूपेण चोदकेन विकृतौ प्राप्यन्ते–इदमिदं कर्तव्यमिति ।

कथं तर्हि ? यथा प्रकृत्या स्वकार्यं साधितम्, तथा विकृत्याऽपीति । तथाभावश्च तैरेव पदार्थस्तथा संबध्यमानैः संपादयितुं शक्यते, नान्यथेति । तेषां तत्साधनत्व-सामान्यरूपेण प्राप्तिरविशेषेण प्रतीयते । सेयं प्रतीतिरविशेषेणोपजाता सती पश्चात्त-त्तत्पदार्थविशेषनिरूपणावसरे हन्त्यादेस्तथा साधनभावासम्भवपर्यालोचनेन भ्रान्ती-क्रियते । न चैतावता शास्त्रस्य अप्रामाण्यम्, तस्य विषयविशेषपरिशेषमात्रपरि-कल्पनात् । विशेषादर्शनेन हि सामान्यमात्रालोचनात्सर्वविषयत्वं शास्त्रस्य भ्रान्त्याऽ-वगम्यते । तद्दर्शनात्तु नायमस्य विषयः, अन्यविषयमेव तु शास्त्रं सामान्यमात्रपर्यालोच-नादोषादेतद्विषयत्वेन भ्रान्त्याऽध्यवसितमिति मन्यते । तेनार्थलोपात्प्रत्याम्नानात्प्रति-षेधाच्च चोदकसंकोचः । तथा आहवनीयविधायिनः सामान्यशास्त्रस्य पदविधायिना विशेषशास्त्रेण होमान्तरविषयत्वकल्पनम् ।

---

स्वतो निर्दोषस्यापि विशेषापर्यालोचनरूपपुरुषदोषसहायबलात् सामान्यप्रतीतिजनकत्वेन प्राप-कत्वम् । तस्याः प्रतीतेः पश्चात् विशेषपर्यालोचनेन मिथ्यात्वकल्पनात् बाध्यत्वम् । एवमपि चोदकस्य स्वतो निर्दोषत्वात् विशेषपरामर्शेनापि चोदकस्यान्यविषयत्वमात्रकल्पनात् तत्प्रामाण्या-विघातं च प्रतिपादयति–प्राकृता हीति । यथा प्रकृत्येति । प्राकृतकरणेन यदुपकारसहितेन स्वकार्यं यथा साधितं तथा वैकृतकरणेनापि तदुपकारसहितेनैव स्वकार्यं साधनीयमित्यर्थः ।

अनेनोपकारप्राप्तिरभिहिता । तद्विशेषणतया पदार्थप्राप्तेरपि सामान्यरूपत्वं दर्शयति–तथाभाव इति । तथाभावः–स उपकार इत्यर्थः । तैरेव–प्राकृतैरेव । तथा संबध्यमानैः प्रकृतौ दृष्टार्थानां दृष्टद्वारेण, अदृष्टार्थानां तु तद्द्वारेणैवेत्येवमादिना रूपेण । नान्यथा–न द्वारान्तरेण । एवं च पदार्थानां सामान्येन प्राप्तिः क्वचित् क्वचित् बाधश्च सिध्यतीत्याह–तेषामिति । भ्रान्ति-ज्ञानोत्पादकत्वेऽपि तस्य प्रामाण्यमुपपादयति–न चेति । आलोचनादोषात् आलोचनरूपात् दोषात् । प्राकृतानां विकृतौ प्राप्तबाधत्वं निगमयति–तेनेति ।

---

अप्राप्तबाधस्तु क्लृप्तेन श्रुत्यादिना कल्प्यस्य लिंगादेर्मूलनिकृन्तनेन श्रुतिकल्पनामूला-कांक्षोच्छेदेन शीघ्रेणाविलम्बप्रवृत्त्या विषयापहारात् यन्मूलकल्पनम् निरुद्ध्यते, तमप्राप्तबाध-मुदाहरन्ति—इत्यर्थः ।

एवञ्च यत्र सामान्यशास्त्रेण जनिते ज्ञाने मिथ्येदमिति प्रत्ययान्तरमुत्पद्यते, स प्राप्तबाधः–इति । यत्र लिंगादौ श्रुतिकल्पनाप्रतिबन्धात् ज्ञानोत्पत्तिरेव प्रतिबध्यते, सोऽप्राप्त-बाधः–इति । अनयोश्च मध्ये पूर्वः प्रमेयापहारलक्षणो बाध इत्यपि व्यवहृतः, उत्तरश्च कल्पना-मूलोच्छेदलक्षण इत्यपि ग्रन्थकृता व्यवहृतो विरोधाधिकरणे मी. द. १–३–२ ।

तदयं निष्कर्षो ग्रन्थकृता कृतः–सर्वत्र विद्यमानस्य प्रापकस्य शास्त्रस्याविशेषेण प्रापकत्वे प्राप्ते क्वचिद्विशेषे यः प्रापकत्वापवादः, स प्राप्तबाधः–इति ।

तत्रायं विवेकः १—सामान्यं विशेषेण, २—नित्यं नैमित्तिकेन, ३–क्रत्वर्थम् पुरुषार्थेन । ४—पूर्वं परेण । ५—अल्पं भूयसा । ६—सावकाशं निरवकाशेन । ७–अंगधर्मः प्रधानधर्मेण ।

एवमन्येऽपि प्रकारास्सन्ति–तानि संक्षेपेण प्रदर्श्यन्ते तथाहि–प्राकृतमर्थलोपेन बाध्यते, यथा कृष्णलचरावबघातः प्राकृतश्चोदकप्राप्तो वैतुष्यरूपार्थलोपात् । यथा वा स्वयंदिते बर्हिषि

## नैमित्तिकेन तस्य बाधः ।

तथा–पाञ्चदश्यस्य नित्यस्याविशेषविहितस्य वैश्यविषयेण नैमित्तिकेन साप्तदश्येन वर्णान्तरविषयत्वम् । साप्तदश्यस्यापि क्रत्वर्थस्य पुरुषार्थेनैकविंशत्याद्यनुवचनेन प्रतिष्ठाकामव्यतिरिक्तवैश्यविषयत्वम् । न चात्र सामान्यविशेषभावः, उभयोरपि सामान्यत्वात् । एकविंशत्यनुवचनं हि प्रतिष्ठाकामवर्णत्रयसाधारणम्, साप्तदश्यमपि प्रतिष्ठाकामातत्कामवैश्यसाधारणम् । प्रतिष्ठाकामे तु वैश्ये द्वयोस्सन्निपाते सति पुरुषार्थानुवचनेन क्रत्वर्थस्य प्रत्यासन्नफलेनान्यादृशस्य बाधः ।

## उत्तरेण पूर्वस्य बाधः ।

तथा–पौर्वापर्येऽपि चोद्गातृ–प्रतिहर्त्रपच्छेदयोः सामान्यविशेषभेदाभावात्पौर्वापर्यवशादेव मिथो बाधः । तत्रैवं शास्त्रार्थो भवति–पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गमिति । एवमुद्गात्रपच्छेदेऽपि द्रष्टव्यम् ।

---

अतोऽनेनैव प्रकारेण सामान्यविशेपस्थलेऽपि प्रथमं सामान्येन प्राप्तिः, बाधस्याप्युपपत्तिः । वचनस्य संकोचमात्रं, न त्वप्रामाण्यं चेत्याह–तथेति । नित्यनैमित्तिकस्थलमुदाहरति–पाञ्चदश्यस्येति । 'पञ्चदश सामिधेनीरन्वाह' इति सामान्यविहितस्य नित्यस्य पाञ्चदश्यस्य 'सप्तदशानुब्रूयात् वैश्यस्य श. ब्रा. १–५–१–१२' इति वैश्यत्वनिमित्तेन साप्तदश्येन ब्राह्मणादिविषयत्वं कल्प्यत इत्यर्थः । क्रत्वर्थपुरुषार्थस्थलमुदाहरति–साप्तदश्यस्यापीति । नैमित्तिकतया क्रत्वर्थस्यैव साप्तदश्यस्य 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य तै. सं. २–५–१०' इति प्रतिष्ठालक्षणफलसाधनत्वेन पुरुषार्थतया विहितेनैकविंशतित्वेन संकोचो भवतीत्यर्थः । सामान्यविशेपरूपत्वेन तत्र बाध्यबाधकत्वं नोपपद्यत इत्यत आह–न चात्रेति । यत्र सामान्यशास्त्रविषय एव विशेषशास्त्रान्तरस्य विषयः । तत्र सामान्यविशेषन्यायः । यत्र त्वन्योऽपि विषयः । न तत्र सामान्यविशेषन्याय इत्यर्थः । अन्यादृशस्य-व्यवहितफलस्य । फलव्यवधानप्रत्यासत्तिभ्यामत्र बाध्यबाधकभावः । न तु सामान्यविशेषतयेत्यर्थः ।

पौर्वापर्येऽपीति । ज्योतिष्टोमे बहिष्पवमानं प्रसर्पतामृत्विजां 'यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात्' 'यद्युद्गाताऽपच्छिद्येत, अदक्षिणो यज्ञः संस्थाप्यः तां. ब्रा.' इति श्रूयते । अत्रोभयोर्युगपदपच्छेदे विकल्प इति पूर्वाधिकरण उक्तम् । प्रतिहर्त्रुद्गात्रोः क्रमेणापच्छेदे किं प्रथमनिमित्तं सर्ववेदसदानम्, उत पश्चाद्भाविनिमित्तमदक्षिणत्वमिति संशये, प्रथमनिमित्तस्यासंजातविरोधित्वेन प्राबल्यात्, तन्निमित्तं सर्ववेदसदानमेव कार्यमित्याशङ्क्य, यथा प्रथमप्रवृत्तस्य नित्यस्य द्वादशशतदानस्य पश्चाद्भाविना नैमित्तिकेन सर्ववेदसदानेन बाधः । तथा तस्यापि ततोऽपि पश्चाद्भाविनिमित्तेनादक्षिणेन बाधः स्यादिति प्रतिपादितम् । तत्र पौर्वापर्यवशादेव बाध्यबाधकभावः । न प्रकारान्तरेणेत्युपपादयति–सामान्येति । तत्र प्रथमनैमित्तिकशास्त्रस्य

---

लवनम्, प्राप्तिरूपार्थलोपात् । प्राकृतं पर्युदासेन बाध्यते । यथा 'न होतारं वृणीते' इति महापित्र्येष्टौ श्रुतम् । तत्र वैधनिषेधाभ्युपगमे विकल्पप्रसक्तेः, पर्युदासो नित्यबाधार्थमिति. मी. द. १०–८–१ इति ।

प्राकृतमेव प्रत्याम्नानेन बाध्यते । तदप्यारभ्यातधीतेन, अनारभ्याधीतेनेवेति द्विधा । आद्यस्योदाहरणम् । यथा 'शरमयं बर्हिर्भवति' । द्वितीयस्योदाहरणम्–य इष्ट्या पशुना सोमेन वा यजेतेत्यनारभ्यविहितेन सद्यस्कालत्वेन विकृतिष्वतिदिष्टद्वैयहकालत्वबाधः–इत्यादिकं बोध्यम् ।

## भूयोभिरल्पस्य बाधः ।

तथा—पञ्चदशरात्रे प्रथमेऽहन्यग्निष्टुन्नामधेये एकाहाग्निष्टुब्धर्मेषु प्राप्तेषु सुब्रह्मण्याऽऽग्नेयी प्राप्ता । उत्तरेषां चतुर्दशानामह्नामैन्द्री । तत्राल्पवैगुण्येनापि गतौ सत्यां भूयोवैगुण्यमन्याय्यमिति, भूयस्त्वेन प्रथमावगताऽप्याग्नेयी बाध्यते । तेनाग्निष्टुन्नामधेयं सुब्रह्मण्याग्नेयीव्यतिरिक्ताङ्गातिदेशपरं भवति ।

## निरवकाशेन सावकाशस्य बाधः ।

तथा 'यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ती'त्यस्य 'यावत्या वाचा कामयेत, तावत्या वाचा दीक्षणीयायामनुब्रूयादि'त्यनेन दीक्षणीयादिप्रधानेषु स्वरान्तरविधानादन्यविषयत्वम् । न चास्य सामान्यात्मता, यत्किंचिच्छब्दस्य प्रकृतविशेषाभिधायित्वात् । तेन सावकाशनिरवकाशत्वेनात्र बाधः ।

तथोपांशु यजुर्षेति विहितं यजुरङ्गमुपांशुत्वं निगदेषु प्रधानभूतपरप्रत्यायनकार्यविरोधाद्बाध्यते, तेन यजुष्षूपांशुत्वविधानं निगदव्यतिरिक्तयजुर्विषयं भवति ।

---

संकोचे सति फलितं तदर्थमाह—तत्रैवमिति । प्रथमं प्रतिहर्तुः पश्चादुद्गातुरपच्छेदे सति पश्चाद्भाविनिमित्तस्यादाक्षिण्यस्यैवानुष्ठानमित्युक्तम् । तत्र प्रथममुद्गातुः, पश्चात्तु प्रतिहर्तुरपच्छेदे पश्चान्निमित्तस्य सर्ववेदसदानस्यैवानुष्ठानम् । तदानीमुद्गात्रपच्छेदनिमित्तकशास्त्रार्थोऽप्येवमेव वर्णनीय इत्याह—एवमिति ।

पञ्चदशरात्र इति । तच्च सत्रद्वादशाहविकृतिः । तस्याग्निष्टुत्प्रथममहः । तत्र नामातिदेशेनाग्नेय्याः सुब्रह्मण्यायाः प्राप्तिः । इतराहस्सु चोदकादैन्द्र्याः । एवं च पञ्चदशरात्रे किमैन्द्री प्रयोज्या, उताग्नेयीति । प्रथममाग्नेय्याः प्राप्तत्वेन प्रथमावगतत्वात् तस्या एव प्रयोग इत्याशङ्क्य, भूयसामह्नामैन्द्र्या अङ्गत्वेन प्राप्तत्वात् भूयसामनुग्रहाय ऐन्द्र्येव प्रयोज्या । ततश्च नामातिदेशस्य संकोचो वाच्य इति ।

तथा यत्किंचिदिति । ज्योतिष्टोमेऽग्नीषोमीयपशोः प्रागनुष्ठेयं यत्कर्मजातं, तदङ्गमन्त्रेषूपांशुत्वं विहितम् । दीक्षणीयाऽपि तदन्तःपातिन्येव । तदङ्गभूतेषु मन्त्रेषु स्वरान्तरविधानादुपांशुत्वस्य कर्मान्तरशेषभूतमन्त्रान्तरेष्वपि सावकाशत्वेनान्यत्रैव संकोचः सिध्यतीत्यर्थः । अत्र सामान्यविशेषरूपत्वेनैव बाध्यबाधकभावः किमिति न स्यात् ? तत्राह—न चेति । यत्किंचिच्छब्देन प्रकृतसर्वव्यक्तीनामेव साक्षादभिधानादित्यर्थः ।

अङ्गप्रधानविरोधमुदाहरति—तथेति । 'उच्चैरृचा क्रियते' 'उपांशु यजुषा' इति यजुष्षूपांशुत्वं विहितम् । 'अग्नीदग्नीन् विहर श. ब्रा. ४–२–४–११' 'बर्हिस्तृणाहि' इत्येवमादिरूपा निगदा नाम यजुर्भेदाः प्रैषमन्त्राः । तेषां च प्रेष्यप्रतिबोधनं मन्त्रसाध्यं किंचित्कारतया कर्मान्तरशेषभूतं प्रधानम् । उपांशुत्वं तु मन्त्राङ्गभूतम् । तेन च परप्रत्यायनासिद्धेस्तयोरङ्गप्रधानयोर्विरोधे, अङ्गस्योपांशुत्वस्य बाध इत्यर्थः ।

---

अप्राप्तबाधलक्षणपरं श्लोकं व्याचष्टे—यत्रत्वित्यादिना अप्राप्तबाध इत्यन्तेन ।

## अंग-प्रधानधर्मविरोधेऽङ्गधर्मस्य बाधः ।

तथा–य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायाम्, पौर्णमास्याम् वा यजेतेत्यनेनेष्टिषु, पशौ, सोमे च पर्वणि प्राप्ते सत्येकादिदीक्षापक्षे सुत्या–दीक्षणीययोरुभयोरपि पर्वसंपादनासंभवादन्यतरस्य बाधे कर्तव्ये सति प्रधानस्य अवैगुण्याद्दीक्षणीयायां पर्वबाधः, तेनेष्टिषु पर्वविधानं प्रधानकालाविरोधिविषयं भवति। तदेवं सर्वत्र विद्यमानस्य प्रापकस्य शास्त्रस्याविशेषेण प्रापकत्वे प्राप्ते, क्वचिद्विशेषेः यः प्रापकत्वापवादः, स प्राप्तबाधः ।

## द्वितीयश्लोकव्याख्यामुखेनाऽप्राप्तबाधस्वरूपोदाहरणनिरूपणम् ।

यत्र तु कल्पनीयस्यालब्धात्मकस्य शास्त्रस्य कल्पनाभिमुखस्य शीघ्रेण तद्विषयापहारात्कल्पनामूलं निकृत्य तन्निरोधः क्रियते, तत्राऽप्राप्तबाधः। यथा श्रुतिलिङ्गादिषु। नह्यैन्द्र्येन्द्रमुपतिष्ठत इति शास्त्रमस्ति, यस्य प्राप्तस्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यनेन बाधः स्यात्, नहि लिङ्गमात्रं स्वत एव प्रमाणम्। तत्कल्पिता तु श्रुतिरत्र प्रमाणम्, तत्कल्पनायामपि न तन्मात्रं प्रमाणम् ।

---

अङ्गप्रधानधर्मविरोधमुदाहरति–तथा य इष्ट्येति। एकादीति। 'एका दीक्षा, तिस्र उपसदः पञ्चमी प्रसुतः' 'तथा तिस्रो दीक्षास्तिस्र उपसदः' इत्यादिषु सर्वेष्वपि दीक्षाविकल्पपक्षेषु सुत्याहस्य दिनत्रयात्पूर्वमेव दीक्षणीया कार्या। ततश्चोभयोः पर्वकालसंपादनायोगात् प्रधानस्य पर्वकालमनुरुध्य, अङ्गेषु दीक्षणीयादिषु पर्वबाध इत्यर्थः। एवं प्राप्तबाधानुदाहृत्य, प्राप्तबाधलक्षणं निगमयति–तदेवमिति ।

अप्राप्तबाधलक्षणपरं श्लोकं व्याचष्टे–यत्र त्विति। कल्पनीयस्य–अनुमेयस्य। अलब्धात्मकस्य-क्वचिदप्यप्रवृत्तप्रसरस्य। कल्पनाभिमुखस्य-किंचित्कारसंभवेन कल्पनायोग्यस्य। तद्विषयापहारात्-तद्विषयविपरीतविषयान्तरावबोधनात्। मूलं-कारणान्तरम्। तन्निरोधः-कल्पनानिरोधः। उदाहरति–यथेति। उदाहरणे लक्षणं दर्शयति–नहीत्यादिना। तत्र प्रथमं प्राप्तबाधत्वं निराकरोति–नह्यैन्द्र्येति। प्रमाणस्य कल्प्यत्वं प्रतिपादयति–नहीति। श्रुतेर्मूलकृन्तकत्वं प्रतिपादयितुं, लिङ्गसहायभूतं मूलान्तरमपि तस्यास्तीत्याह– तत्कल्पनायामिति।

---

एवमन्यत्राप्यप्राप्तबाधो द्रष्टव्यः। अत्रेदमवधेयम्—श्रुत्या लिंगादीनि पञ्च बाध्यन्ते, लिंगेन वाक्यादीनि चत्वारि बाध्यन्ते। वाक्येन प्रकरणादीनि त्रीणि। प्रकरणेन क्रमादिद्वयम्। क्रमेण समाख्या। श्रुत्यादिषु च यथा विजातीयैर्विजातीयानां बाधः, एवं सजातीयैस्सजातीयानामपि बाधो भवति। यथा श्रुत्या श्रुतिः बाध्यते। यथा—

'यथा पंश्वंगमेकत्वं पदश्रुत्या प्रतीयते।
समानप्रत्ययश्रुत्या बलीयस्या क्रियांगता' ॥ इति।

लिंगस्यैकया श्रुत्या विनियोगं प्रति व्यवधानं प्रतीयते। अर्थविप्रकर्षादिति सौत्रः हेतुः। एवं वाक्यस्य लिंग–श्रुतिभ्यां व्यवधानं प्रतीयते। तथा प्रकरणस्य वाक्य–लिंग–श्रुतिभिस्तिसृभिर्व्यवधानम्, स्थानस्य प्रकरण-वाक्य–लिंग–श्रुतिभिश्चतसृभिः, समाख्यायाः स्थान–प्रकरण-वाक्य-लिंग–श्रुतिभिः पञ्चभिर्विनियोगं (श्रुत्यर्थम्) प्रति अन्तरायः प्रतीयते। शेषलक्षणे

किं तु—

मन्त्राकाङ्क्षासनाथं तत्प्रमाणं श्रुतिकल्पने।
तां चान्यत्र नियोगेन प्रत्यक्षा कृन्तति श्रुतिः ॥ १६ ॥

तेन प्रत्यक्षेण शास्त्रेण साकाङ्क्षमन्त्रलिङ्गकल्प्यश्रुतिविषयं मन्त्रमपहृत्य गार्हपत्योपस्थाने विनियुज्य मन्त्रं निराकाङ्क्षीकुर्वता कल्पनामूलभूताऽऽकाङ्क्षा निराकृतेति, न तदधीनात्मलाभा श्रुतिरुन्मज्जितुं क्षमते। *एवमन्यत्राप्यप्राप्तबाधो द्रष्टव्यः। तदुपपन्नः प्राप्ताबाधाप्राप्तबाधविवेकः।

'प्रत्युतैकदेशिमत एव प्राप्तबाधानुपपत्तिः न हि तस्य किंचित्प्राप्तम् बाध्यते, अंगत्वं हि प्राप्तम्, न तत् बाध्यते, यत्त्वनुष्ठानं बाध्यते, न तत्प्राप्तमिति, न प्राप्तबाधसंभवः। तस्माद्यथोक्तमेव न्याय्यम्।

---

अन्यत्र नियोगेनेति। अयमेव-विषयापहारः। द्वितीयार्धं तात्पर्यतो व्याचष्टे—तेनेति। श्रुतिविषयं-श्रुतिविनियोज्यम्। उन्मज्जितुं-उदेतुम्। मन्त्रस्य प्राथमिकविनियोगेनैव प्रकाश्यविशेषाकाङ्क्षायां निवृत्तायां, पुनर्विनियोगकल्पनं नोपपद्यत इति भावः। एवं लिङ्गवाक्यादिविरोधेष्वप्यप्राप्तबाधत्वं विज्ञेयमित्याह—एवमिति। स्वमते प्राप्ताप्राप्तबाधसांकर्याभावमुवसंहरति-तदिति।

गुरुमत एव प्राप्तबाधत्वं न घटत इत्याह—प्रत्युतेति। कृत्स्नप्रापकस्य चोदकस्य कतिपयपदार्थवर्जनमनुपपन्नमिति यदुक्तं तत्रापि परिहारमाह—यत्त्विति। सूत्रविरोधमपि

---

तृतीयचरणेऽधिकरणपञ्चकेऽस्य विस्तरो द्रष्टव्यः। श्रुतिलिंगाधिकरणे (बलाबलाधिकरणे) वार्तिककृता संक्षिप्याऽयमर्थो दर्शितः।

यथा—

'एक-द्वि-त्रि-चतुष्पञ्चवस्त्वन्तरयकारितम्।
श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते' ॥ तं. वा. २३१ इति।

तत्राप्ययमपरो विशेषो वर्णितः-श्रुतिर्बाधिकैव। मध्यमानां चतुर्णामुत्तरापेक्षया बाधकत्वम्, पूर्वापेक्षया बाध्यत्वमिति। तद्यथा लिंगं वाक्यस्य बाधकम्, तदेव श्रुतेर्बाध्यमित्यादि जिज्ञासूनां सौकर्यार्थं बाध्यबाधकभावसंग्राहकं वार्तिकम्—

'बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानान्तु बाध्यत्वं बाधकत्वमपेक्षया ॥ तं. वा. ८५८ इति।

सूक्ष्ममिदं प्राप्तबाधाप्राप्तबाधतत्त्वरहस्यं बलाबलाधिकरणभाष्य-वार्तिकपरिचयोपचितचेतोलोचनसंस्कारैर्विवेक्तुं शक्यते, न स्थूलदृष्टिभिरिति। तद्वयम् विस्तराद्विभ्यतो पूर्वमांसादर्शनानभिज्ञानुकम्पया निघ्ना विस्तरे पतिताः स्म इत्युपरम्यते।

*एवमिति—लिंगवाक्यादिविरोधेऽप्यप्राप्तबाधत्वं विज्ञेयमित्यर्थः।

१—प्रत्युतेति—अयमाशयः। तथाहि—प्राभाकरमीमांसकानां मते कृष्णलचरौ अवहननस्यांगत्वमस्ति, तन्न बाध्यते, अनुष्ठानमेव बाध्यते, तत्तु केनापि न प्राप्तमिति गुरुमत एव प्राप्तबाधत्वं न घटत इति भावः।

**स्वमते प्राभाकरोक्तदोषोद्धारः, कारणदोष-बाधकप्रत्यययोः पार्थक्येन मिथ्यात्वहेतुत्वेऽपि वेदे आद्यहेतोरसंभवेन, चरमस्य हेतुत्वोपपादनम् ।**

यत्तु कृत्स्नप्रापी चोदको न किंचिद्वर्जयितुमर्हतीति सत्यमयमेवास्य स्वभावः । स तु स्वभावः प्रबलेन हेतुना प्रतिबध्यते सामान्यशास्त्रस्येव विशेषशास्त्रेण । तद्वर्जन्तु वचनप्राप्तेर्न चोदकार्थकात्स्न्र्यादित्यपि स्वभावतः एव कतिपयविषयत्वमाशङ्क्य निराकृतमिति वेदितव्यम् । यद्यपि चात्र न कारणदोषेण मिथ्यात्वं सामान्यशास्त्रज्ञानस्योपलक्षयितुं शक्यते, तथाऽपि बाधकेन प्रत्ययान्तरेण तदुपलक्षणं भवति, द्वयमपि हि तदुपलक्षणत्वेनोक्तम् 'यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवाऽसमीचीनः प्रत्ययः शा. भा पृ. २८ इति ।

तत्र वैदिकेषु सम्भवात् बाधकप्रत्यय एव तदुपलक्षणम्, न करणदोषज्ञानम्, असम्भवात् । आह च 'यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणमुक्तम्, तल्लोकविषयत्वान्न वेदे सम्भवतीति नोपन्यस्तमि ( तं. वा पृ. ८६२ ) ति ।

---

परिहरति—तद्वर्जमिति । कृत्स्नप्रापकत्वमेव तस्य स्वभावः । न कतिपयमात्रविपयत्वमित्यर्थः । अन्यथाख्यातिवादिनो मिथ्याज्ञानस्य दुष्टकारणजन्यत्वात्, चोदकस्य चादुष्टत्वात् बाध एव नोपपद्यत इति यदुक्तं तदपि परिहरति—यद्यपीति । उपलक्षयितुं-ज्ञातुम् । कथं केवलबाधकप्रत्ययेन मिथ्यात्वं भवतीत्याशङ्क्य, उभयस्यापि पार्थक्येन तदुपलक्षणत्वस्य भाष्यकारेणैवाभिधानादित्याह—द्वयमपीति । उभयोस्तदुपलक्षणत्वेऽपि, वेदे बाधकप्रत्ययस्यैव तदुपलक्षणत्वमुपपादयति—तत्रेति । तत्रापि संमतिमाह—आह चेति ।

---

बाधकप्रत्ययस्य, कारणदोषस्य च मिथ्यात्वं प्रति उपलक्षणत्वमंगीक्रियते ।

उभयस्यापि पार्थक्येन मिथ्यात्वोपलक्षणत्व एव भाष्यस्य तात्पर्यमिति, न दोषः ।

तत्र त्वेतावान् विशेषः—वैदिकेषु प्राप्तबाधेषु बाधकप्रत्यय एवोपलक्षणमिति स्वीकरणीयम् । अपौरुषेये वेदे कारणदोषास्यासंभवात् । अत एव बलाबलधिकरणगतं वार्तिकमुपपद्यत इति बोध्यम् ।

अपौरुषेये वेदे स्वगतदोषस्याभावेऽपि पुरुषदोषेण मिथ्यात्वं भवेत् । पुंसोऽप्रतिपत्तिः, विप्रतिपत्तिश्च संभवेताम् । एवंविधपुरुषदोषवशेन वेदेऽपि संशय-विपर्ययोस्संभवात्, तन्निरासाय मीमांसायास्सार्थकत्वं संभवति । अत एव 'ब्रह्मवादिनो वदन्ति' इत्यादिना वेदवादिनां विचारपूर्वकेऽर्थनिर्णये तात्पर्यातिशयदर्शनात् सर्वो वेदार्थो विचार्य निर्णेतव्य इति ज्ञायते । तथा सति पुनस्संशयो नोदेष्यति । अन्यथा कदाचित् स्वबुद्धौ पूर्वपक्षयुक्तिप्रतिभाने सति विपरीतनिर्णयः, संशयो वा प्रसज्येत । अत एव —

'इतिकर्तव्यताभागं मीमांसा पूरयिष्यति । इति'

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ।।'

इत्यादिकञ्च मनसि निधायाह मीमांसाशास्त्रमर्थवत् भवतीति ।

## पुरुषदोषेण वेदे संभावितसंशय-विपर्यासनिरासाय मीमांसायास्सार्थक्यम् ।

कथं पुनरदुष्टेन करणेन मिथ्याज्ञानं जन्यते, न हि बाधकेन मिथ्याज्ञानं जायते, जातस्य तु मिथ्यासतस्तत्त्वमसौ ज्ञापयति। तज्जन्म तु कारणदोषादेव। सत्यमेव तत्। अत्रापि हि कारणदोषो विद्यत एव। यद्यप्यसावपौरुषेयस्य वेदस्य न स्वगतः कश्चिद्दोषो विद्यते। तथाऽपि प्रतिपत्तुरेव सामान्यापहृतबुद्धित्वादपवादा-निरूपणाच्च न्यायाभासेभ्यः प्रसरन्मिथ्याज्ञानं जायते। अत एव सम्यक् न्याय-निरूपणार्थं मीमांसाशास्त्रमर्थवद्भवति। न चायं दोषो बाधकात्प्रागङ्गुल्यवष्टम्भादिव निरूपयितुं शक्यत इति, बाधकैकोपलक्षणीयत्वं मिथ्यात्वस्याभिहितमिति सर्वमवदातम्।

## सूत्र-भाष्यानुसारेण चोदकसंकोचेनेति निगमनम् ।

तत्सिद्धम्—यदेवमिदमिति निश्चितं ज्ञानं कारणान्तरेण मिथ्येति कथ्यते, नास्ति लुप्तार्थानां चोदकवचनम्, लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयतीत्यादिभाष्याविना-शात्। 'अपि तु वाक्यशेषः स्यादि'ति च सूत्राविनाशाल्लुप्तार्थ-प्रत्याम्नात-प्रतिषिद्धे-भ्योऽङ्गेभ्यश्चोदकस्य समुत्कालनम्[1]।

---

ननु वैदिकज्ञानेऽपि मिथ्यात्वं बाधकेनापि ज्ञातुमशक्यम्। बाधकं हि ज्ञानं मिथ्या-ज्ञानस्य न कारणम्। किंतु उत्पन्नस्य तस्य मिथ्यात्वं ज्ञापयति। दोषस्तु तत्कारणम्। ततश्च तस्योत्पत्तेरेव दोषमन्तरेणासिद्धेः, तदभावे मिथ्यात्वमेव न सिध्येत्। बाधस्तु दूर इत्याशङ्कते-कथं पुनरिति। स्वगतदोषाभावेऽपि पुरुषदोषवशात् मिथ्यात्वमिति परिहरति—सत्यमिति। अपवादानिरूपणादित्यप्रतिपत्तिर्दोषतयाऽभिहिता। न्यायाभासेभ्य इति विप्रतिपत्तिः। एवंविध-पुरुषदोषवशेन वेदेऽपि संशयदोषविपर्ययसंभवत्तन्निरासिमीमांसायाः सार्थकत्वमित्याह—अत एवेति।

यद्यत्र दोषोऽप्यस्ति, तर्हि तस्यापि तदुपलक्षणत्वं किमिति न स्यादित्याशङ्क्य, तस्य मिथ्यात्वावगतेः पूर्वमवगन्तुमशक्यतया तस्य तज्ज्ञापकत्वं न युक्तमित्याह—न चेति। तस्मात्—भाष्यसूत्रानुगुण्यात् चोदकसंकोच एवाङ्गीकार्य इति निगमयति—तत्सिद्धमिति। 'अपि तु वाक्यशेषः स्यात्' इति पर्युदासाधिकरणसिद्धान्तसूत्रम्। 'नार्षेयं वृणीते' इत्यादिनिषेधवाक्यं चोदकवाक्यशेषत्वं भजते। ततश्चार्षेयवरणव्यतिरिक्तं प्राकृतमङ्गजातमनुष्ठेयमित्येवं वदता सूत्रकारेणापि चोदकसंकोच उक्त इत्यर्थः। समुत्कालनं-संकोचः। महाप्रकृतं निगमयति-

---

१. समुत्कालनम्—संकोचः।

यदेवमिति—भाष्यं पृ. १७९९ इदं भाष्यं बाधलक्षणप्रतिपादनपरम्। अस्यायमर्थः—यद्विशेषादर्शने सति यस्य शास्त्रस्य यद्विषये यादृशनिश्चयजनकत्वम्। तादृशनिश्चयस्य तद्विशेष-दर्शनेनाप्रामाण्यनिश्चय एव तद्विषये तस्य शास्त्रस्य बाध इति।

'अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यादि'ति समग्रं पर्युदा-साधिकरणसिद्धान्तसूत्रम्। अस्यार्थः—'नार्षेयं वृणीते' इत्यादिनिषेधवाक्यं चोदकवाक्यशेषत्वं भजते, विकल्पस्यान्याय्यत्वात्। ततश्चार्षेयवरणव्यतिरिक्तं प्राकृतमंगजातमनुष्ठेयमित्यर्थः। एवञ्च सूत्रकारोऽपि चोदकसंकोचं मनुत इति भावः।

**कृष्णलादिषु दृष्टद्वाराभावेऽपि नियमादृष्टसिद्धयर्थमवघातानुष्ठानमिति शंका।**

कृष्णलादिषु हन्त्यादेरनङ्गत्वं तथा क्रिया।
नियमादृष्टसिद्धिस्तु नियमान्न स्वरूपतः ॥ १७ ॥

तत्रैतत्स्यात् - यद्यपि कृष्णलेषु हन्तिर्दृष्टार्थं न प्राप्यते, तथाऽपि नियमादृष्टसिद्ध्यर्थं किन्न प्राप्यते—इति।

**नियमाप्रयोजकत्वाभ्यां तन्निरासः।**

तत्र तस्यासम्भवात्। एवं हि तत्कल्प्यते–अवघातेनैव निष्पाद्यमानास्तण्डुला अपूर्वं साधयन्तीति। न चैवमिह सम्भवतीति। अप्रयोजकत्वाच्च। न ह्यवघातस्य नियमादृष्टं प्रयोजकम्, दृष्टप्रयोजनेनैव तावत्स्वरूपे प्राप्ते, नियममात्रं तेन प्रयुज्यते। तेन यद्यपि चरुषु पेषणमप्रतिषिद्धम्, पिष्टस्यापि चरुत्वाविघातात्। तथाऽपि प्रयोजनाभावात्पेषणस्वरूपस्याप्राप्तेस्तदधीनत्वाच्च नियमप्रयुक्तेरननुष्ठानम्। सत्यपि च प्रयोजने प्रयोजकाभावात्पुरोडाशकपालादेश्चर्वादिषु बाध इति।

---

कृष्णलादिष्विति। अक्रिया-अननुष्ठानम्। उभयमपि सिद्धमित्यर्थः। नन्ववघातस्योभयं साध्यं दृष्टं वैतुष्यं, नियमादृष्टं च। तत्र दृष्टद्वाराभावेऽपि नियमादृष्टसिद्धयर्थं कृष्णलेष्वपि तदनुष्ठानं स्यादित्यत्राह–नियमेति। अवघातेनैवेति। न कृष्णलेष्ववहनननियमः, तेनैव तत्कुर्यादिति। तस्यैव कार्यस्यासंभवे तदुपायनियमः कथं स्यादित्यर्थः। ततश्च श्लोकोत्तरार्धस्यैवमर्थः नियमादृष्टसिद्धयर्थं वितुषीकरणं प्रति योऽवघातनियमः, सतु तस्मादेव। नतु वैतुष्यसाधनभूतादवघातस्वरूपमात्रात्। स तु नियमोऽत्र न संभवतीति युक्त्यन्तरमप्याह–अप्रयोजकत्वाच्चेति। अवघातस्य प्रयोजकं वैतुष्यमेव। नियमादृष्टं तु स्वकार्यसाधनतया प्राप्तस्य तस्य नियममात्रं प्रयुङ्क्ते। ततश्च तेन स्वाप्रयोज्यावहननस्वरूपानुष्ठापनं न सिध्येदित्यर्थः। कृष्णलेषु प्राकृतद्वारस्य संपादयितुमशक्यत्वात् बाध इत्युक्तम्। क्वचित् तस्य शक्यसंपादत्वेऽपि प्रयोजनाभावादपि बाधः स्यादिति प्रसङ्गादाह–तेनेति। अप्रतिषिद्धमिति। कृष्णलावहननवत् अशक्यानुष्ठानं न भवतीत्यर्थः। तत्र हेतुमाह–पिष्टस्यापीति। पिष्टप्रकृतिकश्रपितसंहतद्रव्यवाचकः पुरोडाशशब्दः। चरुशब्दस्तु अनवस्रावितान्तरूष्मविरलावयवश्रपितद्रव्यवाचकः। ततश्च पेषणसंभवेऽपि अवयवानां विरलत्वे चरुत्वं न विहन्यत इत्यर्थः। तदधीनत्वादिति। प्राप्ते खलु नियमः। तस्मिन्नेवाप्राप्ते नियमो न प्राप्यत इत्यर्थः। क्वचिदन्योऽपि बाधहेतुरस्तीत्याह—सत्यपीति। आग्नेयोऽष्टाकपालः पुरोडाश इत्यादिवाक्यैः पुरोडाशेन सहैव तच्छेषतयोत्पन्नानां कपालानां श्रपणार्थं चरौ सप्रयोजनत्वेऽपि स्वप्रयोजकपुरोडाशनिवृत्त्या बाध इति प्रयोजक-

---

नन्ववघातस्योभयं साध्यं वैतुष्यम्, नियमादृष्टश्चेति। कृष्णलचरौ दृष्टद्वाराभावेऽपि नियमादृष्टसिद्धयर्थमनुष्ठानं स्यादिति नाशंकनीयम्। यतो हि अवघातस्य प्रयोजकं वैतुष्यमेव, नियमादृष्टन्तु स्वकार्यसाधनतया प्राप्तस्य तस्य नियममात्रम् प्रयुङ्क्ते। अतो नियमादृष्टसिद्धयर्थं योऽवघातनियमः वैतुष्यं प्रति स, तस्मादेव।

प्राकृतद्वारस्य संपादयितुमशक्यत्वात् बाध इति। पिष्टप्रकृतिकश्रपितसंहतद्रव्यवाचकः पुरोडाशशब्दः, चरुशब्दस्तु अनवस्रावितान्तरुष्मपक्वोविशदसिद्धौनवाची। चरौ पेषणसंभवेऽपि प्रयोजनाभावात् पेषणेऽप्राप्ते नियमो न प्राप्यते। तस्य नानुष्ठानमिति। एवञ्च पेषणस्य शक्य-

## प्रयोजकनिवृत्तिरपि बाधे हेतुरिति प्रतिपादनम् ।

एतेन चित्रेष्टयां तण्डुलेषु प्राकृतस्य व्रीहियवप्रकृतिद्रव्यनियमस्य बाधो व्याख्यातः ।

तथाहि—प्राप्ते प्रकृत्युपादाने नियमोऽत्र विधीयते ।
लौकिका एव तु ग्राह्यास्तण्डुलाः प्रकृतिर्न तु ॥ १८ ॥

न हि प्रकृतौ त्रैहेयेण हविषा यजेतेति शास्त्रमस्ति । यदतिदेशात्तण्डुलानामपि तन्मयत्वं स्यात् । यागं प्रति 'व्रीहिभिर्यजेते'ति व्रीहीणां करणत्वं श्रूयते । कर्तृव्यापारगोचरश्च करणं भवति । यथाऽऽहुः—

'करणं खलु सर्वत्र कर्तृव्यापारगोचरः' भा. वि. पृ. ७६ इति ।

तेन व्रीहीनुपादाय तैर्यष्टव्यमिति । करणत्वञ्च तेषामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे न तत्प्रकृतित्वेन सम्भवतीत्येष शास्त्रार्थो भवति—व्रीहीनुपादाय तैर्हविः संपाद्य यजेतेति । अत्र च हविः संपाद्य यजेतेत्यनूद्य, व्रीहिभिरित्येतावन्मात्रं विधीयते । एवञ्च सत्यार्थिकं हविषस्तन्मयत्वम्, न श्रौतम् । न चैवं तण्डुलेषु संभवति । न हि तत्र प्रकृत्युपादानेन हविस्संपादनीयं प्राप्तम्—यत् व्रीहिभिरिति नियम्येत । लोकसिद्धानेव

---

निवृत्तिरपि अपरो बाधहेतुरित्यर्थः । अन्यत्रापि प्रयोजकनिवृत्त्या बाधमुदाहरति—एतेनेति । चित्रेष्टयां दधिमधु घृतमापो धानास्तण्डुला इति श्रूयन्ते । एतेषां तण्डुलानां व्रीहिभिर्यजेत यवैर्वेति विहितो यः प्रकृतिद्रव्योपादाननियमः न तस्यात्र प्राप्तिरस्तीत्यर्थः ।

तत् कथमित्याशङ्क्य तदुपपादयति—तथा हीति । अत्र प्रकृतौ । लौकिका इति । विकृतौ चित्रेष्टयां लौकिकाः क्रयादिलब्धाः । प्रकृतिः नतु व्रीह्यादिप्रकृतिद्रव्यं न प्राप्नोतीत्यर्थः । प्रकृत्युपादानस्यैवाप्रसक्तिरिति शेषः । प्रकृतौ प्रकृत्युपादानशेषतया व्रीह्यादिनियमप्राप्तिमुपपादयिष्यन् प्रकारान्तरेण प्राप्तिर्नास्तीत्याह—नहीति । शास्त्रमस्तीति । हविषो व्रीहिप्रकृतिकत्वं न श्रौतमित्यर्थः । कथं तर्हि तस्य तत्प्रकृतित्वसिद्धिरित्याशङ्क्य श्रौतयागं प्रति करणत्वानुपपत्त्या तत्सिद्धिरार्थिकीत्याह—यागं प्रतीति । उत्तरत्र यत् प्रकृत्युपादानेन पुरोडाशसंपादनं तत् व्रीहिभिः करणभूतैः व्रीहीनुपादायेति शास्त्रार्थं वक्ष्यति । तदुपयोगितया करणत्वबलात् यागकर्त्रा तेषामुपादानं प्राप्नोतीति प्रतिपादयति—कर्तृव्यापारेति । अस्त्वेवम् । हविषः तत्प्रकृतित्वं कथमित्यत्राह—तत्प्रकृतित्वेनेति । 'आग्नेयोऽष्टाकपालः पुरोडाशः' इति यागेन सहोत्पन्नः पुरोडाशः । व्रीहयस्तु उत्पन्ने यागे पश्चात् तमनूद्य विधीयन्ते । अतः प्राथमिकपुरोडाशसमकक्ष्यतया साक्षात् यागहविष्ट्वेन प्रवेशायोगात् योग्यतया हविःप्रकृतित्वेनान्वयः सिध्यतीत्यर्थः । तथा च फलितं शास्त्रार्थमाह—एष इति । एवं च सतीति । उद्देश्यतयाऽनुवाद्यस्य हविःसंपादनस्याशाब्दत्वेनार्थिकत्वात् हविषस्तत्प्रकृतिकत्वमप्यार्थिकमित्यर्थः । प्रकृतौ व्रीह्यादिप्राप्तिक्रममभिधायोद्देश्यतया शेषिणः प्रयोजकस्य प्रकृत्युपादानस्य चित्रातण्डुलेष्वसंभवात् बाध इत्याह—न चेति । तर्हि प्रकृतावपि क्रयक्रीतेनापि पुरोडाशेन यागसंभवात् प्रकृत्युपादानस्य प्राप्तिरेव

---

संपादत्वेऽपि प्रयोजनाभावाद्बाधः—इति । कृष्णलेषु प्राकृतद्वारस्य संपादयितुमशक्यत्वाद्बाध इति विशेषो बोध्यः ।

प्रयोजकनिवृत्तिरप्यन्यो बाधहेतुः । 'आग्नेयोऽष्टाकपालः' इति वाक्येन पुरोडाशेन सहोत्पन्नानां कपालानां श्रपणार्थं चरौ सप्रयोजनत्वेऽपि स्वप्रयोजकपुरोडाशनिवृत्त्या बाध इति बोध्यम् ।

तण्डुलानुपादाय यष्टुं शक्यत्वात्। ननु प्रकृतावपि लौकिकमेव पुरोडाशमादाय यागस्य कर्तुं शक्यत्वात्कथं प्रकृत्युपादानेन हविस्संपादनप्राप्तिरिति चेत्।

## प्रकृतौ तत्प्राप्तिसंभवेन व्रीह्यादिप्रकृतिद्रव्यनियमस्योपपादनम्।

तदुच्यते—हविःश्रपणसाध्यं हि पुरोडाशाख्यमिष्यते।
स्वयंकर्तृकता तस्य श्रपणस्य विधीयते॥ १९॥

पुरोडाशरूपं हि हविर्नान्तरेण श्रपणं सिध्यति। तत्किं लौकिकमेवोपादेयम्, स्वयमेव वा प्रकृत्युपादानेन संपादयितव्यमिति। यद्यप्युत्पत्तिवाक्यादनियमः प्राप्तः। अष्टाकपालेन यजेतेत्यस्योभयथाऽप्युपपत्तेः, तथाऽपि 'कपालेषु श्रपयती'ति वचनान्नान्येन श्रपितं गृह्णातीति, स्वयंकर्तृकत्वमेव त्वस्य विधेयम्। सर्वमन्यदुत्पत्तिवाक्यसामर्थ्यसिद्धम्। कपालान्युत्पत्तिवाक्यसिद्धानि। श्रपणमपि सामर्थ्यात्, नाश्रपितस्य पुरोडाशत्वमस्तीति, श्रपितद्रव्यविशेषवचनत्वात्पुरोडाशचर्वादिशब्दानाम्। ततः स्वयंकर्तृकतैवात्र विधेया। यथाऽऽह भगवान् भाष्यकारः—'कपालेषु श्रपयती'ति वचनान्नान्येन श्रपितं गृह्णातीति तद्बलेन प्रकृत्युपादानं प्राप्नोती'ति न ह्यन्यथा स्वयं श्रपयितुं शक्यते।

एवं प्रकृतिद्रव्योपादाने प्राप्ते किमवस्थम्, किंरूपञ्च द्रव्यमुपादेयमित्याकाङ्क्षायां व्रीहिशब्देन सतुषजातिविशेषवाचिना तन्नियमात्पिष्ट-तण्डुलावस्थयोर्नीवारादीनां च निवृत्तिः। यदि त्वनेनैव शास्त्रेण प्रकृतिमुपादाय हविस्संपादयेत्। तच्च व्रीहिभिरिति विधीयेत। ततो गौरवम्। 'कपालेषु श्रपयती'ति च विधेरानर्थक्यं सत्यां गतौ स्यात्।

---

नास्तीति तदुद्देशेन व्रीह्यादिविधान नोपपद्यत इति शङ्कते—प्रकृतावपीति। प्रकृतौ तत्प्राप्तेः संभवात् व्रीह्यादिनियम उपपद्यत इति परिहरति—तदभिधीयत इति। श्लोकं व्याचष्टे—पुरोडाशेति। संपादयितव्यमिति। प्रथमत एव संशयो जायत इति शेषः। अस्य संशयस्योत्पत्तिवाक्यमात्रपर्यालोचनया निवृत्त्यसंभवेऽपि प्राकरणिकवाक्यान्तरपर्यालोचनया निवृत्तिः सेत्स्यतीत्याह—यद्यपीति। नान्येनेति। यत्कपालेषु पुरोडाशस्य श्रपणं तद्यागकर्त्रैव संपाद्यमित्येवं विधिपरमेतद्वाक्यमिति अन्यश्रपितस्य क्रयादिलब्धस्य पुरोडाशस्य हविष्ट्वं न युज्यत इत्यर्थः। नन्वनेन वाक्येन कपालानां श्रपणस्य वा विधानं स्यात्। कथमश्रुतस्य स्वयं संपादनस्य विधिरित्याशङ्क्य तदुपपादयति—स्वयमिति। अस्तु श्रपणस्य स्वयमेव संपादनम्। पुरोडाशप्रकृतिद्रव्योपादानप्राप्तिः कथमित्यत्राह—तद्बलेनेति। एवं प्रकृत्युपादानप्राप्तिमभिधाय तदुद्देशेन व्रीह्यादिशास्त्रस्यान्वयमाह—एवमिति। पूरोडाशप्रकृतिद्रव्यं व्रीहिरूपमेवोपादेयं न तु संनिहितमपि पिष्टतण्डुलावस्थमपि द्रव्यान्तरमित्येवं नियमो लभ्यते। ततश्च व्रीहीनुपादाय ते यथा पुरोडाशीभवन्ति तथा स्वयमेव संपादयेदित्येवं प्राप्नोतीत्यर्थः। ननु व्रीहीणां पुरोडाशप्रकृतितयाऽन्वयात् तेषां च करणश्रुतिबलात् स्वयं संपादनस्य प्राप्तत्वात् व्रीहीनुपादाय तैः पुरोडाशं संपाद्य यजेतेत्येवमर्थो लभ्यते। ततश्च प्रकृतिद्रव्योपादानमप्यनेनैव वाक्येन लभ्यत इति कथं श्रपणवाक्येन तत्सिद्धिरभिधीयत इत्याशङ्क्यात्र पुरोडाशसंपादनोद्देशेन व्रीहय एव विधीयन्ते। ननु तत्सम्पादनमपि। तस्यापि विधाने गौरवादित्याह—यदि त्विति। वाक्यान्तरानर्थक्यं च

---

प्राजापत्येष्टौ 'दधि मधु घृतमापः धानास्तण्डुलाः, तत्संसृष्टं प्राजापत्यमि'ति श्रूयते। एतेषां तण्डुलानां 'व्रीहिभिर्यजेत, यवैर्वे'ति विहितो यः प्रकृतिद्रव्योपादाननियमोऽस्ति। न तस्य प्राप्तिरस्ति। अतस्तस्य बाधः—इति।

तद्वान्यायग्यम् । तेन यत्र श्रपणम्, तत्र तस्य स्वयंकर्तृकत्वम्, यत्र च तत्, तत्र प्रकृत्युपादानप्राप्तिः, यत्र चासौ । तत्र व्रीहिनियमः । तण्डुलेषु तु श्रपणस्यार्थलोपान्निवृत्तिः । निवृत्ते च तस्मिन्, तत्र स्वयंकर्तृकत्वस्य कुतः प्राप्तिः । कुतस्तरां च प्रकृत्युपादानम्, कुतस्तमां च व्रीहिनियम इति, न तेषु व्रीहिनियमसंभवः ।

## अवघातवाक्ये स्वयंकर्तृकत्वविधानेन प्रकृत्युपादानव्रीहिनियमसत्त्वेऽलुप्तद्वारकत्वे व्रीह्यादिनियमप्राप्तिशंका-तन्निरासौ ।

नन्ववघातसामर्थ्यात्तण्डुलेष्वपि प्रकृत्युपादानं स्यात् । नेत्याह । न हि 'व्रीहीनवहन्ती'त्येतदवघातस्य स्वयंकर्तृकत्वसिद्ध्यर्थं अप्राप्तत्वाद्व्रीह्युद्देशेनावघातो विधीयत इति, न तद्वशेन प्रकृतिद्रव्यप्राप्तिः शक्यते वदितुम् । न चासौ श्रपणवन्नियमेन प्राप्नोति । यत्तदनुवादेन स्वयमेवावहन्यात्, नान्येनावहतान् गृह्णीयादिति, न खनिर्लुञ्चनादिभ्योऽपि वितुषीकरणसम्भवात् । तस्यापि नियमेनाप्राप्तेः । अवघातेनापि हि विक्लिन्नास्तण्डुलाश्चूर्णीभवन्ति ।

---

स्यादित्याह—कपालेष्विति । प्रकृतौ सिद्धमन्वयक्रमं प्रदर्श्य तदसंभवात् विकृतौ व्रीह्यादेर्बाधः सिध्यतीत्याह—तेन यत्रेति । ननु प्रकृतौ श्रपणवाक्येन स्वयंकर्तृकत्वे प्राप्ते सति यदि व्रीह्यादिनियमो भवेत् तदा भवेन्नाम चित्रातण्डुलेषु द्वारलोपात् श्रपणनिवृत्त्या व्रीह्यादेरपि बाधः । न त्वेवम् । अवघातवाक्य एव स्वयंकर्तृकत्वं विधेयम् । तेन च प्रकृत्युपादाने प्राप्ते व्रीह्यादिनियमो विधीयताम् । ततश्च तण्डुलेष्वप्यवघातस्यालुप्तद्वारकत्वेन प्राप्तत्वात् व्रीह्यादिनियमस्यापि प्राप्तिः स्यादिति शङ्कते—नन्विति । अवघातसामर्थ्यात् अवघातस्य प्राप्तिसंभवात् अवघातवाक्ये त्वप्राप्तस्यावघातस्यैव विधानसंभवान्न तत्र स्वयंकर्तृकत्वविधिर्युज्यत इति परिहरति नेत्याहेति । व्रीह्युद्देशेनेति । द्वितीयया हि उद्देश्यत्वं प्रतीयते । स्वयंकर्तृकत्वविधिपरत्वे तु व्रीहीणामप्राप्तत्वात् द्वितीयाश्रुतिः व्रीहिश्रुतिश्च नोपपद्यत इत्यर्थः । ननु श्रपणवदवघातस्यापि सामर्थ्यप्राप्ततया नाप्राप्तिः स्यादित्याशङ्क्य नियमस्याप्राप्तत्वात् तद्विधिः स्यादित्याह—न चेति । व्याख्यातमिति । पेषणस्यापि नियमेन प्राप्त्यभावात् नियम एव विधेयः नतु तत्रापि स्वयंकर्तृकत्वमित्यर्थः । ततश्च प्रकृतावन्वयक्रमं तदसंभवाच्च विकृतौ बाध इत्य-

---

अत्रत्यो विशेषो विधिरसायनसुखोपयोजिन्यां दीक्षितेन्द्रैस्सुविशदं प्रत्यपादि 'श्रपणविधेः प्रकृतिद्रव्यनियमेन चित्रेष्टिगततण्डुले व्रीहिनियमव्यावृत्तिः प्रयोजनमिति । तत्रत्यो ग्रन्थसन्दर्भोऽधस्तादुद्ध्रियते । तथाहि—तस्मादन्यलभ्यश्रपणविधानेन प्रकृत्युपादानमाक्षिप्य, आक्षिप्तोपादानापेक्षितप्रकृतिद्रव्यनियमात्रपरत्वं व्रीहिशास्त्रस्यापाद्य, तद्द्वारा चित्रेष्टिगततण्डुलद्रव्यकयागात् प्रकृत्युपादाने व्रीहिनियमव्यावर्तनार्थोऽयं विधिः । असति ह्यस्मिन् विधौ व्रीहिशास्त्रमेव जात्यवस्थाविशेषविशिष्टप्रकृतिद्रव्योपादानपर्यन्तमिति, तण्डुलयागादावर्थलोपेन श्रपणनिवृत्तावपि, व्रीहिशास्त्रस्य श्रपणमुखप्रवृत्तिकत्वाभावेन चोदकादंगान्तरैस्सह प्रयोगमध्येऽनुष्ठेयतया, तत्र तत्प्रकृत्युपादाने तत एवार्थतस्सिद्धेः, व्रीहिशास्त्रम् प्रकृतिद्रव्ये जात्यवस्थाविशेषनियममात्रार्थं भवति—प्रयोगमध्ये प्रकृतिद्रव्याण्युपाददीतेति यत्, तत् व्रीहिजातीयानि सतुषावस्थानि—इति । तथा च व्रीहिशास्त्रस्य प्रकृत्युपादानप्राप्त्यर्थं श्रपणविध्यपेक्षत्वे सत्येवं व्यवस्था सिद्ध्यतिवैकृते यत्र हविषि श्रपणमपेक्षितम्, तत्र तस्य प्रयोगमध्येऽनुष्ठानम्, यत्र च तत्, तत्र प्रकृत्युपादानम् ।

## प्रागुक्तस्यार्थस्य संक्षिप्य वर्णनम्, बाधाभ्युच्चयविवेचनेन अंगानामियत्ताया निगमनञ्च ।

तदेवं क्रमः—प्रथमं तावत्पुरोडाशो विनियुज्यते, ततस्तस्य यथाकथंचिदुपादाने प्राप्ते श्रपणविधिवशात्प्रकृत्युपादानेन स्वयं संपादनम्, ततः प्रकृतिविशेषापेक्षायां 'व्रीहिभिर्यजे 'तेत्यनेनानन्तरतत्प्रकृतिपिष्टव्युदासेन पिष्टव्यवहिततण्डुलव्युदासेन व्यवहिततरनीवारादिव्युदासेन च व्रीहयो विधीयन्ते, ततस्तेः कथं हविरुत्पाद्यमित्यपेक्षायामवघातपेषणादिविधानम् । तण्डुलेषु त्वर्थलोपात् श्रपणनिवृत्तौ तन्मूलप्रकृत्युपादानव्रीहिनियमावघातादीनां क्रमेण निवृत्तिरिति लोकसिद्धा एव यत्किंचिज्जातीयका वरकादिवर्जमुपादेयाः यत्र त्वपुरोडाशेऽपि श्रपणेनार्थश्चरु-धाना मन्थ-लाज-पृथुकयवाग्वादिषु, तत्र भवत्येव व्रीहिनियमोऽवघातादयश्च संस्कारा इति सूक्ष्ममिदं न्यायरत्नं भाष्यवार्तिकपरिचयोपचितचेतोलोचनसंस्कारैर्विवेक्तुं शक्यते, न स्थूलदृष्टिभिः—इति । श्लोकावप्यत्र वार्तिककारीया गायन्ति—

'तण्डुलेभ्योऽर्थलोपेन श्रपणं चेन्निवर्तते ।
श्रपणस्य निवृत्तस्य स्वयंकर्तृकता कथम् ॥
तदधीनमुपादानं प्रकृतेः स्यात्कथंतराम् ।
तद्वशाद् व्रीहिनियमस्तदभावे कथंतमामि' ॥ ति

तदेवं प्राकृतानामर्थलोपादिना बाधाद्वैकृतकार्यापत्तिशून्यानामामनहोमादीनामभ्युच्चयाभिधानाच्च प्रयोगेयत्ता दशमे चिन्तिता—इति ।

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रेण विरचितायां न्यायरत्नमालायामङ्गनिर्णये चतुर्थः परिच्छेदः समाप्तः ॥ ४ ॥



---

व्युपपादितमेव पुनरपि संक्षिप्य विविच्य दर्शयन् निगमयति—तदेष इति । वरकादिवर्जमिति । 'अयज्ञिया माषा वरकाः कोद्रवा' इति निषेधान्न तेषां यागार्हता इत्यर्थः । एवं चित्राङ्गतण्डुलेषु व्रीह्यादिनियमस्यावघातादेश्च श्रपणलोपेन बाधमभिधाय तत्संभवे तु तेषां विकृत्यन्तरेषु प्राप्तिः स्यादित्यपि प्रसङ्गादाह—यत्रेति । उक्तन्यायस्य गहनतया परिशीलनीयत्वमाह—सूक्ष्ममिति । चेत एव लोचनम् । उक्तेऽर्थेऽभियुक्तसम्मतिमप्याह श्लोकाविति । दशमप्रतिपाद्यप्रयोगपरिमाणं निगमयति—तदेवमिति । कार्यापत्तिशून्यानां प्राकृतकार्यसाधनतया प्रत्याम्नानरूपेणाविहितानाम् ।

इति श्रीमद्रामानुजाचार्यविरचिते नायकरत्ने अङ्गनिर्णये चतुर्थः परिच्छेदः ॥



---

यत्र प्रकृत्युपादानम्, तत्र व्रीहिनियमः, एवञ्च सति तण्डुलयागादर्थलोपेन श्रपणनिवृत्तौ, तन्मूलकं व्रीहिनियमपर्यन्तं निवर्तत एव । तदाहुरित्यादिना, तण्डुलेभ्य इत्यादिपद्यद्वयमुपन्यस्तम् । इति वि. र. पृ. ३२-३३ ।

एतेनेत्यादिरान्तो ग्रन्थो निगदव्याख्यातः ।

टिप्पणी समाप्तिमगमत् ।



# अथाऽङ्गनिर्णये पञ्चमः परिच्छेदः

परिच्छेदप्रतिपाद्यप्रतिज्ञा ।

## एकादशाध्यायार्थः ।

### दशमैकादशाध्याययोस्संगतिप्रदर्शनमुखेन तन्त्रलक्षणकथनम् ।

एकादशे तु प्रयोगपरिमाणं तन्त्रावापद्वारेण चिन्त्यते । तन्त्रं नाम साधारणमङ्गाद्यनुष्ठानम् । यथाऽऽग्नेयादिषु प्रयाजादीनाम् ।

### एकादशाद्याधिकरणप्रदर्शनम् ।

तत्र प्रथमं तावदाग्नेयादीनां फलतन्त्रत्वं प्रतिपाद्यते—किं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्येतत्फलमाग्नेयादीनां तन्त्रम्, उत पृथगिति । किमन्योन्यनिरपेक्षाणां फलसाधनत्वम्, उत सहितानामित्यर्थः ।

---

एकादशस्य दशमाध्यायेन संगतिमाह–एकादशे त्विति । प्रयोगपरिमाणचिन्तात्मकत्वात् दशमानन्तरमस्यारम्भ इत्यर्थः । तर्हि प्रमेयैक्ये लक्षणभेदः कथमित्यत्राह तन्त्रावापेति । आवापः-आवृत्तिरित्यर्थः । तन्त्रशब्दार्थमाह–तन्त्रं नामेति । अनेकप्रधानसाधारणोद्देशेन सकृदङ्गानुष्ठानं तन्त्रमित्यर्थः । इदमनुष्ठानतन्त्रस्य लक्षणम्, सामान्यलक्षणं तु यदनेकसाधारणमेकं तत् तन्त्रम् । यथा आग्नेयादिषट्कस्य फलमेकम् यथा वा करणषट्कस्यैकेन दर्शपूर्णमासशब्देनाभिधानम् । तत्रानुष्ठानतन्त्रमुदाहरति -यथेति । प्रयाजादीनामारादुपकारिणां तन्त्रेणानुष्ठानमित्यर्थः । एकादशाद्याधिकरणमाह–तत्रेति । उत पृथगिति । उत प्रतिकरणं पृथक् फलमित्यर्थः । कोटिद्वयस्याप्यर्थं विविच्य कथयति–किमन्योन्येति ।

---

अथ पञ्चमपरिच्छेदस्य टिप्पणी

१–प्रयोगपरिमाणचिन्तात्मकत्वात् दशमाध्यायानन्तरमस्यारम्भ इति । अत्रेदं बोध्यम्–दशमाध्याये बाधाभ्युच्चयचिन्तया विकृतावंगपरिमाणं विचारितम् । संप्रति उपदेशातिदेशसाधारण्येन प्रसंगसंगत्या प्रयोगपरिमाणफलकं तन्त्रम् परिमाणफलकत्वसामान्यात् एकादशेऽध्याये चिन्त्यत इति ।

२–तन्त्रशब्दार्थमाह—तन्त्रसामान्यलक्षणन्तु यदनेकसाधारणमेकम्, तत् तन्त्रमिति । अत एवोक्तं 'साधारणं भवेत् तन्त्रमि'ति । अत्र साधारणशब्दः विशेषाग्रहणं ब्रूते । ततश्च विशेषग्रहणे सति प्रसंगाप्रयोजके भवतः । विशेषाग्रहणे तु तन्त्रं स्यादिति । सकृदनुष्ठानमिति अनुष्ठानतन्त्राभिप्रायेण । तथा चाऽनुष्ठानतन्त्रस्य लक्षणमिदमनेकप्रधानसाधारणोद्देशेन सकृदंगानुष्ठानमिति । यथा–आग्नेयादियागषट्कमुद्दिश्य प्रयाजाद्यंगानां सकृदनुष्ठानमिति लक्षणसमन्वयः । तल्लक्षणञ्च एकादशाध्यायाद्यभाष्ये—

'साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।
एवमेव प्रसंगस्स्यात् विद्यमाने स्वके विधौ' ।। शा. भा. पृ. २०९६ इति ।

## भाष्यकृतः स्वर्गकामपदस्य पुरुषपरत्व-निमित्तपरत्वनिराकरणस्य प्रकृते संगतिकथनेन फलपरत्ववर्णनम्।

'यत्त्वत्र भाष्यकारेण पुरुषपरत्वादिनिराकरणं कृतं स्वर्गकामशब्दस्य। तदिहासूत्रितमपि सूत्रितविचारोपोद्घातत्वेन भावार्थाधिकरणोपोद्घातभूतप्रतिपदाधिकरणवत्कृतमिति वेदितव्यम्। निमित्तपरत्वं तु 'प्रयोगे पुरुषश्रुतेरि' मी. द. ६-२-३ त्यत्र प्रसङ्गात्सूत्रकारेणैव निराकृतमिह भाष्यकारेण स्मारितम्। इदञ्च पुरुषपरत्वादिनिराकरणं स्वर्गकामाधिकरणस्याप्युपोद्घातत्वात्तत्रैवास्माभिरनागतप्रत्यवेक्षणेन प्रदर्शितम्। निमित्तपरत्वमप्यनाकाङ्क्षितत्वादयुक्तम्। आकाङ्क्षितत्वात्तु फलमेवानेन प्रतिपाद्यत इति युक्तम्।

---

अत्र भाष्यकारेण स्वर्गकामशब्दस्य पुरुषपरत्वं निमित्तपरत्वं च निराकृतम्। तस्य संगतिमाह—यत्त्वत्रेति। उपोद्घातत्वेनेति। स्वर्गकामशब्दस्य फलसमर्पकत्वे खलु तत्फलमाग्नेयादिषु तन्त्रं नवेति विचारयितुं युक्तं नान्यथेति, तस्य तदुपोद्घातत्वमित्यर्थः। भाष्यकारः पुरुषपरत्वं स्वयमेव निराकृत्य निमित्तपरत्वं तु सूत्रकारः स्वयमेवान्यत्र निराकृतवानित्यत्रोक्तवानित्याह—निमित्तेति। पुरुषपरत्वमस्य भाष्यकारः कथं निराकार्षीदित्याशङ्क्य, तत्प्रकारोऽस्माभिः पूर्वमेवोक्त इत्याह—इदमिति। निमित्तपरत्वाभावे फलपरत्वे च युक्तिमाह—निमित्तेति।

---

इत्यभियुक्तवचनेन कृतम्। तस्य चायमर्थः। तथाहि—यत्साधारणेनानुष्ठितं सत् बहूनामुपकारकं भवति—अर्थादनेकेषां प्रयोजकत्वशक्तिस्तन्त्रम्। यथा—ब्राह्मणानां बहूनां मध्ये कृतः प्रदीपः। यथा वा प्रयाजादेः। यस्त्वावृत्त्योपकरोति, स आवापः। यथा तेषामेव ब्राह्मणानामनुलेपनम्। एतेन साधारणम् भवेत्तन्त्रमित्युक्तार्थम्। परार्थेत्वप्रयोजकः। अत्र परार्थे—परमात्रार्थे इत्यर्थः। अर्थात् परमात्रार्थं एवानुष्ठीयमानं परस्योपकरोति।

अन्यथा तन्त्रेऽतिप्रसंगात्। एवं पुरोडाशकपालेऽव्याप्तिस्स्यात्, 'कपालेषु श्रपयती'ति सप्तम्या परस्मिन् श्रपण इव पुरोडाशकपालेनेति तृतीयविभक्त्या कपालानां तुषोपवापेऽपि तादर्थ्यात्। अतः परार्थं इत्यस्य परमात्रप्रयुक्त इत्यर्थः बोध्यः। यथा—दध्यानयनं वाजिनस्य, तत्रापरो वाजिनरूपोऽप्रयोजकः।

'एवमेव प्रसंगस्स्यादि'त्युक्ते कस्तर्ह्यप्रयोजक—प्रसंगयोर्भेदः—इति। अयम् विशेष इत्युक्त—विद्यमाने स्वके विधौ इति। यद्यपि भाट्टमीमांसकानां मते पशुयागांगभूते पुरोडाशयागे प्रसंगोपकारिणः प्रयाजादेरनंगत्वात्, तदंशे पुरोडाशीयोऽतिदेशः, प्रयोगवचनञ्च लुप्यते। तथापि पिष्टलेप-फलीकरणाऽज्यभागादिसाधारण्येन तावत् प्रयाजादिप्रयुक्तिसमर्थोविधिरस्ति, वाजिनादिविधिस्तु वाजिनाद्येव विषयीकरोति, न च तस्य तत्र प्रयोजकशक्तिरस्ति, अन्यत्तु किञ्चिन्नैवासौविषयीकरोतीति वैलक्षण्यं बोध्यम्। एतेन 'एवमेव प्रसंगस्स्यात् विद्यमाने स्वके विधौ' इति प्राचां पद्यस्य व्याख्यानरूपस्यान्यत्रकृतस्याऽन्यत्रापि प्रसक्तिः प्रसंगः। यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् शा. भा. पृ. २२१५। इत्यादिभाष्यस्योपर्युक्त एवार्थे तात्पर्यमिति ज्ञेयं विज्ञैः। एतेन प्रभावली चात्रत्या व्याख्याता।

१—भाष्यकारेण स्वर्गकामशब्दस्य पुरुषपरत्वम् निमित्तपरत्वञ्च निराकृत्य, फलपरपरत्वमुपवर्णितम्। तदेव फलतन्त्रप्रतिपादनेन उपोद्घाततया तस्याशयं वर्णयति यत्त्वत्रेत्यादिना—युक्तमित्यन्तेन।

## कार्यवाक्यार्थवादिभिर्नियोगस्य स्वतः कार्यत्वेन फलानपेक्षत्वान्नियोज्यपरत्वमूरीकृतम् । तन्मतं भाष्यविरुद्धमिति वर्णनम् ।

[1]पुरुषस्य नियोज्यस्य ये विदुः प्रतिपादनम् ।
कामशब्देन भाष्येण त एतेन निराकृताः ॥ १ ॥

कार्यस्य फलानपेक्षत्वात्, तदपेक्षितो नियोज्य एव स्वर्गकामादिशब्दैः प्रतिपाद्यत इति ये मन्यन्ते, तेषां पुरुषपरत्वनिराकरणपरभाष्यविरोधः । न ह्यनेन कर्तृवचनत्वमेव निराक्रियते । ननु पुरुषस्यायं वक्ते-( मी. द. ११-१-१ ) त्यादिना पुरुषपरत्वमात्रनिराकरणात् ।

[2]निमित्तपरता चैवं श्रुत्यबाधात्प्रसज्यते ।
लिङ्गबाधस्तथा हि स्यादन्यथा श्रुतिबाधनम् ॥ २ ॥

## नियोज्यपरत्वे न केवलं भाष्यविरोधः, अपितु निमित्तसमर्पकत्वं स्यादित्यापादनम् ।

यदि च नियोज्यपरः स्वर्गकामशब्दः स्यात, ततः स्वर्गकामनाविशिष्टस्य गृहदाहादिविशिष्टस्येव पुरुषस्य नियोज्यत्वात्तद्वदेव कामना निमित्तं स्यात् । न फलत्वं

---

भावनाकाङ्क्षितांशत्रयाननुप्रविष्टत्वात् निमित्तमनाकाङ्क्षितम् । अथापि निमित्ताधिकारे श्रुतपरित्यागायोगात् तदन्वयः । फलं तु भाव्यतयाऽऽकाङ्क्षितम् । अतस्तत्समर्पकत्वे संभवति, अनाकाङ्क्षितनिमित्तपरत्वं न युक्तमित्यर्थः ।

कार्यवाक्यार्थवादिभिर्नियोगस्य स्वतः कार्यत्वेन फलानपेक्षत्वात् तदपेक्षितनियोज्यपुरुषसमर्पकत्वं स्वर्गकामादेराश्रितम् । तन्मतमेतद्भाष्यविरुद्धमित्याह–पुरुषस्येति । कामशब्देनेत्यस्य प्रतिपादनमित्यनेनान्वयः । ननु कर्तृपरत्वमेवानेन निराक्रियते । न तु नियोज्यपरत्वमित्याशङ्क्य, उभयसाधारणस्य पुरुषशब्दस्यान्येतरसंकोचे न किंचित्कारणमस्तीत्याह—न ह्यनेनेति ।

नियोज्यपरत्वे न केवलं भाष्यविरोधः । किंतु निमित्तत्वसमर्पकत्वमेव प्रसजेत् । ततश्च स्वर्गस्य न फलत्वं सिध्येदिति दूषयितुमुपक्रमते–निमित्तेत्यादिना । श्रुत्यबाधात्–श्रुत्यनुग्रहात् । अन्यथा-फलपरत्वे । श्लोकं तात्पर्यतो व्याचष्टे–यदीति । तद्वदेवेति । 'यस्य गृहान् दहत्यग्नये

---

१—कार्यं वाक्यार्थं इति वादिभिः प्राभाकरमीमांसकैर्नियोगस्य स्वतः कार्यत्वेन फलापेक्षा नास्ति, किन्तु नियोज्यापेक्षाऽस्ति । अतोनियोगापेक्षितनियोज्यसमर्पकं स्वर्गकामादिपदमधीयते, तदप्यविरुद्धमिति मन्वानस्तन्निरासायाऽऽह–पुरुषस्येति ।

२—नियोज्यपरत्वेन केवलं भाष्यविरोध इति न मन्तव्यम् । अपितु निमित्तसमर्पकत्वमेव प्रसज्येत । यथा यस्याहिताग्नेरग्निर्गृहान् दहेत्, सोऽग्नये क्षामवतेपुरोडाशमष्टाकपालं निर्वपेदित्यत्र परस्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् गृहदाहोनिमित्ततया पुरुषस्य विशेषणं भवति, तथैव प्रकृतेऽपि स्वर्गकामशब्दस्य फलपरत्वम् न स्यादित्याशयेनाह–स्यादेतदित्यादिना अबाधितं भवतीत्यन्तेन ।

स्वर्गस्य सिध्येत्। स्यादेतत्। दाहादयो हि निष्पन्ना युक्तं यन्निमित्तीभवन्तीति। स्वर्गस्त्वनिष्पन्नो न निमित्तं भवितुमर्हतीति फलतयैव नियोज्यविशेषणमिति। तन्न। अनिष्पन्नस्य निष्पन्ननियोज्यविशेषत्वायोगात्। न ह्यसति विशेषणे तद्विशिष्टस्य नियोज्यस्य सिद्धिरवकल्पते। असिद्धेन च कथं नियोगः साध्यते। तेन तत्सिद्धिमङ्गीकुर्वताऽवश्यमेव फलविषया कामना तद्विशेषणमभ्युपगन्तव्यम्। सा च सिद्धत्वाच्छक्नोत्येव 'परलोककामः प्रायश्चित्तं कुर्यादि' तिवन्निमित्तत्वेनैव नियोज्यमवच्छेत्तुम्। एवञ्च सति सर्वलोकावगतक्रियाकार्याभिधानं लिङ्श्रुतेरबाधितं भवति। कामस्वभावबाधो न युक्त इति चेत्। न। श्रुतिप्राबल्यात्।

## स्वर्गकामशब्दस्य फलपरत्वे गुरुमते-श्रुतिबाधप्रसंगः, तदभिमता-पूर्वव्युत्पादनक्रमस्य विपरीतदृष्टान्तोपन्यासेन दूषणञ्च।

तत्रैतत्स्यात्। 'यद्यपि निमित्तत्वेनापि कामान्वयः संभवति, तथाऽपि फलत्वेनैव विशेषणत्वमङ्गीकर्तुं युक्तम्, कामनास्वभावभङ्गप्रसङ्गात्। कामना हि स्वभावत एव काम्यमानप्रधाना। निमित्तत्वे च सति तत्प्राधान्यम् हीयेतेति, फलपरत्वमेव युक्तमिति।

---

क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् तै. सं २-२.' इत्यत्र यथा गृहदाहो निमित्ततया पुरुषविशेषणं, तद्वदेवेत्यर्थः।

यदि स्वर्गकामना नियोज्यविशेषणं स्याद्, तदा खलु तस्या निमित्तत्वप्रसङ्गः। न तु सा तद्विशेषणम्। किंतु केवलः स्वर्ग एव। तस्य च निमित्तत्वायोगात् फलपरत्वमेवेति शङ्कते—स्यादेतदिति। यस्मिन्नुपजाते नैमित्तिकमनुष्ठेयं, तत्खलु निमित्तम्। तच्चानिष्पन्नस्य न युक्तमित्यर्थः। फलतयापि नियोज्यविशेषणत्वमनिष्पन्नस्य न युक्तमिति परिहरति—तन्नेति। असतस्तावत् स्वर्गस्य विशेषणत्वमयुक्तमित्यर्थः। ततः किम्? तत्राह—नहीति। विशेषणे अनिष्पन्ने विशिष्टस्य सिद्धिर्न संभवतीत्यर्थः। अस्तु तस्यानिष्पत्तिः, ततोऽपि किमित्याशङ्क्य एवंविधस्यानिष्पन्नस्य नियोगविशेषणतयाऽन्वयो न युज्यत इत्याह—असिद्धेनेति। अधिकारिकर्तृप्रणाडिकया हि नियोज्यो नियोगनिष्पत्त्यनुकूलः। तस्यासिद्धौ तत्साधकत्वायोगात्, न तदन्वयो युज्यत इत्यर्थः।

एवं च केवलस्य स्वर्गस्य विशेषणत्वायोगात् तत्कामनाया विशेषणत्वमङ्गीकार्यम्। ततश्च तस्या निमित्तत्वप्रसङ्ग इति सदृष्टान्तमुपपादयति—तेनेति। तत्सिद्धि-नियोज्यनिष्पत्तिम्। एवं च श्रुत्यनुग्रहो भवतीत्याह—एवं चेति। वृद्धव्यवहारे प्रथमं क्रियाकार्य एव व्युत्पत्तिः। स्वर्गस्य फलत्वाभ्युपगमे तु क्षणिकायाः क्रियायाः फलसाधनत्वायोगात् लिङः क्रियाकार्याभिधायित्वबाधेन तदतिरिक्तस्थिरकार्याभिधायित्वमङ्गीकार्यमिति श्रुतिबाधः। निमित्तपरत्वे त्वनुपपत्त्यभावेन प्रथमव्युत्पन्नक्रियाकार्याभिधायित्वमेव सुस्थिरं स्यादिति श्रुत्यनुग्रहो भवतीत्यर्थः।

लिङ्गबाधप्रसङ्गात् स्वर्गकामपदस्य फलपरत्वमाशङ्कते—कामस्वभावेति। श्रुत्यनुग्रहाय लिङ्गबाधो युक्त एवेति परिहरति—तन्नेति। शङ्कां विवृणोति—तत्रैतदिति। हीयेत इति।

---

१—लिंगानुसारेण स्वर्गकामादिपदानां फलसमर्पकत्वमभ्युपगम्यताम्, आहोस्वित् श्रुत्यनुसारेण निमित्तपरत्वस्वीकारश्श्रेयान् इति विचिकित्सायां निमित्तपरत्वकल्पनमेव श्रेयः, अन्यथाऽपूर्वस्यातत्समवेतस्यातत्कालीनस्य च यागव्यापारस्य, यागीयशक्तेर्वाऽसंभवात्।

तत्र। श्रुतेर्लिङ्गाद्बलीयस्त्वात्। कामनास्वभावो हि लिङ्गम्। तस्य च निमित्तपरत्वे बाधः, फलपरत्वे तु लिङ्श्रुतेर्बाधः। सा हि लोके क्रियारूपकार्याभिधायित्वेनावगता सती ततः उत्तार्य फलपरत्वे सत्यर्थान्तरं नेतव्या स्यात्। तत्र लिङ्गानुग्रहेण श्रुतिमबाधित्वा फलपरत्वमभ्युपेयताम्, उत श्रुत्यनुसाराल्लिङ्गबाधेन निमित्तपरत्वमिति संदेहे, श्रुत्यनुग्रहो न्याय्यः। फलपरत्वे हि तस्य कालान्तरभावित्वात्तत्साधनत्वं क्षणभङ्गुरस्य कर्मणस्साक्षान्न संभवति। न च फलापूर्वद्वारेणोत्पत्त्यपूर्वद्वारेणेव परमापूर्वसाधनस्यापि कर्मणः फलसाधनत्वम् संभवति, अतत्समवेतस्यातत्कालीनस्य चापूर्वस्य तच्छक्तित्व-तद्व्यापारत्वायोगात्, शक्ति-व्यापारयोरेव फलसाधनत्वनिर्वाहकत्वात्। अन्यद्वारेण किलान्यस्य साधनत्वं काष्ठादेरिव ज्वलनादिद्वारेणानुभवस्य वा संस्कारद्वारस्मृतिपाकसाधनत्वं न संभवतीत्यसाधकं *कर्म स्यात्। साधनसाधनन्तु स्यात्। न च किल साधनसाधनं फलं लिप्समानेन साधने साक्षात्प्रवर्तितुमशक्नुवता व्रीहिकामेनेव कर्षणं कार्यतयाऽवगन्तुं शक्यमित्यनया स्वतन्त्रया लोकविरुद्धया प्रक्रियया लिङ्श्रुतेर्लोकप्रसिद्धक्रियाकर्माभिधानपरित्यागेनालौकिकापूर्वाख्यकार्याभिधायित्वं कल्पनीयमिति श्रुतिबाधप्रसङ्गान्निमित्तपरत्वमेव ज्यायः।

---

निमित्तत्वे तु कामनाया एव निमित्तत्वात्, स्वर्गस्य तद्विशेषणमात्रसमर्पकत्वात् स्वरसप्राप्तमिच्छाया इष्यमाणप्राधान्यलक्षणं वस्तुसामर्थ्यं बाध्येत इत्यर्थः। परिहारं विवृणोति–तत्रेति। अर्थान्तरं-नियोगलक्षणं स्थिरकार्यम्। स्वर्गशब्दस्य फलपरत्वे गुरुमते श्रुतिबाधप्रसङ्गमुपपादयन् तदभिमतापूर्वव्युत्पत्त्युपपादनक्रमं विपरीतदृष्टान्तोपपादनेन तात्पर्यतो दूषयन्नेवानुवदति–फलपरत्वे हीत्यादिना निमित्तपरत्वमेव न्याय्यमित्यन्तेन। क्रियायाः साक्षात् फलसाधनत्वाभावेऽपि, मध्ये किंचिदपूर्वं परिकल्प्य तद्द्वारेण फलसाधनत्वनिर्वाहः स्यात् इत्याशङ्क्य तस्य क्रियाशक्तित्वायोगात् तदवान्तरव्यापारत्वाभावाच्च न तद्द्वारत्वं युज्यत इत्याह–न च किलेति। अत्र किलेत्यपरमार्थे। अपूर्वद्वारेण-कल्पितापूर्वद्वारेण। अस्य कर्मणः फलसाधनत्वमित्यनेनान्वयः। तत्र दूषणोपयुक्तं दृष्टान्तमाह–उत्पत्त्यपूर्वेति। उत्पत्त्यपूर्वद्वारेण कर्मणः परमापूर्वसाधनत्वमङ्गीकुर्वतस्तव कल्पितापूर्वद्वारेण कर्मणः फलसाधनत्वं न युज्यत इति वक्तुमयुक्तमिति तात्पर्यम्। अतत्समवेतस्येति। क्रियायामसमवेतत्वात् क्रियाशक्तित्वं न युक्तम्। क्रियायां विनष्टायामुत्पन्नत्वात् तद्व्यापारत्वं च न युक्तमित्यर्थः। तद्द्वारत्वं-तदवान्तरव्यापारत्वम्। शक्तिव्यापाराभ्यामन्यस्य द्वारत्वं नोपपद्यत इत्याह–अन्यद्वारेणेति।

अत्रापि दूषणोपयुक्तं दृष्टान्तद्वयमाह–काष्ठादेरिति। शक्तिव्यापाराभ्यामन्यदेव-ज्वालारूपद्रव्यान्तरं काष्ठानां पाकं प्रति द्वारतयाश्रितम्। तथाऽनुभवे विनष्ट एवोत्पन्नः संस्कारः स्मृतिजनने द्वारतयाऽऽश्रितः। तद्वदपूर्वस्यापि शक्तिव्यापाराभ्यामन्यस्य द्वारत्वं स्यादिति तात्पर्यम्।

ननु साधनसाधनतयापि कार्यत्वं कर्मण एव। किं परेण स्थिरकार्येणेत्याह–न च किलेति। व्रीहिकामेनेति तद्दूषणोपयुक्तो दृष्टान्तः। व्रीहिकामस्य परंपरया साधनभूतायां कृषौ यथा कार्यमिदमिति प्रतीतिर्दृष्टा, तद्वत् परंपरया स्वर्गसाधनेऽपि कर्मणि कार्यत्वप्रतीत्युपपत्तेः लिङ्वाच्यतया नान्यत् स्थिरकार्यमाश्रयणीयमिति हृदयम्। स्वतन्त्रया-स्वाभिमानमात्रसिद्धया। लोकविरुद्धया-न्यायविरुद्धया। अनेनापूर्वव्युत्पादनपरस्यापि ग्रन्थजातस्य तन्निराकरणे तात्पर्यम्।

---

*असाधकमिति नास्ति मु. पु. पा.। *समयामिति मु. पु. पा.।

## निमित्ताधिकारे प्रयुक्तिकल्पनागौरवमाशंक्य स्वर्गकामशब्दस्य फलपरत्वाभावेऽप्यनुपपत्त्यभावेन श्रुत्यनुग्रहसिद्धिरिति वर्णनम् ।

[1]नन्वेवं सति प्रयोजकत्वं विधेः कल्प्यमिति गौरवं स्यात् । नैष दोषः । श्रुत्यनुग्रहार्थं निमित्तपरत्वाभ्युपगमेन तत्कल्पनस्य न्याय्यत्वात् । न चैतदतीव कल्पनीयम्, सामान्येनैव कार्यस्य स्वसाधनप्रयोजकत्वं लोकत एव सिद्धं धूमस्येवाग्न्यनुबन्धित्वम्, रूपस्येव चाक्षुषत्वम् । अतश्च कार्यविशेषवत् पूर्वानवगतेऽवगम्यमानेऽपि तस्य प्रयोजककत्वमग्न्यनुबन्धित्वादिवन्निर्ज्ञातचरमेवानुसंधीयते । न त्वपूर्वं किंचित्कल्पयितव्यम् । सामान्येनावगतमप्यस्मिन्विशेषेऽनगतमेव कल्प्यमिति चेत् । न । इदं तावदनुमानस्या-

---

प्रयुक्तिकल्पनागौरवप्रसङ्गात निमित्ताधिकारत्वमनाश्रयणीयमिति शङ्कते—नन्वेवमिति । कामाधिकारत्वे करणांशे फलमेव प्रयोजकम् । केवलमितिकर्तव्यतामात्रे विधिः प्रयोजकः । निमित्ताधिकारे तूभयत्रापि विधेरेव प्रयोजकत्वं कल्पनीयमिति गौरवमित्यर्थः । नियोगाङ्गीकारे तस्य च लिङ्श्रुतिबाधाद्वरं प्रयुक्तिगौरवाङ्गीकार इति परिहरति—नैष दोष इति । यद्यपि निमित्तपरत्वे नियोग एव न सिध्येत् तथापि तदङ्गीकारे तस्य प्रयोजकत्वमेव कल्प्यं, न तु कामाधिकारत्वमित्यर्थः ।

ननु नियोगाङ्गीकारे तस्यैव लिङ्वाच्यत्वात् प्रथमप्रतिपन्नक्रियाकार्यरूपार्थत्यागात श्रुत्यनुग्रहो न सिध्यतीति चेन्नैवम् । नियोगाङ्गीकारेऽपि स्वर्गशब्दस्य फलपरत्वाभावेऽनुपपत्त्यभावेन क्रियाकार्यस्यैवाभिधानसंभवेन श्रुत्यनुग्रहसिद्धेरिति तात्पर्यम् । कार्यगतप्रयोजकत्वस्य मानान्तरक्लृप्तत्वेन कल्प्यत्वाभावात् तत्कल्पने कल्पनागौरवमपि नास्तीत्याह—न चैतदिति । यद्यत्कार्यं तत्सकलस्वकारणप्रयोजकमिति सामान्यतो व्याप्तिग्राहकप्रमाणेनावगतमित्यर्थः । प्रयुक्तिकल्पनागौरवं नाम प्रमाणान्तरानवगतप्रयुक्त्यादिकल्पनम् । अतश्चेति । कार्यविशेषे— पक्षगतकार्यरूपलिङ्गव्यक्तिविशेषे । पूर्वानवगते ज्ञायमाने तत्साध्यं सकलस्वकारणप्रयोजकत्वं व्याप्तिग्रहणसमयावगतमेवावगम्यत इति न गौरवमिति भावः ।

ननु व्याप्तिग्राहकप्रमाणेन साध्यसामान्येऽवगतेऽपि पक्षविशेषे साध्यविशेषः पक्षधर्मताबलादनवगत एवावगन्तव्य इति कल्प्यत्वात् गौरवं स्यादिति शङ्कते—सामान्येनेति । इयं शङ्का भवन्मतविरुद्धेति परिहरति—नेदं तावदिति । यद्यप्यनुमानं व्याप्तिग्राहकप्रमाणावगतार्थज्ञापकं, तथाप्यनुभूतित्वात् प्रमाणमिति प्राभाकरमतमित्यर्थः । सामान्येनावगतस्यापि प्रयोजकत्वस्य कार्यविशेषेऽवगतत्वाभावमात्रेण नैमित्तिकाधिकारे यदि प्रयुक्तिकल्पनागौरवं स्यात्, तर्हि स्वर्गादि-

---

१—किञ्च वृद्धव्यवहारे क्रियाकार्य एव व्युत्पत्तिः दृश्यते । स्वर्गादेः फलत्वाभ्युपगमे क्षणिकायाः क्रियायाः फलसाधनत्वं न संभवति । अतः लिङादेः क्रियाकार्यत्वाभिधायित्वबाधेन क्रियाकार्यातिरिक्तं स्थिरं कार्यमभिधेयमित्यंगीकार्यम् । अतश्श्रुतिबाधः । निमित्तपरत्वेऽनुपपत्त्यभावेन प्रथमव्युत्पन्नक्रियाकार्याभिधायित्वमेव सुस्थिरं स्यादिति श्रुत्यनुग्रहो भवतीत्यभिप्रेत्याह यद्यपीत्यादिना—ज्यायः इत्यन्तेन । अनेनापूर्वव्युत्पादनपरस्यापि ग्रन्थजातस्य तन्निराकरणे तात्पर्यं बोध्यम् ।

वगतगोचरत्व [1]समयमविस्मरता न भाषितुं युक्तम्। अपि चैतावन्मात्रम् कामाधिकारेऽपि फलस्य कल्पनीयमेव। नो खलु फलविशेषस्य स्वर्गादेः ज्योतिष्टोमादिप्रयोजकत्वं लोकसिद्धम्। न च फलस्यातदात्मनः कार्याद्विशेषतः प्रयोजकत्वं लोकसिद्धम्, येन न तत्कल्पनीयम्। किं च फलमपि न फलतया प्रयोजकम्, किं तु कार्यतया, सा चाफलरूपस्यापि कार्यस्य अविशिष्टेति, न किंचिद्गौरवम्।

## कामाधिकारे इव नैमित्तिकाधिकारेऽपि विधेः प्रयुक्तिकल्पनायाम् गौरवं नास्तीति निरूपणम्।

किं च—

फलस्य विध्यधीनस्य[2] तावन्मात्रनिरीक्षणात्।
नैव कामाधिकारेऽपि प्रयुक्तिः साधनेऽङ्गवत्॥ ३॥

यदि हि नैमित्तिकाधिकारवत्कामाधिकारेऽपि विधेः प्रयोजकत्वं न स्यात्, ततः शक्येतापि वक्तुं प्रयोजकत्वं मा कल्पीति कामाधिकारत्वं परिकल्प्यत इति, न त्वेतदस्ति कामाधिकारेऽपि विधिरेव साधनानुष्ठानमङ्गानुष्ठानवत् प्रयुङ्क्ते, न फलम्। तस्य कालान्तरभाविनस्तत्कालावस्थायिविध्यर्थमात्रसाध्यस्य तत्सिद्धिमात्रप्रतीक्षत्वात्। न हि

---

रूपफलगतप्रयोजकत्वस्यापि पूर्वानवगतत्वात् कामाधिकारेऽपि प्रयुक्तिगौरवदोषः समान इति दूषणान्तरमाह—अपि चेति।

ननु नियोगरूपकार्यस्यालौकिकत्वेन तद्गतप्रयोजकत्वस्य कल्प्यत्वात् भवत्येव गौरवम्। फलस्य तु लौकिकतया प्रयोजकत्वकल्पने न गौरवमित्याशङ्क्य, यद्यपि पशुपुत्रादिफलानामस्त्येव लौकिकत्वम्। अथापि तेषामन्वयव्यतिरेकावगतस्वकारणप्रयोजकतया लोकावगतेभ्यः फलेभ्यो व्यतिरिक्ततया पूर्वमनवगतत्वसाम्यात् लोकानवगतस्वसाधनप्रयोजकत्वकल्पने नियोग इव कल्पनागौरवमविहतमित्याह—न च फलस्येति। अतदात्मनो लोके प्रयोजकतयाऽवगतफलव्यतिरिक्तस्य। किंच न फलं फलतया प्रयोजकम्। सिद्धरूपस्य तस्य प्रयोजकत्वादर्शनात्। ततश्च कार्यवेषापन्नमेव प्रयोजकमिति वक्तव्यम्। तच्च नियोगस्याप्यविशिष्टमिति न गौरवमिति दूषयति—किंचेति।

इदानीं कामाधिकारे करणांशेऽपि विधेरेव प्रयोजकत्वस्यावश्यंाभ्युपगन्तव्यत्वात् न नैमित्तिकाधिकारे प्रयुक्तिगौरवदोष इति प्रतिपादयितुमुपक्रमते—किंचेत्यादिना। विध्यधीनस्य नियोगाधीनस्य। साधने-कारणांशे।

श्लोकं व्याचष्टे—यदि हीत्यादिना। कालान्तरभाविन इति। फलस्य साक्षात् कर्मनिष्पाद्यत्वाभावादतिव्यवहितकालत्वाच्च न कर्मप्रयोजकत्वं युक्तम्। नियोगस्य तु साक्षात् कर्मनिष्पाद्यत्वात् संनिहितकालत्वाच्च तद्युक्तमित्यर्थः। तत्सिद्धिः नियोगनिष्पत्तिः।

---

१—निमित्तपरत्वपक्षेऽपि प्रयुक्तिकल्पनागौरवमस्त्येवेत्याशंक्य समाधानमाह—यद्यत् कार्यम्, तत् सकलस्वकारणप्रयोजकमिति सामान्यव्याप्त्या कार्यगतप्रयोजकत्वस्य प्रमाणान्तरसिद्धत्वेन कार्यविशेषे सकलस्वकारणप्रयोजकत्वं पक्षधर्मताबलादवगतमेवावगम्यत इति न गौरवमिति मन्वान आह—नन्वित्यादिना न किञ्चिद्गौरवमित्यन्तेन।

२—विध्यधीनत्वादिति मु. पु. पा.

तत्साक्षात्कर्मणा सिध्यति, यतस्तदनुष्ठापयेत्। विधिस्तु तेनैव साध्यमानो युक्तं यत् तदनुष्ठापयतीति। सद्वारमेव विधिवत्फलमपि प्रयोजकमिति चेत्। न। द्वारासंभवात्।

## दृष्टान्त-दार्ष्टान्तिकवैषम्येण शंकानिरासः।

अथापि स्यात् यथा हि विधिरुत्पत्त्यपूर्वद्वारेण प्रधानानाम्, अङ्गानां च प्रयोजको भवति। न हि तेषामुत्पत्त्यपूर्वं साक्षात्साध्यमपि प्रयोजकम्, अकार्यत्वात्। न ह्युत्पत्त्यपूर्वं कार्यम्, किन्तु तेन परमापूर्वम्। अकार्यञ्च न प्रयोजकमिति, परमापूर्वमेव सद्वाराणां कर्मणां प्रयोजकम्, तद्वत्कामाधिकारे फलमप्यपूर्वद्वारेण साधनं प्रयुङ्क्ते-इति।

तच्च नैवम्। द्वारासंभवात्। यदि ह्युत्पत्त्यपूर्ववत् परमापूर्वमपि स्वातन्त्र्येण प्रयोजकं भवितुमशक्तम्, ततस्तद्वदेव प्रयोजकस्य फलस्य द्वारीभवेत्। तत्तु स्वयमेव प्राधान्येन कार्यमव्यवहितं च फलापेक्षया, प्रथमप्रतीतं च किमिति व्यवहितचरमप्रतीतफलप्रयुक्तिं प्रतीक्षते। औपादानिकं हि फलस्य साध्यत्वम्। तेन प्रतिपन्ननियोगविशिष्टनियोज्यसंबन्धाधीनत्वात् युक्तमेव चरमप्रतिपन्नत्वम्।

---

शङ्कते-सद्वारमिति। परिहरति-नेति। शङ्कां विवृणोति-अथापीति। उत्पत्त्यपूर्वाणामेव प्रयोजकत्वं किमिति न स्यात्? तत्राह-नहीति। नह्युत्पत्त्यपूर्वमिति। निर्नियोज्यत्वान्न कार्यत्वं तेषामित्यर्थः। सद्वाराणाम्-उत्पत्त्यपूर्वाङ्गापूर्वसहितानाम्। दृष्टान्तवैषम्यपरतया परिहारं विवृणोति-तन्नैवमिति। द्वाराभावात्-द्वारत्वाभावात्। उत्पत्त्यपूर्वाणां प्रयोजकत्वाभावात् प्रयोजकान्तरद्वारत्वं युज्यते। परमापूर्वस्य तु स्वतः प्रयुक्तिसामर्थ्यात्, नान्यद्वारत्वं युज्यत इत्यर्थः। फलादपि नियोगस्य कर्मप्रयोजकत्वाङ्गीकारे पूर्वोक्तमेव साक्षात् साध्यत्वरूपं हेतुं स्मारयति-अव्यवहितमिति।

युक्त्यन्तरमप्याह-प्रथमेति। कर्मणः फलसंबन्धादपि नियोगसंबन्धः प्रथमप्रतीत इत्यर्थः। तदेवोपपादयति-औपादानिकमिति। फलस्य साध्यत्वं-कर्मसाध्यत्वमित्यर्थः। प्रतिपन्नो नियोगो येन स, तथोक्तः। स चासौ विशिष्टनियोज्यश्च। तस्य विशेषणतया फलस्य यः संबन्धः तदधीनं फलस्य कर्मसाध्यत्वमित्यर्थः। विशिष्टः-फलकामी। अयं भावः-प्रथमं कर्मावच्छिन्नः प्रतीतो नियोगः फलकामिनियोज्यसंबन्धात् फलसाधनं भवन् स्वसाधनतयान्वीयमानं कर्मापि फलसाधनतया विनियुङ्क्त इत्युपादानप्रमाणगम्यः कर्मणः फलसंबन्धो नियोगफलसंबन्धोत्तरकालीन इति।

---

१—यथा-नित्यनैमित्तिकाधिकारस्थले विधिः प्रयोजको भवति, तथैव कामाधिकारेऽपि विधिरेव प्रयोजक इति अनुगतमेकं प्रयोजकमिति लाघवमाचार्यमते, प्राभाकरमते तु नित्यनैमित्तिकस्थले विधिः प्रयोजकः, काम्याधिकारे फलं प्रयोजकम्। विधिस्त्वितिकर्तव्यतास्विति प्रयोजकनानात्वकल्पने गौरवमिति ध्येयम्।

किञ्च प्रथमं कर्मावच्छिन्नः प्रतीतो नियोगः फलकामिनियोज्यसंबन्धात् फलसाधनं भवति। ततस्स्वसाधनतयाऽन्वीयमानो यागादिरपि फलसाधनतया विनियुंक्ते, एवञ्च 'यत्तु स्वसिद्धयर्थमुपादीयते, तदपि विधेयमि'ति टीकाकारोक्तचातुर्थिकोपादानप्रमाणगम्यो यागादेः कर्मणः फलसंबन्धः नियोगफलसंबन्धोत्तरकालीन इति च गौरवं स्यात्।

## अपूर्वानभिधान-प्राधान्यहान्यादिदोषगणनिर्देशपूर्वकं परमापूर्वस्यैव प्रयोजकत्वम्, न तूत्पत्त्यपूर्वाणामिति रीत्या सर्वत्र विधिरेव प्रयोजक इति प्रतिपादनम्।

ननु काम्येषु फलकरणीभूतस्य विषयत्वात्फलसाध्यत्वपुरस्सरमेव नियोगसाध्यत्वम्। नूनं भवान्यथाशक्तिनिर्णयेऽपि न सम्यगालोचितपूर्वी। तत्र हि नियोगसाध्यत्वनिरपेक्षस्य फलस्य कर्मसाध्यत्वे निरूप्यमाणे[1] अपूर्वानभिधान–प्राधान्यप्रहाणादिदूषणगतः प्रदर्शित एव। तेन नियोगः स्वयमेव प्रयुक्तिसामर्थ्यादव्यवधानाच्च न फलस्य कर्म प्रयुञ्जानस्य द्वारीभवितुमर्हति, अतत्प्रयुक्तत्वाच्च। उत्पत्त्यपूर्वाणि हि स्वयमकार्यरूपाणि परमापूर्वसिद्ध्युपायत्वेन प्रयुक्तकार्यत्वानि युक्तं यत्परमापूर्वस्य कर्मप्रयोजकस्य द्वारं भवन्तीति परमापूर्वं तावत्कार्यम्। तच्च नर्तेऽवान्तरापूर्वेभ्यः सिद्ध्यतीति, तान्यपि कर्तव्यानि। तानि च कर्माधीनसिद्धीनीति कर्मापि कर्तव्यमित्यनेन हि क्रमेणापूर्वं साधनानुष्ठापकं भवति। न चैवम् फलकर्तव्यत्वाधीनमपूर्वकर्तव्यत्वम्। तस्य स्वयमेव कार्यत्वात्। यच्च यस्य न प्रयोजकम् तत्तद्द्वारेणान्यस्य प्रयोजकं भवतीति कुत एतत्। तत्सिद्धम् कामाधिकारेऽपि विधेरेव प्रयोजकत्वम्–नैमित्तिक–कामाधिकारयोः न कश्चित्प्रयुक्तिकल्पनाविशेष इति।

## नैमित्तिकाधिकारात् कामाधिकार एव दोषत्रयकल्पनमित्युपन्यासः।

प्रत्युत—

कामाधिकारेऽभ्यधिकं त्रयं स्यादपूर्वरूपं फलसाधनत्वम्।
यागस्य तत्साधनता च कल्प्या प्रयोजकत्वं तु समानमेव॥ ४॥

प्रयुक्तिकल्पना तावत्पक्षद्वयेऽपि फलापूर्वयोः, उभयत्र वा अपूर्वस्य अविशिष्टैव।

---

ननु कर्मणः फलसंबन्धोत्तरकालो नियोगसंबन्ध इति नियोगसंबन्ध एव चरमप्रतीत इति शङ्कते—नन्विति। दूषयति—नूनमिति। निगमयति—तेनेति। अव्यवधानाच्चेति चकारः प्रथमप्रतीतत्वमपि समुच्चिनोति। नियोगस्य प्रयोजकभूतफलद्वारत्वाभावे युक्त्यन्तरमप्याह—अतत्प्रयुक्तत्वाच्चेति। अत्रापि परोक्तदृष्टान्तवैषम्यं प्रतिपादयति—उत्पत्त्यपूर्वाणीत्यादिना। पूर्वं नियोगस्य द्वारत्वानुपपत्तौ स्वयं प्रयुक्तिसामर्थ्यं हेतुतयोपात्तम्। अत्र तु अन्याप्रयोज्यत्वमित्यपौनरुक्त्यं द्रष्टव्यम्। उपसंहरति—तत्सिद्धमिति।

कामाधिकार एव नैमित्तिकाधिकारादपि दोषत्रयमधिकमित्याह—प्रत्युतेति। श्लोकस्य तुरीयपादं व्याचष्टे—प्रयुक्तीति। यद्यपि निमित्ताधिकारे अपूर्वकल्पनाप्रसङ्ग एव नास्ति, तथापि तदप्यङ्गीकृत्य तस्य प्रयोजकत्वाङ्गीकार एव कामाधिकारत्वाङ्गीकारात् साधीयानिति तात्पर्यम्। पूर्वं नैमित्तिकाधिकारे अपूर्वकल्पनामङ्गीकृत्यैव प्रयुक्तिगौरवदोषो नास्तीत्युक्तम्।

---

१. अपूर्वाभिधानेति मु. पु. पा.।

अत्रेदमवधेयम्–नियोगस्य प्रयोजकीभूतफलद्वारत्वाभावे स्वयं प्रयुक्तिसामर्थ्यम् हेतुत्वेनोपन्यस्तम्। अत्र तु अन्याप्रयोज्यत्वमिति न पौनरुक्त्यं दोष इति, एतत्सर्वं मनसि निधायाह—विशेष इत्यन्तेन। . . . . . . . . . . . . . . . .

कामाधिकारे त्वप्रसिद्ध 'मपूर्वरूपम्, तस्य फलसाधनत्वम्', यागस्य तत्साधनत्वञ्च[१] कल्प्यमिति विशेषः।

### नैमित्तिकाधिकारेऽपूर्वकल्पनाद्यभावेन लाघवान्नैमित्तिकाधिकारत्वमेवाश्रयणीयमिति प्रतिपादनम्।

अथापि नाम कामाधिकारे न प्रयुक्तिकल्पना, तथाऽप्यपूर्वस्वरूपम् धर्मि, तस्य च फलसाधनत्वम्, यागस्य तत्साधनता कल्प्या।

नैमित्तिकत्वे तु—

क्रियारूपस्य कार्यस्य सिद्धरूपस्य [१]धर्मिणः।
प्रयोजकत्वमात्रं स्यात्तन्नैमित्तिकता वरम्॥ ५॥

लोकसिद्धार्थत्यागाच्च श्रुतिबाधः स्थित एव, तस्माच्छ्रुत्यबाधात्कल्पनालाघवाच्च नैमित्तिकत्वमेव युक्तम्, न कामाधिकारत्वम्—इति।

### निमित्तप्रतिपादकयच्छब्दाद्यश्रवणेन निमित्तपरत्वम् नास्तीति शंका—तत्समाधाने।

[३]कथं पुनर्यच्छब्दादिविरहिणो निमित्तत्वम्। न वयं श्रौतं निमित्तत्वम् ब्रूमः। किन्तु जञ्जभ्यमानवत्कामनाविशिष्टस्य नियोज्यत्वादर्थान्निमित्तत्वं कामनायाः कल्प्यते।

इदानीं प्रयुक्तिगौरवसंभवेऽपि अपूर्वकल्पनाद्यभावेन लाघवात् नैमित्तिकाधिकारत्वमेवाश्रयणीयमित्याह—अथापीति।

सिद्धरूपस्य—लोकप्रसिद्धरूपस्य—प्रयोजकत्वमात्रमिति। स्वकीयसाधनानुष्ठानयोः प्रयोजकत्वमात्रं कल्प्यं, नतु धर्मित्वमिति भावः। महाप्रकृतमुपसंहरति—तस्मादिति।

निमित्तप्रतिपादकयच्छब्दाद्यदर्शनात् कथं तत्परत्वमिति शङ्कते—कथं पुनरिति। वाचकशब्दाभावेऽपि कामनाया अर्थान्निमित्तत्वं पर्यवस्यतीति परिहरति—न वयमिति।

१—सिद्धरूपस्य—लोकप्रसिद्धरूपस्येत्यर्थः।

२—पूर्वं नैमितिकाधिकारेऽपूर्वकल्पनामंगीकृत्य प्रयुक्तिगौरवदोषः नास्तीत्युक्तम्। संप्रति प्रयुक्तिगौरवसंभवेऽपि अपूर्वकल्पनाद्यभावेन लाघवात् नैमित्तिकाधिकारत्वमेवाश्रयणीयमित्यभिप्रेत्याह—अथापीति।

३— ननु 'यजेत स्वर्गकामः' इत्यादौ—निमित्तप्रतिपादकयच्छब्दाद्यदर्शनात् कथं निमित्तपरत्वमित्याशंक्य, निमित्तवाचकशब्दाभावेऽपि यथा 'जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू, तै. सं. ५-४-४। इति मन्त्रोच्चारणे वाचकयच्छब्दाद्यभावेऽपि जृम्भाया अर्थान्निमित्तत्वमभ्युपगम्यते, तथैव प्रकृतेऽप्यर्थान्निमित्तत्वमिति मत्वाह—कथमित्यादिना, कल्प्यत इत्यन्तेन।

४—'यदाग्नेयोऽष्टाकपाल' इति स्वरूपेणोत्पन्नानां 'यावज्जीवं दर्श-पूर्णमासाभ्यां यजेते'ति विनियोगात् नित्यतापन्नानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विनियोगपृथक्त्वेन कामाधिकाराणां दर्शपूर्णमासादिकर्मणां नित्य-नैमित्तिकत्वानुपपत्त्याऽन्यतरप्रतिपादकवचनस्यानर्थक्यं स्यात् इत्याशंकते—नन्वित्यादिना युक्त इत्यन्तेन।

५. शब्दशक्त्यादिवदानर्थक्यं नार्थनिर्णयोपायः। नहि वाक्यान्तरानर्थक्यप्रसंगो वाक्यान्तरार्थनिर्णये हेतुर्भवितुमर्हति, किन्तु आकांक्षा—योग्यता—सन्निधानादिविमर्शसहितं वाक्यमेवेदं

किञ्च यच्छब्दपाच्यत्वं न निमित्तस्य विद्यते।
उद्देश्यत्वं ततः सिद्ध्येदिह तत्सिद्धमन्यतः॥ ६॥

यच्छब्दो ह्युद्देश्यत्वमात्रं प्रतिपादयति, न निमित्तत्वम्। अनुपादेयविशेषणविशिष्टस्योद्दिष्टस्य नियोज्यत्वेन गृहदाहादिमतोऽन्वयाद्विशेषणभूतस्य दाहस्यार्थिकं निमित्तत्वमुच्यते। तच्च फलकामस्यापि नियोज्यस्योद्दिष्टत्वात्तत्कामनाया अप्यविशिष्टमिति, युक्तं निमित्तत्वम्। बहुशश्च यच्छब्दादि श्रूयते 'यः प्रजाकामः पशुकामो वा स्यात्, यदि कामयेत वर्षुकः पर्जन्यः स्यादि'त्यादिष्विति न निमित्तपरत्वे कश्चिद्विशेषः।

## नैमित्तिकाधिकार-कामाधिकारयोर्मध्ये कामाधिकारत्वमिति शंका; आनर्थक्यस्य प्रमाणवर्गेऽपरिगणनेन वाक्यवैयर्थ्यपरिहाराय निमित्तपरत्वमेव युक्तमिति समाधानम्।

ननु अयमस्ति विशेषः नित्यानि दर्शपूर्णमासादिकर्माणि। न तानि नैमित्तिकानि भवितुम् प्रभवन्ति। यदि तावन्नियमेन क्रियेरन्, ततो नैमित्तिकविध्यानर्थक्यम्। अथ तद्वशेन

---

जञ्जभ्यमानवदिति। 'तस्माज्जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू इति मन्त्रोच्चारणे यथा वाचकशब्दरहिताया अपि जृम्भाया अर्थान्निमित्तत्वं तद्वदित्यर्थः।

यदादिशब्दानां कुत्रचिदपि निमित्तवाचकत्वं नास्तीत्याह—किंचेति। इहास्मिन्नुद्देश्यत्वे सिद्धे सति। तत्-निमित्तत्वम् अन्यतो युक्त्यन्तरेण सिद्धमित्यर्थः। गृहदाहादिमतः 'यस्याहिताग्नेरग्निर्गृहान् दहेत्तस्याग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् तै. सं. २-२' इति गृहदाहयुक्तस्य यदादिशब्दा मानान्तरप्रसिद्धिं द्योतयन्ति। ततश्चोद्देश्यत्वं भवेत्। तस्मिंश्च सति निमित्तत्वं स्वयमेव भवति। अत्र तु यदाद्यभावेऽपि उद्देश्यत्वे सिद्धे निमित्तत्वं स्वयमेव भविष्यतीति यदाद्यभावे निमित्तत्वानुपपत्तिरिति वक्तुमयुक्तमित्यर्थः। निमित्तस्य यच्छब्दवाच्यत्वेऽपि यत्र यच्छब्दस्य श्रवणमस्ति, तत्र नैमित्तिकत्वं प्रसजेदित्याह—बहुश इति।

ननूत्पत्तिवाक्येषु स्वरूपेणोत्पन्नानां 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति विनियोगान्नित्यतापन्नानां 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति पुनर्विनियोगपृथक्त्वेन कामाधिकाराणां दर्शपूर्णमासादिकर्मणां नैमित्तिकत्वापादनमयुक्तमिति शङ्कते—नन्विति। ननु कथमेकस्य नित्यनैमित्तिकत्वानुपपत्तिरित्याशङ्क्य अन्यतरप्रतिपादकवचनानर्थक्यप्रसङ्गादित्याह—यदीति। नित्यविध्यनुसारेण निमित्ते सत्यसति चानुष्ठेयतया नैमित्तिकविधिमन्तरेणापि तदर्थानुष्ठानसिद्धेः तस्य वैयर्थ्यं स्यात्। नैमित्तिकविध्यनुसारे तु निमित्ते सत्येवानुष्ठानात् सदानुष्ठानाभावेन नित्यविध्यनुमतानुष्ठानासिद्धेस्तद्विधिवैयर्थ्यम्। कामाधिकारे तु फलार्थमेवानुष्ठितेन नित्यस्यापि सिद्धेः कामनायामसत्यां तु नित्यार्थमेवानुष्ठानाच्च न वैयर्थ्यम्। अतः कामाधिकारत्वमेवाश्रयणीयमित्यर्थः।

---

सर्वसंप्रतिपन्नोऽयमर्थः। तस्य यदि वाक्यान्तरानर्थक्ये तदर्थवत्त्वे चार्थः स्वारस्येन नेतुं शक्यते, तदा यस्मिन्नर्थे वर्ण्यमाने वाक्यान्तरार्थवत्त्वम् भवेत्, स एवार्थस्समाश्रयणीयः, नान्यः। प्रथमपन्यस्तवृत्ततद्वाक्यस्वारस्यभंगः वाक्यान्तरार्थवत्त्वाय न युज्यते, अतस्तदंगीकाराज्ज्यायः वाक्यान्तराविशेषैक्याश्रयणमित्याशयानो दूषयति नेत्यादिना।

निमित्ते सत्यनुष्ठानम्। ततो यावज्जीवविधेरानर्थक्यम्। तस्मात्कामाधिकार एव युक्त इति। [1]नेत्युच्यते। यदि ह्युभयपक्षसाधारणं वाक्यम् स्यात्, ततोयस्मिन् पक्षेऽर्थवत् तत् समाश्रीयेत, अत्र तु श्रुत्यबाधनादियुक्तिकदम्बकेन निमित्तपरत्वमेवावसीयते। यदि तथा सत्यानर्थक्यमन्यतरस्य भवति, भवतु न ह्यानर्थक्यं नामकश्चित्प्रमाणवर्गेऽन्तर्भवति, यस्यार्थवत्त्वमवगम्यते, तस्य तदेव, यस्य त्वानर्थक्यमेव गम्यते। तस्यापि तदेव न्यायः। [1]आवृत्तिर्वा प्रयोगस्य दाक्षायणयज्ञवदर्थवत्त्वायास्तु। न त्वर्थान्तरकल्पना शक्यते कर्तुम्।

## प्रकारान्तरेण वाक्यद्वयस्यार्थवत्त्वोपपादनम्।

[2]अथ वा नैमित्तिकस्यैवानुष्ठानस्य यावज्जीवकालाभ्यासो यावज्जीववाक्येन लक्षणया विधीयते, सा हि लौकिकी। लिङ्शब्दस्य त्वर्थान्तरकल्पना इहैव। [3]अतो न कामाधिकारत्वं युक्तम्।

---

दूषयति—नेति। उभयपक्षयो नैमित्तिककामाधिकारत्वयोः साधारणमेकरूपप्रसरम्। अर्थवद्यावज्जीववाक्यान्तरमिति शेषः। इह तु स्वर्गकामस्य साधारणत्वमित्याह—तत्रेति। नहि वाक्यान्तरानर्थक्यप्रसङ्गो वाक्यान्तरार्थनिर्णये हेतुः। किंतु योग्यतादिविमर्शसहितं तदेव वाक्यम्। तस्य यदि वाक्यान्तरानर्थक्ये तदर्थवत्त्वे चार्थः स्वरसतया नेतुं शक्यते, तदा यस्मिन्नर्थे वर्ण्यमाने वाक्यान्तरार्थवत्त्वं भवेत्, स एवाश्रयणीयः। नान्यः। नतु वाक्यान्तरार्थवत्त्वाय प्रथमप्रवृत्ततद्वाक्यस्वारस्यभङ्गो युक्तः। तदङ्गीकाराद्वरं वाक्यान्तरानर्थक्याश्रयणमेवेत्यर्थः। नह्यानर्थक्यमिति। आनर्थक्यं शब्दशक्त्यादिवन्नार्थनिर्णयोपाय इत्यर्थः।

यद्यानर्थक्यमवश्यं परिहरणीयं, तथापि श्रुतिबाधादिदोषो यथा न भवेत्, तथा वर्णयितुं शक्यं चेत्, स एवाश्रयणीय इत्याह—आवृत्तिर्वेति। नित्ये दर्शपूर्णमासप्रयोगेऽनुष्ठिते, स्वर्गकामनायां सत्यः 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इति किंचित्प्रयोगवैषम्येण नामान्तरापन्नं दर्शपूर्णमासकर्मैव यथाऽऽवृत्त्याऽनुष्ठीयते, तद्वदत्रापि नित्यनैमित्तिकयोरावृत्तिर्भविष्यति। नतु श्रुतिबाधो युज्यत इत्यर्थः।

प्रकारान्तरेण वाक्यद्वयार्थवत्त्वमाश्रीयतामित्याह—अथवेति। नैमित्तिकदर्शपूर्णमासानुवादेन यावज्जीवशब्देन तत्कालं लक्षयित्वा यावज्जीवकालाभ्यासस्तस्यैव कर्मणो विहितो भवतीत्यर्थः। नत्वस्मिन्नपि पक्षे लक्षणाश्रयणेन श्रुतिबाधसाम्यात् कथमस्यैवाश्रयणं युक्तमिति निर्धारणमित्यत्राह—सा हीति। यस्य शब्दस्य वाच्यार्थानुपपत्तिः, तस्य तदविनाभूततया लौकिकपदार्थे पर्यवसानाय लक्षणाश्रयणं युक्तम्। न त्वत्यन्ताप्रसिद्धालौकिकार्थवाचकत्वकल्पनं युक्तमित्यर्थः। प्रतिपादितं निगमयति—अत इति।

---

१—यद्यवश्यमानर्थक्यं परिहरणीयमित्याग्रहः, तर्हि श्रुतिबाधादिदोषः यथा न स्यात्, तथा वर्णयितुं शक्यञ्चेत्, स एवाश्रयणीय इत्यभिप्रेत्याह—आवृत्तिर्वेति।

२—नैमित्तिकदर्शपूर्णमासानुवादेन यावज्जीवशब्देन तत्कालं लक्षयित्वा यावज्जीवकालाभ्यासस्तस्य कर्मणो विहितो भवतीति प्रकारान्तरेण वाक्यद्वयस्यार्थवत्त्वमाश्रीयतामित्यभिप्रेत्याह—अथवेति।

३—यस्य शब्दस्य वाच्यार्थानुपपत्तिर्भवति, तस्य तदविनाभूततया लौकिकपदार्थे पर्यवसानाय लक्षणाश्रयणं न दोषाय नत्वत्यन्ताप्रसिद्धालौकिककार्यवाचकत्वकल्पनमुपपत्तिमदित्युक्तमर्थमुपसंहरति अतो न कामाधिकारत्वं युक्तमिति।

## भाट्टमतानुसारे अत्यन्ताप्रसिद्धालौकिकार्थवाचकत्वे दोषाभाव इति कथनम् ।

[1]आश्रीयतां वा सूत्र-भाष्यारूढं वार्त्तिककारीयं दर्शनं यागाद्यवच्छिन्ना भावना विध्युपेता पुरुषाभिलषितभाव्यापेक्षिणी वाक्येन स्वर्गादिकम् भाव्यतया स्वीकरोति । न निमित्ततया, तस्यानपेक्षितत्वादिति ।

## दृष्टान्तत्रयेण क्षणिकस्य यागस्यापूर्वद्वारा फलसाधनत्वस्योपपादनम् ।

[2]तत्र हि यागादेः करणत्वं कल्पितापूर्वद्वारेण संभवति, काष्ठ-कर्षणादीनामिव ज्वलन विलेखनादिद्वारेण व्रीहि-पाकादिसाधनत्वम्, आग्नेयादिषट्कस्येवोत्पत्त्यपूर्वद्वारेण परमापूर्वसाधनत्वम्, [3]अवगोरणादेर्वा शतयातनादिसाधनत्वमिति सर्वं सुस्थितं भवति ।

## दर्शपूर्णमासासिषु यावज्जीवश्रुतेरानार्थक्यपरिहाराय फलपरत्वेऽपि सौर्यादिषु कस्याप्यानर्थक्याभावेन निमित्तपरत्वोपपादनम् ।

सौर्यादिषु निमित्तत्वं कामनायाः प्रसज्यते ।
न हि तत्र वचः किंचिदानर्थक्यमुपाश्नुते ॥ ७ ॥

---

भट्टमतानुसारेऽपि नैतद्दोषप्रसङ्ग इत्याह—आश्रीयतामिति । विध्युपेतेति हेतुगर्भविशेषणम् । विध्युपेतत्वात् पुरुषार्थभाव्यत्वं जातमित्यर्थः । अनपेक्षितत्वादिति । भावनानाकाङ्क्षितत्वादित्यर्थः । ननु क्षणिकस्य कर्मणः कथं फलसाधनत्वमित्याशङ्क्य, तादृशदृष्टान्तमुखेनोपपादयति—तत्र हीति । अवगोरणादेरिति । 'नापगुरेत्' इति निषेध्यापूर्वमेव लिङ्वाच्यम् । कार्यत्वात् । ननु दुरितापूर्वं कार्यम् । किंतु अपगोरणशतयातनयोः साध्यसाधनभावाश्रयणेनावान्तरव्यापारतया कल्प्यमिति हि भवन्मतम् । तद्वदत्रापि कल्पितापूर्वद्वारेण निर्वहतीत्यर्थः ।

माभूत् दर्शपूर्णमासादिषु नैमित्तिकत्वम् । सौर्यादिषु तु नैमित्तिकत्वं दुष्परिहरमिति दूषणान्तरमप्याह—सौर्यादिष्विति । ननु दर्शादिषु अपूर्वे व्युत्पत्तौ संजातायां, सौर्यादिषु

---

१—उक्तयुक्त्या प्राभाकरमतं विधूय, आचार्यमतानुसारे नैतद्दोषप्रसंगः इत्याह—आश्रीयतामित्यादिना अनपेक्षितत्वादित्यन्तेन ।

२—ननु क्षणिकस्य यागादेः कर्मणः कथं फलसाधनत्वमित्याशंक्य, लौकिक—वैदिक-दृष्टान्ताभ्यामुपपादयति—तत्र हीत्यादिना ।

३—नावगोरणादेरिति—अत्रेदं बोध्यम् । नावगुरेदित्यत्र लिङ् वाच्यं नियोगापूर्वमेव, कार्यत्वात् । तस्माद्ब्राह्मणाय नावगुरेत्, न लोहितं कुर्यादित्यादिविधिशेषभूतेन योऽवगुरेत्, तं शतेन यातयादित्याद्यर्थवादेनावगोरणादीनाम् शतयातनादीनाञ्च साध्य-साधनभाव आश्रीयते । तेषां च साक्षात् तदसंभवात् किन्त्ववगोरण—शतयातनयोस्साध्यसाधनभावाश्रयणेनावान्तरव्यापारतया कल्पनीयमिति शंय्वधिकरणे पू. द. ३–४–१० प्रतिपादितम् । तथा प्रकृतेऽपि यागस्य फलसाधनत्वं कल्पितापूर्वद्वारेण निर्वहतीति तृतीयदृष्टान्तभागस्याशयः बोध्य इति ।

भवतु वा दर्शपूर्णमासादिषु यावज्जीवश्रुतिसद्भावात्फलपरत्वम्, येषु तु सौर्यादिषु नित्यत्वश्रुतिर्नास्ति, तत्र किमानर्थक्यपरिहारार्थं फलपरत्वमङ्गीक्रियते।

'दर्शपूर्णमासाभ्यां स्वर्गकामोयजेते'त्यत्र लिङः क्रियातिरिक्तेऽलौकिके कार्ये शक्तिग्रहे जाते स्वर्गकामशब्दस्य फलपरत्ववत् सौर्यादिवाक्येऽपि पक्षपातराहित्यादलौकिककार्ये शक्तिग्रहेण ब्रह्मवर्चसादिफलपरत्वमिति—शंका।

अथायमभिप्रायः—

दर्शादावेव वाच्यत्वमपूर्वस्यावधारितम्।
मा भाजि कामनालिङ्गमित्यन्यत्रापि संश्रितम्॥ ८॥

यावज्जीवश्रुत्यानर्थक्यपरिहारार्थमेव ताव'द्दर्शपूर्णमासाभ्यां स्वर्गकामः यजेते'त्यादिषु फलपरत्वे कामशब्दस्यावधारिते सत्यतत्साधने कामिनः कार्यावगमानुपपत्तेः, कर्मणश्च क्षणभङ्गुरस्य तत्साधनभावासंभवात् तदतिरिक्तमेव स्थास्नु कार्यं लिङ्शब्दः प्रतिपादयतीत्यवगते, सौर्यादिष्वपि[१] लिङ्श्रुतेः कर्मणि तदतिरिक्ते वा पक्षपाताभावात्कामस्वभावाभङ्गार्थम् फलपरत्वमेव युक्तम्—इति।

व्युत्पत्तिबाधाभावेऽपि समानपदश्रुतिबाधात् सौर्यादीनां नैमित्तिकाधिकारत्वमेव, न तु कामाधिकारत्वमिति निरूपणम्।

नेति वदामः—अभिधानश्रुतिर्यद्यप्येवं लिङ्गं न बाधते।
समानपदरूपा तु श्रुतिरस्यापि बाधिनी॥ ९॥

यद्यपि लिङ्शब्दस्य लोके क्रियायां प्रयोगात्, दर्शपूर्णमासादिवाक्येषु चापूर्वे प्रयोगादुभयानुगतकार्यसामान्यवाचिनः क्रियातिरिक्तेऽपि कार्यविशेषे नास्त्यभिधानव्याघातः। तथाऽपि सामान्यस्य विशेषापेक्षायाम् समानपदोपादानलक्षणया श्रुत्या प्रकृत्युपात्तो भावार्थ एव विशेषत्वेन सम्बध्यमानो न पदान्तरोपात्तनियोज्यविशेषणीभूतकामनास्वभावाख्यलिङ्वशेन निवारयितुं शक्यते। उच्चरन्नेव हि प्रत्ययः स्वार्थं कार्यसामान्यम् प्रकृत्यर्थानुरक्तमेवाभिधत्ते। यथोक्तम् 'अपिच प्रातिपदिकादुच्चरन्ती

---

लिङ्शब्देनापूर्वप्रतिपादने श्रुतिबाधादिदोषाभावात् लिङ्गानुग्रहेण च तेषु कामाधिकारत्वमेवाश्रयणीयमिति शङ्कते—अथायमिति। पक्षपाताभावादिति। उभयत्रापि व्युत्पत्तेरित्यर्थः। व्युत्पत्तिबाधाभावेऽपि समानपदश्रुतिबाधप्रसङ्गान्न कामाधिकारत्वमाश्रयणीयम्। किन्तु तदनुग्रहार्थं नैमित्तिकाधिकारत्वमेव सौर्यादीनामिति परिहरति—नेतीति। अभिधानश्रुतिः-लिङ्प्रत्ययश्रुतिः। विशेषापेक्षायां-क्रियारूपमिदं, तदतिरिक्तं वेत्यपेक्षायामित्यर्थ। तदेव दर्शयति उच्चरन्निति। समानपदोपादानस्य निरपेक्षसंबन्धप्रतिपादकत्वे भाष्यवचनमपि संवादयति—यथोक्तमिति। कर्मत्वप्रतिपादिका द्वितीया प्रकृत्यर्थानुरक्तमेव कर्मत्वमाहेत्यर्थः।

---

१—दर्शपूर्णमासादिषु फलपरत्वमस्तु यावज्जीववाक्यस्यानर्थक्यभयनैमित्तिकत्वं मास्तु, सौर्यादिषु च कस्य चिदप्यानर्थक्याभावात् नैमित्तिकत्वम् दुष्परिहरमिति दूषणान्तरमाह—सौर्यादिष्विति।

द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषक इत्याहे' शा. भा. पृ. ९९ इति। तेनाभिधानाविशेषेपि पदश्रुतिविरोधादेव लिङ्गबाधः।

**अपूर्वकार्यत्वमेव लिङ्वाच्यम्, क्रियाकार्यत्वं लाक्षणिकम्, अपूर्ववाच्यत्वे श्रुत्यनुग्रहः लिंगानुग्रहश्चाधिक इति प्राभाकरसिद्धान्तस्यानुवादः।**

तदिदमुपहसन्ति प्राभाकराः। ते किल मन्यन्ते—

अपूर्वस्याभिधेयत्वे क्रिया लाक्षणिकी भवेत्।
अनेकार्थत्वदोषात्तु न द्वयोरभिधेयता ॥ १० ॥

यदा हि फलकामिनियोज्यसमभिव्याहारात्क्रियातिरिक्तमपूर्वं लिङाद्यभिधेयमास्थितम्, तदा न क्रियाया अपि तदभिधेयत्वं सुकल्पम्, अनेकार्थत्वस्यान्याय्यत्वात्। क्रियाप्रतीतेश्च लक्षणयाऽप्युपपत्तेः। अपूर्वकार्यता हि क्रियाकार्यत्वाविनाभूता शब्देनावगता तदुपस्थापयतीति, नाभिधेयत्वसम्भवः। न च सौर्यादिषु लक्षणाकारणमस्तीत्यपूर्वमेव तत्तद्गतलिंङादिभिरभिधीयते। अतो न युक्तः कामनास्वभावभङ्गेन निमित्तपरत्वाभ्युपगमः—इति।

**एकयैव शक्त्योभयोर्वाच्यत्वोपपत्तौ विशेषव्यापिशक्तिविषयत्वम्, अन्यतरलक्षणांगीकारश्च न युक्त इति प्राभाकरमीमांसकमतनिरासः।**

[1]इदं तु तेषामभिमानमात्रमिति* प्रामाणिका न श्रद्दधति।

---

यद्युभयसाधारणं कार्यत्वसामान्यं वाच्यं स्यात् तदा भवेदेवम्। नत्वेवम्। अपूर्वकार्यत्वमेव लिङ्वाच्यम्। क्रियाकार्यत्वं तु लाक्षणिकम्। अतः सौर्यादिषु क्रियाकार्यत्वस्य वाच्यत्वे लक्षणाप्रसङ्गात् श्रुतिबाधः। अपूर्ववाच्यत्वे तु श्रुत्यनुग्रह एवेति वैपरीत्यमेव। लिङ्गानुग्रहश्चाधिक इति प्राभाकरमतमनुवदति—तदिदमिति। यदा हीति। दर्शादिष्विति शेषः। नन्वेकस्य शब्दस्याक्षादिशब्दवदनेकार्थत्वं कथं नोपपद्यते। तदनुपपत्तावपि वा क्रियाकार्यत्वस्यैव वाच्यत्वं किमिति न स्यात्। तस्यावाच्यत्वे वा लोके लिङ्शब्देन क्रियाकार्यत्वप्रतीतिः कथमित्यत्राह—क्रियाप्रतीतेश्चेति। क्रियाप्रतीतेर्लक्षणयाप्युपपत्तेः, न तत्रापि शक्त्यन्तरं परिकल्प्य, तस्या वाच्यत्वं युक्तम्। क्रियाकार्यत्वस्य लोकेऽपूर्वकार्यन्वव्यभिचारात्। तद्वाचकत्वे लक्षणयाऽप्यपूर्वप्रतीत्यनापत्तेः न तस्य वाच्यता युक्ता। अपूर्वकार्यत्वस्य तु क्रियाकार्यत्वाविनाभावात् तस्य वाच्यत्वे क्रियाकार्यत्वस्य लक्षणया प्रतीत्युपपत्तेस्तस्यैव वाच्यत्वमिति भावः। अस्त्वेवं प्रकृते किमायातं तत्राह—न चेति।

कार्यसामान्याभिधानशक्त्यैकयैवोभयोर्वाच्यत्वोपपत्तौ विशेषव्यापिशक्तिविषयत्वाङ्गीकारोऽन्यतरलक्षणाङ्गीकारश्च न युक्त इति तन्मतं दूषयति—इदं तेषामिति। सिद्धौ प्रतीतेः

---

१—यद्युभयसाधारणं कार्यत्वं वाच्यं स्यात्, तदा भवेदेवम्, नत्वेवम्। अपूर्वकार्यत्वमेव लिङ्वाच्यम्, क्रियाकार्यत्वन्तु लाक्षणिकम्। अयं भावः—क्रियाकार्यत्वस्य लोकेऽपूर्वत्वस्य व्यभिचारात्, तद्वाचकत्वे लक्षणयाऽप्यपूर्वप्रतीत्यनापत्तेर्न तस्य वाच्यता युक्ता, अपूर्वकार्यत्वस्य क्रियाकार्यत्वाविनाभावात्, तस्य वाच्यत्वे क्रियाकार्यत्वस्य लक्षणया प्रतीत्युपपत्तेः अपूर्वकार्यत्वस्य वाच्यत्वमित्याशंक्य, कार्यसामान्याभिधानशक्त्यैकयैवोभयोर्वाच्यत्वोपपत्तौ विशेषव्यापिशक्तिस्वीकारः, अन्यतरलक्षणास्वीकारश्च न युक्त इति प्राभाकरमीमांसकमतं दूषयति—इदं तेषामिति।

*भिधानमात्रमिति २. पु. पा.।

तथा हि—

अनेकार्थत्वमन्याय्यं शक्त्यनेकत्वदोषतः।
एकयैवोभयोः सिद्धौ प्रतीतेरभिधेयता ॥ ११ ॥

न तावल्लौकिका गामानयेत्यादिषु लिङो लक्षणया वृत्तिं मन्यन्ते, किन्तु मुख्यतयैव। तत्र यदि क्रियाकार्ये मुख्यया वृत्त्याऽभिधीयमाने शक्त्यन्तरकल्पनाऽऽपतेत्, ततो लाक्षणिकत्वमभ्युपगम्येत, न त्वेतदस्ति। एकयैव कार्यमात्राभिधानशक्त्योभयत्र मुख्यत्वोपपत्तेः। अनेकार्थत्वं ह्यनेकशक्तिकल्पनादोषादन्याय्यम्, न स्वरूपेण। मा दूषि नानाविधनित्य-काम्यप्राकृतवैकृतनिषेधापूर्वाणां तदभिधेयत्वम्। अतो यथा तेषां कार्यत्वरूपैकोपलक्षणयोगात्तदभिधेयत्वं भवति, एवं क्रियाया अपि तपस्विन्यास्तद्योगात्तदभिधेयत्वं भविष्यति।

**उभयोर्वाच्यत्वेऽनेकशक्तिकल्पनादोषः, एकस्य लक्षणया बोधे एकप्रकारासंभव इत्युभयतःपाशा रज्जुरिति दूषणम्।**

आह—नैकया शक्त्या क्रियापूर्वयोरभिधेयत्वं भवति, शक्त्या क्रियास्वरूपे हि प्रकृत्युपात्ते, तस्य कर्तव्यतारूपं विशेषणमेव लिङा प्रतिपादयितव्यम्। अपूर्वं तु नान्येन केन चित्प्राप्तमिति, लिङैव कर्तव्यताविशिष्टं तत्स्वरूपमभिधातव्यमिति नैकप्रकारसम्भवः। यदि विशिष्टाभिधायी, ततोऽपूर्वमेव, न क्रियामभिदध्यात्। अथ विशेषणाभिधायी, ततः क्रियामेव, नापूर्वमभिदध्यादिति। नैतदेवम्। विशिष्टाभिधाय्येवायम् शब्दः। स यदा क्रियापरो भवति, तदा तत्स्वरूपस्य प्रकृतित एव प्राप्तत्वाद्विशेषणपरो भवति। तद्यथा 'दण्डी प्रैषानन्वाहे'ति विशिष्टाभिधाय्यपि दण्डिशब्दो विशेषणपरो भवन्नपि न लक्षणया, तथा कार्यवचनः शब्दोऽपि यदा क्रियायां प्रयुज्यते, तदा कार्यत्वरूपविशेषणपरत्वं श्रुतिवृत्त एव सम्प्रतिपद्यते, नैतावता लक्षणा भवतीत्युभयत्रापि मुख्यमेव।

---

सिद्धौ इत्यन्वयः। ननु शक्तेर्भेदाभावेऽपि एकस्य शब्दस्यानेकार्थत्वमयुक्तमित्यत्राह—अनेकार्थत्वमिति। ननु शक्तिभेदकल्पनामन्तरेणोभयोर्वाच्यत्वं न युज्यते। एकरूपवाच्याभावात्। ततश्चानेकशक्तिकल्पनात् एकस्य लक्षणया प्रतीतिरेव युक्तेति शङ्कते—आहेति। विशेषणं धर्ममात्रम्। अनन्यलभ्यः शब्दार्थ इति न्यायादिति भावः। विशिष्टं तत्स्वरूपमिति। कार्यत्वविशिष्टो धर्म्यभिधातव्य इत्यर्थः। एकप्रकारासंभवमेवाह—यदीति। परिहरति—नैतदिति। नह्युभयोरपि मुख्यत्वोपपत्तौ अन्यतरत्र लक्षणाश्रयणं युक्तम्। दण्डिशब्दवत् विशिष्टाभिधायित्वे तूभयत्र मुख्यत्वं युज्यते। न च क्वचित् विशेष्यस्य प्राप्तत्वमात्रेण तत्र शब्दशक्तिलोपो भवति। किंतु तस्मिन्नंशेऽनुवादत्वमात्रमेव। न तु तत्रापि तात्पर्यमिति वक्तव्यम्। यथा 'दण्डी प्रैषानन्वाहे'त्यत्र। यत्र तूभयमपि न प्राप्तं, तत्रोभयत्रापि तात्पर्यमित्येतावन्मात्रम्। नैतावता मुख्यत्वहानिरित्यर्थः।

---

२२—अन्यार्थप्रवृत्तकृतिव्याप्यत्वं लौकिककार्यत्वं लाक्षणिकम्, वैदिकम् कृत्युद्देश्यत्वं मुख्यमेव वाच्यमिति, न कुत्रापि लक्षणासंभवः।

समानपदश्रुतिबाधेन क्रियाकार्यस्य लाक्षणिकत्वमंगीक्रियते, तर्हि समानाभिधानश्रुतिबाधप्रसंगादपूर्ववाचित्वमेव लिङः उत्सीदेदित्युपहासः ।

यस्तु वदति- नन्वेवं सति कामाधिकारेऽपि समानपदोपात्तभावार्थः एवाभिधेयः स्यादित्यपूर्वाभिधानमुत्सीदेत् । तेन यदैव कामिनियोज्यसंबन्धादपूर्वाभिधायकत्वमवगतम्, तदा तन्निर्वाहार्थं क्रियाया लाक्षणिकत्वमध्यवसितमिति स एवमनुशासितव्यः हन्त किं नाश्रौषीर्यो हि पाषाणान्भक्षयति, ईषत्करःस्तस्य मुद्गशष्कुल्यो भवन्तीति । यो हि नियोज्यसम्बन्धाल्लिङ्शब्दं क्रियारूपकार्यविशेषवाचिनमवगतमपि, तत उद्धृत्य अपूर्वं नयति, स कथं सामान्यवाचिनमपूर्वं नेतुं न क्षमेत । तस्मात्कर्तव्यतासामान्यवाची सन्नपि यत्र फलकामस्य नियोज्यत्वम्, तत्र तद्बलेनापूर्वमभिधत्ते । अन्यत्र तु समानपदोपादानात्क्रियाम् । तेन सामान्यवाचित्वाल्लिङ्शब्दस्य यथाऽपूर्वाणां तद्योगात्तदभिधेयत्वम्, एवं क्रियाया अपि किं नोपगम्यते । तत्कर्तव्यताभेदादिति चेत् । न । तदभावात् ।

---

शङ्कते—नन्विति । एवं सति कार्यत्वसामान्यविशिष्टस्य वाच्यत्वे सति । उत्सीदेदिति । परिदृश्यमानस्यापूर्वाभिधानस्यातीव न्यायानुग्रहो न स्यादिति भावः । तर्हि कदा तदनुग्रह इत्याशङ्क्य, क्रियाकार्यत्वस्य लाक्षणिकत्वाङ्गीकार इत्याह—तेन यदेति । अयं भावः—दर्शादौ लिङ्शब्दस्यापूर्वव्युत्पत्तिवेलायां समानपदोपात्तस्यापि भावार्थस्य परित्यागदर्शनात् तदैवैवं निश्चिनोति—यद्युभयसाधारणं कार्यत्वसामान्यविशिष्टमेव लिङ्वाच्यं, तदा तस्यात्यन्तसंनिहितक्रियापर्यवसानपरित्यागो न युज्यते । अतोऽपूर्वरूपकार्यविशेषस्यैव लिङ्वाच्यत्वम् । क्रियाकार्यत्वस्य तु लाक्षणिकत्वमिति । ततः सौर्यादिष्वपि लक्षणाश्रयणायोगात् अपूर्वमेव तदर्थतयाऽङ्गीक्रियत इति ।

सोपालम्भं परिहरति—हन्तेति । अयमाशयः- यदा समानपदश्रुतिबाधभयात् क्रियाकार्यत्वस्यालाक्षणिकत्वमाश्रीयते, ततोऽभिधानश्रुतिबाधप्रसङ्गात् अपूर्वे व्युत्पत्तिरेवोत्सीदेत् । यदि नियोज्यान्वयानुपपत्तिस्तामपि बाधेत, तर्हि तस्याः प्रत्ययव्युत्पत्तिबाधिन्याः पदश्रुतिप्रतिपन्नस्यान्वयमात्रस्य बाधने कियद्गौरवम् । तस्मात् दर्शादिष्वानर्थक्यप्रसङ्गात् फलकामिनियोज्यस्याङ्गीकर्तव्यत्वेन तदन्वयानुपपत्तिसंभवात्, तत्रापूर्वरूपार्थः स्वीकरणीयः । सौर्यादिष्वानर्थक्याभावेन फलकामिनियोज्यान्वयावश्यंभावाभावेनानुपपत्त्यभावान्नैमित्तिकाधिकारत्वमेवाश्रयणीयम् । अपूर्वरूपार्थश्च न स्वीकरणीय इति । सामान्यवाची—सामान्यविशिष्टवाची । यत्र- दर्शपूर्णमासादिषु । अन्यत्र-सौर्यादौ । एवं च दर्शादिष्वपूर्वस्येव सौर्यादिषु आनर्थक्याभावेन क्रियाकार्यत्वस्य वाच्यत्वं फलिष्यतीति निगमयति—तेनेति ।

ननु यदि कार्यत्वसामान्यं लिङ्वाच्यं स्यात्, तदा सौर्यादिषु क्रियाकार्यत्वस्य वाच्यत्वं भवेत् । नैवम् । कृतिं प्रति प्राधान्यरूपस्य कृत्युद्देश्यतालक्षणस्य कार्यत्वविशेषस्यैव लिङ्वाच्यत्वात् । एतादृशं कार्यत्वमपूर्वाणामेव । क्रियास्वन्यार्थप्रवृत्तकृतिसाध्यतात्मकं कार्यत्वम् । न तस्यापि लिङ्वाच्यत्वम् । अनेकशक्तिकल्पनाप्रसङ्गात् । अत एव लाक्षणिकमेव । सौर्यादिषु

**कृत्युद्देश्यतालक्षणस्य कार्यत्वस्य लिङादिवाच्यत्वेनैतादृशं कार्यत्वमपूर्वाणामेव, क्रियास्वन्यार्थप्रवृत्तकृतिसाध्यतात्मकं कार्यन्तु न लिङ्वाच्यम्, तत्तु लाक्षणिकम्, अतस्सौर्यादौ लिङ्वाच्यमपूर्वमेवेति शंका।**

[1]तत्रैतत्स्यात्—कृत्युद्देश्यतात्मिका हि कर्तव्यता लिङभिधेयोपलक्षणम्, सर्वाणि चापूर्वाणि तदुपेतानीति युक्तं यत् तैरभिधीयन्त इति। क्रियायास्तु फलोद्देशप्रवृत्तकृतिव्याप्यतात्मिका कर्तव्यतेति कर्तव्यताभेदान्नाभिधेयत्वसम्भवः—इति।

नैतदेवम्। कर्तव्यताभेदाभावात्। यद्यपि लौकिकानां गवानयनादीनां न स्वातन्त्र्येण कर्तव्यताऽवगता। तथाऽपि वेदे सौर्यादियागानां तादृश्येव कर्तव्यता भविष्यति। स्वतन्त्रकार्याभिधायी हि लिङ्शब्दो यजिना समभिव्याहृतस्तमेव तादृशं प्रतिपादयति। न लौकिकक्रियायास्तादृशी कर्तव्यताऽवगतपूर्वेति चेत्। न। नियोगस्य वा किमवगता, येनाभ्युपगम्यते। लोकानवगताऽपि वेदादेव तस्य तादृशी कर्तव्यताऽवगम्यत इति चेत्। क्रियायामपि तुल्यम्।

**प्रत्यक्षविरुद्धत्वात् वेदः क्रियायां कृत्युद्देश्यत्वरूपम् कृतिप्राधान्यं बोधयितुं नेष्ट इति शंका-परिहारौ।**

ननु प्रत्यक्षविरुद्धा दुःखरूपायाः क्रियायाः कथमागमेनापि शक्यते कर्तव्यता प्रतिपादयितुम्। नियोगात्मा वा '[2]भगवन् क्रिमानन्दैकरसः यतः तस्य कर्तव्यता न प्रमाणान्तरविरुद्धा स्यात्। सोऽपि बहुद्रव्यव्ययप्रयाससाध्यो दुःखाकर एव न चेतनव्यापारस्योद्देश्यतामनुभवितुमर्हति। यथा तु तस्य नित्यनिरपेक्षाम्नायात्कर्तव्यता। तथा

---

लक्षणाकारणाभावादपूर्वमेव लिङ्वाच्यमिति प्रकारान्तरेण शङ्कते–तत्रैतदिति। संभव इति। सौर्यादिष्विति शेषः।

भवतु कृत्युद्देश्यस्यैव कार्यत्वस्य लिङ्वाच्यत्वम्। सौर्यादिषु तु तदेव समानपदोपादानादनुपपत्त्यभावाच्च यागगतमेव भवेत्। अतश्च नानेकशक्तिकल्पनादोष इति किमपूर्वाङ्गीकारव्यसनेनेति परिहरति–नैतदेवमिति।

लोकानवगततया सौर्यादिषु कृतिप्राधान्यरूपं क्रियायाः कार्यत्वं न वाच्यतयाऽभ्युपगन्तव्यमिति शङ्कते–लोकेति। नियोगस्यापि तादृशकार्यत्वस्य लोकानवगतत्वसाम्यात् तत्कार्यत्वस्यापि वाच्यत्वं न स्यादिति प्रतिबन्द्या परिहरति—नियोगस्येति।

सौर्यादिषु मानान्तरेण तदवगतिं शङ्कते–लोकेति। साम्येन परिहरति–क्रियायामपीति। ननु प्रत्यक्षविरुद्धत्वात् वेदः क्रियायां कृतिप्राधान्यं प्रतिपादयितुं न शक्नोतीति शङ्कते–नन्विति। प्रत्यक्षविरुद्धत्वं नियोगेऽपि समानमिति परिहरति–नियोगात्मेति।

ननु लौकिकस्य नियोगस्य कथं प्रमाणान्तरविरुद्धतेत्याशङ्क्य, तत्स्वरूपस्य लौकिकत्वेऽपि तत्साधनस्य दुःखरूपत्वात् तस्यापि दुःखरूपत्वं स्यादित्याह–सोऽपीति। ननु बलीयसापि वेदेन मानान्तरमपि बाधित्वा कृत्युद्देश्यत्वं नियोगस्यावगम्यते इत्याशङ्क्य, क्रियायामपि तत्साम्येन परिहरति–यथा त्विति।

---

१—स्यादेतत् इति २. पु. पा.। २—भगवद्भक्तिमाने'ति. मु. पा.।

क्रियाया अपि भविष्यति। अपि च नियोगस्य सुखदुःखप्राप्तिपरिहारव्यतिरिक्तस्य क्रियावन्न स्वातन्त्र्येण कार्यत्वमुपपद्यते। कृतिर्हि चेतनप्रयत्नरूपा इच्छापूर्वकत्वात्तद्गोचरमेव गोचरयितुमर्हति। इच्छा हि सुखदुःखपरिहारगोचरैवेति, साऽपि तद्गोचरैव। अतो नापूर्वस्य प्राधान्यमुपपद्यत इति यथाशक्तिनिर्णये वर्णितम्।

### लोके वेदे चैकरूपमेव कार्यमिति, न लक्षणाया अभावः सिंहावलोकनन्यायेनापूर्वप्राधान्यभंगश्चेति दूषणम्।

किञ्च—नान्यार्थप्रवृत्तकृतिव्याप्यतात्मिका क्रियायाः कर्तव्यतेति भवता शक्यते वक्तुम्, इष्टव्याघातप्रसङ्गात्। लोके हि क्रियाकार्याभिधायित्वे लिङादीनामवगते, क्रियारूपविशेषणपरिहारेण वेदेऽपूर्वपर्यन्ततामात्रं कामपदसमभिव्याहारादवगम्यत इति भवतां दर्शनम्। तत्र यदि अन्यार्थप्रवृत्तकृतिव्याप्यतारूपकर्तव्यतोपेता क्रिया तदर्थत्वेनावगता, हन्त तर्हि वेदेऽपि तद्रूपापरित्यागेनापूर्वपर्यन्ततामात्रं कल्पनीयमित्यपूर्वप्राधान्यमिष्टं व्याहन्येतेति।

### अपूर्वप्रमाणमेव तस्य कृतिप्राधान्येऽपि प्रमाणमित्याशंक्य अपूर्वप्रमाणं तस्यान्योपसर्जनत्वानुगुणम्, नतु तत्प्राधान्यप्रतिपादकमिति समाधानम्।

स्वर्गकामपदसमभिव्याहारो हि क्रियारूपस्यैव विशेषस्य परिपन्थी, न त्वन्योपसर्जनत्वस्य। तेन लोक-वेदयोरुभयोरन्योपसर्जनकार्याभिधानान्नास्त्यनेकार्थत्वम्। प्रत्युत स्वर्गकामपदसमभिव्याहाराच्चैवमेवागम्यते यो हि स्वतन्त्रकार्याभिधायित्वं लिङादीनामिच्छति, स वक्तव्यः—किमत्र ते प्रमाणमिति। स चेद् ब्रूयात्फलकामिनियोज्यसमभिव्याहारादनन्योपसर्जनं क्रियातिरिक्त कार्यं सिध्यतीति, प्रतिब्रूयादेनम् न विपरीतसाधनत्वादिति। कामपदसमभिव्याहारो ह्यन्योपसर्जनकार्याभिधान एव

---

सौर्यादिषु नियोगप्रतिवन्द्या क्रियाया एव कार्यत्वमुपपादितम्। इदानीं वेदेन नियोगस्य कार्यत्वप्रतिपादनेऽपि, तत्र ममेदं कार्यमिति चेतनस्य प्रतीतिर्नोपपद्यते। प्रवृत्तिस्तु दूरतर एवेति प्रसङ्गात् दूषणान्तरमाह—अपि चेति। तदेवोपपादयति—कृतिर्हीति।

अन्यार्थप्रवृत्तकृतिसाध्यत्वं लौकिककार्यत्वं लाक्षणिकमेव। वैदिकं तु कृत्युद्देश्यत्वमेव मुख्यं वाच्यमित्यभ्युपगम्यैव सौर्यादिषु क्रियाकार्यत्वस्यैव वाच्यत्वमुपपादितम्। इदानीं लोके यादृशं कार्यं लिङा प्रतिपाद्यते, तादृशस्यैव दर्शादिष्वन्यत्रापि प्रतिपाद्यत्वम्। ततश्च न कुत्रापि लक्षणासंभवः।

अपूर्वप्राधान्यं च भज्येतेति प्रसङ्गात् दूषणान्तरमाह—अपूर्वपर्यन्ततामात्रमिति। स्थिरापूर्वकार्यलाभमात्रेणैवानुपपत्तिशान्तेरिति भावः।

नन्वपूर्वप्रमाणमेव तस्य कृतिप्राधान्येऽपि प्रमाणं स्यादित्यत्राह—स्वर्गकामेति। फलितमाह—तेनेति। अपूर्वप्रमाणं हि नियोज्यान्वयवैयर्थ्यम्। तद्धि न केवलं तत्प्राधान्याप्रतिपादकम्। किंतु तस्यान्योपसर्जनत्वानुगुणम्। अतश्च तादृशकार्याभिधाने नानेकार्थत्वदोष इति प्रतिपादयितुमुपक्रमते—प्रत्युतेत्यादिना। तस्योपसर्जनत्वानुगुण्यमेव प्रतिपादयति—नहीति।

प्रमाणम्, न तु स्वातन्त्र्ये। स हि स्वर्गं कामयमानस्तत्कामित्वेन रूपेण तदुपसर्जनं कार्यं बोद्धुमलमित्यनेन हेतुना तत्साधनन्वायोग्यक्रियापरित्यागेन तदनुकूलापूर्वाभिधानं लिङादीनामुपेयते। तत्कथं स्वप्रमाणविरुद्धप्राधान्याभ्युपगमः।

**प्राधान्याभिधाने प्रमाणासंभवादेवमुच्यते, अथवा उपसर्जनत्वाभिधाने प्रमाणाभावादिति द्वेधा विकल्प्य क्रमेण दूषणम्।**

ननु वस्तुवृत्त्या फलानुगुणमपि न तथा शब्देनाभिधातव्यम्। किमेतावता स्वप्रधानभूतमभिधातव्यम्, न हि प्राधान्ये कश्चिदपि प्रमाणलवः समस्ति। [1]अपि च नियोज्यपदसम्बन्धादेवं कल्पयितव्यम्, यादृशं कार्यरूपम् फलकामी ममेदं कार्यमिति बोद्धुमलम्, तादृशमभिधातव्यम्, स च स्वकामानुगुणमेव बोद्धुमर्हतीति तथैवा-भिधातव्यम्, अङ्गापूर्ववत्।

**प्रयाजादीनां ग्राहकान्वयानुपपत्त्या प्रधाननियोगोपसर्जनीभूतापूर्वाभिधानम्, तत्र लक्षणा, मुख्यवृत्त्या प्राप्तमन्योपसर्जनस्य वाच्यत्वमिति युक्तित्रयेण प्रधानकार्यत्वस्य वाच्यत्वाभ्युपगमो विरुद्ध इति कथनम्।**

*यो हि प्रयाजादिविषयापूर्वं विनियुक्तविषयतया स्वतन्त्रीभवितुमसमर्थमिति स्वशब्देनाधिकारवाक्यनिर्ज्ञातप्रधानकार्याभिधानशक्तिनाऽपि लक्षणयाऽन्योपसर्जनी-भूतमभिधीयत इति वदति। स कथं कामाधिकारवाक्यादन्यत्राविदितप्रधानकार्याभि-धानसामर्थ्येन प्रत्युत लोकावगतगुणभूतकार्याभिधानसामर्थ्येन कामपदसमभिव्याहा-राच्चापूर्वाभिधानप्रमाणादवश्यंभावितादृक्त्वेन लिङ्शब्देन करणीभूतविषयतया च तद्वदेव विनियुक्तविषयतया प्रत्यूढप्राधान्यमपूर्वं प्रधानतयैव लोक स्वप्रमाण-स्वविषय-

---

तत्कामित्वेन रूपेणेति। फलकामो हि फलमेव कार्यतया बुध्यते, फलसाधनं च साध्योप-सर्जनमिति, तदेव लिङाऽभिधातव्यमित्यर्थः।

भवेन्नाम साधनं साध्योपसर्जनम्। तथापि तेन वेषेण नाभिधातव्यमिति शङ्कते-नन्विति। किं प्राधान्याभिधाने प्रमाणसंभवादेवमुच्यते, उतोपसर्जनत्वाभिधाने प्रमाणाभावाद्वेति विकल्प्य, आद्यं दूषयति—किमेतावतेति। द्वितीयं दूषयति—अपिचेति। तत्र दृष्टान्तमाह— अङ्गापूर्ववदिति। प्रयाजादीनां ग्राहकान्वयानुपपत्त्या तदपूर्वमपि तदुपसर्जनमेव। तच्च तेनैव वेषेणाभिधातव्यमिति हि भवत्सिद्धान्तः। तद्वत् फलकामिनियोज्यान्वयानुपपत्त्या फलोप-सर्जनमपूर्वं तेनैव वेषेणाभिधातव्यमित्यर्थः। अङ्गापूर्वेष्वेतयैव युक्त्या लक्षणामत्याश्रित्य अन्योपसर्जनकार्याभिधानमङ्गीकुर्वतस्तवात्र युक्तित्रयेण मुख्यया वृत्त्या प्राप्तमन्योपसर्जनत्वमपि परित्यज्य, प्रधानकार्यत्वस्य वाच्यत्वाभ्युपगमोऽत्यन्तं विरुद्ध इत्याह—यो हीति। अन्यत्राविदि-

---

१—वेदेन नियोगस्य कार्यत्वप्रतिपादनेऽपि तत्र ममेदं कार्यमिति चेतनस्य प्रतीतिर्नोप-पद्यते, प्रवृत्तिस्तु दूरत एवेति दूषयति—अपीति। एतेनापूर्वप्राधान्यभंगदूषणं स्थितमेव यथाशक्ति-निर्णये, तन्न प्रस्मर्तव्यम्।

*परिहाशेनेति. मु. पु. पा.।

विरुद्धमभिधीयत इति वदन्हास्यो न स्यात्। तदुभयत्रापि गुणभूतकार्याभिधानशक्त्यैकयैव मुख्यत्वोपपत्तेर्न क्रियाया लाक्षणिकत्वम्।

## विस्तरेणोक्तस्यार्थस्य श्लोकेन संक्षिप्य वर्णनम्।

लोकतः स्वप्रमाणाच्च फलार्थविषयत्वतः।
अन्यार्थत्वमपूर्वस्य प्राधान्यं न कुतश्चन॥ १२॥

इति संग्रहश्लोकः।

## गुरुमते विश्वजिदादौ नियोज्यकल्पनवन्नैमित्तिकाधिकारे नियोज्ये सत्यपि फलकल्पनं गौरवमिति दूषणम्।

एतेन नैमित्तिकाधिकारेऽपि कामाधिकारव्युत्पत्त्यनुसारादन्यार्थस्यैवापूर्वस्याभिधानात् तदुपपत्त्यर्थं [1]नियोज्यवत्फलमवश्यं कल्पनीयमिति दर्शितम्।

## विशेषस्य वाच्यत्वं विहाय, सामान्यस्य वाच्यत्वस्वीकारेन्यायस्यानुकूल्यम्, अत्र भाष्यसंगतिश्चेति कथनम्।

किञ्च—प्राधान्येऽपि नियोगस्य गुणभावेऽपि कर्मणः।
विशेषद्वयहानेन सामान्यस्यैव वाच्यता॥ १३॥

यद्यपि नियोगस्य कृत्युद्देश्यतया प्रधानस्यान्यादृशी कर्तव्यता, क्रियायाश्चान्योद्देशप्रवृत्तकृतिव्याप्यतया गुणभावादन्यादृशी कर्तव्यता, तथापि उभयत्र प्रयुज्य-

---

तेति प्रत्युत लोकेतिपदद्वयेन लोकविरोध उक्तः। एवं च लोके क्रियाकार्यत्वस्य लाक्षणिकत्वं त्वया नाङ्गीकार्यमित्याह—तदिति। उक्तमर्थं श्लोकेन संगृह्णाति—लोकत इति।

एवं च गुरुमते दोषान्तरमपि प्रसजेदित्याह—एतेनेति। नियोज्यवदिति। यथा विश्वजिदादौ आकाङ्क्षितत्वादश्रुतोऽपि नियोज्यः कल्प्यते, तद्वन्नैमित्तिकाधिकारे नियोज्ये सत्यपि फलं कल्पनीयमित्यर्थः।

सर्वत्रोपसर्जनकार्याभिधानात् मुख्यत्वमुपपाद्य, ततोऽपि लघुमार्गेण सर्वत्र मुख्यत्वमुपपादयति—किंचेति। विशेषस्य वाच्यत्वं परित्यज्य, सामान्यस्यैव वाच्यत्वाङ्गीकारे न्यायमाह—

---

*प्राभाकरमीमांसकैरपूर्वप्रमाणमेव तस्य कृतिप्राधान्येऽपि प्रमाणमिति वाच्यम्। यतो हि अपूर्वप्रमाणं हि नियोज्यान्वयवैयर्थ्यम्। तद्धि न केवलम् तत्प्राधान्याप्रतिपादकं भवति, तस्यान्योपसर्जनानुगुणम्। यथा प्रयाजादीनां ग्राहकान्वयानुपपत्त्या प्रयाजापूर्वमपि तदुपसर्जनमेव भवति, तथा तेनैव वेषेण अभिधातव्यमिति तन्मतस्थितिः, तथा फलकामिनियोज्यान्वयानुपपत्त्या फलोपसर्जनमपूर्वं तेनैव रूपेणाभिधातव्यम्। एवञ्चांगापूर्वेष्वेतयैव युक्त्या लक्षणामप्याश्रित्य अन्योपसर्जनकार्याभिधानमतं कुर्वतस्तवात्र युक्तित्रयेण मुख्यवृत्त्या प्राप्तमन्योपसर्जनत्वमपि परित्यज्य प्रधानकार्यत्वस्य वाच्यत्वाभ्युपगमोऽत्यन्तं विरुद्ध इत्याह—यो हिति।

१—नियोज्यवदिति-यथा विश्वजिदादावाकांक्षितत्वादधिकारसिद्ध्यर्थमश्रुतोऽपि नियोज्यः कल्प्यते, तथा नैमित्तिकाराधिकारे नियोज्ये सत्यपि फलं कल्पनीयमिति गुरुमते दोषान्तरमिति बोध्यम्।

मानस्य लिङ्शब्दस्य गोशब्दस्येव खण्डमुण्डादिषु प्राधान्यगुणभावप्रहाणेन खण्डमुण्डत्वादिविशेषप्रहाणेनेव सर्वानुगतं कार्यत्वसामान्यम् गोत्वमिव वाच्यं स्यात्। अनेकत्र प्रयुक्तस्य शब्दस्य सर्वत्र मुख्यत्वोपपत्तावन्याय्या लक्षणा। तदेतत्कपिञ्जलाधिकरणे भगवता भाष्यकारेण महता प्रबन्धेन साधितमपि स्वसमयसंतमसतिरस्कृतदृष्टिभिर्नालोचितम्।

## अनेनोपपादनेन क्रियाकार्यत्वस्य लाक्षणिकत्वाभ्युपगमस्य तदीयाभ्युपगमान्तरस्य च भंग इत्युपपादनम्।

एतेन गामानयेत्यादिषु कार्यान्विते प्रयोगात्, तथा 'नद्यास्तीरे फलानि सन्ती'-त्यादिषु सिद्धार्थान्विते प्रयोगादुभयानुगताकाङ्क्षित-संनिहित-योग्यार्थमात्रान्वितस्वार्थाभिधायित्वात् गवादिशब्दानां कार्यान्विताभिधायित्वम् निरस्तम्।

## वृद्धव्यवहारे कार्यान्विते शक्तिग्रहात् कथं सामान्यस्य वाच्यत्वम्, कथं सर्वत्रमुख्यत्वमितित्याशंक्य, अन्यथा वेदस्य अप्रामाण्यप्रसंग इत्यापादनम्।

यदि त्वेतन्न मृष्येत प्रमाणान्तरगोचरः।
शब्दानामभिधेयं स्यात्ततो वेदाप्रमाणता॥ १४॥

यदि ह्यनेकत्र प्रयुज्यमानस्यापि शब्दस्य सर्वानुगतसामान्यसद्भावेऽपि तद्वाचित्वमनभ्युपेत्य, व्युत्पत्त्यवसरावगतविशेषवाचित्वेनान्यत्र लाक्षणिकी वृत्तिरभ्युपगम्येत, ततो वृद्धव्यवहारे प्रमाणेन, तदाभासेन वा वक्तृबुद्ध्यारुढ एवाऽऽर्थे शब्दप्रयोगात्तथाविध एव सर्वशब्दानामभिधेयः स्यात्। वेदे चापौरुषेये तदसम्भवादप्रतिपादकत्वम्, वेदस्य पौरुषेयत्वं वा बलादापद्यत इत्यप्रामाण्यं स्यात्।

## जातेष्टौ आर्थवादिकं फलम्, तत्कामस्य नियोज्यत्वं यथा स्वीक्रियते, तथा नैमित्तिकान्तरेषु तत्कल्पनं स्यात् सामान्यस्य वाच्यत्वेऽन्वितमात्रे व्युत्पत्तौ सिद्धावपि व्युत्पत्तिसिद्धिरित्यादि कथनम्।

तथा लिङ्शब्दस्यापि व्युत्पत्तिस्थानाभिमते कामाधिकारे फलकामिनियोज्यफलानुगुणापूर्ववाचित्वम्, व्युत्पन्नमिति नैमित्तिक-निषेधाधिकारयोरपि व्युत्पत्त्यनु-

---

**अनेकत्रेति**। अयमेव भाष्यकाराभिमतश्चेत्याह—तदेतदिति। न केवलमनेनोपपादनेन क्रियाकार्यत्वस्य लाक्षणिकत्वाभ्युपगमः, तदीयमभ्युपगमान्तरमपि भज्यत इति प्रसङ्गादाह—एतेनेति। वृद्धव्यवहारे कार्यान्वितस्वार्थं एव शब्दानां व्युत्पत्तेः, सिद्धार्थपरेषु वाक्येषु तेषां लाक्षणिकत्वमङ्गीक्रियते प्राभाकरैः। तदप्यन्वितमात्रे शब्दानां शक्तिमभ्युपगम्योभयत्रापि मुख्यत्वोपपत्तेर्न युज्यत इत्यर्थः।

ननु वृद्धव्यवहारे कार्यान्वित एव व्युत्पत्तेः कथं सामान्यस्य वाच्यत्वाङ्गीकारः। कथं वा सर्वत्र मुख्यत्वमित्याशङ्क्य, प्रतिबन्द्योत्तरमाह—यदि त्विति। प्रमाणान्तरगोचरः—प्रमाणान्तरेण पुरुषबुद्धिविषयः। तथाविध एवेति। कार्यत्ववत् पुरुषबुद्धिविषयत्वमपि वाच्यकोट्यनुप्रविष्टं स्यादित्यर्थः। तथैव भवेत् को दोषः? तत्राह—वेदे चेति। अप्रतिपादकत्वम् अवाचकत्वम्। अप्रमाणं स्यादिति। अबोधकत्वे, पुरुषदोषसंस्पर्शे चोभयथाप्यप्रमाणं स्यादित्यर्थः।

प्रतिबन्द्यन्तरमपि गृह्णाति—तथेति। फलकामी नियोज्यो यस्य तत्, फलकामिनियोज्यकम्। तच्च तत् फलानुगुणं च तादृशेऽपूर्वे व्युत्पत्तेरेतत्सर्व वाच्यकोट्यनुप्रविष्टं स्यादित्यर्थः।

सारेण तथाविधापूर्वाभिधानात्तदनुसारेण फलं तत्कामी च नियोज्यः कल्पयितव्य इति, सर्वत्र शब्दबलात् साधिकारत्वं जातेष्टिवत्स्यात्। तस्मात्सिद्धार्थेऽपि वेदस्य प्रमाण्याविघातादानन्दं ब्रह्मेत्यादीनाम् प्रामाण्यनिराकरणं नास्तिकतामेव फलतीत्यलमनेन।

भावनाया फलापेक्षित्वात्फलपरत्वमेव स्वर्गकामादिपादानाम्, न तु निमित्तपरत्वम्, अंशत्रयानुप्रविष्टत्वेनानपेक्षितत्वादाचार्यमते निमित्तपरत्वनिराकरणमितिमहाप्रकृतस्य निगमनम्।

तस्मान्न क्रियाया लाक्षणिकत्वमिति, सौर्यादिषु लिङ्शब्दस्य कार्यसामान्यवाचिनः समानपदोपादानश्रुत्या भावार्थविषयत्वात्तन्मा बाधीति निमित्तत्वमेव कामनाया भवन्मते स्यात्। तस्माद्विधियुक्तायाः क्रियायाः फलापेक्षत्वात्तत्परत्वमेव कामशब्दस्य, न निमित्तपरत्वम्, अनपेक्षितत्वादित्ययमेव निमित्तपरत्वनिराकरणहेतुः। अभ्युच्चयमात्रं त्वन्वि[1]तत्वं भङ्गुराया अपि क्रियायाः [2]फलसाधनत्वमवान्तरव्यापारापूर्वद्वारेण प्रागेव समर्थितम्। बह्वेव हि तत्रोदाहरणं काष्ठाग्नेयावगोरणादीति, नात्र विशेषे मनः खेदयितव्यम्। न चालौकिकमभिधेयं कल्प्यम्।

[3]अत्र संग्रहश्लोकाः—

श्रुतिः समर्थिता भवेन्निमित्ततासमाश्रये।
विरुध्यते हि कामनास्वरूपलिङ्गमेव तु॥ १५॥

---

जातेष्टिवदिति। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति नैमित्तिकस्यैव जातेष्टेः 'पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यार्थवादिकफलस्य विवक्षिततया फलं, तत्कामस्य नियोज्यत्वं च यथाङ्गीक्रियते, तद्वन्नैमित्तिकान्तरेष्वपि तत्कल्पना प्रसजेत्। एवं च सामान्ये वाच्ये संभवति, विशेषस्य वाच्यत्वकल्पनायोगादन्वितमात्र एव व्युत्पत्तेः सिद्धार्थेऽपि व्युत्पत्तिः सिध्यतीत्यर्थः।

एवं च दूषणान्तरमप्यापतेदित्याह—तस्मादिति। प्रसक्तानुप्रसक्तिं निगमयति—अलमनेनेति। महाप्रकृते योजयति—तस्मादिति। आचार्यमते वा निमित्तत्वनिराकरणं कथमित्यत्राह—तस्मादिति। क्रियाया, भावनायाः। अनपेक्षितत्वात् अंशत्रयाननुप्रविष्टत्वादिति भावः।

निमित्तस्यानाकाङ्क्षितत्वे गृहदाहादीनां कथं निमित्ततयान्वयः। तत्राह—अभ्युच्चयमात्रमिति। श्रुतस्य परित्यागायोगात् अनाकाङ्क्षितत्वेऽपि निमित्तस्यान्वय इत्यर्थः। अनाकाङ्क्षितत्वेऽपि कथंचिदन्वितत्वमभ्युच्चयमात्रत्वम्। स्वमतेऽनुपपत्तिं परिहरति- भङ्गुराया इति। श्रुतिबाधः, कल्पनागौरवं चास्मिन् मते नास्तीत्याह—नचेति।

प्रतिपादितं युक्तिजातं श्लोकैः संगृह्णाति—अत्रेति। श्रुतिः-लिङ्श्रुतिः। समर्थिता यत्र व्युत्पत्तिः तत्रैवावस्थिता। समाश्रय इति। फलकामनाया इति शेषः। कामाधिकारत्वे

---

१—नित्यत्वमिति मु. पु. पा.।
२—फलाधिकारत्वमिति. मु. पु. पा.।
३—विस्तरेणोपपादितं युक्तिजातं श्लोकैस्संगृह्णाति—अत्रेति।

फले समाश्रिते श्रुतिः प्रसिद्धमर्थमुत्सृजेत् ।
अलौकिकं समाश्रयेद्तश्च सा विरुध्यते ॥ १६ ॥
निमित्तताश्रये विधेः प्रयुक्तिकल्पनं तु यत् ।
फले समाश्रितेऽपि तत्समं फलस्य तस्य वा ॥ १७ ॥
अपूर्वरूपमस्ति तत्फलस्य साधनं तथा ।
यजिश्च तत्र साधनं त्रयं त्विदं ततोऽधिकम् ॥ १८ ॥
अथ [1]प्रयुक्तिकल्पनं निमित्त एव नो फले ।
तथाऽपि तद्वरं यतस्त्रयं प्रकल्प्यमन्यथा ॥ १९ ॥
कथं तु यत्पदादिभिर्विना निमित्ततेति चेत् ।
फलार्थिनो नियोगतो न तु श्रुतेर्निमित्तता ॥ २० ॥
कथं तु नित्यवच्छ्रुतं निमित्तवद्भविष्यति ।
अनर्थकं प्रसज्यते वाचस्तयोर्हि किं चन ॥ २१ ॥
भवत्वनर्थकं न हि प्रयोजनात् प्रमास्थितिः ।
[2]प्रयोगभेदकल्पनं निमित्ततोऽथ वा भवेत् ॥ २२ ॥
निमित्तता प्रसज्यते न यत्र नित्यवच्छ्रुतिः[3] ।
द्वयोः प्रसङ्गतः श्रुतिर्न लिङ्गबाधनक्षमा ॥ २३ ॥

---

श्रुतिविरोधः स्यादित्याह—फल इति । प्रसिद्धं-क्रियाकार्यत्वरूपम् । अलौकिकम्-अपूर्वरूपम् । प्रयुक्तिकल्पनं-प्रयोजकत्वकल्पनम् । तत्-प्रयोजकत्वम् । तस्य वा-विधेर्वा । कामाधिकारे प्रयुक्तिकल्पनायां समानायामेवान्यत्र त्रितयमधिकं कल्पनीयं स्यादित्याह—अपूर्वरूपमिति ।

शङ्कते कथमिति । परिहरति—फलार्थिन इति । फलकामनायुक्तस्य नियोगतो नियोज्यत्वात् कामनाया अर्थान्निमित्तत्वमित्यर्थः । शङ्कते—कथमिति । नित्यवत् श्रुतं-नियतनिमित्तयुक्ततया श्रुतम् । दर्शादिकमिति शेषः । निमित्तवत्-अनियतनिमित्तयुक्तम् । परिहरति—भवत्विति । प्रयोगभेदकल्पनं दाक्षायणयज्ञादिवदावृत्याऽनुष्ठानमित्यर्थः । दर्शादीनां कामाधिकारत्वेऽपि सौर्यादिषु कामनाया निमित्तत्वं प्रसजेदित्याह—निमित्ततेति ।

---

२५—सर्वत्रोपसर्जनकार्याभिधानात् मुख्यत्वमुपपाद्य, सर्वत्र लघुमार्गेण मुख्यत्वं न्यायेन, भाष्येण चोपपादयन् क्रियाकार्यत्वस्य लाक्षणिकत्वाभ्युपगमस्तदीयं सिद्धान्तान्तरं भंजयति । तथाहि—वृद्धव्यवहारे कार्यान्वितस्वार्थे एव शब्दानां शक्तिग्रहात् सिद्धार्थपरेषु वाक्येषु तेषां लाक्षणिकत्वमभ्युपगम्यते, तदप्यन्वितमात्रे शब्दानां शक्तिमभ्युपगम्योभयत्रापि मुख्यत्वोपपत्तेर्न युज्यत इति ।

*जातेष्टिवदिति, पुत्रजनने निमित्ते कर्तव्याया वैश्वानरेष्टेरार्थवादिकफलस्य विवक्षिततया फलम्, तत्कामस्य च नियोज्यत्वञ्च यथा स्वीक्रियते, तथा नैमित्तिकान्तरेष्वपि फलं कल्पनीयं स्यात् । एवञ्च वाच्ये सामान्ये संभवति, विशेषस्य वाच्यत्वकल्पनायोगात्, अन्वितमात्रे व्युत्पत्तेः सिद्धार्थेऽपि व्युत्पत्तिः सिद्धयतीति भावः ।

१—प्रयुक्तिकल्पनम्—प्रयोजकत्वकल्पनम् ।
२—प्रयोगभेदकल्पनम्—दाक्षायणयज्ञवदावृत्त्याऽनुष्ठानम् । ३—श्रुतिः—लिङश्रुतिः ।

ततश्चकामलिङ्गतः फलत्वमेव चेन्न तत् ।
पदश्रुतिर्हि कामनास्वरूपलिङ्गबाधिनी ॥ २४ ॥
नपूर्वमेव चेच्छ्रुतिर्ब्रवीति न क्रियामपि ।
[1]द्वयोरपि प्रयोगतोऽनुवृत्तमेव सा वदेत् ॥ २५ ॥
यथैव गोत्वमेव [2]गोश्रुतिस्तथैव लिङ्श्रुतिः ।
द्वयोः क्रिया-नियोगयोर्ब्रवीति कार्यमात्रकम् ॥ २६ ॥
अतः श्रुतेरनुग्रहात्तथाऽल्पकल्पनादपि ।
निमित्ततैव ते [3]भवेदियं तु तन्निराकृतिः ॥ २७ ॥
अपेक्षते फलं [4]क्रिया विधिक्षमा हि नान्यथा ।
ततस्तदेव[5] गृह्यते निमित्तताऽनपेक्षिता ॥ २८ ॥
कथं फलस्य साधनं क्रिया भंगुरेति* चेत् ।
अवान्तरक्रियान्वयात्सरूपतस्तु नो भवेत् ॥ २९ ॥
यथैव वासनावशात्प्रमाणतः स्मृतिर्भवेत् ।
यथेन्धनैरवान्तरक्रियावशाच्च विक्लिदिः ॥ ३० ॥
यथाऽवगोरणादिना शतादियातनोद्भवः ।
यथैव कर्मणस्तत्र स्वरूपभङ्गुरादपि ॥ ३१ ॥
[6]अवान्तरक्रियावशाद्भवेदधिक्रियाविधिः[7] ।
[8]तथाऽत्र तत् फलं भवेत्किमत्र खिद्यते मनः ॥ ३२ ॥

---

एवं तर्हि दर्शादिषु अपूर्वव्युत्पत्तेः संजातत्वेन श्रुतिबाधाभावात् लिङ्गबलात् कामाधिकारत्वमेव सौर्यादीनां स्यादिति शङ्कते—द्वयोरिति । द्वयोः प्रयोगतः—लोके क्रियाकार्ये दर्शादिष्वपूर्वकार्ये च प्रयोगादित्यर्थः । अभिधानश्रुतेर्लिङ्गबाधकत्वाभावे समानपदश्रुतिर्लिङ्गबाधिका स्यात् । अतः सौर्यादिपु क्रियाकार्यत्वस्यैव वाच्यत्वं स्यादिति परिहरति—न तत्पदश्रुतिरिति ।

नन्वपूर्वमेव लिङ्वाच्यं, क्रियाकार्यत्वं तु लाक्षणिकम् । अतः सौर्यादिषु कामाधिकारत्वेऽपि न पदश्रुतिविरोध इति शङ्कते—अपूर्वमेवेति । श्रुतिः-लिङ्श्रुतिः । सर्वानुगतस्य वाच्यत्वसंभवे, अन्यतरत्र लक्षणाश्रयणं न युक्तमिति परिहरति—द्वयोरिति । द्वयोः-क्रियाकार्यत्वापूर्वकार्यत्वयोः । तदेवोपपादयति—यथैवेति । उपसंहरति—अत इति । स्वमते कामनाया निमित्तत्वनिराकरणक्रमं दर्शयति—इयन्त्विति । क्रिया-भावना । विधिक्षमा-विधियुक्ता । तदेव-फलमेव । अवान्तरक्रियावशात्—उत्पत्तिनियोगरूपावान्तरव्यापारवशात् । अधिक्रियाविधिरधिकारनियोगः । तथा—अवान्तरव्यापारकल्पनयेत्यर्थः ।

---

*प्रसंगत इति २. पु. पा. ।

१—द्वयोः—क्रियाकार्यत्वापूर्वकार्यत्वयोः । २—गोकृतिरिति मु. पु. पा. । ३—क्रिया—भावना—विधिक्षमा । ४—विधियुक्ता । ५—तदेव—फलमेव । ६—अवान्तरक्रियावशात्—उत्पत्तिनियोगरूपावान्तरव्यापारात् । ७—अधिक्रियाविधिः—अधिकारनियोगः । ८—तथा—अवान्तरव्यापारकल्पनयेत्यर्थः ।

आचार्यमते वा निमित्तत्वनिराकरणं कथमित्याशंक्य, निमित्तस्याम् अंशत्रयाननुप्रविष्टत्वेनानाकांक्षितत्वात् श्रुतस्य परित्यागासंभवात् निमित्तस्यान्वयः भवति, अनाकांक्षितत्वेऽपि कथञ्चिदन्वितत्वमभ्युच्चयमात्रमिति ग्रन्थकृताऽभिहितमिति बोध्यम् ।

'तदेवं फलपरत्वे सति किं तदाग्नेयादीनां तन्त्रम्, उत भेदेनेति विचार्यते। तत्रान्योन्यनिरपेक्षा एवाग्नेयादिभावना भाव्यमपेक्षन्त इति, फलेन तथैव सम्बध्यन्त इति पूर्वः पक्षः[२]। सिद्धान्तस्तु फलमुद्दिश्याग्नेयादीनामुपादीयमानानां तन्त्राभिधानावगतं साहित्यं विवक्षितम्[३]।

## 'एकेनाऽपि समाप्येते'तिन्यायेन तृणारणिमणिन्यायेन कारणतेति पूर्वपक्षयित्वा, दण्डचक्रादिन्यायेनांगानां समुच्चित्य कारणतेति सिद्धान्तवर्णनम्।

एकेनापि च फलेन सर्वेषां नैराकाङ्क्ष्यं भवतीति, सर्वेषामेव तन्त्रं फलमिति। [४]ततोऽङ्गानां निरपेक्षैरेव वाक्यैः क्रतूपकारसाधनत्वेन विनियोगात्, निरपेक्षाणामेव

---

एवमेकादशाद्याधिकरणोपयोगितया स्वर्गकामपदस्य नियोज्यपरत्वं निराकृत्य, फलपरत्वं साधितम्। तत्-प्रकृतोपयोगितया योजयति–तदेवमिति। तत्र पूर्वपक्षमाह–तत्रेति। षण्णां भावनानां पृथक् पृथक् विधानात्, प्रत्येकमेव फलाकाङ्क्षित्वात् पृथक् पृथगेव फलान्वयो युक्त इत्यर्थः। सिद्धान्तमाह–सिद्धान्तस्त्विति। यद्यप्युत्पत्तिवाक्येषु भावनाः पृथग्विहिताः, तथापि तत्र फलस्याश्रुतत्वात्, न तासां प्रत्येकं फलान्वयः। अधिकारवाक्ये तु एकफलोद्देशेन संगतयागषट्ककरणैकभावनाविधानादेकमेव फलं षण्णां पर्यवस्यतीत्यर्थः। विवक्षितमिति। उपादेयविशेषणत्वादिति भावः।

ननु कथं षण्णां भावनानामेकेन फलेन भाव्याकांक्षायाः परिपूर्तिरित्याशङ्क्य, श्रुतस्यैव फलस्य तासु भाव्यतयाऽन्वयात् तत्परिपूरणं भविष्यतीत्याह–एकेनेति। अनन्तराधिकरणेन सकलाङ्गानां समुदितानामेकोपकारसाधनत्वलक्षणमुपकारकं तन्त्रमुपपादितम्।

तदधिकरणपूर्वपक्षमारचयति–ततोऽङ्गानामिति। निरपेक्षैः–प्रधानान्वये वाक्यान्तरसहायानपेक्षैः। क्रतूपकारसाधनतयाऽङ्गानां विनियोगादेकैकमेवाङ्गं पुष्कलक्रतूपकारसाधनम्। अतोऽङ्गानां विकल्पेनानुष्ठानं स्यादित्यर्थः।

---

१—एवमेकादशाद्याधिकरणोपयोगितया स्वर्गकामपदस्य नियोज्यपरत्वम् निरस्य, फलपरत्वं साधितम्। तत् प्रकृतोपयोगितया योजयति—तदेवमिति।

२—उत्पत्तिवाक्येषु पृथक् विहितानां भावनानां प्रत्येकं फलाकांक्षित्वात् पृथक् पृथगेव फलान्वयो युज्यत इति पूर्वपक्षमाह—तत्रेत्यादिना।

३—यद्यप्युत्पत्तिवाक्येषु भावनाः पृथक्विहिताः, तथाऽपि तत्र फलस्य अश्रवणात् तासां न प्रत्येकं फलसंबन्धः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यधिकारवाक्ये एकफलोद्देश्येन संगतयागषड्ककरणगतैकभावनाविधानेनैकमेव फलं षण्णां पर्यवस्यतीत्याशयेन सिद्धान्तं वर्णयति—सिद्धान्तस्त्विति।

४—अंगानां तृणारणिमणिन्यायेन विकल्पेन कारणतेति पूर्वपक्षयित्वा, दण्डचक्रादिन्यायेन समुच्चित्य कारणतेति सिद्धान्त इति द्वितीयमधिकरणार्थं वर्णयति–तत इत्यादिना–विनियोग इत्यन्तेन।

तत्साधनत्वं सौर्यार्यमणादीनामिव ब्रह्मवर्चसादिसाधनत्वमाशङ्क्योक्तं नैषां वाक्येन विनियोगः, स्वरूपमात्रेण तु स्ववाक्यैः उपस्थितानां प्रकरणविनियोगः, तच्चापर्यायव्यापारमिति, सह सर्वेषां विनियोगः ।

## अंगवाक्यानि तत्तदंगस्वरूपमात्रोपस्थापकानि विनियोगस्तु प्रकरणेनेत्युक्तौ अंगविधयो विनियोजकाइत्याचार्यवचनविरोधशंका-परिहारौ ।

'कथं तह्यङ्गविधीनां विनियोजकत्वम् । तदभावे प्रकरणविनियोगस्य असम्भवात्, न तु स्वरूपेणैव विनियोजकत्वम् । प्रयोजकैकस्वभावत्वादित्युक्तमेतत् । यदा तु श्रेयःसाधनतात्मैव विधिः लिङादिभिरभिधीयत इत्याश्रीयते । तदाऽपि क्रत्वैदमर्थ्यमात्रेण प्रकरणसनाथैः प्रातिस्विकैविधिभिर्विनियुक्तानां प्रयाजादीनामेकेनैव प्रधान-

सौर्यार्यम्णादीनामिति । ' सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः तै. सं. २-३-२. मै. सं. २-२-१. । अर्यम्णे चरुं निर्वपेत् ब्रह्मवर्चसकामः ।' इति वाक्यद्वयेन यथा वैकल्पिकं ब्रह्मवर्चससाधनत्वमुभयोस्तद्वदित्यर्थः । सिद्धान्तमाह—नैषामिति । ब्रह्मवर्चसोद्देशेन सौर्यादिविधानवत् न क्लृप्तक्रतूपकारोद्देशेन समिदादयो विधीयन्ते । किंतु अङ्गवाक्यान्यपरिपूर्णभाव्याकाङ्क्षास्तत्तद्यागकरणिका भावनाः समुपस्थापयन्ति । तासूपस्थितासु प्रधानभावनाया इतिकर्तव्यताकाङ्क्षावशात् खलेकपोतन्यायेन सर्वासां युगपदन्वयः । पश्चात्तु तेषां क्रतूपकारं परिकल्प्य तेषां तत्साधनत्वपरिकल्पनमिति सर्वेषामङ्गानामुपकारे समुच्चयः सिध्यतीति भावः । स्वरूपमात्रेणेति । मात्रचा भाव्यवैशिष्ट्यं निराक्रियते ।

ननु यद्यङ्गवाक्यानि न विनियोजकानि, किंतु तत्तदङ्गस्वरूपमात्रोपस्थापनपराणि । विनियोगस्तु पश्चात् प्रकरणेनेति यद्युच्यते, तर्हि अङ्गविधयो विनियोजका इत्याचार्यमतविरोध इति शङ्कते—कथं तर्हीति । उत्तरमाह—तदभाव इति । प्रवर्तनारूपो विध्यर्थः श्रेयःसाधनतारूपो वेति द्वौ पक्षौ । तत्राद्येऽनुष्ठानापरपर्यायः प्रयोग एव साक्षात् स्वरूपानुबन्धाद्विधेः कृत्यम् । विनियोगस्तु श्रुत्यादिसहायान्तरवशात् पर्यवसानलभ्यः । तत्र समिदाद्यङ्गवाक्येषु विधावसति भावना समानपदोपात्तमपुरुषार्थमपि धात्वर्थं भाव्यतयाऽवलम्ब्य निराकाङ्क्षीभवति । पुरुषार्थभाव्याकाङ्क्षा तु भावनाया विध्यविरोधाधीनत्वेन । तदभावे तस्या अनुदयात् । असत्यां चाकाङ्क्षायामन्योन्याकाङ्क्षालक्षणं प्रकरणमेवोत्सीदेत् । तद्विनियोगस्तु दूरे । विधौ सत्यङ्गभावनानां पुरुषार्थभाव्याकाङ्क्षायामन्योन्याकाङ्क्षालक्षणप्रकरणलाभे सति पश्चात्तेन विनियोगः सिध्यतीति विधिप्रसादलभ्यो विनियोग इत्यङ्गविधयो विनियोजका इत्युच्यन्त इति प्रकरणविनियोगावसर एव प्रतिपादितमिति, न दर्शनविरोध इति भावः ।

द्वितीयपक्षे तु यद्यङ्गानां पृथक् पृथगेव तत्तद्विध्यधीनः साक्षाद्विनियोगः । न तु युगपत् । अथापि प्रधानविध्यधीनस्य प्रयोगस्य यौगपद्यात् तदनुसारेण सर्वाङ्गसाध्यैकोपकारकल्पनात् समुच्चयः सिध्यतीत्याह—यदा त्विति । क्रत्वैदमर्थ्यमात्रेणेति । मात्रचा तदानीं क्रतूपकार-

१—अंगवाक्यानि तत्तदंगस्वरूपमात्रपराणि, न तु विनियोजकानि । विनियोगस्तु पश्चात् प्रकरणेनेति कथने, अंगविधयो विनियोजका इत्याचार्यमतविरोध इति शंकते—कथं तर्हीति । ....

विधिनाऽष्टदोषदुष्टविकल्पपरिजिहीर्षया सर्वविशिष्टभावनाविधायिना सर्वेषां युगपत्प्रयोगावगमात्तद्वशेनावान्तरकार्यभेदद्वारेण सर्वेषामुपकारकत्वस्य सहैव परिकल्पनात्काष्ठादीनामिव पाकाङ्गानां समुच्चयसिद्धिः। न ह्युपकारमुद्दिश्य पदार्थानां विधिः सम्भवति, तेभ्यः प्रागुपकारस्याप्राप्तत्वादिति क्षुणमेतत्।

## एकप्रयोजनोद्देशेन विनियोगविधिभेदः, एकार्थत्वेऽपि प्रधानविधिभेदो वा प्रयोजक इति कथनम्।

[1]यत्र तु प्रमाणान्तरेणैककार्यत्वावगमः यथा व्रीहि-यवयोः। यत्र वा प्रयोगविधिनानात्वमेकार्थत्वेऽपि यथोद्भिच्चित्रयोः पश्वर्थयोः। तत्र विकल्प इति।

---

साधनत्वं व्यावर्त्यते। युगपत् प्रयोगावगमादिति। यद्यपि पृथक् पृथगेव विनियोगः, तथापि सर्वेषां विनियोगे संजाते, पश्चात् तानि प्रयोगविधिर्यदि विकल्पेन गृह्णाति, तदा त्वष्टदोषाः प्रादुःष्युरिति समुच्चयेन प्रयोगमवगमयतीत्यर्थः। युगपत्—समुच्चयेन। एवं समुच्चयेन प्रयोगेऽवगते, पश्चात् तदनुसारेणैवोपकारः कल्प्यत इत्याह—तद्वशेनेति। अवान्तरकार्याणि अवान्तरापूर्वाणि। उपकारकत्वस्य अखण्डोपकारसाधनत्वस्य। एवं पक्षद्वयेऽपि विनियोगदशायामुपकारस्याभावेन तदुद्देशेन विनियोगासंभवात्, पश्चात्कल्प्यमानस्य क्रतूपकारस्य विनियोगप्रयोगविध्यनुसारेणैव कल्पनात् समुच्चयः सिध्यति। न तु विकल्प इति निगमयति—नहीति।

तर्हि कीदृशस्थले विकल्प इत्याशङ्क्य, यत्र त्वेकप्रयोजनोद्देशेनैव विनियोगविधिभेदः, यत्र वा प्रधानविधिभेदः तत्र विकल्प इत्याह—यत्रेति। उद्भिच्चित्रयोरिति। 'उद्भिदा यजेत पशुकामः ता. ब्रा. १९.७.२.३ 'चित्रया यजेत पशुकामः तै. तं. २.४.६.१ इत्येकसाध्योद्देशेन प्रवृत्तयोः प्रधानविहितयोरित्यर्थः।

---

१—विशारारूढेति मु. पु. पा.।

तस्येदं समाधानम्। तथाहि—प्रवर्तनारूपो विध्यर्थः, श्रेयस्साधनत्वरूपो वेति द्वौ पक्षौ 'कर्तुस्समीहिते' इत्यत्रोपन्यस्तौ। विस्तरस्तु तत्रैव द्रष्टव्यः। तत्र प्रथमपक्षेऽनुष्ठानापरपर्यायः प्रयोग एव साक्षात् स्वरूपानुवन्धात् विधेः कृत्यं भवति। विनियोगस्तु श्रुत्यादिसहायान्तरवशात् पर्यवसानलभ्यः। समिदाद्यंगवाक्येषु विधावसति फलाकांक्षानुदयेनोभयाकांक्षालक्षणं प्रकरणमेवोत्सीदेत्। तद्विनियोगस्तु दूरे। विधौ सति अंगभावनानां पुरुषार्थरूपभाव्याकांक्षायामन्योन्याकांक्षालक्षणप्रकरणलाभे सति, पश्चात् तेन विनियोगस्सिद्ध्यतीति 'विधिप्रसादलभ्यो विनियोग इत्यभिप्रायेणांगविधयो विनियोजका इत्युच्यन्ते' इति प्रकरणविनियोगावसरे प्रतिपादितमिति, नाचार्यमतविरोधः।

द्वितीयपक्षे तु यद्यंगानां पृथक् पृथक् न तत्तद्विध्यधीनः, प्रयोगस्य यौगपद्यात्, तदनुसारेण सर्वांगसाध्यैकोपकारकल्पनात् समुच्चयस्सिद्ध्यति। एवञ्च पक्षद्वयेऽपि विनियोगदशायामुपकारस्याभावेन, तदुद्देशेन विनियोगासंभवात्, पश्चात् कल्प्यमानस्य क्रतूपकारस्य विनियोगप्रयोगविध्यनुसारेणैव कल्पनात् समुच्चयः सिद्ध्यति, न तु विकल्प इति।

३७—कीदृशस्थले विकल्प इत्याशंक्य यत्रैकप्रयोजनोद्देशेन विनियोगविधिभेदः, यत्र वा प्रधानविधिभेदः, तत्र विकल्प इति विशदयति—यत्रेति।

### अंगार्थवादा अंगविध्येकवाक्यभूताः प्रशंसामुखेन अंगवाक्येष्व-वतीर्णायाः प्रधानविधिशक्तेस्सहायीभवन्ति तेषामन्वयोप-पादनेनांगानां संभूयकारित्वस्य निगमनम् ।

ननु यदि प्रधानविधिरेवानुष्ठापकः, नाङ्गविधयः अनुष्ठापकाः, किमर्थास्तर्हि तेष्वर्थवादाः वर्म वा एतद्यज्ञस्य क्रियते' इत्यादयः, ते हि विधेः प्रयोजकशक्तिमुत्तम्भन्तीति स्थितिः । अप्रयोजकत्वे तु तेषां किमुत्तम्भनमेषां कार्यमिति । उच्यते । प्रधानविधेरेव सर्वाङ्गविशिष्टप्रधानविधायिनस्तदङ्गस्तुतिद्वारेण सर्व एवार्थवादाः शेषभूता इत्यदोषः । नैतदेवम् । विध्येकवाक्यभावेन ह्यर्थवादानां तत्त्वम् । न च प्रधानविधिनाऽङ्गवाक्यस्थानामर्थवादानामेकवाक्यत्वसम्भव इति, न तच्छेषत्वसम्भव इति ।

### आवृत्तिप्रतियोगिकं देश-काल-कर्तृभेदेनांगानामावृत्तिप्रतिपादनम् । प्रसंगनिरूपणम्, तन्त्र-प्रसंगाप्रयोजकत्वानां सोदाहरणं वैलक्षणकथनम् ।

नैष दोषः । प्रधानविधिशक्तिर्हि विशिष्टं विषयीकृत्यार्थाद्विशेषणेष्वङ्गेषु संक्रामति, तत्स्थविध्येकवाक्यभूता अर्थवादा युक्तं यत्तामुत्तभ्नन्तीति । यथा 'वायुर्वै क्षेपिष्ठा देवते' त्यनेन विशिष्टालम्भविधिशक्तेरर्थाद्विशेषणभूते [1]वायौ संक्रान्तायास्सहायकरणम् ।

---

अंगसमुच्चयप्रतिपादनप्रसङ्गेन प्रधानविधेरेव सकलाङ्गप्रयोजकत्वमुक्तम् । तत्र शङ्कते—नन्विति । 'वर्म वा एतद्यज्ञस्य क्रियते । वर्म यजमानाय तै. सं. २–९–१–५' इति प्रयाजविशेषभूता अर्थवादाः । तेषां च प्रशंसामुखेन प्रयोजकविधेरनुष्ठापकत्वशक्त्युत्तेजनमेव कार्यम् । अङ्गविधीनामप्रयोजकत्वे तु तत्तदर्थवादानामसंगतिः स्यादिति भावः । तेषां-विधीनाम् । किमुत्तम्भनं—कस्य विधिशक्तिलक्षणप्रयोजकत्वस्योत्तम्भनम् । एषाम्—अर्थवादानाम् । अङ्गविधीनामप्रयोजकत्वेऽपि तत्तदर्थवादानां प्रयोजकभूतप्रधानविधिशेषतया संगतिर्भविष्यतीति परिहरति—उच्यत इति ।

प्रधानविधेर्व्यवहितत्वेनाङ्गार्थवादानां तदेकवाक्यत्वाभावात् तच्छेषतयान्वयो न युक्त इति शङ्कते—नैतदेवमिति । अर्थवत्त्वं—प्रशंसालक्षणप्रयोजनलाभः । परिहरति—नैष दोष इति । अङ्गार्थवादा हि अङ्गवाक्यैकवाक्यभूतास्तदनुष्ठानोपयोगिनीं प्रशंसामुपस्थापयन्ति । सा चाङ्गवाक्येष्वतीर्णाया प्रधानविधिशक्तेः सहायीभवतीत्यङ्गवाक्यैकवाक्यतैव प्रधानविध्येकवाक्यतेति तच्छेषतयाऽन्वयो युक्त इति भावः । तत्र दृष्टान्तमाह—यथेति । यथा 'वायव्यं श्वेतमालभेत'

---

१—अंगसमुच्चयप्रतिपादनप्रसंगेन प्रधानविधेरेव सकलांगप्रयोजकत्वे, अंगविधीनामप्रयोजकत्वेन 'वर्म वा एतद्यज्ञस्य क्रियते' इति प्रयाजविधिशेषभूतानामर्थवादानां कथं संगतिरित्याशंक्य, अंगविधीनामप्रयोजकत्वेऽपि तत्तदर्थवादानां प्रयोजकभूतप्रधानविधिशेषतया संगतिर्भविष्यति । अयं भावः—अङ्गार्थवादा हि अंगवाक्यैकवाक्यभूतास्तदनुष्ठानोपयुक्तां प्रशंसामुपस्थापयन्ति, साचांगविधिवाक्येष्ववतीर्णायाः प्रधानविधिशक्तेस्सहकारिणी भवति, अंगवाक्यैकवाक्यतैव प्रधानविध्येकवाक्यतेति, तच्छेषतयाऽन्वयो युज्यत इति मनसि निधाय सदृष्टान्तमाह 'यथेत्यादिना तत्सिद्धमि'त्यन्तेन ।

इयांस्तु विशेषः—यत्तत्र वायोर्वाक्येन विनियोगः, प्रयाजादेस्तु प्रकरणेन। नैतावताऽर्थवादसङ्गतेः कश्चिद्विशेषः। तत्सिद्धमङ्गानामपि संभूयकारित्वमिति।[१] तत एककालानां बहूनां प्रधानानामेकदेश-काल-कर्तृकाणां तादृशान्यङ्गानि तन्त्रम्। यथाऽऽग्नेयादीनाम् प्रयाजादयः। यत्र त्वन्यतमस्यापि भेदः। यथा त्रिकद्वयस्य कालभेदः। [२]वरुणप्रघासेषु मारुत्याः, अन्येषाञ्च देशभेदः। तत्रैवापराग्निकानाम् कर्तृभेदः। तत्राङ्गानामावापः। आवृत्तिरित्यर्थः। एकदेश-काल-कर्तृत्वेऽपि वचनादावापः। यथा 'अग्नये पवमानाय निरूप्य, पावक-शुचिभ्याम् [३]समानबर्हिषि निर्वपेदि'ति।

इत्येकादशाध्यायार्थः।



---

तै. सं. २-१-१ इति द्रव्यदेवताविशिष्टयागविधेरेव वायुरूपदेवताप्रशंसार्थवादः शेषभूतः, तद्वदङ्गार्थवादोऽपि विशिष्टप्रधानविधेरेव शेषभूत इत्यर्थः। ननु वायोर्वाक्येन प्रधानयागान्वयात् तद्विधिसंबन्धः। प्रयाजादेस्तु प्रकरणेन प्रधानान्वयात् तत्संबन्ध इति विषमो दृष्टान्त इत्याशङ्क्य, अनुपयुक्तमिदं वैषम्यमित्याह—इयांस्त्विति। संप्रत्यङ्गानामुपकारतन्त्रं निगमयति—तत्सिद्धमिति।

इत्थं विकल्पप्रतियोगिकं फलतन्त्रम्, उपकारतन्त्रं चोदाहृत्य आवृत्तिप्रतियोगिकं तन्त्रं दर्शयति—तत इत्यादिना। तादृशान्येकदेश-काल-कर्तृकाणि। उदाहरति—यथेति। कालभेदेनानुष्ठानावृत्तिमुदाहरति—यथेति। दर्शे त्रयो यागाः। पूर्णमासे त्रयो यागाः। तदङ्गभूताः प्रयाजादयः कालभेदादावृत्त्या अनुष्ठेया इत्यर्थः। देशभेदादावृत्तिमुदाहरति—यथेति। वरुणप्रघासेष्विति। चातुर्मास्येषु वरुणप्रघासो नाम द्वितीयं पर्व। तत्र च 'उत्तरस्यां वेद्यामन्यानि हवींष्यासादयति, दक्षिणायां मारुतीम्' इति मारुत्या अन्येषां च वेदिभेदादङ्गानामावृत्तिरित्यर्थः। कर्तृभेदेऽप्युदाहरति—तत्रैवेति। वरुणप्रघासेष्वेव दाक्षिणाग्निकानामाहवनीयकर्तव्यानां चाध्वर्युप्रतिप्रस्थातृरूपकर्तृभेदादङ्गानामावृत्तिरित्यर्थः। आवृत्त्यन्तरमुदाहरति—एकदेश इति। पवमानेष्टिषु 'अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचय' इति त्रीणि हवींषि समानदेशकालकर्तृकाण्युत्पन्नानि। तथापि तेषामेकं निरुप्य, उत्तरे समस्येदित्याद्यस्य पृथगनुष्ठानश्रवणात् तदङ्गानां प्रयाजादीनामावृत्तिरित्यर्थः। समाने बर्हिषि—एकस्मिन् बर्हिषि।

इत्येकादशाध्यायार्थः।



---

१—इत्थं विकल्पप्रतियोगिकं फलतन्त्रम्, उपकारतन्त्रञ्चोदाहृत्य, आवृत्तिप्रतियोगिकं तन्त्रं निरूपयति—तत इति।

२—देशभेदे कालभेदे, कर्तृभेदे चावृत्तिं क्रमेणोदाहरति—वरुणप्रघासेष्विति।

३—समाने बर्हिषि—समाने तन्त्रे—प्रयोगे इत्यर्थः।

इति एकादशाध्यायस्यटिप्पणी समाप्ता।



## अथ द्वादशाध्यायार्थः

### प्रसंगनिरूपणम् ।

एवं तन्त्रावापस्वरूपे प्रयोगपरिमाणे चिन्तिते, तत्परिमाणमेव प्रसङ्गरूपम् द्वादशे चिन्त्यते । [1]प्रयोगपरिमाणत्वाविशेषेऽपि तन्त्रप्रसङ्गाप्रयोजकानाम् भाष्यकारेण विशेषोऽभिहितः ।

'साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः ।
[2]एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके[3] विधावि' ।। ति ।

यदनेकोद्देशेनानुष्ठीयते, तत्तन्त्रम्, यत्त्वन्यार्थमनुष्ठितम्, तदनुनिष्पन्नम् वा वा अन्यस्य साधनं भवति, प्रतिपाद्यं वा, तत्राप्रयोजकत्वम् । यथा पुरोडाशकपालं

---

## अथ द्वादशाध्यायार्थः

द्वादशस्यैकादशेन संगतिमाह–एवमिति । प्रसङ्गस्थले प्रयोगस्य सकृदनुष्ठानम् । तदभावे तु आवृत्तिः । एवमेव तन्त्राध्यायेऽपीति, तदनन्तरमस्यारम्भ इत्यर्थः । ननु प्रयोगपरिमाणत्वाविशेषेऽपि तन्त्रात प्रसङ्गस्य को भेदः, यतो लक्षणान्तरारम्भः स्यादित्याशङ्क्य, प्रयोगपरिमाणहेतुभूतं त्रितयमपि विविच्य दर्शयति–प्रयोगेति । तन्त्रप्रसङ्गाप्रयोजकत्वानि प्रयोगन्यूनत्वापादकानि । तदपवादास्तु प्रयोगाधिक्यापादका इति त्रितयस्यापि प्रयोगपरिमाणहेतुत्वमित्यर्थः । एवमेव–परार्थानुष्ठाने सत्येव । स्वके विधौ–स्वकीयप्रयुक्तिसामर्थ्ये ।

भाष्यं विवृणोति–यदनेकेति । तत्तन्त्रमिति । अवैषम्यादनेककरणोद्देशेन सकृदङ्गानुष्ठानं तन्त्रमित्यर्थः । यत्त्विति । यत्वन्योद्देशेनानुष्ठीयमानमप्यन्यस्योपकरोति, तदुपकार्यं तस्याप्रयोजकमित्युच्यत इत्यर्थः । तदप्रयोजकत्वं द्वेधा-यत्रान्यार्थं संपादितमेवाङ्गमन्यस्याप्यङ्गं भवति । यथा पुरोडाशार्थं संपादिताङ्गानुष्ठाननिष्पन्नमेव कपालं तुषोपवापस्याङ्गं सम्पादितं न प्रयुङ्क्ते । तथा यत्रान्यार्थसंपादिताङ्गानुष्ठाननिष्पन्नमेवान्यस्यापि साधनं भवति । यथाऽऽमिक्षार्थानुष्ठितदध्यानयनानुनिष्पन्नवाजिनद्रव्यसाध्यो वाजिनयागो दध्यानयनं न प्रयुङ्क्ते, तदपरम् । यथा वा सोमक्रयार्थं संपादितैकहायनीनिष्क्रमणानुनिष्पन्नं सप्तमपदपांसुसाध्यमक्षाञ्जनमेकहायनीं न प्रयुङ्क्ते । इदमपि वाजिनयागतुल्यमिति भावः ।

अप्रयोजकस्थलान्तरमप्याह–प्रतिपाद्यं चेति । यत्र द्रव्यं प्रतिपाद्यं, कर्म प्रतिपत्तिः, तत्कर्म तद्द्रव्यं प्रति न प्रयोजकम् । यथा हृदयाद्यवदानादिमुखेन यागोपकृतस्य पशोः प्रतिपत्तिरूपं शकृल्लोहितनिरसनं पशोर्न प्रयोजकमित्यर्थः । उदाहरति–यथेति । कथमप्रयोजकत्वमित्याशङ्क्य, द्रव्यापचारे पुनः स्वार्थं द्रव्यसंपादकत्वशक्त्यभावादित्याह–तत्रेति ।

---

१— तन्त्र–प्रसंगाप्रयोजकत्वानि प्रयोगन्यूनत्वप्रतिपादकानि, तदपवादस्तु प्रयोगाधिक्यप्रतिपादका इति, त्रियस्यापि प्रयोगपरिमाणहेतुत्वमित्याह–प्रयोगेति ।

२—एवमेव–परार्थानुष्ठाने सत्येव ।

३—स्वके विधौ–स्वकीयप्रयुक्तिसामर्थ्ये ।

तुषोपवापस्य। यथा च पदमक्षाञ्जनस्य। वाजिनं वाजिनयागस्य। शकल्लोहिते च निरसनस्य। तत्राविद्यमानमपि कपालादि तुषोपवापादिना न प्रयोक्तुं शक्यत इत्यप्रयोजकत्वम्। यत्र तूभयत्राप्यन्योन्यनैरपेक्ष्येणाङ्गविनियोगे सत्यप्येकार्थानुष्ठितैरेवाङ्गैरन्यस्यापि उपकारसंपत्तेरन्यस्य प्रयोजकत्वक्षमस्यापि तल्लोपः। यथा पश्वर्थानुष्ठितैरेव प्रयाजादिभिरुपकारसंपत्तेः पशुपुरोडाशः पशुसम्बन्धानादरेणैव स्वार्थतयाऽतिदेशेन विनियुक्तान्यपि प्रयाजादीनि न पृथगनुष्ठापयति, तत्र प्रसङ्गः। अत्र चान्यार्थोलाभे स्वयमपि प्रयोजकं भवति अत एव चाज्यभागौ पशावविद्यमानौ पशुपुरोडाशेनानुष्ठाप्येते।

## पश्वर्थमनुष्ठितानां प्रयाजादीनां पुरोडाशयागांगत्वम् नास्तीति शंका।

आह—यदि पश्वर्थानुष्ठिता एव प्रयाजादयः पशुपुरोडाशस्योपकुर्वन्ति, न तु तदर्थमनुष्ठीयन्ते—

कथं तर्हि तदङ्गत्वं तादर्थ्यं ह्यङ्गतेष्यते।
उद्देशेन च तादर्थ्यं नोपकारान्न चात्र सः॥ ३३॥

यदुद्देशेन यदनुष्ठीयते, तत्तदर्थम्, तदेव चाङ्गमुच्यते, न तूपकारकमात्रम्। न च प्रयाजादयः पशुपुरोडाशोद्देशेनानुष्ठीयन्त इति, कथम् [1]तदङ्गत्वम्?

## मध्येऽवान्तरशंका-समाधाने।

नन्वेवं सति तुषोपवापाङ्गत्वं वा[2]।

---

प्रसङ्गस्य विषयं विविनक्ति—यत्रेति। अन्योन्यनिरपेक्षाङ्गविनियोगे सतीत्यनेन पृथक् स्वार्थं दध्यानयनादिविनियोगरहितानां वैश्वदेवयागाङ्गभूतदध्यानयनाद्युपजीविनां वाजिनयागादीनां व्यावृत्तिः। एकार्थानुष्ठितैरित्यनेन सर्वार्थानुष्ठेयानां तान्त्रिकाङ्गानां व्यावृत्तिः। प्रयोजकत्वक्षमस्यापीत्यनेन पृथग्विनियोगसंभवेऽपि, स्वयं कपालाद्यप्रयोजकानां तुषोपवापादीनां व्यावृत्तिः। उदाहरति—यथेति। पशुयागाङ्गभूतः पुरोडाशयागः। तत्राङ्गिभूतः पशुयागः, पुरोडाशयागश्चोभयमपि दर्शपूर्णमासप्रकृतिकम्। उभयोश्च पृथगिष्टिधर्मातिदेशे सत्यपि, पुरोडाशयागः पश्वर्थान्येवोपजीवति। न तु स्वार्थमपि तान्यावृत्त्याऽनुष्ठापयति। एतादृशस्थले प्रसङ्ग इत्यर्थः। पुरोडाशयागस्य स्वयमङ्गप्रयुक्तिशक्तिः पशावविद्यमानातिदिष्टाङ्गान्तरानुष्ठापकतया सुव्यक्तेत्याह—अत्र चेति।

यदि पश्वर्थमेवानुष्ठीयन्ते प्रयाजादयः, तर्हि तेषां पुरोडाशयागाङ्गत्वं न स्यात। ततश्च प्रसङ्गविचारस्याङ्गविचारानुप्रवेशो न युक्त इत्याशयेन शङ्कते—आहेति। न चात्र सः तत्र पुरोडाशयागोद्देशो नास्तीत्यर्थः। उपकारमात्रादिति। उपकारिणामपि गोदोहनादीनां प्रणयनाद्यङ्गत्वाभावादित्यर्थः। ननु यदि तादर्थ्यं नाम तदर्थानुष्ठेयत्वं तर्हि तदानीं पुरोडाशकपालस्य तुषोपवापाङ्गत्वं न स्यादिति मध्ये शङ्कते—नन्वेवमिति। तदर्थत्वं नाम तदर्थप्रवृत्तव्यापार-

---

१—तदर्थत्वम्—तदर्थप्रवृत्तव्यापारविषयत्वम्। तच्च द्विधा तदर्थसंपाद्यत्वेन, पूर्वम् सिद्धत्वेऽपि व्यापार्यतया वा भवति। उभयथाऽप्यंगत्वमिति बोध्यम्।

२—कथमिति पूर्वेण संबन्धः।

पुरोडाशप्रयुक्तस्य कपालस्य कथं भवेत्।
व्यापार्यते तुषाणां तदुपवापप्रसिद्धये ॥ ३४ ॥

यद्यपि पुरोडाशप्रयुक्तमेव कपालस्वरूपम्। तथाऽपि तुषोपवापसिद्धौ व्यापार्यत एवेति, युक्तमेव परोद्देशप्रवृत्तव्यापारगोचरत्वलक्षणं शेषत्वम। प्रयाजादयस्तु न कथंचिदपि पशुपुरोडाशोद्देशप्रवृत्तपुरुषप्रयत्नगोचर इति, न तच्छेषत्वमेषां सम्भवतीति।

## अंगत्वाभावेऽपि तद्योग्यताऽस्तीति समाधानम्।

[1]उच्यते न प्रयाजानां पुरोडाशेऽस्ति शेषता।
तद्योग्यत्वेन तेषां तु तदङ्गत्वं प्रतीयते[2] ॥ ३५ ॥

यथैवादहत्यपि वह्नौ दाहकव्यपदेशः, तथैव प्रयाजादिष्वपि पशुपुरोडाशार्थमननुष्ठीयमानेष्वपि तद्योग्यतया [3]तदङ्गत्वव्यपदेशः। शक्नोत्येव पुरोडाशस्ताननुष्ठापयितुम्। अन्यतस्तु सिद्धत्वान्नानुष्ठापयति। तेनान्यशेषभूतेष्वपि योग्यतया शेषत्वव्यवहारः।

## अत्र विषये प्राभाकरमीमांसकानां सिद्धान्तनिर्देशेन प्रसंगविचारस्योपसंहारः।

[4]अन्ये तु योग्यतैव शेषत्वम्। अतः पशुपुरोडाशेऽपि प्रयाजादीनां मुख्यमेव तदस्तीति वर्णयन्ति। तथा वाऽस्तु। सर्वथा तावदुपपन्नः शेषत्वव्यवहार इति, सर्वं समञ्जसम्।

---

विषयत्वम्। तत्तु अन्यार्थसंपादितस्यापि कपालस्य तुषोपवापं प्रत्यपि संभवति इति, तदङ्गत्वं स्यादेवेति शङ्कावाद्येव परिहरति—व्यापार्यत इति। तदर्थप्रवृत्तव्यापारगोचरत्वं द्वेधा—तदर्थसंपाद्यत्वेन वा, पूर्वं सिद्धत्वेऽपि व्यापार्यतया वा। उभयथाप्यङ्गत्वमिति भावः। प्रयाजादेस्तु तद्वैषम्यमाह—प्रयाजादयस्त्विति।

सत्यमनङ्गभूतान्येव प्रयाजादीनि। तथापि यथा पुरोडाशयागे प्रयाजादीनामप्रयोजिकापि तत्प्रयुक्तिशक्तिः, तथा प्रयाजादीनि पुरोडाशयागानङ्गभूतान्यपि तदङ्गत्वयोग्यतया तथा व्यवह्रियन्त इत्युत्तरमाह—उच्यत इति। प्रतीयते—व्यवह्रियते। अङ्गत्वयोग्यत्वे हेतुमाह—शक्नोत्येवेति।

प्राभाकराभिमतक्रममनुवदति—अन्ये त्विति। यथातिदेशसंभवादननुष्ठीयमानानामप्यवघातादीनां कृष्णलादिशेषत्वं, तथा प्रयाजादीनामपीत्यर्थः। तन्मतेऽपि नास्मदुक्तविरोध इत्याह—तथास्त्विति। 'अङ्गस्वरूपसंबन्धप्रमाणं सप्रकारकम्' इति प्रक्रान्तमङ्गनिर्णयं निगमयति—सर्वं समञ्जसमिति।

---

१—यद्यपि—प्रयाजादीन्यंगान्येव, तथापि पुरोडाशयागानंगभूतान्यपि तदंगत्वयोग्यतया भाट्टमीमांसकैर्व्यवह्रियन्त इति मन्वान आह—उच्यत इति।

२—प्रतीयते—व्यवह्रियत इत्यर्थः। ३—अंगत्वयोग्यत्वे बीजमाह- शक्नोत्येवेति।

४—प्राभाकरमीमांसकास्तु मन्यन्ते—यथा अतिदेशसंभवादननुष्ठीयमानानामप्यवघातादीनां कृष्णलादिशेषत्वमस्ति, तथा पुरोडाशयागे प्रयाजादीनां शेषत्वमुपपद्यते। शेषत्वयोग्यतायास्सत्त्वात्। अतस्तन्मतेऽपि नास्मदुक्तविरोध इत्याशयं मनसि कृत्वाह—अन्ये त्वित्यादिना—तथास्त्वित्यन्तेन।

## भाट्टमतेन शास्त्रार्थस्य ( भावनावाक्यार्थस्य ) संक्षेपेणोपवर्णनम् ।

### भावनाया भाव्यनिरूपणम् ।

[1]तदेष संक्षेपार्थः—भावना तावत्स्वशब्देन [2]प्रथममभिधीयते तस्याश्च विधिना समानाभिधानेनान्वयः प्रतीयमानोऽप्ययोग्यतया [3]न द्रागेव निष्पद्यते । इयं चावस्था विधिप्रक्रम इत्युच्यते, विधिप्रक्रमाच्च तदेवं ज्ञायते यादृशरंशैः पूर्णेयं विधानमर्हति, तादृशैः पूरयितव्येति, ततः किमस्याः भाव्यमित्यपेक्षायां समानपदोपात्तमपि धात्वर्थमयोग्यत्वादुल्लङ्घ्य, पदान्तरोपात्तं स्वर्गादि स्वीक्रियते । तच्च षष्ठाद्ये व्युत्पादितम् । तदभावे चार्थवादस्थम्, तदभावे चाध्याह्रियते । तच्च रात्रिसत्राधिकरणे, विश्वजिदधिकरणे च प्रतिपादितम् ।

### करणाकांक्षापूरणम् ।

ततः करणापेक्षायां समानपदोपात्तो धात्वर्थ एव करणतयाऽन्वीयत इति भावार्थाधिकरणार्थः । तस्य च करणत्वं क्षणिकस्य कालान्तरभाविफलं प्रति साक्षान्न सम्भवतीति स्थिरद्वारापेक्षायां देवताराधनकर्तृसंस्कारयोर्देवताधिकरणे, 'कर्मण्यारम्भभाव्यत्वादि'त्यत्र च निराकृते, तद्द्वारत्वेनाऽपूर्वमेवाश्रयितव्यमिति, तच्छब्दमध्याहृत्य यागेन अपूर्वं कृत्वा स्वर्गं भावयेदित्यपूर्वेतिकर्तव्यतायुक्तो यागो ज्वालोपेतकाष्ठादिवत्पाकमिव फलं प्रति करणतया विनियुज्यत इत्यपूर्वाधिकरणेनोक्ते,

### कथंभावस्य कथनम् ।

कथमनेनापूर्वं कर्तव्यमिति पुनरितिकर्तव्यताकाङ्क्षा काष्ठादीनामिव ज्वालासिद्ध्यर्थं अपूर्वसिद्ध्यर्थं जायते । तत्र [4]षड्विधेनोपदेशेन, [5]त्रिविधेन चातिदेशेन,

---

सकलस्यापि वेदस्यांशत्रयविशिष्टो विधियुक्तो भावनैवार्थः । तदंशान्वयक्रमविचाररूपैव द्वादशलक्षणी मीमांसा । तदन्वयक्रमं सर्वमाचार्यमतानुसारेण संक्षिप्य दर्शयति—तदेष इति । स्वशब्देन लिङ्शब्देन । अयोग्यतया निर्विशेषे निष्फले प्रवृत्त्ययोगादित्यर्थः । इयं चावस्थेति । विध्यन्वये प्रतीते यावदंशत्रयान्वयो निष्पद्यते, ततः पूर्वावस्थेत्यर्थः । षष्ठाद्ये—स्वर्गकामाधिकरणे । तच्छब्दमध्याहृत्येति । 'शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यते' इति न्यायात् वाचकशब्द एवाध्याह्रियत इति भावः । अपूर्वं कर्तव्यमिति । फलकर्तव्यतायामपूर्वसंक्रान्तायां, तस्याप्यविज्ञातप्रकारतया तत्रैव प्रकाराकाङ्क्षा जायत इत्यर्थः । षड्विधोपदेशाः—श्रुतिलिङ्गादयः । त्रिविधातिदेशाः—वचननामधेयचोदनालिङ्गानि । श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तयः क्रमप्रमाणानि ।

---

१—सकलस्य वेदस्यांशत्रयविशिष्टो विधियुक्तो भावनैवार्थः भावनायाः अंशत्रयान्वयक्रमविचारपरैव प्राची मीमांसा । तदन्वयक्रममाचार्यमतेन संक्षिप्य वर्णयति—'तदेव संक्षेपार्थः' इति ।

२—स्वशब्देन—लिङ्शब्देन ।

३—अयोग्यतया—निर्विशेषे निष्फले प्रवृत्त्ययोगादित्यर्थः ।

४—षड्विधोपदेशाः—श्रुति—लिंगादयः ।

५—त्रिविधा अतिदेशाः—प्रत्यक्षवचन—नामधेय—चोदनालिंगानि ।

 

स्मृत्याचाराभ्याम्, [1]श्रुत्यर्थादिभिश्च यथायथं [2]तेन तेन द्वारेण समर्पितम् जाति-द्रव्य-गुण-क्रियाक्रमात्मकमङ्गजातमित्थं भावेन शुष्कत्रादिवत्स्वीक्रियते ।

अत एव प्रधानं फलप्रयुक्तम् । तथा प्रकल्पितेऽपूर्वे, दीक्षणीयादिवदकल्पिते चावान्तरापूर्वे प्रधानापूर्वं फलं प्रति विनियुज्यते । तेन दीक्षणीयेव परमापूर्वप्रयुक्ता फलप्रयुक्तमेव प्रधानम् । अङ्गन्तु कल्पितेऽपूर्वे तदङ्गत्वेन दीक्षणीयाङ्गवाङ्नियमवद-वान्तरापूर्वाङ्गत्वेन विनियुज्यमानम् तद्वदेवावान्तरापूर्वप्रयुक्तम्, न परमापूर्वप्रयुक्तमिति वेदितव्यम् । [3]ततः सर्वविशेषणविशिष्टभावनानुष्ठानं प्रयोजकत्वाप्रयोजकत्वातन्त्रावाप-प्रसङ्गतदपवादावगतपरिमाणं श्रुत्यर्थाद्यवगतक्रमसहितं फलार्थिनम्' सकलाङ्गानुष्ठानक्षमं काम्येषु । नित्य-नैमित्तिकेषु तु किंचिदङ्गनुष्ठानाशक्तमपि पुरुषं प्रति विधिर्विधत्त इति ।

## उपसंहारः ।

[4]एतत्सर्वं वाक्यार्थसंग्रहरूपेण वार्तिकेन-

'भावनावचनस्तावत्तां स्मारयति लोकवदि'[6]त्यादिना ।

---

तेन तेन द्वारेण संनिपातिनां कारकसंस्कारमुखेन, आरादुपकारिणामवान्तरापूर्वद्वारेण, जाति-गुणयोः द्रव्यावच्छेदद्वारेण, द्रव्यस्य क्रियानिर्वृत्तिद्वारेण ।

एवमंशत्रयान्वयमुक्त्वा प्रयुक्तिक्रममाह-अत एवेति । अपूर्वकल्पनात् पूर्वमेव करणस्य फलेनान्वयात् करणं फलप्रयुक्तमित्यर्थः । तत्र दृष्टान्तः-दीक्षणीयादिवदिति । अङ्गान्वयस्य त्वपूर्वकल्पनोत्तरकालत्वात् तेषामपूर्वप्रयुक्तत्वमित्याह-अङ्गं त्विति । तत्रापि दृष्टान्तः-दीक्षणीयेति । अङ्गेषु करणेषु च सर्वत्र विधेरेव प्रयोजकत्वेऽपि, अपूर्वफलयोः प्रयोजकत्वोक्तिः प्रयोजनत्वादवगन्तव्या । एवमंशत्रयान्वये सति विधेः परिसमाप्तिदशामाह-ततः सर्वेति । फलार्थिनमित्यादिनार्थित्वसामर्थ्यलक्षणमधिकारद्वयमपि दर्शितम् ।

अत्र संक्षेपे आचार्यसंमतिमपि संपादयति-एतत्सर्वमिति । भावनावचनो लिङ्शब्दः तां स्मारयति-'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते' श्लो. वा. शब्द. १०७ इति न्यायेन संकेतेन-समयेनावगतं स्वार्थमवगमयतीत्यर्थः । लोकवत्-लौकिकवाक्यस्थपदवत् । प्रक्रान्तरूपः-प्रक्रमावस्थापन्नः । अन्यानपेक्षिणी-अंशत्रयपरिपूर्णा ।

---

१—श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तयः क्रमप्रमाणानि ।

२—तेन द्वारेणेति-सन्निपातिनो कारकसंस्कारमुखेन, आरादुपकारकाणामवान्तरापूर्व-द्वारेण, जाति-गुणयोर्द्रव्यावच्छेदद्वारेण, द्रव्यस्य क्रियानिर्वृत्तिद्वारेणांगजातं स्वीक्रियत इत्यर्थः ।

३—एवमंशत्रयान्वयमभिधाय-प्रयुक्तिक्रममाचष्टे, अत एवेति ।

४—अंगेषु-करणेषु च सर्वत्र विधेः प्रयोजकत्वेऽपि, अपूर्व-फलयोः प्रयोजकत्वोक्तिः प्रयोजनत्वादवगन्तव्या ।

५—एवमंशत्रयान्वये सति-विधेः परिसमाप्तिदशामाह-ततस्सर्वेति । ८—फलार्थिन-मित्यादिनाऽर्थित्व-सामर्थ्यलक्षणाधिकारिविशेषणद्वयमपि सूचितमिति ।

अत्र संक्षेपे आचार्यसम्मतिं सम्पादयति-एतत्सर्वमिति । भावनावचनो लिङ्शब्दः तां स्मारयति-( पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ) इति न्यायेन संकेतेनावगतं स्वार्थमवगमयतीत्यर्थः ।

६—लोकवत्—लौकिकवाक्यस्थपदवत् ।

'तस्मात्प्रक्रान्तरूपोऽपि विधिस्तावत्प्रतीक्षते ।
यावद्योग्यत्वमापन्ना भावनाऽन्यानपेक्षिणी' ॥

इत्येवमन्तेन दर्शितमिति वेदितव्यम् ।

[3]भुवनत्रयविख्यातश्रीमद्यज्ञात्मनन्दनः ।
[4]तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः ॥ ३६ ॥

[5]मीमांसाब्धिं व्याकुलं चोद्यनक्रैः मन्दप्रज्ञैर्दुर्विगाह्यं विगाह्य ।
मत्याचार्यैराहृतैर्न्यायरत्नैः मालामेनां कल्पयामास धीरः ॥ ३७ ॥

नमो जैमिनये येन धर्मो वेदनिगूहितः[1] ।
न्यायदीपैः समुत्तीर्णो ज्वलद्भिरिव भास्यते ॥ ३८ ॥

इति श्रीमद्यज्ञात्मसूरिसूनुर्महामहोपाध्यायपार्थसारथिमिश्रेण विरचितायां
न्यायरत्नमालायामङ्गनिर्णयो नाम सप्तमं प्रकरणं समाप्तम् ॥

## समाप्ता न्यायरत्नमाला



---

स्वग्रन्थस्य संप्रदायविशुद्धिं दर्शयति—भुवनत्रयेति । तत एव—स्वकीयपितृसकाशादेव । स्वप्रबन्धस्योपादेयतां दर्शयति—मीमांसाब्धिमिति । मीमांसैवाब्धिः—मीमांसाब्धिः शाबरभाष्यम् । मत्या—स्वबुद्धिकौशलेन । आचार्यैः—भट्टाचार्यैः । धीरः—पार्थसारथिरिति शेषः ।

इति धर्मपुरी श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने
नायकरत्नेऽङ्गनिर्णये पञ्चमः परिच्छेदः ।



सम्पूर्णोऽयं ग्रन्थः ।



---

३—स्वग्रन्थस्य संप्रदायविशुद्धिं दर्शयति—भुवनत्रयेति ।

४—तत एव—स्वकीयपितृसकाशादेवेत्यर्थः ।

५—स्वग्रन्थस्योपादेयतां दर्शयति—मीमांसाब्धिमिति ।

पार्थसारथिमिश्रोऽयं श्रीमद्यज्ञात्मनन्दनः ।
तत एव श्रुतं प्राप्य भाट्टतन्त्रनियन्त्रितः ॥ १ ॥
विधूय गुरुसिद्धान्तान् श्रीमत्कौमारिलाध्वना ।
मालिकां नयरत्नानां निर्ममे बुधतोषिणीम् ॥ २ ॥
व्याख्याविवादसंजातव्यामोहविनिवृत्तये ।
तां शिष्यसुखबोधाय सूब्रह्मण्यो व्यवर्वरीत् ॥ ३ ॥

६—प्रत्याचार्यैरिति. मु. पु. पा. । ७—मत्येति—२. पु. पा. ।

१—नोप्यभहीभियिरिति श्लोकः पुस्तकद्वयेऽप्येवमेव दृश्यते ।

